प्रायः कुकवयो लोके रागाधिष्ठितदृष्टयः ।
कोकिला इव जायन्ते वाचालाः कामचारिणः ॥ ५ ॥

त्रिभुवनमपीति यावत्, कविवेधसे—कवीनां—काव्यरचयितॄणां, वेधाः,—विधाता तस्मै, कविश्च अभिनवमहाकाव्यरचनापद्धतिप्रदर्शनेन स्रष्टाविधायित्वे इति यावत्, "अपारे काव्यसंसारे कविरेव प्रजापतिः" इति स्मरणात्, तस्मै—प्रसिद्धाय, व्यस्यति—विभजति, ऋग्यजुःसामाथर्वलक्षणान् वेदानिति व्यासः तस्मै, नमः,—नमस्कारोऽयं भवति इत्यर्थः । [प्रथमतो वेदश्चायम् अविभक्तराशिरूपेणावस्थित तत्र पराशरसुतो द्वैपायनो भगवान् सामाथर्वाख्यया मन्त्रब्राह्मण-उपनिषदादितया विभज्य, पञ्चमवेदभूतमहाभारतेन तथा वेदार्थोपनिबन्धनेन पुराणादिना बहुधा विस्तृतवान् इत्यस्य व्यासत्वमिति प्रसिद्धिः ]। प्रख्यापितकविविधाचरणाय रचितग्रन्थाध्यापनेन शिष्यमपि, चक्रे इति ।—यः,—कविवेधाः व्यास इत्यर्थः, भारतं—तदाख्यं महाकाव्यं भारतं वर्षमिव—भरतराजाधिष्ठितप्रदेशविशेषमिव, [ अत्र "भारतम्" इत्येकस्यैव पदस्य श्लेषवशेन उभयार्थपरतया "वर्षमिव" इत्यनेनाध्याहृतमिति बोध्यम् ] सरस्वत्या—वागधिष्ठात्र्या देव्या, पूर्वं,—प्रधानमन्त्रपदैर्वर्णसमन्वितया स्वनामप्रसिद्धया नद्येत्यर्थः, पुण्यं—पवित्रं, चक्रे—कृतवान्, तदुक्तम्,—"भारताध्ययनात् पुण्यादपि पादमधीयतः । श्रद्दधानस्य पूयन्ते सर्वपापानि शेषतः ॥" इति । यथा विधाता निजनिर्माणकौशलस्य परां कोटिमेवेव प्रदर्शयितुं सर्वगुणमनोहरं विविधानुभवाकरं सर्वतः समधिकं समुत्कर्षं भारतवर्षं सृष्टिप्रकटिताखिलपापनाशाय अमलसलिलशालिन्या परमपवित्रप्रवाहिण्या सरस्वत्या नाम्न्या नद्या पवित्रीचकार, तथाऽयमपि योगबललब्धाखिलविद्याप्रकाशो वेदव्यासः सर्वसारसमन्वितम् अशेषकाव्यरचनानिदर्शं स्वप्रणीतं महाभारतं लोकातिशायिना वर्णानिर्मुखभावप्रसविना वागधिदेवतायाः कलाविलासेन पवित्रतामनयदिति निष्कृष्टार्थः । अत्र महाभारतस्य भारतवर्षेण सह सर्वैश्वर्यसाम्यकथनादुपमालङ्कारः, तेन च व्यासस्य विधातृसादृश्यं व्यज्यते तथा च उपमयाऽलङ्कारेण उपमालङ्कारध्वनिरिति बोध्यम् । अनुष्टुप् वृत्तम् ॥ ४ ॥

अथेदानीं श्लोकषट्केन लौकिककवीनां स्वभावं पर्यालोचयन्नाह, प्राय इति ।—रागः, असंदर्भनिवेशः तेन अधिष्ठिता—आक्रान्ता, दृष्टिः,—ज्ञानं येषां तथाविधाः, अत एव कुकवयः,—कु—कुत्सिताः कवयः,—काव्यप्रणेतारः, असत्काव्यरचयितारः इति यावत्, प्रायः,—बाहुल्येन लोके—जगति, दृश्यन्ते इति शेषः, विषयरागान्धतया अज्ञानोपहतदृष्टीनां कुकवीनां यानि हि भूयांसि काव्यानि इह लोके दृश्यन्ते, तानि तु आलङ्कारिकादिप्रदर्शितसम्प्रदायानुसारतया वैरस्यमसारतर-

श्लेषप्रायमुदीच्येषु प्रतीच्येष्वर्थमात्रकम्।
उत्प्रेक्षा दाक्षिणात्येषु गौडेष्वक्षरडम्बरः ॥ ७ ॥
नवोऽर्थो जातिरग्राम्या श्लेषोऽक्लिष्टः स्फुटो रसः।
विकटाक्षरबन्धश्च कृत्स्नमेकत्र दुष्करम् ॥ ८ ॥

---

विशेषिता पद्यादिबन्धोपनिबद्धा कथामिवेति कथाकारं विदग्धजनस्य मनसि तया जनान् विमोहयन्तीति भावः। अत्र वाणी कौशलादसत्त्वाभ्यन्तरात् विभ्रमिस्थत्वेन वैदग्ध्यानुभावित रूपकमलङ्कारः। अनुष्टुप् छन्दः ॥ ७ ॥

काव्यात्मनीतकथाविचारविरहितानां मन्दधियां विविधदेशोद्भवानां कवीनां रुचिवैचित्र्यं विपरीतं तत्तत्कृतिषु श्लेषादिबाहुल्यं प्रदर्शयति, श्लेषेति। उदीच्येषु उदीच्याम् उत्तरस्यां दिशि भवा ये तथाभूताः, अथवा ये उत्तरदेशवास्तव्याः कवयः तेषु, कविषु इति शेषः, श्लेषप्राय—श्लेषाणाम्—अनेकार्थाभिधानानां, प्रायः—बाहुल्यं यस्मिन् तथाभूतं, बहुधाभिधायकपदोपनिबद्धमिति यावत्, काव्यबन्धं त्वाभीष्टतया परिगृहीतमिति दृश्यते इति शेषः उदीच्याः कवयः प्रायः श्लेषालङ्कारभूयिष्ठं काव्यं प्रणयन्तीति भावः, प्रतीच्येषु—पश्चिमदेशीयेषु पाश्चात्त्यकविषु, अर्थमात्रकम्—अर्थस्य—वाच्यलक्ष्यव्यङ्ग्यभेदेन भिन्नस्य, मात्रकं—बाहुल्यं यस्मिन् तथाभूतम्, अर्थगाम्भीर्यपूर्णपदनिबन्धनमित्यर्थः तथा च प्रतीच्यानाम् अर्थनिर्भरादर एव न तु उदीच्यानामिव तथा श्लेषालङ्कारादिषु प्रयाससमनुत्थम इति भावः इदं प्रतीयते, दाक्षिणात्येषु—या विन्ध्याचलात् महासागरं यावत् ये भूमिभागाः तेषु तदधिष्ठितेषु कविषु उत्प्रेक्षा—सम्भावनामूलकं प्रकृतस्य अप्रकृतरूपतया तादात्म्याध्यानं, यथा हि—"भवेत् मुखमाननमेव प्रकृतस्य परात्मना" इत्युक्तलक्षणालङ्कारविशेषः इत्यर्थः, आद्रियते इति शेषः गौडेषु—वङ्गदेशात् प्रभृति उत्कलदेशसीमासमवच्छिन्ना सुवर्णरेखां नदीं यावत् विस्तृतजनपदेषु प्रादुर्भवति भावः अक्षरडम्बरः—अक्षराणां—वर्णानां डम्बरः—ओजोगुणवता समासभूयिष्ठानां पदानां बन्धकृतरचनाचातुर्यं भवेत्, अत एव रीतिषु गौडी नाम एका पदसङ्घटना दृश्यते तथा हि—"ओजःप्रकाशकैर्वर्णैर्बन्ध आडम्बरः पुनः। समासबहुला गौडी" इत्यालङ्कारिकाः, एतेन एतदुक्तं भवति यत्, अन्यत्रैव कविषु क्वचित् क्वचित् गुणा वर्तन्ते, स तु न सहृदयप्रीतिकरः यत्र तु सर्व एव गुणाः पूर्णतया वसन्ति स एव सत्कविषु प्रधान अन्यः केवलं तदाख्यामात्रभाग् इति भावः। अनुष्टुप् छन्दः ॥ ८ ॥

साम्प्रतं सहृदयप्रीतिकररचनाप्रकारे विदग्धः साधारणकविभिरुपनिबद्धेषु

पदबन्धोज्ज्वलो हारी कृतवर्णक्रमस्थितिः ।
भट्टारहरिचन्द्रस्य गद्यबन्धो नृपायते ॥ १३ ॥
अविनाशिनमग्राम्यमकरोत् सातवाहनः ।
विशुद्धजातिभिः कोशं रत्नैरिव सुभाषितैः ॥ १४ ॥

---

अलङ्कारः नूनं—निश्चितम् अभवत्—अभवदपेत्यर्थः । स्कन्ददासमिव कुरुपक्षातिनी पतितमवेत्य पाण्डवा यथा विजयाशारहिता हतदर्पा जाताः तथा महाकवे सुबन्धोः कृती वीतगुणराजिभूषितस्य वासवदत्ताप्रबन्धस्य वाचनात् सर्वे कवयः तत समुत्कर्षं मनसापि कर्तुमक्षमा हताहङ्कारा अभवन्निति निष्कर्षः । [ एतेन वासव दत्तारसपरमस्यानीव समुत्कर्षं उक्तः, यथा महाकविसुबन्धुविरचितकाव्यवत् एषा श्रीहर्षचरितकथाऽपि सकलगुणालङ्कृता सहृदयानां हृदयग्राहिणी च इत्यभिप्रायो व्यज्यते ]। उपमाऽलङ्कारः । अनुष्टुप् वृत्तम् ॥ १२ ॥

अथ सुकवीनामपेक्षस्य कविकुलतिलकस्य महाकवेः हरिचन्द्रस्य गद्यकाव्यस्य प्राधान्यं प्रतिपादयति पदेति ।—पदानां—सुप्तिङन्तानां बन्धे वैदर्भ्यादिरीत्या रचनाविशेषे, दृढपदे—समस्तपदात्मके नैव उज्ज्वलः—समुद्भासितः, हारी—मनोहरः, हाराख्यहारशाली च [ “अहारी” इति पा०—नास्ति हारो—द्यौ यस्मात् तथाभूतः, अथवा,—न हरति कस्यापि अर्थमित्यहारीत्यर्थः ] कृता—सम्पादिता वर्णानाम्—अक्षराणां, ब्राह्मणादीनाञ्च, क्रमेण—रीतिपरिपाट्या मर्यादाम् सारेण च, स्थितिः,—सन्निवेशः, यथास्थानेषु यस्मिन् येन वा तथोक्तः, भट्टारः,—पूज्यः, हरिचन्द्रः—तदाख्यः कश्चन कविविशेषः तस्य गद्यबन्धः,—गद्यग्रन्थः, [ “पद्यबन्ध” इति पाठान्तरं ] नृपः,—राजा, स इवाचरतीति नृपायते—राजवत् समुद्भासते सर्वोत्कर्षेण वर्तते इत्यर्थः । हरिचन्द्रकवेः काव्यं सर्वश्रेष्ठमिति तात्पर्यम् । अनुष्टुप् वृत्तम् ॥ १३ ॥

अपरमपि कविश्रेष्ठं सातवाहनं प्रशंसति अविनाशिनमिति ।—सातवाहनः,—तदाख्यः कविः, विशुद्धा—निर्दोषा जातिः—अभिनवकाव्यार्थानामुत्पत्तिः, अलङ्कार विशेषो वा येषु तथाविधैः, सुभाषितैः,—हृदयग्राहिभिः वाक्यैः रत्नैरिव—मण्यादिभिरिव, पद्यरत्नसमूहैरित्यर्थः अविनाशिनम्—अनश्वरम्, अतिरमणीयत्वेन चिरस्थायिनमिति भावः, अग्राम्यम्—ग्राम्यदोषवर्जितं, कोशं—काव्यसङ्ग्रहम् अकरोत्—विदधौ, यथा रत्नैः सह सुभाषितानामैक्यसाम्यप्रतीतेरुपमाऽलङ्कारः । अनुष्टुप् वृत्तम् ॥ १४ ॥

कीर्त्तिः प्रवरसेनस्य प्रयाता कुमुदोज्ज्वला।
सागरस्य परं पारं कपिसेनेव सेतुना ॥ १५ ॥
सूत्रधारकृतारम्भैर्नाटकैर्बहुभूमिकैः।
सपताकैर्यशो लेभे भासो देवकुलैरिव ॥ १६ ॥

---

प्रवरसेननामानमपरमपि कवीन्द्रं प्रशंसति कीर्त्तिरिति।—प्रवरसेनस्य—तदाख्यस्य कवेः, पक्षे,—प्रवे—रथगीरकलात प्रवे इत्यर्थः, वराः,—श्रेष्ठा येषां ते प्रवराः—वानराः, तथाविधाः,—स्वामी तस्य वानरराजस्य सुग्रीवस्येत्यर्थः, ("इनः पत्यौ नृपार्कयोः" इति मेदिनी) कुमुदवत्—कैरववत्, उज्ज्वला—प्रदीप्ता धवला च, पक्षे,—कु,—पृथिवी, तस्याः मुत—आनन्दः तया उज्ज्वला—भासुरा, कीर्त्तिः—एकत्र—काव्यप्रथनजम्, अपरत्र—वैदेह्याः समुद्धरणजनितं यशः, ("यशः कीर्त्तिः समज्ञा च" इत्यमरः) कुमुदोज्ज्वला—कुमुदेन—तदाख्येन वानरसेनापतिना, उज्ज्वला—प्रशस्ता, तस्य शौर्यसमुल्लसिता इत्यर्थः, कपिसेनेव—वानरचमूरिव, सेतुना—तदाख्यकाव्यग्रन्थेन, पक्षे—तदाख्यया प्रसिद्धेन श्रीरामकृतमार्गेण सागरस्य परं पारं प्रयाता—गता। यथा वानरसेना सेतुबन्धेन सागरमुत्तीर्य परपारस्थिता तदा गता, तथा प्रवरसेनस्य यशः तदीयकाव्यग्रन्थस्य प्रचारेण सागरमपि उत्तीर्य द्वीपान्तरं गतमिति निर्गलितोऽर्थः। अनुष्टुप् छन्दः ॥ १५ ॥

अत्र दृश्यकाव्यरचयितारमतीव प्राचीनं भासकविं स्तौति सूत्रेति।—भासः,—तदाख्यः कविः, सूत्रं—नाटकीयप्रयोगानुष्ठानं, धारयतीति सूत्रधारः,—नाटकाभिनेतृप्रधानपुरुषविशेषः, स्थपतिश्च, तेन कृतः आरम्भो येषां तैः, बह्वी भूमिका—अनुकरणावस्थाविशेषः वेशपरिवर्त्तः, रचना च, शिल्पकौशलमिति यावत् येषु तथाभूतैः, पताका—"बीजं बिन्दुः पताका च प्रकरी कार्यमेव च। अर्थप्रकृतयः पञ्च" इति पञ्चविधानां तासां अर्थप्रकृतिः, सा च 'यत्र वृत्तम् परार्थे स्यात् प्रधानस्योपकारकम्। प्रधानवच्च कल्प्येत सा पताकेति कीर्त्यते॥" इत्युक्तलक्षणा, वैजयन्ती च, तया सहितैः, देवकुलैरिव—देवमन्दिरैरिव, नाटकैः,—रूपकभेदैः, तल्लक्षणं दर्पणकारैः,—"तत्र रूपारोपात्तु रूपकम्" इति, "नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसमन्वितम्। विलासर्द्ध्यादिगुणवद् युक्तं नानाविभूतिभिः॥ सुखदुःखसमुद्भूति नानारसनिरन्तरम्। पञ्चादिका दशपरास्तत्राङ्काः परिकीर्त्तिताः॥ प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान्। दिव्योऽथ दिव्यादिव्यो वा गुणवान्नायको मतः॥ एक एव भवेदङ्गी शृङ्गारो वीर एव वा। अङ्गमन्ये रसाः सर्वे कार्यो निर्वहणेऽद्भुतः॥ चत्वारः पञ्च वा मुख्याः कार्यव्यापृत

आढ्यराजकृतोत्साहैर्हृदयस्थैः स्मृतैरपि।
जिह्वाऽन्तः कृष्यमाणेव न कवित्वे प्रवर्तते॥ १९॥
तथाऽपि नृपतेर्भक्त्या भीतो निर्वहणाकुलः।
करोम्याख्यायिकाऽम्भोधौ जिह्वाप्लवनचापलम्॥ २०॥

---

काम यस्या तथोक्ता, यद्वा,—समुद्दीपित,—प्रज्वलित, कन्दर्प,—काम यस्या तथाभूता, मदनप्रकटीकृतविविधविलासा इत्यर्थ, (पुरा हि भगवत शङ्करस्य समाधिभङ्गाय मनसिजेन विविधस्य विलासस्य प्रादुर्भावितत्वादिति) कृतम्—अनुष्ठितं, गौर्य्या,—ईश्वर्या, प्रसाधनम्—आराधन, नायकेन नरवाहनदत्तेनेति भाव यस्या तथाभूता, अथवा,—कृतम्—अनुष्ठित, गौर्य्या—पार्वत्या, (कर्तृभूतया) प्रसाधनम्—आराधन, कस्यचिदिति भाव, यद्वा —गौर्य्या (कर्मभूताया) प्रसाधनम्—अलङ्करण, हरेणेव कृतमिति भाव यस्या तथाभूता, बृहत्कथा—तदाख्यम् इतिहासकाव्य, हरलीलेव—शिवविलास इव, कस्य—जनस्य, विस्मयाय—आश्चर्याय, गर्वपरिहाराय वा, नो भवतीति शेष, अपि तु सर्वस्यैव कवे सामाजिकजनस्य च विस्मयाय भवतीत्यर्थ। उपमाऽलङ्कार। अनुष्टुप् वृत्तम्॥ १८॥

अपरञ्च आढ्यराजनामानं कवि प्रशंसति, आढ्येति।—आढ्यराजो नाम कश्चित् कवि, तेन कृता,—प्रणीता, ये उत्साहा,—कीर्तिसौभाग्यव्यवसायफलभूता सन्दर्भविशेषा ते, हृदयस्थे,—चित्तनिहिते, मनसा पर्यालोचितैरित्यर्थ, अपि—किंवा, स्मृते,—कदाचित् स्मरणपदवीं गते सति, जिह्वा—रसना, मदीयेति भाव, अन्तःकृष्यमाणेव—केनचित् बलात् हृदयाभ्यन्तरं नीयमानेवेत्यर्थ, तथा तत्र वाङ्निःसारणप्रयासः क्लेशाय उत्साहानां पुरस्तादित्याशयेनेति भाव, कवित्वे—कवित्वं प्रकटयितुमित्यर्थ, न प्रवर्तते—नोत्सहते, उत्साहसन्दर्भं दृष्ट्वा गौरवे यत्, तदपेक्षया मम सन्दर्भं न खलु प्रतिभातु शक्नोतीति भाव। [ "आढ्यराजकृतोत्साहै" इत्यत्र "आढ्यराजकृतोच्छ्वासै" इति पाठे—उच्छ्वासा,—तदाख्यकाव्यभेदा इत्यर्थ। अत्र प्रकृतायाः कवित्वप्रकटनाप्रवृत्ताया जिह्वाया अप्रकृतेन अन्तःकृष्यमाणत्वेन सम्बन्धानुरूपतादात्म्याध्यासादुत्कटैककोटिकसन्देहोदयात् उत्प्रेक्षाऽलङ्कार। अनुष्टुप् वृत्तम्॥ १९॥

इदानीं पूर्वोक्तसुकव्यपेक्षया आत्मनो न्यूनत्वेऽपि काव्यप्रणयने हेतुं प्रकटयति, तथापीति।—तथापि—आढ्यकीर्तिभि मे जिह्वाया अन्तःकृष्यमाणत्वेऽपि, नृपते,—राज्ञ श्रीहर्षस्य, स्वचरितवर्णने मम प्रवर्तकस्येति भाव, भक्त्या—अनुरागपारवश्येनेति भाव, निर्वहणे—परिसमाप्तौ, आकुल,—महाराजस्य चरितकथाया, अपरिसमाप्ति-

दर्शयन्ती मुखे खेदं प्रस्खलन्ती पदे पदे।
कथञ्चित् नीयते शय्यां कथा नववधूरिव ॥ २२ ॥
जयति ज्वलत्प्रतापज्वलनप्राकारकृतजगद्रक्षः।
सकलप्रणयिमनोरथसिद्धिश्रीपर्व्वतो हर्षः ॥ २३ ॥

---

अथ चिरोर्जितस्याख्यायिकाया सेवैव सामाजिकानां दुर्गमत्वात् दुष्करमित्याह, दर्शयन्तीति।—मुखे—प्रारम्भे, वदने च, खेदं—विमनायमानानां सामाजिकानां विरामस्थितिं यावत्, अन्यत्र,—सुरतविधौ अनिच्छाजनितम् अननुराग-मित्यर्थः, दर्शयन्ती—प्रकटयन्ती, तथा पदे पदे—प्रतिपदप्रयोगमात्रे इति भावः, अन्यत्र,—प्रतिपादविक्षेपमित्यर्थः, प्रस्खलन्ती—व्याकरणालङ्कारादिस्खलदनुमोलितपदात् अनियत प्रयतमाना, अन्यत्र,—नववधूचितलज्जया सङ्गमसाध्वसेन वा पतिमुपगन्तु-मनिच्छन्ती, अत एव नववधूरिव—नवोढा कामिनीव, कथा—आख्यायिकाकाव्यं, कथञ्चित्—महता कष्टेन, अतिप्रयत्नेनेत्यर्थः, शय्या—सहृदयहृदयरूपविश्रामस्थानम्, अन्यत्र,—शयनं, नीयते—प्राप्यते। अत्र नववध्वा सह कथायाः साम्यप्रदर्शनात् श्लिष्टविशेषणोत्थापिततया श्लेषानुप्राणितोपमालङ्कारः। अनुष्टुप् वृत्तम् ॥ २२ ॥

साम्प्रतं स्ववर्णनीयकाव्यनायकमाशिषा संवर्द्धयति, जयतीति।—ज्वलन्—दीप्यमानः, प्रताप एव ज्वलनम्—अग्निः, तदेव प्राकारः,—सालः, प्राचीरम् इत्यर्थः, ("प्राकारो वरणः सालः प्राचीरं प्रान्ततो वृतिः" इत्यमरः) तेन कृता जगतां रक्षा येन तथाभूतः, प्राकारवेष्टिता पुरी यथा अनायासेन सुरक्षितुं शक्यते तथा विशालमपि साम्राज्यं महाप्रतापेन येन एकपुरमिव सुखं पालयाञ्चक्रे, एतेनास्या-प्रतिमशौर्यमाचिरेण प्रतिपादितमिति, तथा सकलानां—समग्राणां, प्रणयिनाम्—अर्थिनां, मनोरथस्य—अभीष्टस्य, सिद्धौ—सम्पूर्त्तौ श्रिया—सम्पदा, पर्व्वतः,—गिरिः, लक्ष्मीनिवासभूताचल इत्यर्थः, लक्ष्मीसद्भूत अनन्तवसुप्रसव गिरि यथा समागतानां धनार्थिनामभीप्सितं पूरयति, तदैव यो हि अज्ञातमर्थिषु धनं तोयवत् विकीर्य सार्थिसार्थमनोरथमपूपुरत्, एतेनास्याक्षीणदानशौण्डत्वं प्रतिपादितमिति ज्ञेयम्, हर्षयति —आनन्दयति जनानिति हर्षः,—तदाख्यः नृपतिः, जयति—सर्व्वोत्कर्षेण वर्त्तते। [जयति ज्वलत्" इत्यत्र "जय ज्वलत्" इति पाठे—त्वं जय इति व्याख्यायते]। अत्र प्रतापे ज्वलनतादात्म्याध्यासात्, तथा राजनि हर्षे च श्रीपर्व्वताभेदारोपात् निरङ्ग-रूपकमलङ्कारः। आर्य्या वृत्तम् ॥ २३ ॥

एवमनुश्रूयते,—(१) पुरा किल भगवान् स्वलोकमधितिष्ठन् परमेष्ठी विकासिनि पद्मविष्टरे समुपविष्टः सुनासीरप्रमुखैर्गीर्वाणैः परिवृतो ब्रह्मोद्याः कथाः कुर्वन् अन्याश्च निरवद्या विद्यागोष्ठीर्भावयन् कदाचिदासाञ्चक्रे। (२) तथाऽऽसीनञ्च तं त्रिभुवनप्रतीक्ष्यं मनुदक्षचाक्षुषप्रभृतयः प्रजापतयः सर्वे च सप्तर्षिपुरःसरा महर्षयः सिषेविरे। केचिद् ऋचः स्तुतिचतुराः

---

(१) एवमिति।—अनुश्रूयते—परम्परया आकर्ण्यते। किलेति—प्रसिद्धौ। भग,—ऐश्वर्यादिषट्कं विद्यते यस्येति भगवान्, तदुक्तम्,—'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना॥" इति। स्वस्य—आत्मनः लोकः स्वलोकः—ब्रह्मलोकमित्यर्थः। अधितिष्ठन्—समादरेण तदधीनं चैनादिकमादधन्। परमे—सर्वोत्कृष्टे स्थाने तिष्ठतीति परमेष्ठी—ब्रह्मा। विकासिनि—विकस्वरे। पद्ममेव—कमलमेव, विष्टरः,—आसनं तस्मिन् पद्मविष्टरे। सुनासीरप्रमुखैः,—इन्द्रप्रभृतिभिः, ["वृद्धश्रवाः सुनासीरः पुरुहूतः पुरन्दरः" इत्यमरः। शुनु नासीरः,—अग्रगं सैन्यं यस्य सः, इन्द्र इति व्युत्पत्तिः]। गीर्वाणैः,—देवैः, ("गीर्वाणा दानवारयः" इति देवपर्यायेष्वमरः)। परिवृतः,—चतुर्दिक्षु परिवेष्टितः, तस्य चतुराननत्वात्। ब्रह्मोद्याः,—ब्रह्म—वेदः, ("वेदस्तत्त्वं तपो ब्रह्म" इत्यमरः) परमात्मा वा, उद्यते—कथ्यते, कीर्त्यते इति यावत् याभिः तथाभूताः, ["वद सुपि क्यप् च" (३।१।१०६ पा०) इति भावे क्यप्, कर्मणि प्रत्ययः इत्येके, तथा च उक्तम्,—"ब्रह्मोद्या या कथा यस्यामुद्यते ब्रह्म शाश्वतम्" इति, तासां वक्ष्यमाणगीतानुकूलत्वेन प्रधानतया तस्य प्रतिपादनम्। "ब्रह्मोदिताः" इति पाठे—ब्रह्मणा—वेदेन उदिताः—उक्ताः इत्यर्थः]। अन्याः,—वेदवार्ता इत्यर्थः, निरवद्याः,—अनिन्द्याः, विद्यागोष्ठीः,—आलापोचिताः सभाः, समानविद्यावित्तशीलबुद्धिवयसामनुरूपैरालापैरन्योन्यभाषणरूपाः इति यावत्, तथा च वात्स्यायनीये,—"या गोष्ठी लोकविद्विष्टा या च स्वैरविसर्पिणी। परहिंसात्मिका या च न तामवतरेद् बुधः॥ लोकचित्तानुवर्तिन्या क्रीडामात्रैककार्यया। गोष्ठ्या सह चरन् विद्वान् लोकसिद्धिं नियच्छति॥" इति। भावयन्—सम्पादयन्। आसाञ्चक्रे—तस्थौ।

(२) तथाऽऽसीनमिति।—तथा—तेन प्रकारेण, आसीनम्—उपविष्टं, त्रिभुवनप्रतीक्ष्यं—त्रिलोकीपूज्यं, ("प्रतीक्ष्यः पूज्यः" इत्यमरः)। ऋचः,—ऋग्वेदाः।

समुदचारयन्, केचिदपचितिभाञ्जि यजूंषि अपठन्, केचित् प्रशंसासामानि जगुः; अपरे वितत-कर्मक्रियातत्त्वान् मन्त्रान् व्याचचक्षिरे। विद्याविसंवादकृताश्च तत्र तेषाम् अन्योऽन्यस्य विद्याविवादाः प्रादुरभवन्।

(३) अथातिरोषणः प्रकृत्या महातपा मुनिः अत्रेः तनयः तारापतेः भ्राता नाम्ना दुर्व्वासा द्वितीयेन मन्दपालनाम्ना मुनिना सह कलहायमानः साम गायन् क्रोधान्धो विस्वरम् अकरोत्। सर्व्वेषु च शापभयप्रतिपन्नमौनेषु मुनिषु, अन्यालापलीलया अवधीरयति कमलसम्भवे, कुमारी किञ्चिदुन्मुक्त-

---

श्रुतिचतुरा,—श्रुतिषु—वेदपाठेषु, चतुरा,—दक्षा। समुदचारयन—सम्यक् उदात्तादिस्वरादिसाधर्म्येण उच्चारितवन्तः। अपचितिभाञ्जि—अपचिति—पूजां, भजन्ते इति तथोक्तानि, पूजामुपस्थापनीयानि, ("पूजा नमस्याऽपचितिः" इत्यमरः)। यजूंषि—यजुराख्यवेदभागानित्यर्थः। प्रशंसासामानि—स्तुतिरूपाणि सामानि, सङ्गीत प्रधान वेदभागानित्यर्थः। जगुः,—गीतवन्तः। विततकर्मक्रियातत्त्वान—विततानि—प्रकटितानि, कर्म्मक्रियाणां—कार्य्यानुष्ठानानां, तत्त्वानि—प्रकरणानि यैः येषु वा तान्। ["विततक्रतुक्रियातत्त्वान्" इति पाठान्तरे—विततानि क्रतुक्रियाणां—यज्ञकर्म्मणां, तत्त्वानि यैस्ते] विद्याविसंवादकृताः,—विद्यानां—दर्शनादीनां, विसंवादेन—मतभेदेन, कृताः,—जनिताः, न तु मात्सर्य्यादिना।

(३) अतिरोषणः,—अतिकोपनः। प्रकृत्या—स्वभावेन, अन्यथा ब्रह्मसंसदि कथमेवमाचरेत् स्यात्। तारापतेः,—चन्द्रस्य। ["मन्दपालनाम्ना" इत्यत्र "मन्दुपालनाम्ना" इति पाठान्तरम्]। कलहायमानः,—कलहं कुर्व्वन्। गायन्—सङ्गीतस्वरेण पठन्। विस्वरम्—विकृताः स्वराः,—उदात्तादयः यस्मिन् तथाभूतं यथा तथा। दुर्व्वाससि तथा विस्वरं साम गायति यदि कश्चित् दोषमुत्कीर्त्तयति, तदा तं प्रति अनेन शापोत्सर्गः क्रियते इत्याशयेनाह, शापेति।—शापभयप्रतिपन्नमौनेषु—शापात् भयं शापभयं, तेन प्रतिपन्नम्—अङ्गीकृतं, मौनं यैः तथाभूतेषु। अन्यालापलीलया—अपरकथाच्छलेनेत्यर्थः। अवधीरयति—अवज्ञां कुर्व्वति, दुर्व्वाससं प्रतीति शेषः। कमलसम्भवे—पद्मयोनौ, ब्रह्मणीत्यर्थः। कुमारी—अनूढा बाला, कौमारव्रतं—ब्रह्मचर्य्यं तरती वा। ["कुमारी" इत्यत प्राक् "भगवती" इति विशेषणेन कचित पाठः

बालभावे भूषितनवयौवने वयसि वर्त्तमाना, गृहीतचामरप्रचलभुजलता पितामहमुपवीजयन्ती, (४) निर्भर्त्सनताडनजातरागाभ्यामिव स्वभावारुणाभ्यां पादपल्लवाभ्यां समुद्भासमाना, शिष्यहृदयेनेव पदक्रममुखरेण नूपुरयुगलेन वाचालितचरणा, मदननगरतोरणस्तम्भविभ्रमं बिभ्राणा जङ्घाद्वितयं, सलीलम् उत्कलकलहंसकुलकलाऽऽलापप्रलापिनि मेखलादाम्नि विन्यस्तवामहस्तकिसलया, विद्वन्मानसनिवासलग्नेन गुणकलापेनेव अंसावलम्बिना ब्रह्मसूत्रेण पवित्रीकृतकाया, भास्वन्मध्यनायकाम् अनेकमुक्ताऽनुयाताम् अपवर्गमार्ग-

---

—तत्र भगवती—प्राग्भवे वर्द्धयाञ्चिकीत्यर्थः ]। किञ्चिदुन्मुक्तबालभावे—ईषद्विगतशैशवे इत्यर्थः। गृहीतचामरप्रचलभुजलता—गृहीतेन चामरेण—बालव्यजनेन, प्रचला—चञ्चला, भुज एव लता यस्या तथोक्ता, ["प्रचलभुजलता" इत्यत्र "प्रचलद्भुजलता" इति पाठान्तरे—प्रचलन्ती भुज एव लता यस्या सा ]। पितामह—ब्रह्माणम्। उपवीजयन्ती—वीजनेन आराधयन्तीत्यर्थः।

(४) निर्भर्त्सनेति।—निर्भर्त्सनाय—विस्रब्धालापत दुर्वाससं प्रति तिरस्काराय, ताडन—प्रहार, रोषात्पदाभिघातनमित्यर्थः, तेन जात,—उद्भूत, राग,—लौहित्य ययो समुद्भूताभ्या, स्वभावारुणाभ्या—सहजरक्ताभ्याम्। समुद्भासमाना—सम्यक् विद्योतमाना। पदक्रममुखरेण—पदयो क्रम,—विक्षेप, तेन मुखरं—सशब्दं, एव हितयं तेन। वाचालितचरणा—वाचालितौ—नदन्तौ, चरणौ यस्या तथोक्ता। मदननगरतोरणस्तम्भविभ्रमं—मदनस्य—कामस्य, नगरम्—अवस्थानस्थान, तस्य तोरण —बहिर्द्वारं, ("तोरणोऽस्त्री बहिर्द्वारम्" इत्यमर) तस्य स्तम्भौ तयो विभ्रम इव विभ्रम,—विलास यस्य तथाभूतम्। जङ्घाद्वितयम्—जङ्घायुगलम्। ["मदन" इत्यत्र "धर्म" इति पाठान्तरम् अर्थासङ्गतत्वादुपेक्ष्यम् ]। उत्कलेति।—उत्कलानाम्—उत्सुकानां, कलहंसानां कुलस्य कल —मधुरास्फुटरव, स एव आलाप,—आभाषणं, तद्वत् प्रलापिनि—मधुरास्फुटशब्दायमाने इत्यर्थः। मेखलादाम्नि—काञ्चीयष्टौ। विद्वन्मानसनिवासलग्नेन—विदुषां मानसं—हृदयं, तत्र निवास,—सार्वकालिकस्थिति, तेन लग्न—संसक्तं तेन, गुणकलापेनेव—दाक्षिण्यशौचादिगुणसमूहेनेव। अंसावलम्बिना,—स्कन्धावलम्बमानेन, ब्रह्मसूत्रेण—यज्ञोपवीतेन। भास-

मिव हारमुरसा समुद्वहन्ती, (५) मदनप्रविष्टसर्वविद्याधरवधूचरणालक्तकरसेनेव पाटलेन स्फुरता दशनच्छदेन विराजमाना, मद्रान्तकमलासनकृष्णाजिनप्रतिमां मधुरगीताऽऽकर्णनावतीर्णशशिहरिणाम् इव कपोलस्थलीं दधाना, तिर्यक् सावज्ञम् उन्नमितैकभ्रूलता, श्रोत्रियं (६) विस्वरपठनकलुषितं प्रक्षालयन्तीव अपाङ्गनिर्गमेन लोचनाश्रुजलप्रवाहेण इतरश्रवणेन च विकसितसितसिन्धुवारमञ्जरीजुषा हसतीव

---

भ्राजमानं—भ्राजत्—दीप्यमानं, मधुवासरः,—मधुमासे यथा तथा ॥ तम; रवौ—भास्वत,—सूर्यस्य, सूर्योदयकालस्येव, मध्ये तेज भवति च, यदुक्तं,— "परिणाहशीलयुक्तस्य प्रवालाभिमुखं स्तनं। सावित्री पुरतो भीते सूर्यमण्डलभेदिनी ॥" इति। अनेकमुक्ताफलानि—अनेकाभिर्मुक्ताभि,—मुक्ताफलैः, अनुस्यूत—ग्रथितम्, मध्ये,—मनोज्ञे सुखे,—लोचनाभिरामे, मधुपान—मधितम्। अपवर्गमार्गमिव—मुक्तिपथमिव, अपवर्गमार्गस्य मुक्ताजालस्य च विशदस्वच्छत्वात् तयोर्भेदोऽभिहितम्। हार—मुक्तावलीम्, हस्तप्रक्षिप्तम् चपलतया, तत्समाधानमप्यात्मन इति वक्ष्ये।

(५) मदनेति।—मदने—मुखे, प्रविष्टाना सर्वासां विद्याधरीणां मधुना—मादीनां, चरणेषु च अलक्तकरसे,—लाक्षारसे तेनेव, अलक्तकरसरसैरिव, पाटल,—रक्त वर्ण। स्फुरता—विलसता। दशनच्छदेन—ओष्ठाधरयोरेकत्र। मद्रान्तेति।—मद्रान्ता—प्रशस्ता, कमलासनस्य—ब्रह्मण, कृष्णाजिनस्य—कृष्णमृगचर्मेव, प्रतिमा—छाया यस्मिन् तथाभूताम्, अत एव मधुरेति।—मधुरस्य गीतस्य आकर्णनाय—श्रवणाय, अवतीर्ण,—अवरूढ, समुपस्थित इत्यर्थ, शशिन,—चन्द्रस्य, हरिण,—कृष्णवर्णो मृगो यस्य तादृशीं, कपोलस्थलीं—गण्डदेशम्। तिर्यक्—कुटिलं यथा तथा। सावज्ञम—अवज्ञया, विस्वरपाठक दुर्वासस प्रति उन्नमयति भाव सह सावज्ञ यथा तथा। उन्नमितैकभ्रूलता—उन्नमिता—ऊर्ध्वं नीता, एका भ्रूलतेव यया तथाभूता। श्रोत्रियं—वर्णम्।

(६) विस्वरेति।—विस्वरपठनम्—विकृतस्वराध्ययनेन, कलुषितं—दूषितम्, अपवित्रमिति यावत्। अपाङ्गनिर्गतेन—नेत्रप्रान्तनिर्गतेन। लोचनाश्रुजलप्रवाहेण—लोचनस्य—नयनस्य, अश्रव,—निरर्था एव जलानि तथा प्रवाह,—स्रोत तेन, ["लोचनाम्बु" इत्यत्र "लोचनाश्रु" इति पाठान्तरम्]। इतरश्रवणेन—अपर

प्रकटितविद्यामदा, श्रुतिप्रणयिभिः प्रणवैरिव कर्णावतंसकुसुममधुकरकुलैः उपास्यमाना, सूक्ष्मविमलेन प्रज्ञाप्रतानेनेव अंशुकेनाच्छादितशरीरा, वाङ्मयमिव निर्मलं दिक्षु दशनज्योत्स्नालोकं विकिरन्ती देवी सरस्वती श्रुत्वा जहास।

(७) दृष्ट्वा च तां तथा हसन्तीं स मुनिः,—"आः पापे! दुर्गृहीतविद्यालवावलेपदुर्विदग्धे। माम् अपि उपहससि?" इत्युक्त्वा शिरःकम्पविशीर्यमाणबन्धविसरैः उन्मिषत्तडित्तन्तुपिङ्गलिम्नो जटासञ्चयस्य रोचिषा सिञ्चन्निव रोषदहनद्रवेण

---

कर्णेन। विकसितेति।—विकसिता—विकासं गता, या सितसिन्धुवारस्य—एतन्नामकपुष्पविशेषस्य, मञ्जरी—वल्लरी, तदनुगा—तच्छायिना, अत एव हसतेव—दुर्वाससं प्रति अवहेलनसूचितं हास्यं कुर्वतेव। प्रकटितेति।—प्रकटितः,—प्रकाशितः, विद्यामदः,—विद्याजनिताऽहङ्कारः यया तादृशी। श्रुतिप्रणयिभिः,—श्रुतिभिः,—कर्णैः सह, यः प्रणयः स विद्यते येषां तैः, श्रुतिपथं यावत् मधुरध्वनितादिति भावः, अन्यच,—श्रुतिषु—वेदेषु, प्रणयः,—सर्वाग्र्येण प्रियता, अनुराग इत्यर्थः, तद्वद्भिः। प्रणवैरिव—ब्रह्मप्रतिपादकमन्त्रविशेषैरिव। कर्णावतंसकुसुममधुकरकुलैः,—कर्णभूषणीकृतपुष्पलग्नभ्रमरवृन्दैः, उपास्यमाना—सेव्यमाना। प्रज्ञाप्रतानेन—प्रज्ञा—प्रकृष्टं ज्ञानं, तस्याः प्रतानः—प्रसरः तेनेव। अंशुकेन—वसनेन। वाङ्मयमिव—विद्यामिव। दशनज्योत्स्नालोकं—दन्तचन्द्रिकाप्रकाशमिव। विकिरन्ती—वर्षन्ती।

(७) दृष्ट्वेत्यादि।—स मुनिः तां तथा हसन्तीं दृष्ट्वा आपगतं जगादेत्यन्वयः। तथेति।—अवज्ञाऽऽकुटिलस्यपूर्वकमित्यर्थः। स मुनिः,—पूर्वकथितस्वरूपः। आः इति कोपाद्यकमव्ययम् [ "पापे" इत्यत्र "पापकारिणि" इति पाठान्तरम् ]। दुर्गृहीतेति।—दुर्गृहीत,—दुरध्यस्त, यः विद्यालवः,—विद्यालेशः, स्वल्पमात्रा विद्येत्यर्थः, तेन अवलेपः—गर्वः, तेन दुर्विदग्धा—दुर्विनीता, तत्सम्बुद्धौ। मामपि—निजतपःसिद्धतेजसं दुर्वाससमपीत्यर्थः। शिरःकम्पेति।—शिरसः कम्पेन—विधूननेन, विशीर्यमाणाः—विश्लिष्यमाणाः, ये बन्धविसराः,—बन्धनसञ्चयाः तैः। उन्मिषन्—उद्यन्, तडित्तन्तुः—विद्युद्दामा, पिङ्गलिमा—पिङ्गलत्वं यस्य तथाभूतस्य। जटासञ्चयस्य—जटासमूहस्य। [ 'शिरःकम्पशीर्यमाणबन्धविसरारो-

दश दिश, (८) कृतकालसंविधानामिव अन्धकारितललाट-पट्टाष्टापदाम् अन्तकान्तःपुरमण्डनपत्रभङ्गमकरिकां भ्रुकुटिमाबध्नन्, अतिलोहितेन चक्षुषा अमर्षदेवतायै रुधिरोपहारमिव प्रयच्छन्, निर्दयदष्टदशनच्छदो दन्तांशुच्छलेन भयपलायमानां वाचमिव निरुन्धन्, अंसस्रंसिनः शापशासनपट्टस्येव ग्रन्थिम् अन्यथा कृष्णाजिनस्य, स्वेदकणप्रतिबिम्बितैः

---

हस्तिवर्णपिङ्गलितो जटाकलापस्य" इति पाठे,—शिर कम्पेन औष्ण्यमाणौ यौ वह्नि तैन विप्रकारी,—विक्षमरस्य, इत्यस्य इति योजना, अत एव हस्तिवर्ण उद्यत्, पिङ्गलिता—पिङ्गलत्वं यस्य तथाभूतस्य, जटाकलापस्य—जटासमूहस्येत्यर्थः ]। रोचिषा—अर्चिषा ("शोचिषा" इति पाठोऽपि स एवार्थः, "रोचिः शोचिरुभे क्लीबे" इत्यमरः)। सिञ्चन्निव वर्षन्निव रोषदहनदवेन—कोपाग्निप्रवाहेण।

(८) कृतेति।—कृतं कालस्य—यमकस्य, कृतान्तस्य वा संविधानम्—उपस्थितिर्यस्याः तथाभूताम्। अन्धकारितेति।—अन्धकारितम—आकुञ्चितत्वेन दुष्प्रेक्ष्यं, ललाटपट्टमेव अष्टापद—हेम यया ताहृशीम्, [ एतेन भ्रुविषयाप्रकटीकृतस्तक्षपश्चत्वेन एतस्यादृश्यनीयत्व विवक्षितम् ]। अन्तकेति।—अन्तकस्य—यमस्य, अन्तःपुरम्—अवरोधकामिनीत्यर्थ तस्य मण्डनाय—अलङ्करणाय, पत्रभङ्गस्य मकरिका—मकराकारविचित्ररचना इत्यर्थे ताम्, रूपकमलङ्कारः। [ 'अन्तकमण्डन—" इति पाठस्तु तत्र पत्रभङ्गमकरिकायाः भयजनकत्वादपेक्ष्य ]। भ्रुकुटि—भ्रूभङ्गिम्, ( "भ्रुवोर्मूलसमुत्क्षेपाद् भ्रुकुटिः परिकीर्तित" इति कोषः )। आबध्नन्—कुर्वन्नित्यर्थः। अतिलोहितेन—अति रक्तेन। अमर्षदेवतायै—अमर्षः,—क्रोधः, तस्य अधिष्ठात्री या देवता तस्यै। रुधिरोपहार—रक्तरूप पूजाद्रव्यम्। ["रुधिरोपहारम्" इत्यत्र "सरुधिरोपहारम्" इति पाठान्तरम् ]। प्रयच्छन—अर्पयन। निर्दयेति।—निर्दयं—दृढं यथा तथा, दष्टः दशनच्छदः,—ओष्ठ, अधरोष्ठ इति यावत् येन तथाभूतः। दन्तांशुच्छलेन—दशनकिरणनिर्गमनव्याजेन। भयपलायमाना—भयात्—शापादिवन्धनादिति भावः, पलायमाना—प्रतिष्ठमानाम्। निरुन्धन—निरुद्धां कुर्वन। [ "निर्दयदष्टदशनच्छदभयपलायमानामिव वाचं रुन्धन् दन्तांशुच्छलेन" इति पाठे—निर्दयं यथा तथा दष्टः यो दशनच्छदः तस्मात् भयेन पलायमानामिवेति समासः ]। अंसस्रंसिन,—स्कन्धावलम्बिन, स्रस्तादिति भावः। [ "अंसस्रंसिन" इत्यत्र "अंसावस्रंसिन" इति पाठान्तरम् ]। कृष्णाजिनस्य—कृष्णमृगचर्मणः। शापस्य शासनपट्ट,—सनन्दफलक

मुनिमनुजवृन्दवन्दनीयां त्रिभुवनमातरं भगवतीं सरस्वतीं शप्तुमभिलषसि?" इत्यभिदधाना, (११) रोषविमुक्तविष्टरासनैः ओङ्कारमुखरितमुखैः उत्क्षेपदोलायमानजटाभारभरितशिरोभिः परिकरबन्धभ्रमितकृष्णाजिनच्छायाश्यामायमानदिवसैः (१२) अमर्षनिश्वासदोलाप्रेङ्खोलितब्रह्मलोकैः सोमरसमिव स्वेदविसरव्याजेन स्रवद्भिः अग्निहोत्रपवित्रभस्मस्मेरललाटैः

---

दूरीकरणमित्यर्थः यस्य तथोक्त, तत्सम्बुद्धि । क्वचित् पुस्तके "मुनिखेट ! अयशद ! निराकृत !" इति प्रत्येक पृथक् पृथक् सम्बोधनपद दृश्यते, तच्च निराकृत ।—पक्षाध्याय इत्यर्थः ]। आत्मस्खलितेति ।—आत्मन,—स्वस्य, स्खलित—दोष, विस्वरपठन स्खलितमिति भाव, तेन विलक्ष,—लज्जित, लज्जा प्राप्त योग्य इत्यर्थ, तत्सम्बुद्धि । सकलसुरेति ।—परम्परानिकटस्थभावाना सुरासुरमुनिमानवानामपि इव न कश्चिदिति इति भाव । [ "आत्मस्खलितविलक्ष ! कथ सकलसुरासुर—" इत्यत्र 'कथमात्मस्खलितविलक्ष सुरासुर—' इति पाठान्तर—आत्मन स्खलितेन विलक्ष,—लज्जा प्राप्त योग्योऽपि त्वमित्यर्थ ]।

(११) रोषेति ।—रोषेण—दुर्वाससं प्रति क्रोधेन, विमुक्तानि—त्यक्तानि, विष्टरासनानि—वेत्रनिर्मितानि आसनानि यै तथोक्तै । ओङ्कारेति ।—ओङ्कारेण मुखरित—ध्वनित, मुख येषा तै, सतत प्रणवमुखरैरिति भाव । उत्क्षेपेति ।—उत्क्षेपेण—उत्थानेन, दोलायमाने,—चलद्भिरित्यर्थ, जटाभारै,—जटासमूहै, भरितानि—आपूरितानि, शिरांसि येषा तै । [ "जटाभारभरितशिरोभि" इत्यत्र "जटाभारभरितदिग्भि" इति पाठान्तरे—जटाभारै, भरिता,—व्याप्ता दिश यै ते ]। परिकरेति ।—परिकरबन्ध,—कटिबन्ध, तेन भ्रमित—घूर्णित, यत् कृष्णाजिन तस्य छायया—कान्त्या, प्रभया इत्यर्थ ("छाया सूर्यप्रिया कान्ति प्रतिबिम्बमनातप" इत्यमर ) श्यामायमाना —कृष्णिमानमापद्यमाना, दिवसा य तथाभूतै, [ "—कृष्णा—" इत्यत्र कृष्णाजिनाटोपच्छाया" इति पाठान्तरम् ]।

(१२) अमर्षेति ।—अमर्षेण—क्रोधेन, य निश्वास स एव दोला—दोलनयन्त्र, पुरःपश्चात् चलत्वात् निश्वासस्येति भाव, तया प्रेङ्खोलित,—आन्दोलित, ब्रह्मलोक य तथाभूतै । सोमरसमिवेति—सोमो नाम लताविशेष, तस्य रस तमिव । स्वेदविसरव्याजेन—घर्मप्रसरच्छलेन । स्रवद्भि,—क्षरद्भि । अग्निहोत्रेति ।—अग्निहोत्रस्य पवित्र—विशुद्ध यत् भस्म तेन स्मेराणि—विकसितानि, ललाटानि येषा तै ।

कुशतन्तुचारुचामरचीरचीवरिभिः आषाढिभिः प्रहरणीकृतदण्डकमण्डलुमण्डलैः मूर्तैश्चतुर्भिर्वेदैः सह बृसीमपहाय सावित्री समुत्तस्थौ।

(१३) ततः "मर्षय भगवन्! अभूमिरेषा शापस्य" इत्यनुनाथ्यमानोऽपि विबुधैः, "उपाध्याय! स्खलितमेकं क्षमस्व" इति बद्धाञ्जलिपुटैः प्रसाद्यमानोऽपि शिष्यैः, "पुत्र! मा कृथास्तपसः प्रत्यूहम्" इति निवार्यमाणोऽप्यत्रिणा रोषाविष्टविवशो दुर्वासा "दुर्विनीते! व्यपनयामि ते विद्यालवावलेपविजृम्भितामुन्नतिमिमाम्; अधस्तात् गच्छ मर्त्यलोकम्" इत्युक्त्वा तच्छापोदकं विससर्ज। ततः प्रतिशापदानोद्यतां सावित्रीं "सखि! संहर रोषम्, असंस्कृतमतयोऽपि जात्यैव द्विजन्मानो माननीयाः" इत्यभिदधाना सरस्वती एव न्यवारयत्।

---

कुशेति।—कुशानां तन्तव,—सूत्राणि एव, चारूणि—मनोज्ञानि, चामराणि येषां तथाभूता कुशतन्तुचारुचामरा, तथा चीराणि—वल्कलखण्डानि, चीवराणि—कौपीनानि च सन्ति येषां तथाभूता तैः। आषाढिभि,—पालाशदण्ड आषाढ तद्वद्भि, तथा चोक्तम्,—"आषाढदण्डो व्रतस्थ पालाशो ब्रह्मचारिणाम्" इति। प्रहरणीकृतेति।—प्रहरणीकृता,—प्रहरणार्थम् धृता, क्रोधादिति भाव, दण्डा, कमण्डलुमण्डलानि—कमण्डलुसमूहाश्च यै तथाभूतै। मूर्तैः,—देहवद्भि। बृसीम्—आसनम ("व्रतिनामासनं बृसी" इत्यमर)।

(१३) तत इत्यादिके तच्छापोदकं विससर्ज इत्यन्वयसम्बन्धः। मर्षय—क्षमस्व। अभूमि —अस्थानम, अयोग्यस्थानमित्यर्थः। अनुनाथ्यमान,—प्रार्थ्यमान। ["अनुशास्यमान" इति पाठे—उपदिश्यमान इत्यर्थः]। उपाध्याय।—आचार्य। इति सम्बोधनम। स्खलितम्—अपराधमित्यर्थः। प्रत्यूहं—विघ्नं, शापदाने तपस क्षयादिति भाव। अत्रिणा—महातपसा ऋषिणा इत्यर्थ। दुर्विनीते।—दुष्टे। व्यपनयामि—नाशयामि। विद्येति।—विद्यालव,—विद्यालेश, अल्पमात्रा विद्येत्यर्थ, तेन य अवलेप—गर्व, तेन विजृम्भितां—तत्प्रभूताम्। उन्नतिमिति।—उच्चदेशस्थशाखा नयनेन समुच्छितोऽथ वाक्यविशेष। अधस्तात्—अधोभूमिम्। विससर्ज—तत्याज, निचिक्षेप इत्यर्थ। असंस्कृतेति।—न संस्कृता—न

(१४) अथ तां तथा शप्तां सरस्वतीं दृष्ट्वा पितामहो भगवान् कमलोत्पत्तिलग्नमृणालसूत्रामिव धवलयज्ञोपवीतिनीं तनुमुद्वहन्, उद्गच्छदच्छाङ्गुलीयकमरकतमयूखलताकलापेन त्रिभुवनोपप्लवप्रशमकुशापीडधारिणेव दक्षिणेन करेण निवार्य शापकलकलम्, अतिविमलदीर्घैर्भाविकृतयुगारम्भसूत्रपातमिव दिक्षु पातयन् दशनकिरणैः, सरस्वतीप्रस्थानमङ्गलपटहेनेव पूरयन्नाशाः स्वरेण सुधीरमुवाच,—"ब्रह्मन्! न खलु साधुः सेवितोऽयं पन्थाः, येनासि प्रवृत्तः; निहन्त्येष परस्तात्।

विपक्षा, न सम्भूतेति यावत्, मतिः,—चित्तं येषां तथाभूता। [ "असम्भृतमतय" इत्यत्र "असंस्कृतमतय" इति पाठान्तरेऽप्ययमेवार्थः ]।

(१४) अथेत्यादिके भगवान् पितामहः सुधीरमुवाच इत्यन्वयसम्बन्धः। तथेति।—तेन प्रकारेण शप्ताम् निर्दोषां सरस्वतीम् दृष्ट्वेत्यन्वयः। कमलेति।—कमलात्—नारायणनाभिपद्मात् या उत्पत्तिः,—जन्म, तस्यैवेति भावः, तया हेतुभूतया लग्नम्—सम्बद्धम्, मृणालसूत्रम् यौनिपद्मस्येति भावः यस्याः तथाभूतामिव। धवलेति।—"भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने। सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः॥" इति प्रशस्तार्थे नित्ययोगार्थे वा "अत इनि ठनौ" (५।२।११५ पा०) इति मत्वर्थीयः प्रत्ययः "विशेषणसमासस्योपपदत्वे" इत्यादाविव बोध्यः, न चैतत्, कर्मधारयानन्तरम् एकप्रमाणमाश्रिते बहुव्रीहौ प्रतिपत्तिः सम्पद्यते, अन्यत्र तु तुल्ययोगे इति नियमभङ्गस्य सम्भावितत्वम्। उद्गच्छदिति।—उद्गच्छत्—उदयमानः, अच्छस्य—विशदस्य अङ्गुलीयकमरकतस्य—मरकतनिर्मिताङ्गुलीयकस्य मयूखलताकलापः,—किरणावलीसमूहः यस्मात् तथाभूतेन। त्रिभुवनेति।—त्रिभुवनस्य—विश्वस्य, उपप्लवः,—सङ्कटः तस्य प्रशमाय—शान्तये कुशापीडः—कुशतृणसमूहः धारयतीति तथोक्तेनेव, कुशानां माङ्गलिकत्वेन अमङ्गलनाशकत्वादिति भावः। भावीति।—भाविनः—भविष्यतः, कृतयुगस्य—सत्ययुगस्य, आरम्भे यः सूत्रपातः—सूत्रविन्यासः तमिव। पातयन्—कुर्वन्, इह केवलधात्वर्थगतत्वात् अकर्मकक्रियार्थं, "सवत्सा चापित बध्वा" इत्युदाहरणवज्ज्ञेयः। दशनकिरणैः,—दन्तमयूखैः। सरस्वतीति।—सरस्वत्याः,—भारत्या इति भावः, प्रस्थानम्—ब्रह्मलोकात् मर्त्यलोके गमनमित्यर्थः, तस्य मङ्गलपटहः,—माङ्गलिकवाद्यविशेषः, तेन। सुधीरम्—सुगम्भीरम्। येनासि प्रवृत्तः,—येन पथा प्रवृत्तः,—प्रचलितः

(१५) उद्दामप्रसृतेन्द्रियवाजिसमुत्थापितं हि रजः कलुषयति दृष्टिम् अनक्षजिताम्। कियद्दूरं वा चक्षुरीक्षते? विशुद्धया हि धिया पश्यन्ति कृतबुद्धयः सर्व्वानर्थान् असतः सतो वा। निसर्गविरोधिनी चेयं पयःपावकयोरिव धर्म्मक्रोधयोः एकत्र वृत्तिः। आलोकमपहाय कथं तमसि निमज्जसि? क्षमा हि मूलं सर्व्वतपसाम्। परदोषदर्शनदक्षा दृष्टिरिव कुपिता बुद्धिर्न ते आत्मरागदोषं पश्यति। क्व महातपोभारवैवधिकता? क्व पुरोभागित्वम्? अतिरोषणश्चक्षुष्मान् अन्ध एव जनः। न हि कोपकलुषिता विमृशति मतिः कर्त्तव्य-मकर्त्तव्यं वा। कुपितस्य हि प्रथमम् अन्धकारिणी भवति विद्या, ततो भ्रुकुटिः। आदौ इन्द्रियाणि रागः समास्कन्दति, चरमं चक्षुः। आरम्भे तपो गलति, पश्चात् स्वेदसलिलम्।

श्रुयते, अस्ति—भवति। निक्षेप,—न्यास,—पणः, निदधाति, गच्छतीति शेष।

(१५) उद्दामेति।—उद्दामम्—उत्कटं यथा तथा, प्रसृतानि—प्रधावितानि, प्रचलितानीत्यर्थः, इन्द्रियाण्येव वाजिनः,—अश्वा तैः समुत्थापितं समुद्धतम्। रजः—रागः धूलिश्च। कलुषयति—आविलयति, कार्य्याकार्य्यदर्शनसामर्थ्यनाशं करोतीति भावः। अनक्षजिताम्—अक्षाणि—इन्द्रियाणि अश्वाः इति यावत् जितानि यैः ते न भवन्तीति अनक्षजिताः तेषाम् अजितेन्द्रियाणामित्यर्थः। कृतबुद्धयः—संस्कृत-मतयः। निसर्गविरोधिनी—स्वभाववैरिणी। पयःपावकयोरिव—जलानलयोरिव। महातपोभारवैवधिकता—महतः तपसः भारस्य वैवधिकः,—वाहकः तस्य भावः तत्ता, ("वोढा भारस्य धीवाडिर्जने वैवधिकः स्मृतः" इति कोषः)। पुरोभागित्वम्—दोषैकदर्शित्वम्। ("दोषैकदृक् पुरोभागी" इत्यमरः)। विमृशति—विचारयति। प्रथमा—सर्व्वप्रथमा, अन्धकारिणी—अन्धकाराच्छन्ना, भवतीति भावः। ["कुपितस्य प्रथमम् अन्धकारी भवति विद्या" इति पाठे—कुपितस्य विद्या—ज्ञानं, प्रथमम्—आदौ, अन्धकारी भवति—अन्धवद् भवतीत्यर्थः] ततः,—तदनन्तरं, भ्रुकुटिः,—भ्रूभङ्गः, भवतीति शेषः। रागः,—समासक्तिः, लौहित्यञ्च। समास्कन्दति—आक्रमति। चरमं—पश्चात्, चक्षुः समास्कन्दतीत्यन्वयः। आरम्भे, कोपस्येति

प्राति अविदग्धो जनः" इत्युक्त्वा पुनराह,—"वत्से सरस्वति! विषादं मा गाः, एषा त्वामनुयास्यति सावित्री, विनोदयिष्यति च अस्मद्विरहिताम्। आत्मजमुखकमलावलोकनावधिश्च ते शापोऽयं भविष्यति" इति। एतावदभिधाय विसर्जितसुरासुरमुनिमनुजमण्डलः ससम्भ्रमोपगतनारदस्कन्धविन्यस्तहस्तः समुचिताह्निककरणाय उदतिष्ठत्। सरस्वत्यपि शप्ता किञ्चिदधोमुखी (१७) धवलकृष्णशारां कृष्णाजिनलेखामिव तपसे दृष्टिमुरसि पातयन्ती सुरभिनिश्वासपरिमललग्नैर्मूर्त्तैः शापाक्षरैरिव षट्चरणचक्रैराकृष्यमाणा शोकशिथिलितहस्ता अधोमुखीभूतेनोपदिश्यमानमर्त्यलोकावतरणमार्गेव नखमयूखजालकेन नूपुररवव्याहारहूतैः भवन-

---

अविदग्ध,—मूढः। पुनराहेति।—वाच्यतातिशयी एव अवसानेऽपि वाक्यकर्म्मणि पुनरित्युपादानम्। विनोदयिष्यति—आनन्दयिष्यति। ["अस्मद्विरहिताम्" इत्यत्र "अस्मद्विरहदुःखिताम्" इति पाठान्तरम्]। समुचिताह्निककरणाय—समुचितं यत् आह्निकं—दिवसकार्य्यं, तस्य करणं तस्मै। सरस्वतीत्यादिके,—सरस्वत्यपि शप्ता इत्यादिरन्वयसम्बन्धः।

(१७) धवलकृष्णशारा—धवलः,—श्वेतः, कृष्णः,—नीलः ताभ्यां शारा—शबला, सवर्णितेयं ताम्, आरक्तता धवलकृष्णामिति वाक्येऽपि शारपदेन रक्तिमवर्णस्य प्रतीति स्फुटा। कृष्णाजिनलेखामिव—कृष्णसारचर्म्मरेखामिव। तपसे—तपश्चरणाय। षट्चरणचक्रैः,—भ्रमरनिकरैः। ["षट्चरणचक्रैः" इत्यत्र "षट्चरणकदम्बकैः" इति पाठान्तरम्]। शोकेति।—शोकेन—शापजनितेन दुःखेन, शिथिलितौ—श्लथौ, अवसन्नौ इत्यर्थः, हस्तौ यस्याः सा। ["शोकशिथिलित—" इत्यत्र "शापशोकशिथिलित—" इति पाठान्तरम्]। अधोमुखीभूतेन—अधोमुखतां गतेन, य आश्रितोऽपि अन्यायोपदेशं ददाति, स तथाविधमधोमुखो जायते इति भावः। नखेति।—नखमयूखाः—नखकिरणाः, जालकं—समूहः तेन। नूपुरेति।—नूपुरयोः रवाः—शिञ्जना एव, व्याहाराः—वचनानि, ("व्याहार उक्तिर्लपितं भाषितं वचनं वचः" इत्यमरः) तैः, हूताः,—आकृष्टाः तैः। ["नूपुररवव्याहारहूतैः" इत्यत्र "नूपुरव्याहाराहूतैः" इति पाठान्तरम्]।

उषासमयः। स्वयम् (२०) ऋतुराजस्य अभिषेकार्द्राः चामरकलापा इव अघट्यन्त कामिनीनां चिकुरचयाः कुसुमायुधेन। हिमदग्धसकलकमलिनीकोपेन इव (२१) हिमालयाभिमुखीं यात्राम् अधात् अंशुमाली।

अथ (२२) ललाटन्तपे तपति तपने लिखितललाटिका-पुण्ड्रकैः (२३) अलकचीरचीवरसंवीतैः (२४) स्वेदोदबिन्दु-मुक्ताफलवलयवाहिभिः दिनकराराधननियमा इव अघट्यन्त

---

इति। प्रतपन—प्रकर्षेण सन्तापं जनयन्, अध्यास,—प्रवृद्धदर्पेषु प्रतापमनुभावयन्। स्वयमिति चादरातिशयप्रदर्शनार्थं बोध्यम्।

(२०) ऋतुराजस्य—वसन्तस्य। अभिषेकार्द्राः,—स्नानार्द्राः। चामरपक्षे,—माङ्गलिकोदकसिञ्चनसम्बन्धादार्द्रत्वम्। अघट्यन्त—कृता इत्यर्थः। चिकुरचयाः,—केशकलापाः कुसुमायुधेन—कामेन, ग्रीष्मे स्नानार्द्रतया बन्धयत्नात् अति-सुन्दरत्वेन प्रतीयमाना तथाविधा कामिनीनां केशा विशेषेण कामम् उद्दीपय-न्तीति भावः। उक्तञ्च कालिदासेन,—'स्नानार्द्रमुक्तेष्वनुधूपवासं विन्यस्तसायन्तन-मल्लिकेषु। कामो वसन्तात्ययमन्दवीर्यः केशेषु लेभे बलमङ्गनानाम्॥' इति।

(२१) हिमालयाभिमुखीं—हिमालय,—उत्तरदिशि स्थित स्वनामप्रसिद्ध पर्वत-विशेष, तदभिमुखी ताम्, यात्रा—गतिम्, उत्तरायणम् इत्यर्थः, अधात्—अकरोत् इत्यर्थः। हिमेन निजकान्तानां कमलिनीनां दग्धीभूतत्वात् कोपेन तत्प्रतिकारार्थं हिमालयगमनमुत्प्रेक्ष-णीयम्। ["अधात्" इत्यत्र "अकरोत्" "अयात्" इति पाठान्तरद्वयम्]। अंशुम्—किरणान्, मलति—धारयति इति अंशुमाली—सूर्यः, एतेनास्य हिमपरिभवसमर्थत्वं प्रकटीकृतम्।

(२२) ललाटन्तपे—ललाटतापिनि, सुतरां इत्यर्थः, तपने—सूर्ये, तपति—तापं वितरति सति। लिखितेति।—लिखितललाटिकापुण्ड्रकैः—लिखित—चित्रित, हरिचन्दनेन इति भाव, [ललाटे अलङ्कार ललाटिका "कर्णललाटात् कनलङ्कारे" (४।३।६५ पा०) इति कन् तत स्त्रियामपि रूपे कापि परे टाकारस्य इत्वम्] ललाटिकापुण्ड्रक—ललाटभूषण तिलकमिदं येषु तथाविधैः।

(२३) अलकेति।—अलका,—चूर्णकुन्तला एव, चीरचीवराणि—वस्त्र-खण्डानि, तैः संवीता,—आवृता तैः।

(२४) स्वेदेति।—स्वेदोदबिन्दव,—घर्मजलबिन्दव एव, मुक्तावलयाः—

गगनाङ्गनाटितेन्दुभिः। (२५) चन्दनधूसराभिः पर्यस्य-
मानाभिः कुमुदिनीभिः इव दिवसम् अमुच्यत सुन्दरीभिः।
(२६) निदाघसमये रजनीकम् अपि न असहन्त दृशः, पिण्डित
तरठम् आतपम्। (२७) अशिशिरसमयेन चक्रवाकमिथु-
नाभिलम्बिता, मणिम इव ममिमामम् अनीयन्त भीष्माः
शर्वर्यः। (२८) अभिनवपटुपाटलामोदसुरभिपरिमलं न

केवलं जलं, जनस्य पवनस्य पवनम् अपि पातुम् अभूत् अभिलाषो दिवसकरसन्तापात्।

क्रमेण च (२८) खरखरमयूखे, खण्डिततडित्कैशवे, शुष्यत्सरसि, (३०) सीदत्स्रोतसि, मन्दनिर्झरे, (३१) झिल्लीकाझङ्कारिणि, (३२) कातरकपोतकूजितानुबन्धबधिरितविश्वे, विश्वसत्पतत्त्रिणि, (३३) करीषङ्कषमरुति, विरलवीरुधि,

यस्य तादृशम्। पवनस्य—वायोः, पवनमपि—मन्दवहनमपि, तादृशसौरभ वहन्त मवनमपि इत्यर्थः। ["पवनस्य पवनम्" इत्यत्र "पवनम्" इति पाठान्तरम्। एष च पाठः सुबोधतया समीचीनः प्रतिभाति]। पातुमभिलाषोऽभूत इत्यन्वयः।

(२८) खरखरमयूखे—खर,—तीक्ष्ण, खरमयूख,—उष्णरश्मि सूर्य इत्यर्थः यस्मिन् तथोक्ते, निदाघकाले इति पूर्वस्थिनेनान्वयः। ["खरखरमयूखे" इत्यत्र "खरखगमयूखे" इति पाठे—खे—आकाशे गच्छति इति खगः,—सूर्यः ("खगः सूर्ये ग्रहे देवे मार्गणे च विहङ्गमे" इति मेदिनी) खरः खगस्य—मयूखः यत्र तादृशि]। खण्डितेति।—खण्डित—निर्जित, तडिता—विद्युता, शैशव—बाल्य, शिशुतानिबन्धन चापल्यमिति भावः, येन तथाभूते, विद्युदालोकादपि अतितीक्ष्णालोकशालिनीति भावः। ["खण्डिततडित्कैशवे" इत्यत्र "खण्डितशैशवे" इति पाठे—खण्डितम्—अपगत—शैशव—बाल्यभाव, प्रथमावस्था इत्यर्थः, यस्य तथाभूते, प्रवर्धमाने इत्यर्थः]। शुष्यदिति।—शुष्यन्ति—शोषं गच्छन्ति—सरांसि यस्मिन तथोक्ते।

(३०) सीददिति।—सीदन्ति—अवसादं गच्छन्ति, स्रोतांसि यस्मिन् तादृशि। मन्दनिर्झरे—मन्दाः,—स्वल्पाः—निर्झराः—प्रस्रवणानि यत्र तथोक्ते।

(३१) झिल्लीकेति।—झिल्लीकाः,—क्षुद्राः कीटविशेषाः, तासां झङ्कारो विद्यतेऽस्मिन्निति तथोक्ते, तथाविधे समये निश्चलस्थिता झिल्लीस्वरूपं झाङ्कारं कुर्वन्तीति प्रसिद्धिः।

(३२) कातरेति।—कातराणां ग्रीष्मार्तानामिति यावत्, कपोतानां कूजितानुबन्धेन कूजनसातत्येन बधिरित—बधिरीकृत विश्व—जगत येन तथोक्ते। कपोताः खलु अतीव मेदोमयत्वात् नितान्तं ग्रीष्मासहाः, अत एव पतत्त्रित्वेऽपि अस्य पृथक्त्वेन ग्रहणम्। पतत्त्रिमात्रग्रहणेन तु न्यासस्यैव औचित्यं चेत्, तेषां तादृशपीडाभावात्। विश्वसत्पतत्त्रिणि—विशेषेण श्वसन्त,—क्लान्ततयेति भावः, पतत्त्रिणः—पक्षिणः, कपोतेभ्योऽन्ये इति भावः, यस्मिन् तथोक्ते।

(३३) करीषङ्कषेति।—करीषाणि—गोमयानि कषन्ति—शोषयन्तीति ता"शा:

( २४ ) रुधिर-कुतूहल-केशरिकिशोरक लिह्यमानकठोर-धातकीस्तवके, ( २५ ) ताम्यत्स्तम्बेरमयूथ वमथु तिम्यन्महा-महीधरनितम्बे, ( २६ ) दूयमानद्विरददीनदानाश्यानश्यामिका-लीन मूकमधुलिहि, ( २७ ) लोहितायमान-मन्दार-सिन्दूरित-सीम्नि, ( २८ ) सलिल स्यन्दसन्दोह सन्देह-मुह्यन्महामहिष-विषाणकोटि- विलिख्यमानस्फुटत्स्फटिकदृषदि,

---

मरुत,—वायव यस्मिन तथोक्ते। विरलवीरुधि—विरला,—अल्पा, वीरुध,—लता यत्र तादृशे।

( २४ ) रुधिरेति।—रुधिरेषु, कुतूहलिन—लोलुपा इति यावत् ये केशरिकिशोरका —सिंहशिशव, तै। [ किशोरकशब्देन दृप्तासहिष्णुता, मौग्ध्यातिशयश्च द्योत्यते ], लिह्यमान,—आस्वाद्यमान रक्तधियेति भाव कठोर,—परिणत, धातकीस्तवक —धातकीलताया पुष्पगुच्छ, ("धाइफुल" इति बङ्गभाषा) रक्तवर्ण इति भाव यस्मिन् तथोक्ते।

( २५ ) ताम्यदिति।—ताम्यताम्—आतपतापेन क्लिश्यतामित्यर्थ, स्तम्बेरम यूथाना—हस्तिसङ्घाना वमथुभि —उद्गारै कराम्बुशीकरैरिति यावत, तिम्यन् —आर्द्रीभवन् महता महीधराणा नितम्बो —कटकदेशो यस्मिन् तथाभूते।

(२६) दूयमानेति।—दूयमानाना—ताम्यता द्विरदाना—गजाना दीनस्य—क्षीणता गतस्य दानस्य—मदस्य आश्याना—अप्रसरणधर्मकत्वात् ईषच्छुष्का, या श्यामिका—मदलेखासम्बन्धिनी श्यामवर्णरेखा तस्या लीना —अतितर्षात् सक्ता, मूका —आर्ततया नि शब्दा, गुञ्जितरहिता इत्यर्थ मधुलिह,—भ्रमरा यस्मिन तथोक्ते।

( २७ ) लोहितायमानेति।—लोहितायमानै —अलोहिता लोहिता भवन्त तै पुष्पविकाशात् रक्तायमानैरित्यर्थ, मन्दारै —पारिजाताख्यतरुविशेषै ("मन्दार पारिजातक" इत्यमर) सिन्दूरिता —सञ्जातसिन्दूरा दत्तसिन्दूरा इवेत्यर्थ सीमान —प्रान्तभागा ग्रामाणामिति शेष यस्मिन् तथोक्ते।

( २८ ) सलिलेति।—सलिलाना—जलाना स्यन्दा —स्रवा तेषा सन्दोह,—समूह तस्य सन्देहेन—भ्रमेणेति यावत् मुह्यद्भि —चित्तविकृतिं गच्छद्भि महद्भि महिषै विषाणाना—शृङ्गाणा कोटिभि,—अग्रभागै विलिख्यमाना —घृष्यमाणा स्फुरन्त्य सौरातपेन चकासमाना इत्यर्थ स्फटिकदृषद,—स्फटिक

(३९) घर्ममर्मरितगर्मुति, तप्तपांशुकुकूलकातरविकिरे, (४०) विवरशरणश्वाविधि, (४१) तटार्जुनकुररकूटज्वरविवर्तमानोत्तानशफरशारपङ्कशेषपल्वलाम्भसि, (४२) दावजनितजगन्नीराजने, (४३) रजनीराजयक्ष्मणि, कठोरीभवति निदाघकाले प्रतिदिशम् आलोकमाना इव ऊषरेषु

---

शिला यस्मिन् तथोक्ते । ["स्फटिकदृषदि" इत्यत्र 'स्फाटिकदृषदि' इति पाठे,—स्फटिकमणिमयशिला यस्मिन् तथोक्ते इत्यर्थः ]।

(३९) घर्मेति ।—घर्मेण—उष्मणा, मर्मरिता —शुष्कत्वेन मर्मरध्वनियुक्ता, गर्मुत —लताविशेषा यस्मिन् तादृशे । ('गर्मुत् स्त्री स्वर्णभेदयोर्नाचिशिम्बिवल्लर्योः । शुभभास्करयोः पुंसि" इति मेदिनी । गर्मुत्,—नलाख्य लताविशेष )। तप्तेति ।—तप्ता पांशव —रजांसि एव कुकूला,—तुषानला तैः कातरा विकिरा,—कुक्कुटादिपक्षिभेदा यस्मिन् तादृशे ।

(४०) विवरेति ।—विवराण्येव—गर्ता एव शरणम्—आश्रयः येषां तादृशा श्वाविधः,—शल्या "सजारु" इत्याख्य पशुभेदा इत्यर्थः यस्मिन् तथोक्ते ।

(४१) तटेति ।—तटेषु—तीरेषु ये अर्जुना,—श्वेतवर्णा कुररा,—उत्क्रोशाख्यपक्षिभेदा इति भावः, तेषां कूटा,—समूहा तैः ज्वर,—सन्तापः यद्वा—कूटा एव ज्वरा तादृगुष्णमयी भवन्तीति तदुपस्थितिरेव ज्वरो भवति इति भावः, तेन विवर्तमाना,—विलुण्ठन्त, उत्ताना,—ऊर्ध्वमुखा इति भावः, ["विवर्तमान—" इत्यत्र 'निवर्तमान—' इति पाठे—निवर्तमाना,—विरमन्त, गमनाद्विरमन्तीति भावः, अत एव उत्ताना,—ऊर्ध्वमुखाः तीरस्था कुररा यदा कूजन्ति, तदा मत्स्या भीता सन्त उत्प्लवन्त इति मत्स्यस्वभावः ] शफरा,—क्षुद्रमत्स्यभेदा तैः शारा —शबला पङ्का —कर्दमा, शेषा येषां तादृशानि, पल्वलानां—क्षुद्रसरसाम् अम्भांसि—जलानि यस्मिन् तथोक्ते ।

(४२) दावेति ।—दावेन—वनानलेन ("दवदावौ वनानले" इत्यमरः ) जनितं—सम्पादितं जगतां नीराजनम्—आरात्रिकाख्य शान्तिकर्मविशेष यस्मिन् तथोक्ते ।

(४३) रजनीति ।—रजन्या —रात्रे, राजयक्ष्मा—क्षयरोग तस्मिन्, रात्रे क्रमेण ह्रासातिशयसम्पादनात् इति भावः । कठोरीभवति—प्रवृद्धतां गच्छति । प्रतिदिशं—दिशि दिशि । ('उन्माता,—उद्भ्रामान्, मातरिश्वानः,—वाताः, प्रावर्तन्त" इति उत्तरेण सम्बन्धः )। तानेव विशिनष्टि, आलोकमाना इत्यादिभि ।—

(४४) प्रपावाटकुटीपटलप्रकटलुण्ठकाः, (४५) प्रपक्वकपिकच्छुगुच्छच्छटाच्छोटनचापलैः शाकाण्डकपटुला इव (४६) कर्षन्तः शर्करिलाः कर्करस्थलीः, स्थूलदृषच्चूर्णमुचः, (४७) मुचुकुन्दकान्दलदन्तुराः, समन्ततः

पाटीकमाला,—भ्रमन्, वर्तन कुर्वन् इति यावत्, ["पाटीकमाला" इति पाठे,—पर्यटन्तः, पाटपूर्वकस्य औणादिकस्य टीकतेः इत्यस्य रूपमेतत्। पीतकाले खलु एवंविधाः सन्ति प्रवाताः इति कालस्वभावः] अन्यतरपक्षेऽपि—एतत् सर्वं विशेषणं यथायोग्यं योजनीयम्। तथा च,—पाटीकमाला —उद्धत यथा तथा इतस्ततः भ्रमन्, उद्धतभ्रमणादयस्तु उष्मादयस्तानुभावाः, तथा चोक्तम् —"बालिनिरतहृदित कृदितोत्कुटावबद्धप्रलापप्रथमोल्लिखितप्रधावितनृत्यगीतपाठतत्क्षितपात्रवधूमर्दननिर्माल्यचौरघट-कर्पटाराभरणस्पर्शगोपभोगैर्वैश्याव्यवस्थितघटानुकरणादिभिरनुभावैरभिनयेत्" इति। कूपरेषु—सिकताऽऽकीर्णप्रदेशेषु।

(४४) प्रपेति।—प्रपा—पानीयशाला, ("प्रपा पानीयशालिका" इत्यमरः) वाट,—पन्थाः, कुटी—गृहम्पृहभेदः, पटलं—छदिः, एतेषां प्रकट—स्पष्ट यथा तथा लुण्ठकाः,—अपहारकाः अपसारकाश्च इति यावत्। अत्र वाटलुण्ठनं वाटस्य प्रायशस्तीना परितः प्रक्षेपणादिति बोध्यम्, यद्वा,—प्रपावाट —पानीयशालारूपं स्थानम् इत्यर्थः।

(४५) प्रपक्वेति।—प्रपक्वा —प्रकर्षेण पक्वतां गता, या कपिकच्छुः,—मर्कटी "बान्दरकुशी" इति ख्याता कण्डूजनकलताविशेषा इत्यर्थः, तस्याः याः गुच्छच्छटाः —स्तबकराशयः, तासां छोटने—हरणे इति यावत्, यानि चापलानि—चपलकर्माणि तैः, शाकाण्डकपटुला इव—शाकलिककण्डूरोगग्रस्ता इव।

(४६) शर्करिला,—शर्करा,—पाषाणकणिका विद्यन्ते यासु ताः, शर्करा बहुला इत्यर्थः, [पिच्छादित्वादिलच्] कर्करस्थली —क्षुद्रपाषाणखण्डयुता भूमी, "काङ्करभूमि" इति भाषा, कर्षन्त—उद्धरन्तः, कण्डूलिमझावधर्षणार्थम् इति भावः। स्थूलदृषच्चूर्णमुच,—स्थूलानि दृषदा—शिलानां, चूर्णानि—कणिकाः इत्यर्थः, मुञ्चन्ति —वर्षन्तीति तथोक्ताः।

(४७) मुचुकुन्देति।—मुचुकुन्दानां—पुष्पविशेषाणां, कान्दलानाञ्च—कन्दली-पुष्पाणाञ्च, दलनेन—दलविकासावेन दन्तुरा,—सञ्जातदन्ता इव दृश्यमाना इत्यर्थः। कपिकच्छूस्पर्शात् कण्डूला हि कण्डूतीनामुपशमनार्थं तथाविधचूर्णं, गात्र पतयं

(४८) पतन्त्र चरचीरीगणमुखशीकरशीक्यमानतनव:, (४९) तरुणतरतरङ्गितातपतरले तरन्त इव तरङ्गिणि मृगतृष्णिकातरङ्गिणीनाम् अलोकवारिणि, (५०) शुष्यन्मीमर्मर रावमार्गलङ्घनलाघवजवजङ्घाला:, (५१) रैणवावर्तमण्डली रेचक-लासक रसरभसारब्धनर्त्तनारम्भारभटीनटा:,

---

कर्षन्ति, तन्माधमानसुखानुभूतिचर्षे वस्त्राय स्वकीयाम् विकासयन्ति इति लीलाभार। समन्तत, -चतुर्दिक्षु।

(४८) पतद्भिति।—पतन्त,—उड्डीयमाना, मुखरा,—शब्द कुर्वन्त, ये चीरीगणा, -चिल्लिगणा, ("चिल" इति बङ्गभाषा) तेषा मुखशीकरै,—वदनाम्बुबिन्दुभि, शीक्यमाना,—सिच्यमाना, तनव —शरीराणि येषा तथोक्ता।

(४९) तरुणेति।—तरुणतर, -अतिप्रौढ, य आतपे,—सूर्यस्य, ("तरणिर्घृणौ पति कुमारी भीकयो स्त्रियाम्" इति मेदिनी) ताप, तेन तरल—चञ्चलमिव राजमाने तस्मिन्, अत [illegible] तरङ्गिणि—सञ्जाततरङ्गे [illegible] भासमाने, मृगतृष्णिका,—मरीचिका एव, ("मृगतृष्णा मरीचिका" इत्यमर। तृष्णार्तम्गाणां सूर्यकिरणोद्भासितासु बालुकासु जलबुद्धि प्रसिद्धा एव) तरङ्गिण्य,—नद्य तासाम्, अलीकवारिणि -मिथ्यासलिले तरन्त इव प्लवमाना इव बालकामध्यामिव मरुभूमौ तत्र(द्रुत्यमाना।। उष्णता अपि वैचित्र्येन निर्गलद्गिर सञ्चरन्तिर व्यवहरन्ति।

(५०) शुष्यदिति।—शुष्यती—शीघ्र गच्छन्ती, मर्मी—अग्निगर्भी इत्यर्थ, मरुत मर्मर,—मर्मर अनियुक्त इत्यर्थं मरीरये मारव,—मरुदेशीय, य मार्ग,—पन्था, तस्य लङ्घने—अतिक्रमणे, लाघव -नैपुण्य, शीघ्रकारित्वमित्यर्थ यस्य तथाभूती यो जव —वेग तेन जङ्घाला,—जङ्घावन्त, निरन्तरसञ्चारिण इत्यर्थ।

(५१) रैणवेति।—रैणवी रेणुमयी, धूलीसम्बन्धिनी इत्यर्थ, या आवर्तमण्डली—चक्राकारेण घूर्णनपरम्परा, तथा रेचक,—रेचयति—बहि करोति य: तथाभूत, अनुकारक इत्यर्थं य लासक,—नर्तक तस्य रसरभसेन रागवेगेन, ["लासकरसरभस" इत्यत्र "रासरसरभस" इति पाठे—रासे रासाख्यक्रीडाविशेषे, य रस,—अनुराग, तत्र रभस तेन] आरब्ध यत् नर्तन, तस्य आरम्भे—अनुष्ठाने, आरभटीनटा,—भटान् ने भटाश्चेति आरभटा तेषामिदम् आरभटी—वीररसप्रधानरचना इत्यर्थ, तत्प्रधानो नर्तनविशेषो वा, तत्र नटा,—नटा इव इत्यर्थ, ताण्डवावसाने निपुणा नर्तका यथा अनुवर्त नृत्यमाविदयितु भ्रम भरित परि-

(५२) दावदग्धस्थलीमसीमिलनमलिनाः (५३) शिथिलक्षपणकव्रतय इव मयूरपिच्छचयान् उच्चिन्वन्तः, सप्रयाणगुञ्जा इव (५४) म्लानजरत्करञ्जमञ्जरीबीजजालकैः, सप्ररोहा इव (५५) आतपातुरवनमहिषनासानिकुञ्जस्थूलनिश्वासैः, सापत्या इव (५६) उड्डीयमानजवनतरहरिणपरिपाटी-

भ्राम्यन्ति, तथैव ये हि वात्यामयौ वैखवमौ तदा नियतमुत्पादयामासुरिति तात्पर्यम्, तदुक्तम्—"भुजाग्रपातमुरगस्फीतानि हेयानि मायाकृतमिन्द्रजालम्। चित्राणि युद्धानि च यत्र नित्यं तां सात्वतीम् आरभटीं वदन्ति॥" इति।

(५२) दावेति।—दावेन—वनाग्निना, दग्धा—भस्मीकृता, या स्थली—अकृत्रिमा भूमिः, सैव मसी, तस्याः मिलनेन—सङ्गेन, मलिनाः। ["मसीमिलनमलिनाः" इत्यत्र "मसीमलनमलिनाः" इति पाठे—मसीनां मलनेन—धारणेन, मलिनाः]।

(५३) शिथिलेति।—शिथिला—श्लथा, क्षपणकानां—जैनसंन्यासिनां, व्रतिः,—व्यवहारो ये तथाभूता इव, जैनानां स्नानमलप्रक्षालननिषेधात् मलिनकायत्वमिति भावः। ["मयूरपिच्छचयान्" इत्यत्र "वनमयूरपिच्छचयान्" इति पाठान्तरम्]। उच्चिन्वन्तः,—धारयन्तः क्षपणका अपि मसीमलिनानि पिच्छानि जैनधर्मानुपालनात् धारयन्ति, ["शिखण्डस्तु पिच्छबर्हे नपुंसके" इत्यमरवचनात् पिच्छशब्दस्य मयूरपुच्छार्थकत्वाभावात् मयूरपदमाधिक्यमेवोपात्तम्]। उन्मत्तपक्षेऽपि,—विविक्तादिपात् यदृच्छया पिच्छचयान् वहन्ति, अत एव सप्रयाणगुञ्जा इव—प्रयाणे—यात्रायां गुञ्जन्तीति गुञ्जाः,—ढक्काविशेषा वैः सह वर्तमाना इव। उन्मत्तानामपि हस्तकाले दर्शका करतलादिकं वादयन्ति।

(५४) म्लानेति।—म्लाना,—अस्फुटं शब्दायमाना जरन्तः—प्राचीनाः, करञ्जाः—तरुविशेषाः, या मञ्जर्यः, तासां बीजजालकैः,—बीजनिचयैः सप्ररोहा इव—साङ्कुरा इव।

(५५) आतपेति।—आतपेन—सन्तापेन, आतुराः,—आर्त्ताः, ये वनमहिषाः तेषां नासाः निकुञ्जा इव—दीर्घरोमावततया लतादिपिहितोदरा वनभूमय इव ("निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे" इत्यमरः) तेषां स्थूलनिश्वासाः,—समधिकनिश्वासाः, तेभ्यो निर्गता इति भावः। उन्मत्ता अपि आतपक्लिष्टा दीर्घं निश्वसन्ति। सापत्या इव—सपुत्रा इव सन्ताना इवेत्यर्थः। उन्मत्तान् अपि पथ्यादिपतनभयात् अपत्यानि न त्यजन्ति।

(५६) उड्डीयमानेति।—उड्डीयमानानाम्—आतपतापापादितस्पन्दनया उत्पतताम्,

पिटकैः, सभ्रुकुटय इव (५७) दह्यमानखलधानतुषकूटकुटिलधूमकोटिभिः, सावीचिवीचय इव महोष्मसुक्तिभिः, लोमशा इव (५८) शीर्यमाणशाल्मलिफलतूलतन्तुभिः, दद्रुला इव (५९) शुष्कपत्रप्रकराकृतिभिः, शिराला इव (६०) तृणवेणीविकिरणैः, उच्छ्राश्रव इव

जवनतराणाम्—अतिवेगिनां हरिणानां ["जवनतरहरिण" इत्यत्र 'जवनवातहरिण' इति पाठे—जवनानां—वेगगामिनां, वातहरिणानां वाताभिमुखं गच्छतां हरिणानाम्] परिशाखा—कर्णाग्रा तथा पेटकाः,—सन्दकाः, यूथानि इत्यर्थः, ("पेटकः पुस्तकादीनां मञ्जूषायां कदम्बके" इति मेदिनी)। सभ्रुकुटय इव—भ्रूभङ्गसहिता इव। उन्मत्ता अपि क्रोधयुक्ता एव, भ्रुकुट्यादयस्तु क्रोधस्य अनुभावाः।

(५७) दह्यमानेति।—दह्यमानानाम्—आतपतापेन सन्ताप्यमानानां खलधानानां—धान्यमर्दनस्थानस्थितानां धान्यानां, तुषकूटाः,—तुषराशयः, कुटिलाः—कुटिलगामिन्यः, (कुटिलपदेन भ्रुकुटीसादृश्यं व्यनक्ति) धूमकोटय इव धूमराशय इव ते, अस्यानां ज्वालाभावात् तेषां धूमत्वेनोपवर्णनमुचितमेवेति। सावीचिवीचय इव—अवीचिः,—नरकविशेषः, ('तद्भेदास्तपनावीचि-महारौरवरौरवाः' इत्यमरः। तद्भेदाः,—नरकभेदाः) तस्य वीचयः,—तरङ्गाः, ज्वाला वा, तैः सह वर्तमाना इव। महोष्मसुक्तिभिः—महान्तः ऊष्माणः तेषां मुक्तिभिः, त्यागैः, वृष्टिभिरित्यर्थः, यद्वा,—ऊष्माणः,—सन्तापाः, तेषां मुक्तिभिः,—विसर्गैः सन्तापवितरणैरित्यर्थः। लोमशा इव—लोमपूर्णा इव। उन्मत्ता अपि खेदादिवशाद्रोमाञ्चन्ते।

(५८) शीर्यमाणेति। शीर्यमाणानां—विदीर्यमाणानां शाल्मलिफलानां तूलतन्तुभिः,—तूलसूत्रैः। दद्रुला इव—दद्रुरोगवन्त इव। उन्मत्ता अपि अवगाहनाद्यकरणात् दद्रुयुक्ता भवन्ति। ["दद्रुला" इत्यत्र 'दद्रुणा' इति पाठोऽपि स एवार्थः। दद्रूः अस्य अस्तीति दद्रुणः, "दद्र्वाः कुष्ठरोगवत्" इति नः]।

(५९) शुष्केति।—शुष्काणां पत्राणां प्रकराः,—सङ्घाः, तेषाम् आकृतयः,—आकारविशेषाः ताभिः। शिराला इव—शिरासमूहशालिन इव, शुष्कशिरासमूहा इवेत्यर्थः। उन्मत्ता अपि कार्श्यात् वातबाहुल्याच्च शिराला भवन्ति।

(६०) तृणेति।—तृणानां वेणी—राजिः, (शिरासादृश्यप्रदर्शनार्थं वेणीपदम्) तस्याः विकिरणैः,—विक्षेपैः, उच्छ्राणि—उद्गतानि अविरलं पतितानि इत्यर्थः, अश्रूणि—नयनजलानि येषां तथाभूता इव। उन्मत्ता अपि रुदन्ति। ["उच्छ्राश्रव" इत्यत्र

(६१) धूयमानयवशूकशकलशङ्कुभिः, दंष्ट्रान्ता इव (६२) चलितशल्लसूचीशतैः, जिह्वान्ता इव वैश्वानरशिखाभिः, उत्सर्पत्सर्पकञ्चुकचूडालाः (६३) ग्रह्मस्तम्भरसाभ्यवहरणाय कवलग्रहमिवोच्चैः कमलमधुभिः अभ्यस्यन्तः, (६४) सकलसलिलोष्मोपघर्मघोषणापटहैः इव शुष्कवेणुवनास्फोटनपटुरवैः,

---

"उच्छ्मश्रव" इति पाठे,—उत्—उद्गतानि, श्मश्रूणि—कूर्चा येषां तथाभूता इव। उन्मत्ता अपि चिर क्षौरकर्माभावात् दीर्घश्मश्रवो जायन्ते ]।

(६१) धूयमानेति।—धूयमानाः—सञ्चलनात् कम्पमानानां, यवानां शूकाः,—शूकाः, शिखासूच्य इत्यर्थः, ("शूकोऽस्त्री श्लक्ष्णतीक्ष्णाग्रे" इति मेदिनी) तेषां शकला,—खण्डा, शङ्कव,—कीला इव ते। [ धूयमानयव—" इत्यत्र "धूयमाननवयव—" इति पाठान्तरे,—धूयमानानां नवानाम्—अभिनवोत्पन्नानां, यवानाम् ] दंष्ट्रान्ता इव—दीर्घदन्तयुक्ता इवेत्यर्थः। उन्मत्ता अपि दन्तादिविकासैः सर्वान् भाययन्ति।

(६२) चलितेति।—चलितानां—चलताम्, उड्डीयमानानामिति यावत्, शल्लानां—श्वाविधां दीर्घकण्टकरूपलोम्नां, ("श्वाविधु शल्यस्तल्लोम्नि शलली शललं शलम्" इत्यमरः) सूचीशतैः,—सूच्यग्रभागैः। जिह्वान्ता इव—रसनावन्त इव, बहिर्निर्गतरसना इवेत्यर्थः। उन्मत्ता अपि जिह्वां निष्कास्य भीषयन्ते। वैश्वानरशिखाभिः—वह्निशिखाभिः। उत्सर्पदिति।—उत्सर्पन्ति—उष्णतापात् प्रचलन्ति सर्पाणां कञ्चुकैः,—निर्मोकैः, चूडालाः,—शिखावन्तः। उन्मत्ता अपि स्नानादिना विना जटिलचूडा भवन्तीति दृश्यते। [ "उत्सर्पत्सर्पकञ्चुकैः चूडाला इव" इति पाठो युज्यते ]।

(६३) ग्रह्मेति।—ग्रह्मस्तम्भ,—ग्रह्माख्यः, तस्य रसाभ्यवहरणाय—रसशोषणाय रसानां मधुरादीनां भोजनाय वा, कवलग्रहं—ग्रासग्रहणम् 'ग्रासस्त्वर्थो मुखे पूर्णो गण्डूषः कवलोऽन्यथा" इति, अभ्यस्यन्त,—पुनः पुनः कुर्वन्त इवेत्यर्थः, मधुपानात् ग्रीष्मस्य रसशोषणं भवतीति प्रसिद्धम्।

(६४) सकलेति।—सकलानां सलिलानां—जलानाम्, उष्मेव,—अतिशयेन शोषक, यो घर्म,—उष्मा, तस्य घोषणा—प्रचारः तस्याः पटहाः,—वाद्यभेदाः ते इव, शुष्काणां वेणुवनानां—वंशारण्यानाम्, आस्फोटनस्य—सन्तापातिशयात् विदारणस्य, पटुरवा—महानिनादा तैः,

त्रिभुवनविभीषिकाम् उद्भावयन्तः, ( ६५ ) च्युतचलचापपक्षश्रेणीशारितहृतयः, ( ६६ ) त्विषिमन्मयूखलताऽऽनातप्लोषकल्माषवपुष इव ( ६७ ) स्फुटितगुञ्जाफलस्फुलिङ्गाङ्गाराङ्किताङ्गाः, ( ६८ ) गिरिगुहागम्भीरभाङ्कारभीषणभ्रान्तयः, ( ६९ ) भुवनभस्मीकरणाभिचारचरुपचनचतुराः रुधिराहुतिभिः इव पारिभद्रद्रुमस्तवकवृष्टिभिः तर्पयन्तः तारवान् वनविभावसून्,

---

त्रिभुवनविभीषिका—त्रिलोकीभीतिम्, उद्भावयन्तः,—जनयन्तः, ये चन्द्राणि जगत् भीषयितुमुद्यताः, ते वनवह्नय एव त्रिभुवनविभीषिकां जनयन्ति इति बोध्यम्।

( ६५ ) च्युतेति।—च्युता,—गात्रेभ्यः स्खलिताः, अत एव चलाः,—उत्पतन्त्यः, या चापाख्य—नीलकण्ठाख्यपक्षिणः, पक्षश्रेण्यः, ताभिः शारिताः,—चित्रिताः, मान्तान्ता इत्यर्थः, व्याप्ता इति यावत्, हृतयः,—मार्गा यैः तथाभूताः, ('सृति स्त्री गमने मार्गे' इति मेदिनी)।

( ६६ ) त्विषिमदिति।—त्विषिमान्—सूर्यः, [ समस्यमानात् "त्विषि" इति पदात् मतुप असम्भवात् "त्विषाम्" "त्विषावान" इति वा पदं भवितुं युक्तं ] तस्य मयूखलता—किरणराजिः, तस्मात् इव—आतपात् इव, ( "प्रकाशोऽद्योत आतपः" इत्यमरः ) तेन य प्लोषः,—दहनं, तेन कल्माषं—चित्रम्, ईषत्कृष्णवर्णमित्यर्थः, ( "चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे" इत्यमरः ) वपुः,—शरीरं येषां तथोक्ता इव।

( ६७ ) स्फुटितेति।—स्फुटितानि—आतपतापेन आवरणकोषस्फुटनात् विकसितानीत्यर्थः, यानि गुञ्जाफलानि—रक्ताल्पकृष्णमुखकृष्णवर्णफलविशेषाः, ( "कुँच" इति भाषा ) तदेव स्फुलिङ्गाः—अग्निकणाः तद्रूपा इति यावत्, ये अङ्गाराः, तैः अङ्कितानि—सम्वलितानि, दग्धमित्यर्थः अङ्गानि येषां तथोक्ताः ( 'त्रिषु स्फुलिङ्गोऽग्निकणः' इत्यमरः )। ये च साङ्गारास्ते च मलिनशरीरा भवन्ति।

( ६८ ) गिरीति।—गिरिगुहासु—पर्वतगह्वरेषु गम्भीरेण—घनेन भाङ्कारेण भीषणाः भयावहाः, भ्रान्तिः,—घूर्णनं येषां तथाभूताः। उन्मत्ता अपि अग्निसम्बन्धिगिरिगुहादिषु निर्भीका भ्रमन्ति।

( ६९ ) भुवनेति।—भुवनस्य—जगतः भस्मीकरणं—दहनमेव, अभिचारः—अथर्ववेदविहितं हिंसात्मकं कर्म, तत्र चरुपचने—हवनीयद्रव्यविशेषपाके, चतुराः,—पटवः। रुधिराहुतिभिरिव—रक्ताहुतिभिरिव, पारिभद्रो नाम द्रुमः,—वृक्षः, ( लोके "फालिधा मादार" इति प्रसिद्धः, "पारिभद्रस्तु मन्दारे निम्बद्रौ देवदारुणि" इति

( ७० ) अश्मशिरसिकतातारकितरंहसः, ( ७१ ) तप्तशैलविलीयमानशिलाजतुरसलवलिप्तदिशः, दावदहनपच्यमानचटकाण्डखण्डखचिततरुकोटरकीटपटलपुटपाकगन्धकटवः, प्रावर्त्तन्त उन्मत्ता मातरिश्वानः।

( ७२ ) सर्वतश्च भूरिभस्त्रासहस्रसमुत्क्षणक्षुभिता इव जरदजगरगम्भीरगलगुहावाहिवायव, क्वचित् ( ७३ ) स्वच्छन्दतृण-

---

मेदिनी ) नस्य स्तबकाः,—रक्तकुसुमगुच्छाः तेषां छटयः,—पाताः ताभिः तर्पयन्त,—प्रीणयन्त, तारकान्—नक्षत्राभिव, वन्यविभावसून्—दावाग्नीन्। अभिसारिकास्तु मारणोचाटनाद्यर्थं श्मशानकाले रुधिरैर्वानलं तर्पयन्ति इति। उन्मत्ता अपि रुधिरास्थिप्रभृतिकमवचित्य खेरावायतश्च वनाग्नौ निक्षिपन्ति, तेन च वनदृश्या-नुत्पद्यन्ते।

( ७० ) अश्मशिरेति।—अश्मशिरसामि—उच्चाभिः सिकताभिः,—वालुकाभिः, तारकित—सञ्जाततारकमिव लक्ष्यमाणम् इत्यर्थः, रंहः,—वेगो येषां तथोक्ताः।

( ७१ ) तप्तेति। तप्तेषु शैलेषु पर्वतेषु, विलीयमानानां—गलतां शिला-जतूनां—तदाख्यानाम् उपधातुभेदानां रसलवैः,—रसबिन्दुभिः, लिप्ता दिशो य तथोक्ताः। दावेति—दावदहने, वनानले पच्यमानानां—दह्यमानानां चटकानां —चटकाख्यपक्षिविशेषाणाम् अण्डखण्डैः,—डिम्बशकलैः खचितेषु व्याप्तेषु, तरुकोटरेषु—वृक्षगर्तेषु यानि कीटपटलानि—पिपीलिकावृन्दानि, तैरुदकमध्यस्थितम् आतप्तानीति भाव तेषां पुटपाकस्य—अभ्यन्तरपाकस्य, गन्धेन कटव,—उद्वेजका इत्यर्थः। प्रावर्त्तन्त प्रावहन्। उन्मत्ता,—उच्छृङ्खला मातरिश्वान;—वायव। सर्वत्र वाक्य ध्वनिकायां अन्वयेनेति।

( ७२ ) सर्वत इति।—'दारुणा दावाग्नयश्च प्रत्यदृश्यन्त' इति उत्तरेण अन्वय। तानेव दावाग्नीन् विशिनष्टि, भूरीत्यादिभि।—जरता—जीर्य्यता, [ "जरदजगर" इत्यत्र "जरठाजगर" इति पाठे,—जरठानां—परिणतानां, वृद्धाना मित्यर्थः ] अजगराणां—सर्पाणां, गम्भीरा गला—गलदेशा एव गुहा ताभ्य वाहिन —वहिर्निस्सरन्त वायव येषु तथोक्ता, अत एव भूरीति।—भूरिभि — बहुभिः भस्त्राणां—'जांता' इति प्रसिद्धानाम् अग्निसन्धुक्षणयन्त्रभेदानां, सहस्रै समुत्क्षणेन—समुद्दीपनेन क्षुभिता इव—समुत्तेजिता इव।

( ७३ ) स्वच्छन्देति।—स्वच्छन्द—यथारुचि यथा तथा, तृणेषु—शुष्केषु इति

चारिणो हरिणाः, क्वचित् ( ७४ ) तरुतलविवरवर्त्तिनो बभ्रवः, क्वचित् जटाऽवलम्बिनः कपिलाः, क्वचित ( ७५ ) शकुन-कुलकुलायपातिनः श्येनाः, क्वचित् ( ७६ ) विलीनलाक्षारस-लोहितच्छवयोऽधराः, क्वचित् ( ७७ ) आसादितशकुनपक्ष-कृतपटुगतयो विशिखाः, क्वचित् ( ७८ ) दग्धनिःशेषजन्म-

---

भाव, चरन्ति—प्रसरन्तीति तथोक्ता, अन्यत्र—दृष्यानि चरन्ति—भक्षयन्ति इति तथाभूता, हरिणा,—पाण्डुवर्णा, ("हरिण पाण्डुर पाण्डु" इत्यमर ) अन्यत्र,—मृगा ( "हरिण पुंसि सारङ्गे विशदे त्वभिधेयवत्" इति मेदिनी )।

( ७४ ) तरुतलेति।—तरुतलेषु यानि विवराणि—गर्त्तानि, तेषु वर्त्तन्ते इति तथोक्ता, [ "विवरवर्त्तिन" इत्यत्र "विवरविवर्त्तिन" इति पाठान्तरम् ]। बभ्रव,—पिङ्गला, अन्यत्र,—नकुला। ( 'बभ्रुर्वैश्वानरे · ·· ·। विशालेि नकुले पुंसि पिङ्गले त्वभिधेयवत॥" इति मेदिनी )। जटाऽवलम्बिन,—जटा,—मूलानि, अवलम्बते—आश्रयन्तीति जटाऽवलम्बिन, अन्यत्र,—जटाधारिण, कपिला,—पिङ्गला, अन्यत्र,—कपिलाख्यमुनिविशिष्टव्रतधारिण तापसा एवाभेदोपचारात् कपिला इति मन्तव्यम्, एते तु जटावल्कलधारिणो भवन्ति इति।

( ७५ ) शकुनेति।—शकुनकुलानां—पक्षिविशेषसमूहानां, कुलायान्—नीडानि, ( "कुलायो नीडमस्त्रियाम्" इत्यमर ) पातयन्ति—दग्धा निक्षिपन्तीति यावत् तथोक्ता, श्येना,—शुक्लवर्णा, अन्यत्र,—पक्षिकुलकुलायनिपातका पक्षिभेदा, ( "शकुनस्तु पुमान् पक्षिमात्रपक्षिविशेषयो"। "श्येन पक्षिणि पाण्डरे" इति च मेदिनी )।

( ७६ ) विलीनेति।—विलीन,—द्रवीभूत यो लाक्षारस,—अलक्तकद्रव, तद्वत् लोहिता,—रक्ता, अन्यत्र,—तेन लोहिता,—रक्ता, छवय,—कान्तय येषां तथाभूता, अधरा,—धर्त्तुमशक्या, निकृष्टा वा, अन्यत्र,—धरा —धरा,—ओष्ठा, ( "अधरोष्ठौ रदच्छदौ" इत्यमर )।

( ७७ ) आसादितेति।—आसादितेषु—प्राप्तेषु, यद्वा —आ—समन्तात्, सादितेषु—अवसादं गतेषु, स्खलितेषु इत्यर्थ, शकुनानां—पक्षिणां [ "शकुनि" इति पाठान्तरम् ] पक्षेषु—पक्षतिषु, कृता—लब्धा, पटुगति —सम्यक् प्रसर यै, अन्यत्र,—आसादिता—प्राप्ता शकुनपक्षेण—पक्षिपक्षेण, कृता जनिता पटुगति,—सत्वर-गमनं यै तथोक्ता। वि—विविधा, शिखा —ज्वाला येषां तथोक्ता, अन्यत्र—शरा।

( ७८ ) दग्धेति।—दग्धा,—भस्मीकृता, निःशेषा,—समस्ता, जन्म-

हेतवो निर्वाणा, क्वचित् (७९) कुसुमवासिताम्बरसुरभयो रागिण:, क्वचित् सधूमोद्गारा मन्दरुचय:, क्वचित् (८०) सकलजगद्भ्रमणघस्मरा: सभस्मभूरिका:, क्वचित् (८१) वेणुशिखर-लग्नमूर्तयोऽत्यन्तस्पृहा:, क्वचित् (८२) अचलोपयुक्तशिलाजतव:

हेतव,—स्वोत्पत्तिकारणानि सप्तकाष्ठादीनीति भाव यै, अन्यत्र—दग्धा,—क्षयिता, ज्ञानाग्निनेति भाव निर्वाणा,—समस्ता पुण्यपुण्यजन्मार्जिता अपीति भाव जन्महेतव,—संसारागमनकारणानि पुण्यपापानि यै तथोक्ता अत एव निर्वाणा,—शान्ता, दाह्याभावादिति भाव, अन्यत्र, मुक्तिं गता इत्यर्थ।

(७९) कुसुमेति।—कुसुमं—धूमेरिति यावत् अन्यत्र—पुष्पै वासित—छादितम्, अन्यत्र,—सुरभीकृत, यत् अम्बरं—नभ, अन्यत्र,—वस्त्रं, तेन सुरभय,—कान्ता, शोभनदर्शना इत्यर्थ अन्यत्र—सौरभशालिन, ("सुरभि मत्तको मातभिन्दुरा ... । स्त्रियां गव्योषधी कोर्व सुगन्धिकान्तयोस्त्रिषु॥" इति मेदिनी) रागिण,—रक्तवर्णा, अनुरागवन्तश्च। सधूमेति।—धूमोद्गारेण—धूमनिर्गमेण सह वर्तमाना, तथापि अमन्दा अतिप्रवृद्धा रुचि,—दीप्तिर्येषां तथोक्ता, अन्यत्र—धूमोद्गारेण—धूमवदुद्गारविशिष्टजीर्णरोगविशेषेण सह वर्तमाना, अत एव मन्दा रुचि,—शरीरप्रभा, भोजनाभिलाषो वा येषां तथोक्ता, ("रुचि स्त्री दीप्ती शोभायामभिष्वङ्गाभिलाषयो" इति मेदिनी)।

(८०) सकलेति।—सकलं जगदेव ग्राम,—काननं, तस्य घस्मरा,—भक्षण-शीला, दहनशीला इति यावत् सभस्मभूरिका —भस्मनां भूरिभि,—प्रभूतै सह वर्तमाना, अन्यत्र—भस्मभूरक —भस्मकीट इति प्रसिद्ध बहुभोजनकरव्याधि विशेष तेन सह वर्तमाना, अत्यन्ताहारशीलाश्च इत्यर्थ। ["सभस्मभूरिका" इत्यत्र "सभस्मका" इति पाठे—भस्म एव भस्मकं तेन, अन्यत्र—भस्मकेन—महाव्याधिनीत्याभिधव्याधिविशेषेण सह वर्तमाना]।

(८१) वंश्येति।—वंशूनां वंशानां, शिखरेषु—अग्रेषु लग्ना,—संसक्ता, अन्यत्र —वंशदण्डाग्रेषु लग्ना,—कृतभरा मूर्तय, —अङ्गानि येषां तथोक्ता अत्यन्तस्पृहा, —अतिप्रवृत्ता अतिस्थिरत्वा। अतिस्थिरा वंशदण्डग्रावमवलम्ब्य नृत्यन्तीति गम्यते।

(८२) अचलेति।—अचलेषु—पर्वतेषु, उपयुक्तानि,—भक्षितानि, दग्धानीति यावत् शिलाजतूनि—शिलाजतुनाम्ना धातुविशेषा यै, अन्यत्र,—अचलम्—अविच्छिन्नं यथा तथा दीर्घकालानुवर्तिव्याधित्वादिति भाव, उपयुक्तं—सेवितम्, औषध

क्षयिणः, क्वचित् (८३) सर्व्वांवरसभुजः पीवानः, क्वचित् (८४) दग्धगुग्गुलवो रौद्राः, क्वचित् (८५) ज्वलित-नेत्रदहनदग्धसकुसुमशरमदनाः (८६) क्ततस्थाणुस्थितयः, चटुलशिखाः, नर्त्तनारम्भारभटीनटाः, (८७) शुष्क-कामारस्तुतिभिः, स्फुटत्क्षीरसनीवारवीजलाजवर्षिभिः ज्वाला-ञ्जलिभिः अर्च्चयन्त इव घर्मांशुरश्मिम्, सघृणा इव

---

क्षयीति भाव, शिलाजतु यै तथोक्ता, क्षयिण —निर्वाप गता, क्षयरोगिणश्च, एतच्च निदानाचार्य्यैः,—"शिलाधातुप्रयोगाच्च महादाहाच्च मारुतात्। धनामूल-प्रयोगाच्च क्षय चौषित नान्यथा॥" इति।

(८३) सर्वेति।—सर्वाणि अन्नानि—खाद्यवस्तूनि, रसान्—दधिदुग्धादीन्, भुञ्जते इति तथोक्ता, अत एव पीवान,—स्थूलकलेवरा, ये किल मधुरादिषड्रसान् उपभुञ्जते, ते स्थूला एव भवन्ति। ["सर्व्वांवरस—" इत्यत्र "सर्व्वरस—" इति पाठान्तरम्]।

(८४) दग्धेति।—दग्धा गुग्गुलव,—गन्धद्रव्यभेदा यै तथोक्ता, रौद्रा,—भीषणा, रुद्रदेवकाश्च ते हि रुद्रपूजाया गुग्गुलुदहनेन धूप ददति।

(८५) ज्वलितेति।—ज्वलित,ना नेत्राग्ना—भूलाग्ना, ("नेत्र मन्थिगुणे वस्त्रभेदे मूले द्रुमस्य च। रथे चक्षुषि नयाश्च" इति मेदिनी) दहनेन दग्धा सकुसुमा,—सपुष्पा, शरा,—सभेदा, मदना,—मदनाख्यवृक्षभेदाश्च यै तथोक्ता, अन्यत्र,—ज्वलितेन नेत्रदहनेन—ललाटनयनाग्निना, दग्ध,—भस्मीकृत, सकुसुमशर—पुष्पशरसहित, मदन,—काम यै तथोक्ता।

(८६) क्ततेति—अत एव क्तता स्थाणुषु—छिन्नशाखेषु द्रुमेषु स्थिति यै ते; अन्यत्र—क्तता, स्थाणौ—हरस्य स्थितय—व्यवहारा यै ते। चटुलशिखा,—चटुला,—चञ्चला, शिखा,—ज्वाला येषा तथोक्ता, अन्यत्र—चञ्चलचूडा इत्यर्थ।

(८७) शुष्केति।—शुष्केषु कामारेषु—हरसु नडूलेषु शुष्कजलजन्यादिषु इति भाव, स्तुति,—प्रसृतिर्येषां ते। स्फुटदिति।—स्फुटन्ति—उष्णत्तापात् लाजतां प्राप्नुवन्तीति भाव, नीवराणि यानि नीवारवीजानि—धान्यविशेषा, तथा लाजान वर्षन्तीति तथोक्तै। ज्वालाञ्जलिभि—ज्वाला—शिखा एव अञ्जलय तै। घर्मांशुरश्मिम्—सूर्यरश्मि, सूर्यमित्यर्थ। सघृणा इव—घृणा—जुगुप्सा तत्सहिता इव।

(८८) दह्यमानकठोरस्थलकमठवसाविस्रगन्धगृध्नवः, स्वमपि धूमम् (८९) अम्भोदसमुद्गतिमिव भक्षयन्तः, सलिलाहुतय इव (९०) स्फुटद्बहलबालकीटपटलाः कच्छेषु, शिखिन इव (९१) शोषविघटद्वल्कलधवलशम्बूकशुक्तयः सरःसु, स्वेदिन इव (९२) विलीयमानमधुपटलगलितमधूच्छिष्टवृष्टयः काननेषु, खलतय इव (९३) पर्यन्तशीर्यमाणशिखा-

---

(८८)—दह्येति।—दह्यात्—सहसा, दह्यमाना—दह्यमाना, कठोराणां स्थलकमठानां—स्थलकूर्माणां कच्छपानां, या वसा,—मेदांसि, तस्या यो विस्रगन्धः,—आमगन्धः, ("विस्रं स्यादामगन्धि यत्" इत्यमरः) तस्य गृध्नवः,—लोलुपाः।

(८९) अम्भोदेति।—अम्भोदानां—मेघानां स्वविनाशिनामिति भावः, समुद्गतिं,—समुत्पत्तिं, तथा भी स्वमेव धूमं भक्षयन्तः,—ग्रसन्तः, स्वधूमजन्मनेति भावः, उक्तञ्च मेघदूताख्ये काव्ये महाकविना कालिदासेन—"धूमज्योतिः-सलिलमरुतां सन्निपातः क्व मेघः" इति। सलिलाहुतय इव—जलाहुतय इव, ता हि वह्निं निर्वापयन्तीति भावः।

(९०) स्फुटदिति।—स्फुटन्ति—विशीर्यन्ति, अत एव,—निर्गच्छन्ति, बहलानि—भूरीणि, बालानि—क्षुद्राणि, कीटपटलानि—क्षुद्रप्राणिवृन्दानि, येभ्यः किमिवृन्दानि यत्र तथोक्ताः। कच्छेषु—नूतनतटेषु ("कच्छौ तु तरणीकधी" इत्यमरः), अत एव—गहनकीटविशिष्टेषु। शिखिन इव—धवनाख्यरोगवन्तः इव।

(९१) शोषेति।—शोषेण—दहनेन विघटन्ति—घटन् घटदिति शब्दं कुर्वन्ति यानि वल्कलानि—आवरणानि, [ वल्कलशब्दोऽत्र लक्षणया ] तैः धवला शम्बूका—घोङ्गाख्यजलजन्तुभेदाः शुक्तयः—मुक्तास्फोटाख्या जलजन्तुभेदाश्च येषां तथोक्ताः। स्वेदिन इव—घर्माक्ता इव।

(९२) विलीयमानेति।—विलीयमानेभ्यः—विलयं गच्छद्भ्यः मधुपटलेभ्यः,—मधुचक्रेभ्यः, गलिता—निःसृता मधूच्छिष्टाना—सिक्थकानां वृष्टिः यैः तथोक्ताः। खलतय इव—खल्वाटा इव।

(९३) पर्यन्तेति।—पर्यन्तेषु—प्रान्तदेशेषु शिरसो निम्नभागेषु च शीर्यमाणा,—प्रसरन्, [ "पर्यन्तशीर्यमाण—" इत्यत्र "परिशीर्यमाण—" इति पाठे—परि—शेषे, प्रान्तभागे इत्यर्थः ] शिखाना—ज्वालानाम्, अन्यत्र,—चूडानां,

संहतयो महोपरेषु, (८४) गृहीतशिलाकवला इव ज्वलितसूर्यमणिशकलेषु शिलोच्चयेषु, प्रत्यदृश्यन्त दारुणा दावाग्नयः।

तथाभूते च तस्मिन् अत्युग्रे ग्रीष्मसमये कदाचित् अस्य स्वगृहावस्थितस्य भुक्तवतोऽपराह्णसमये भ्राता पारशवः चन्द्रसेननामा प्रविश्य अकथयत्,—"एष खलु (८५) देवदेवस्य चतुःसमुद्राधिपतेः (८६) सकलराजचक्रचूडामणिश्रेणीशाणकोणकषणनिर्मलीकृतचरणनखमणेः (८७) सर्व्वचक्रवर्त्तिनां धौरेयस्य (८८) महाराजाधिराजपरमेश्वरश्रीहर्षदेवस्य भ्राता कृष्णनाम्ना भवताम् अन्तिकं प्रज्ञाततमो दीर्घाध्वगः प्रहितो द्वारम् अध्यास्ते" इति। सोऽब्रवीत्,—"आयुष्मन्! अविलम्बितं प्रवेशय एनम्" इति।

---

संहतिः,—समूहः येषां तथाभूताः। महोपरेषु—महत्सु ऊषरेषु, मरुषु इत्यर्थः, एतेषु दाह्यवस्तूनाम् अभावात् प्रान्तदेशेषु आग्नेयशिलाप्रादुर्भाव इति भावः।

(८४) गृहीतेति।—गृहीतः शिलाः [illegible] कवलः—ग्रासो यैः तथाभूताः। ज्वलितसूर्यमणिशकलेषु—दीप्तसूर्यकान्तमणिखण्डेषु। शिलोच्चयेषु—पर्व्वतेषु, दावाग्नयः,—वनवह्नयः, ("—दवदावौ तु वनवह्नौ वनेऽप्युभौ" इति मेदिनी)।

(८५) देवदेवस्य—देवानां—राज्ञां, देवः,—राजा, सम्राडित्यर्थः तस्य, [ "देवदेवस्य" इत्यत्र "देवस्य" इति पाठान्तरम् ]।

(८६) सकलेति।—सकलानां राजचक्राणां—भूपसङ्घानां याः चूडामणिश्रेण्यः,—शिरोरत्नराजयः, ता एव शाणाः,—निकषपाषाणविशेषाः, तेषां कोणेषु—प्रान्तभागेषु यत् कषणं—घर्षणं, तेन निर्मलीकृताः—विशदीकृताः, चरणयोर्नखाः एव मणयः,—रत्नानि यस्य तथाभूतस्य, राजचक्रनिषेव्यमाणस्येति भावः।

(८७) सर्व्वेति।—सर्व्वेषां चक्रवर्त्तिनां—सार्व्वभौमानां, धौरेयस्य—धुरन्धरस्य।

(८८) महेति।—महतां राजाधिराजानां परमेश्वरः,—सम्राडित्यर्थः, स चासौ श्रीहर्षदेवश्चेति तथोक्तस्य। अन्तिकं—समीपम्। प्रज्ञाततमः,—सुपरिचितः, अतिशयेन विज्ञात इत्यर्थः, अतिविश्वस्त इति यावत्। दीर्घाध्वगः,—दीर्घम् अध्वानं गच्छतीति तथोक्तः, सुदूरादागत इति भावः। प्रहितः,—प्रेषितः। एतेन बाणं प्रति राज्ञः आदरातिशयः सूच्यते।

अथ तेन आनीयमानम्, (९९) अतिदूरगमनगुरुजडजङ्घं, (१००) कार्दमिकचेलचीरिकानियमितोच्चण्डचण्डातकं, (१०१) पृष्ठप्रेङ्खत्पटच्चरकर्पटघटितगलितग्रन्थिम्, (१०२) अतिनिबिडसूत्रग्रन्थिनियन्त्रितान्तरालकृतव्यवच्छेदया लेखमालिकया (१०३) परिकलितमूर्धानं, प्रविशन्तं लेखहारकम् अद्राक्षीत्; अप्राक्षीच्च दूरादेव,—(१०४) "भद्र! भद्रम् अशेषभुवननिष्कारणबन्धो स्तत्रभवतः कृष्णस्य?" इति। स "भद्रम्" इत्युक्त्वा प्रणम्य नातिदूरे समुपाविशत्, विश्रान्तश्च अब्रवीत्,

(९९) अतिदूरेति।—अतिदूरगमनेन गुर्वी—भारवती, अत एव जडे—[illegible], जङ्घे यस्य तथाभूतम्।

(१००) कार्दमिकेति।—कार्दमिकं—कर्दमेन [illegible] [illegible] भाव, यत् चेलं—वस्त्रं, तस्य चीरिका—खण्डः, तया नियमितं—[illegible], उच्चण्डं —[illegible], [illegible] चण्डातकम्—[illegible] तथोक्तम्। [illegible]

(१०१) पृष्ठेति।—पृष्ठ—[illegible] [illegible] यत् पटच्चरं—जीर्णवस्त्रं, ("पटच्चरं जीर्णवस्त्रम्" इत्यमरः) कर्पटः—[illegible], ताभ्यां घटितः,—[illegible], [illegible]—[illegible], [illegible]—[illegible] यस्य तथोक्तम्।

(१०२) अतिनिबिडेति।—अतिनिबिडं,—[illegible], [illegible], तेन [illegible]—[illegible] [illegible] [illegible] [illegible] [illegible] ) [illegible]—[illegible] [illegible],—[illegible], [illegible],—[illegible] [illegible] [illegible]—[illegible]। [illegible] [illegible] [illegible] [illegible] [illegible]।

(१०३) परिकलितेति।—परिकलितः,—[illegible], ("[illegible]—" इति [illegible] ) मूर्धा—[illegible] [illegible], [illegible] [illegible]। [illegible]—[illegible]। [illegible]—[illegible]।

(१०४) भद्रेति।—[illegible] [illegible] [illegible]—[illegible]। [illegible] —[illegible]—[illegible] [illegible]—[illegible] [illegible],—[illegible] [illegible] [illegible]। [illegible],—[illegible]। "अतिदूरे" [illegible] [illegible] [illegible] [illegible] [illegible]।

—"एष खलु स्वामिनो माननीयस्य लेखः प्रहितः" इति विमुच्य च अर्पयत्। अथ बाणः सादरं गृहीत्वा स्वयमेव अवाचयत्,—"मेखलकात् सन्दिष्टम् अवधार्य (१०५) फलप्रतिबन्धी धीमद्भिः अपहरणीयः कालातिपात इति (१०६) एतावत् अत्र अर्थजातम्, इतरत् वार्त्तासंवादनमात्रकम्"। अवधृतलेखार्थश्च समुत्सारितपरिजनः सन्देशं पृष्टवान्। मेखलकः तु अवादीत्,—"एवम् आह मेधाविनं स्वामी,—जानाति एव मान्यः यथा (१०७) एकगोत्रता वा, समानजातिता वा, समं संवर्द्धनं वा, एकदेशनिवासो वा, दर्शनाभ्यासो वा, परस्परानुरागश्रवणं वा (१०८) परोक्षोपकारकरणं वा, समानशीलता वा स्नेहस्य हेतवः। त्वयि तु विना कारणेन महद्दूऽपि

[ "अतिदूरं" इत्यत्र "नातिदूरे" इति पाठान्तरम् ]। स्वामिनः,—अस्मत्प्रभोः, [ अत्र कर्त्तरि विवक्षया षष्ठी, निष्ठाया तद्विधेयात, अव्ययीपपद्यमाने मिरीदंष्टव्यायमनुचापति ] माननीयस्य—सम्मानार्हस्य। प्रहित,—प्रेषित, भवत सकाशे इति शेष। अर्पयत—दत्तवान् लेखमिति शेष। मेखलकात्—तदाख्यात् प्रागुक्तात् पत्र हरकात्। सन्दिष्टं—वाचिकम्।

(१०५) फलेति।—फल—कार्य्य, प्रतिबध्नाति—रुणद्धीति तथोक्त, कार्य्यव्याघातक इत्यर्थ। कालातिपात,—कालविलम्ब, अपहरणीय,—त्यक्तव्य, अकरणीय इति यावत्।

(१०६) एतावत्—एतत्परिमितम्। अत्र—लेखमालिकायाम्। अर्थजात—प्रतिपाद्यवस्तु, अभिप्रेयविषय इत्यर्थ। इतरत्—अन्यत, वार्त्तासंवादनमात्रक—कुशलालोचनमात्रम्। अवधृतलेखार्थ,—विदितलिपिनिबद्धवृत्तान्त। मेधाविन—प्रकृष्टधीमतिसम्पन्नम्। स्वामी—अस्माक प्रभु। मान्य, भवानिति शेष।

(१०७) एकगोत्रता—एककुलोत्पत्ति। अत्र "एकगोत्रता" इत्यादि स्नेहकारणम् उत्तरोत्तर हीनबल ज्ञेयम्। समानजातिता—तुल्यजातित्वम्। सम—सह, संवर्द्धनम्। एकदेशनिवास,—एकस्थानस्थिति। दर्शनाभ्यास,—पुन पुनः साक्षात्करणम्। परस्परानुरागश्रवणम्—अन्यो,अन्यस्नेहाकर्णनम्।

(१०८) परोक्षोपकारकरणं—साक्षात्काराभावेऽपि उपकारकरणम्। समान-

प्रत्यासन्ने बन्धाविव बद्धपक्षपातं किमपि स्निह्यति मे हृदयं दूरस्थेऽपि इन्दोरिव कुमुदाकरे। (१०८) भवन्तम् अन्तरेण अन्यथा चक्रवर्त्ती दुर्जनैः ग्राहित आसीत्, (११०) न च तत् तथा। (१११) न सन्त्येव ते, येषां सतामपि सतां न विद्यन्ते मित्रोदासीनशत्रवः। (११२) शिशु-चापल्यापराधीनचित्तवृत्तितया च भवतः केनचित्

---

धीमत्ता—समस्वभावत्वम्। स्नेहस्य—प्रणयबन्धनस्य। प्रत्यासन्ने—निकटवर्त्तिनि। बन्धाविव—सुहृदीव। बद्धपक्षपातं—बद्धस्नेहम्। कुमुदाकरे—कैरवोत्पत्तिभुवि, ("आकरो निकरोत्पत्तिस्थानश्रेष्ठेषु भाष्यते" इति मेदिनी)।

(१०९) भवन्तमिति।—भवन्तं—त्वाम्, अन्तरेण—विना, तवानुपस्थिते त्वां लक्ष्यीकृत्येत्यर्थः, दुर्जनैः—दुष्टैः लोकैः, चक्रवर्त्ती—सम्राट्, अन्यथा—अन्येन प्रकारेण, ["अन्यथा चक्रवर्त्ती" इत्यत्र "अन्यथा चान्यथा चाय चक्रवर्त्ती" इति पाठे—अयम्—एष, महात्मा इति भावः, चक्रवर्त्ती अन्यथा च अन्यथा च—प्रकृत रीतिमपहाय अन्येन बहुविधेन आपादितेनेत्यर्थः। एतेन किंचिदपि सम्भवतीति प्रकटयति]। ग्राहितः,—अवबोधितः, आसीदित्यन्वयः। राजाधिराजसन्निधौ भवतो दोषोत्कीर्त्तनात् राज्ञः त्वयि मनोभङ्गः कारितः इति भावः। अत्र "आसीत्" इति भूतनिर्देशात् अधुना तु दुर्जनैः विफलाभिमतता जाता इति शङ्करटीकामूलम्, एतत्तु उपरिष्टात् "तथेति च प्रतिपन्नम्" इत्यादिवचसा व्यक्तीभविष्यति।

(११०) न चेति।—तत्—राज्ञस्त्वयि मनसोऽन्यथात्वमिति भावः, तथा—तादृशं, न च—नैवेत्यर्थः। त्वयि राज्ञो मनोविकृतिः न आसीदिति भावः। अथवा,—तत्—ते कृतमन्यथा वर्णनं, तथा—तादृक्, न, मिथ्येत्यर्थः। पक्षान्तरे तु भाणस्य दुर्वृत्तता प्रसज्येत, तथा सत्यपि राज्ञो तथाविधः अनुरागः नृपतिवचनस्य दोषायैव स्यादिति।

(१११) न सन्त्येव ते इति।—ते—मानवाः, न सन्त्येव—नैव विद्यन्ते इत्यर्थः। सतामपि सतामित्यादि।—सतां—साधूनां, सदाचारवतामित्यर्थः सतां विद्यमानानामपि, मित्रोदासीनशत्रवः—मित्राणि—सुहृदः, उदासीनाः—मध्यस्थाः, शत्रवः—विद्वेषिणः, न विद्यन्ते—न तिष्ठन्ति, सर्वेषामेव मानवानां मित्रोदासीनशत्रवो विद्यन्ते इत्यर्थः।

(११२) शिशुचापल्येति।—शिशोश्चापल्यं—शैशवचापल्यं, बाल्यकालिकचपलतेति यावत्, तत्र अपराधीना—अपराङ्मुखी, चित्तवृत्तिर्यस्य तस्य भावः तया,

(११३) असहिष्णुना यत्किञ्चित् असदृशम् उदीरितम्, इतरो लोक' तथैव तत् श्रद्दधाति, वक्ति च। (११४) सलिलानि इव गतानुगतिकानि लोलानि खलु भवन्ति अविवेकिनां मनांसि। (११५) बहुसुखश्रवणनिश्चलीकृतनिश्चयः किं करोतु पृथिवीपतिः? तत्त्वान्वेषिभिः अस्माभिः दूरस्थितोऽपि (११६) प्रत्यक्षीकृतोऽसि। विज्ञाप्यः चक्रवर्ती त्वदर्थम्;—यथा प्रायेण प्रथमे वयसि सर्वस्य एव चापलैः शैशवम् अपराधि इति। तथेति च

---

तात्कालिकचित्तरसे ईषदुन्मार्गप्रवृत्ततया इति भावः। ["चित्तरसितया" इत्यत्र "चैत्तीरसितया" इति पाठान्तरम्]।

(११३) असहिष्णुना—सोढुमशक्नुवता, विद्वेषिणा वा। असदृशम्—अयुक्तम्, विरुद्धमित्यर्थः, उदीरितम्—उक्तम्। इतरो लोकः,—साधारणो लोको नीचो वा, तत्—असदृशं वाक्यं त्वयि प्रयुक्तमिति भावः, तथा एव—सत्यमेव, श्रद्दधाति—अवबुध्यते, वक्ति च—कथयति च।

(११४) सलिलानि इवेति।—अविवेकिनाम्—विवेकशून्यानाम् जनानाम्, मनांसि सलिलानि इव—जलानि इव गतम्—गमनम् अनुगतिः—पश्चाद्गमनम् च कुर्वन्ति यानि तानि गतानुगतिकानि ["गतानुगतिकानि" इत्यत्र "गतागतिकानि" इति पाठे,—गमनागमनशीलानि, न तु स्थिराणि इति भावः] अत एव लोलानि चपलानि; इतरजनानाम् अयमेव स्वभावः खलु यत्, ते स्थिरतया कुत्रापि दीर्घकालं स्थातुं न शक्नुवन्तीति भावः।

(११५) बहुसुखेति।—बहूनाम् सुखानाम्—भूरीणाम् श्रवणसन्तर्पणानाम् खलानां वचसां, कर्णेजपानां चाटुभाषामित्यर्थः, श्रवणेन ["बहुसुखश्रवण—" इत्यत्र "बहुमुखश्रवण—" इति पाठे,—बहूनाम्, जनानामिति शेषः, मुखेभ्यः श्रवणात्] निश्चलीकृतः निश्चयः,—अवधारणा यस्य तथाभूतः, दुर्जनाः सततं राजानं निकषा बहून् मनोपकरान् विषयान् कीर्त्तयन्ति, तेन असौ समाकृष्टचेताः वितथान्यपि तान्येव तथ्यानि तेषां वचनानि इति अवधारयति, नात्र तत्त्वमनुसन्धत्ते इति भावः।

(११६) प्रत्यक्षीकृत,—साक्षात्कृत, परिचित इति भावः। प्रथमे वयसि—यौवनप्रारम्भे इत्यर्थः। चापलैः,—चपलकर्मभिः, शैशवम्—बाल्यम्, अपराध्यतीति अपराधि—सदोषं भवति इति यावत्।

कष्टं—क्लेशहेतुरित्यर्थः, भवतीति शेषः, अन्धबुद्धे प्रभोः सेवा अतीव क्लेशकरीति भावः। पादत्रयेण अविवेकिनि प्रभौ सेवायाः कामप्रसरनिरोधस्य च दुःशकत्व- सुपपादयितुमाह, स्वेच्छेति।—दुर्विनीतं मूर्खञ्च प्रभुं, स्वेच्छया—निजाभिलाषेण, उपजाताः,—उपस्थिताः, विषयाः—भोग्यवस्तूनि, स्रक्चन्दनवनितादयः अर्था इति यावत्, यस्य तथाभूतं, यथेच्छं व्ययोपभोगयोग्यसम्पदोऽधिगच्छन्तमपीत्यर्थः, अन्यत्र— स्वेच्छया—यथेष्टम्, उपजाताः,—उपगताः, विषयाः—लक्ष्याणि यस्य तथाभूतं, यथेच्छं कामिजनरूपाणि लक्ष्याणि विध्यन्तमपीत्यर्थः, देहीति—प्रयच्छ इति, वक्तुं— कथयितुं न याति—न ददातीत्यर्थः, [ धातूनामनेकार्थत्वात् अत्र याधातुर्दानार्थः ] याचके किञ्चित् देहीति कथयति सति विरज्यते इति भावः, अन्यत्र,—देहीति— देहवान् इति वक्तुं—वचनम्, [ अत्र तुमर्थोऽविवक्षितः, धात्वर्थमात्रमेव विवक्षितम् ] न याति—न गच्छति, न प्राप्नोति इत्यर्थः, यद्वा,—वक्तुं न याति—अशरीरीति वक्तुं- योग्यतां न प्राप्नोतीत्यर्थः, अनङ्गत्वात् इति भावः, मार्गणगते,—याच्ञागते, पुनः पुनः याच्ञाभिरित्यर्थः, कातरतापूर्णा महान्तस्तु न तथा, ते तु यत्किञ्चनाना देहीत्युक्ति- सोढमप्यनुचिता' प्रार्थितव्यमनोकर्णनात् प्रागेव तेषाम् अप्रार्थितमपि अकातरं वितरन्ति इति विशेषः, अन्यत्र,—शरगते, ("—मार्गणो याचके शरे। याच्ञाऽन्वेषणयो- र्ऋषिम—" इति मेदिनी) दुःखं ददाति—क्लेशम् अनयति, एकत्र,—अनुजीविभ्यः, अन्यत्र,—कामिभ्य इति शेषः। यद्वा—देहीति पदम् अविवेकिप्रभुपक्षे मार्गणगते- रित्यनेनान्वितं कृत्वा व्याख्यातव्यं, देहीति याचकानां याच्ञागते तेभ्यः नियतं दुःखं ददाति, न तु किञ्चित् तेभ्यः अर्पयति इत्यर्थः, अत्र पक्षे वक्तुमिति पदं धातूनामने- कार्थत्वात् भोक्तुमिति कृत्वा भोगार्थकत्वेन व्याख्यातव्यमिति सङ्क्षेपः, अकाण्डे—सहसा, कारणाभावेऽपि अनयतीति यावत्, मोहात्—अज्ञानात् यथायथं दोषादोषयोः अनव- बोधात् इत्यर्थः तस्य विचारशक्तेरभावादिति भावः, अन्यत्र—मोहात्—स्वविकार- जनितं मोहमुत्पाद्येत्यर्थः, [ ल्यबलोपे पञ्चमी ] जीवनमपि—प्राणानपि एकत्र,— अनुजीविनाम्, अन्यत्र,—कामिनामिति शेषः, समुत्क्षिपति—समुत्कर्षति, दण्ड- यति इत्यर्थः, अन्यत्र,—हरतीत्यर्थः। [ "समुत्क्षिपति इत्यत्र "समाक्षिपति" इति पाठे—समाकर्षति, दण्डयतीत्येवार्थः ] अत्र मूर्खदुर्विनीतेश्वरस्य, मनोभवेन सह वैधर्म्योक्तिविरहितसाम्यकथनादुपमाऽलङ्कारः, स च देहि-मार्गणादिपदानां श्लिष्टतया श्लेषानुप्राणित इति बोध्यम्। अयमेव च श्लोकः श्लेषालङ्कारविचारावसरे साहित्य- दर्पणे,—"कष्टं प्रसूनविशिखः प्रभुरन्धबुद्धिः" इति चतुर्थपादमात्र विपरिवर्त्य उदाहृतो विश्वनाथेन, अस्मिन्तु पाठे—प्रसूनविशिखः,—कामः, तथा अन्धबुद्धिः,—अबोधः,

तथाऽपि (१२०) अन्ये ते भूपतयः, अन्य एव अयं न्यक्कृत-नृग-नल-निषध-नहुषाम्बरीष-दशरथ-दिलीप-नाभाग-भरत-भगीरथ-ययातिः अमृतमयः स्वामी। न अस्य (१२१) अहङ्कारकालकूटविषदग्धदुष्टा दृष्टयः, न (१२२) दर्पगदगुरुगरगलग्रहगद्गदा गिरः, न (१२३) अतिशयोष्मापस्मारविस्मृतस्थैर्याणि स्थानकानि, न (१२४) उद्दामदर्पदाहज्वरवेग-

---

प्रभुः—स्वामी चेत्युभयमपि इत्यर्थः, कष्ट—लोभकारणमित्यर्थः, अन्यत् सर्वं पूर्ववत्। अत्र तु यदि प्राकरणिकाप्राकरणिकयोरस्तुतिस्तु प्रभूर्तविशिष्टयोरेकधर्माभिसम्बन्धात् दीपकमलङ्कारः, सोऽपि श्लेषानुप्राणित इति बोध्यम्। वसन्ततिलकं वृत्तम् ॥ ३ ॥

(१२०) अन्ये ते भूपतय इति।—ते—तादृशा इत्यर्थः, दुर्विदग्धा इति भावः, भूपतयः,—राजानः, अन्ये—अपरे, अस्मात् राज्ञः पृथगित्यर्थः। अयं—चक्रवर्ती इत्यर्थः। न्यक्कृतेति।—न्यक्कृताः,—अधःकृताः, नृगादयो येन तथाभूतः नृगनलादीन् अतिधार्मिकान् भूपतीन् निजधर्मशीलतया तिरस्करोति इत्यर्थः। अमृतमयः,—अमृतपूर्णः, देवतुल्य इति यावत्। अत्र "अमृतमयः" इति विशेषणं साभिप्रायम्; यतः अहङ्कारदर्पादिकं कालकूटगदादिना रूपयति, अतः अहङ्कारादीनामत्यन्ताभावप्रकटनेच्छया अस्य राज्ञः अमृतमयत्वं प्रदर्शितम्, यः खलु अमृतमयः तस्य कालकूटादिसम्बन्धः सम्भावयितुं न शक्यते इति। अस्य—चक्रवर्तिनः।

(१२१) अहङ्कारेति।—अहङ्कार एव कालकूटं—विषं तेन दग्धाः, अत एव दुष्टाः। [“—विषदिग्धदुष्टाः” इति पाठान्तरम्]। दृष्टयः,—दर्शनानि।

(१२२) दर्पेति।—दर्प एव गदः,—रोगः, [“दर्पगद—” इत्यत्र “गर्व—” इति पाठान्तरम्] स एव गुरुः,—महान् गरः,—विषं, तेन गलग्रहः—कण्ठग्रहः, यः ग्रहः,—ग्रहणम्, अवरोधनमित्यर्थः तेन गद्गदाः,—अस्पष्टाक्षरा इत्यर्थः। [“—गलग्रहगद्गदा” इति पाठान्तरम्]। गिरः,—वाचः।

(१२३) अतिशयेति।—अतिशय—अतिमात्रं एव, ऊष्मा—सन्तापः, स एव अपस्मारः—वातव्याधिविशेषः तेन विस्मृतं स्थैर्यं—निश्चयः येषां तथाभूतानि, अपस्माररोगस्तु सन्तापकारित्वे अभेदाध्यासबीजं, तेन च धैर्यच्युतिरपि भवतीति। स्थानकानि—स्थितयः।

(१२४) उद्दामेति।—उद्दामेन—उत्कटेन दर्पेण उन्मादित इति भावः, धै

विक्लवा विकाराः, न (१२५) अभिमानमहासन्निपातनिर्म्मिताङ्गभङ्गानि गतानि, न (१२६) मदार्दितवक्रीकृतौष्ठनिष्ठ्यूतनिष्ठुराक्षराणि जल्पितानि। तथा च,—(१२७) अस्य विमलेषु साधुषु रत्नबुद्धिः, न शिलाशकलेषु। (१२८) मुक्ताधवलेषु गुणेषु

---

हाहाकार, तस्य वेगेन—रयेण, विक्लवा,—व्याकुला। विकारा,—चित्तविकृतय, मनसो भावान्तराणि इत्यर्थः।

(१२५) अभिमानेति।—अभिमान,—अहङ्कार एव महान् इत्याकारस्तमिव, महान् सन्निपात,—त्रिदोषजनितो व्याधिभेद, तेन निर्म्मित,—जनित, अङ्गानाम्—एकत्र—अङ्गनानां, तेषामङ्गारदर्शनेन विरागोत्पादात्, अपरत्र—अवयवानां, भङ्ग,—विकृतिविशेष येषु तथाभूतानि। गतानि—गमनानि।

(१२६) मदेति।—मद,—सौभाग्ययौवनाद्यवलेपजो विकारविशेष, तथा चोक्तं दर्पणे,—"मदो विकार सौभाग्ययौवनाद्यवलेपज" इति तेन अर्दित,—पीडित, आक्रान्त इत्यर्थ, अत एव वक्रीकृत, यद्वा,—मद एव अर्दित,—वातव्याधिभेद, तेन वक्रीकृत, तथा चोक्तं वैद्यके,—"शिरोनासौष्ठचिबुकललाटेक्षणसन्धिगः। अर्दयत्यनिलो वक्त्रमर्दितं जनयत्यथ॥ वक्रीभवति वक्त्रार्द्धम्—" इत्यादि य ओष्ठ, तस्मात् निष्ठ्यूतानि—निर्गलितानि निष्ठुराणि—दारुणानि, कर्कशानि वा, अक्षराणि—वर्णा, कामगादय इत्यर्थ येषु तानि, मदवशात् पुरुषस्य यथेच्छं वाक्प्रयोगाद्यदर्शनात् अयथापक्षमाभिधान तेन मदेन सह वातव्याधेरपि तथा भूतत्वादभेदाध्यास। जल्पितानि—वचनानि। तथा च—तमेवार्थं आलोडि इत्यर्थ।

(१२७) अस्य—चक्रवर्त्तिन। विमलेषु—अनघेषु, अपापेषु इत्यर्थ, अन्यत्र—निर्म्मलेषु भास्वरतया स्वच्छायेषु इत्यर्थ, साधुषु—सज्जनेषु, रत्नबुद्धि—रत्नानि एते इति बुद्धि,—ज्ञानमित्यर्थ। शिलाशकलेषु—प्रस्तरखण्डेषु, हीरकादिषु इति यावत, (अत्र हीरकमरकतादिषु इति वक्तव्ये "शिला" इत्यादि पद साधुषु आदरातिशय्य प्रकटनार्थमिति बोध्य) न, रत्नबुद्धिरिति शेष। अत्र अप्रस्तुत विमलत्वरूपसाधारणधर्म्मत्वात् साधुषु निरूपिताया रत्नबुद्धे तथाविधेषु अन्येषु शिलाशकलेषु व्यपोहनात् परिसङ्ख्याऽलङ्कार; तदुक्तं दर्पणे,—"प्रश्नादप्रश्नतो वाऽपि कथितात् वस्तुनो भवेत्। तादृगन्यव्यपोहश्चेत् परिसङ्ख्या" इति। एवमुत्तरत्र।

(१२८) मुक्ताधवलेषु—मौक्तिकवत् विशदेषु, गुणेषु—विद्याविनयादिषु,

प्रसाधनधीः, न आभरणभारेषु। (१२९) दानवत्सु कर्म्मसु (१३०) साधनश्रद्धा, न करिकटेषु। सर्व्वाग्रेसरे यशसि महाप्रीतिः, न जीवितजरत्तृणे। (१३१) गृहीतकरासु आशासु प्रसाधनाभियोगः, न (१३२) निजकलत्रधर्म्मपुत्रिकासु। गुणवति धनुषि सहायबुद्धिः, न पिण्डोपजीविनि सेवकजने। अपि च,—अस्य (१३३) मित्रोपकरणम् आत्मा, भृत्योपकरणं प्रभुत्वं, पण्डितोपकरणं वैदग्ध्य,

---

अथवा,—मुक्ताभिः अमलासु गुणेषु—सूत्रेषु मौक्तिकहारेषु इत्यर्थः, प्रसाधनधीः—अलङ्कारबुद्धिः, यद्वा—प्रसाधन—प्रकटम् अर्ज्जनं, गुणार्ज्जनमेव अर्ज्जनं, न तु आभरणार्ज्जनम् इति भावः। आभरणभारेषु—भारभूतेषु आभरणेषु—अलङ्कारेषु, कटककुण्डलादिसमूहेषु इत्यर्थः, न प्रसाधनधीरिति शेषः।

(१२९) दानवत्सु—दानयुक्तेषु धनदानपात्रेषु इत्यर्थः, अन्यत्र,—मदयुक्तेषु, ("दानं गजमदे त्यागे पालनच्छेदशुद्धिषु" इति मेदिनी)।

(१३०) साधनश्रद्धा—निष्पादनानुरागः, अथवा—साध्यते अनेन इति साधनं—सैन्यं, तेनाङ्गभिन्नम्, तद्विषयिणी श्रद्धा, तल्लाभाय युद्धादिकार्य्यसम्पादनबुद्धिरित्यर्थः। करिकटेषु—हस्तिगण्डेषु, दानवत्सु—मदजलवर्षिषु इत्यर्थः, साधनश्रद्धा—सम्पादनानुरागः, न मदयुक्ता हस्तिनः सङ्ग्रहानुरागो न इत्यर्थः। जीवितजरत्तृणे—जीवनरूपे जीर्णे—अल्पमूल्ये इति भावः, तत्र महाप्रीतिः,—महानुरागः, न इत्यर्थः।

(१३१) गृहीतेति।—गृहीतः करः,—राजग्राह्यो भागः याभिः तथाविधासु, अन्यत्र—गृहीतः,—धृतः, करः,—पाणिः याभिः तासु, आशासु—दिक्षु अन्यत्र अभिलषितविषयस्पृहासु वा, प्रसाधनाभियोगः,—वशीकरणप्रयासः, रञ्जनानुरागो वा। ["प्रसाधनाभियोग" इत्यत्र "प्रसाधनताऽभियोग" इति पाठान्तरम्]।

(१३२) निजेति।—निजकलत्राणि—स्त्रीधर्म्मार्थाः [न तु परकीया इति भावः] तान्येव धर्म्मपुत्रिका,—धर्म्मार्थ्यादिपुत्तलिका तासु न प्रसाधनाभियोग इति शेषः। गुणवति—मौर्व्वीसमन्विते, अन्यत्र,—विद्याविनयादिसम्पन्ने। पिण्डोपजीविनि—अन्नदानेन भरणीये इति भावः।

(१३३) मित्रोपकरणं—सुहृद्धनम् उपकरणम्—उपकारकं वस्तु आत्मा—स्वरूपम्, आत्मभावेन सम्यक्तो समर्पयति, न तु सहायान्तरसाहाय्येन इति

बान्धवोपकरणं लक्ष्मी, (१३४) कृपणोपकरणम् ऐश्वर्य्यं, द्विजोपकरणं सर्व्वस्वं, (१३५) सुकृतसंस्मरणोपकरणं हृदयं (१३६) धर्म्मोपकरणम् आयुः, साहसोपकरणं शरीरं, (१३७) असिलतोपकरणं पृथिवी, विनोदोपकरणं राजकं, प्रतापोपकरणं प्रतिपक्षः। (१३८) न अस्य अल्पपुण्यैः

---

मात्मवांश्च मितभाषीत्यर्थः, न परबुद्धिचालित इति भावः। भृत्योपकरणम्— भृत्यानाम् उपकारसाधनं, प्रभुत्वं—प्रभावः, अनुचरादीनाम् उपकारसम्पादनमेवास्य प्रभुत्वफलम् इति भावः। पण्डितोपकरणं—पण्डितानाम् उपकारसाधनं वैदग्ध्यं— विद्यावत्त्वं, वैचक्षण्यं वा। बान्धवोपकरणं—बान्धवानाम् उपकारसाधनं, लक्ष्मीः,— सम्पदित्यर्थः, सम्पद्भिः बान्धवा उपक्रियन्ते इति भावः।

(१३४) कृपणोपकरणं—कृपणानां—दीनानाम्, उपकरणम्—उपकारसाधनं, पोषणम् इत्यर्थः, ऐश्वर्य्यं सम्पदित्यर्थः, न हि विलासितयैव सर्व्वस्वमर्हन्ति, किन्तु दारिद्र्यमोचनोपयोगि इति भावः। अस्य ऐश्वर्य्यं दरिद्राणां दारिद्र्यमोचनार्थं तेषां पोषणायैवोपभुज्यतेति तात्पर्य्यम्। द्विजोपकरणं—द्विजानां—ब्राह्मणानाम्, उपकरणम् —उपकारसाधनं, सर्व्वस्वं—सर्व्वं धनम्, ब्राह्मणानामुपकारसम्पादनार्थं सर्व्वस्वमपि असौ दातुं शक्नोतीति भावः।

(१३५) सुकृतेति।—सुकृतस्य—कृतोपकारस्य, संस्मरणं—सम्यक् स्मरणं, तस्य उपकरणम्—उपकारकं, हृदयं—चित्तम्, कृतज्ञोऽयमिति भावः।

(१३६) धर्म्मोपकरणं—धर्म्मोपार्ज्जनसाधनमित्यर्थः, आयुः,—जीवनकाल इत्यर्थः, धर्म्मार्ज्जनायैवायं जीवति इति भावः। साहसोपकरणं—सहसा—सामर्थ्यं विमृश्य वर्त्तनं क्रियमाणं कर्म्म साहसम्, तस्य उपकरणम्—उपकारसाधनम्।

(१३७) असीति।—असिलता—खड्गयष्टिः तस्याः उपकरणम्—उपार्ज्जनशक्तिरित्यर्थः, खड्गबलेनैवानेन पृथिवी आयत्तीकृता इति भावः। विनोदोपकरणं— विनोदस्य—प्रीतेः, उपकरणम्—उपकारसाधनं, राजकं—राजचक्रं राज्ञां समूह इत्यर्थः अनुगताः राजानः सहचर्य्येणैव, धर्म्मानुसारेण राज्यपालनेन वा अयं प्रीतिमनुभवति इति भावः। प्रतापोपकरणं—प्रतापस्य—"स प्रतापः प्रभावश्च यत्तेजः कोषदण्डजम्" इत्युक्तलक्षणस्य, उपकरणं—ख्यापनसाधनमिति भावः, प्रतिपक्षः,— शत्रुः, शत्रुविजयेनैवास्य प्रतापोऽवगम्यतेऽरिरिति भावः।

(१३८) नास्येति।—अल्पपुण्यैः,—अधन्यैः, अल्पभाग्यैरिति भावः, ("अल्पपुण्यैः"

अवाप्यते सर्वातिशायिसुखरसप्रसूतिः पादपल्लवच्छाया" इति। श्रुत्वा च तमेव चन्द्रसेनं समादिशत्,—"कृतकशिपुं विश्रान्त-सुखिनम् एनं कारय" इति।

अथ गते च तस्मिन्, (१३९) पर्यस्ते च वासरे, (१४०) मङ्क्ष्यमानरक्तपङ्कजसम्पुटपीयमाने इव पयसि श्यामतां व्रजति बालवायसारुणे पराङ्मुखातपे, (१४१) शिथिलित-निजवाजिजवे (१४२) जपाऽऽपीडपाटले अस्ताचलशिखर-

---

इत्यनेन पादयोः कल्पद्रुमत्वं व्यज्यते, पुण्यवत्त्वादेव तत्प्राप्तेः)। अत्र—समाजे, सर्वातिशायी—सर्वेभ्य उत्कर्षशालिनी, यः सुखरसः,—सुखमेव रसनधर्मितया रसः, तस्य प्रसूतिः,—उत्पादहेतुः, सुभगानाम् आनन्दास्वादजननीत्यर्थः, यद्वा,—आनन्दास्वादोत्पत्तिर्यस्याः तथाभूता। पादपल्लवच्छाया—पादपल्लवस्य—चरणकिसलयस्य, छाया—अनातपः, आश्रय इत्यर्थः। अत्र पादपल्लवस्य छायावत्त्वं महतां जनानामाश्रयणीयत्वात् उपपद्यते। कृतकशिपु—रचितशयनीयम्, यद्वा,—सम्पादितभोजनाच्छादनव्यापारम्, तथा चोक्तं,—"भोजनाच्छादने तद्विरूपे कशिपुरुच्यते" इति। [ "कृतकशिपुम्" इत्यत्र "कृतवेषम्" इति पाठान्तरम्]।

(१३९) पर्यस्ते—अवसिते।

(१४०) मङ्क्ष्यमानेति।—मङ्क्ष्यमानः,—सम्मीलन्, यः रक्तपङ्कजसम्पुटः,—रक्तपद्म-रूपसमुद्गकः, तेन पीयमाने इव—ग्रस्यमाने इव पयसि—पयोराशौ। श्यामतां—कृष्णतां, व्रजति—गच्छति, वासरे—दिवसे। बालवायसारुणे—बालः,—सद्योजातः, यः वायसः,—काकः, तद्वत् अरुणः,—रक्तवर्णः तस्मिन्। पराङ्मुखातपे—पराङ्मुखाः,—विमुखतामापद्यमानाः, आतपाः,—मयूखाः यस्य तथोक्ते। [ "बालवायसारुणे पराङ्मुखातपे" इत्यत्र "बालवायसास्यारुणे अपराह्णातपे" इति पाठान्तरे,—बालवायसस्य आस्यवत्—मुखवत् अरुणे इत्यर्थः]। बालवायसास्यस्य ईषदरुणिमयोगात् तेन अस्ताचलगमनोन्मुखरवेः सादृश्यस्य सुखावबोधात् क्रमात् विभासमानायाः दिशः साम्यं सुघटमेवेति ज्ञेयम्।

(१४१) शिथिलितेति।—शिथिलितः,—खर्वीकृत इत्यर्थः, [ अशिथिलं शिथिलं कृतं इति च्व्यर्थे तत्करोतीति णिच् निष्ठायां रूपमेतत् ] निजानां वाजिनाम्—अश्वानां, स्वाश्वानामिति भावः जवः,—वेगः येन तथोक्ते।

(१४२) जपेति।—जपा—सूर्यप्रियपुष्पभेदः, तस्य आपीडः,—स्तवकः, तद्वत्

पताका, (४४७) सुभटभुजजयस्तम्भविन्यासशालभञ्जिका, (४४८) रणरुधिर तरङ्गिणी तरङ्ग क्रीडा दोहद दुर्ललित राजहंसी, (४४९) सितनृपच्छत्रषण्डशिखण्डिनीम्, (४५०) अतिनिशितशस्त्रधारावनभ्रमणविभ्रमसिंहीम्, असिधाराजलकमलिनीं श्रियम्। (४५१) अपहृताऽस्मि तव अमुना शौर्यरसेन। यावत्, ददामि ते वरम् अभिलषितम्" इति।

---

("वैज यमि कुर पैची" इति मेदिनी) पताका—वैजयन्ती, ममसर्वस्थानपौलिमयः, एतत शौर्यावभारात्, अन्यत्र,—वैमुद्दण्डशोपरि अवस्थानाम् इति भाव।

(४४७) सुभटेति।—सुभटानाम्—वीरश्रेष्ठानाम्, भुजाः—बाहव एव, जयस्तम्भाः,—विजयज्ञापकस्तम्भाः, तेषु विन्यासशालभञ्जिका—शोभार्थमवस्थिपुत्तलिका नाम। दृश्यते हि लोके सम्भावानुसार शालभञ्जिकाभ्यास क्रियते इति एव हि या सतत वीराणां करेषु अभिरमते सा इति। सुभटपदेन अस्याः वीरानुरागित्वं प्रकटीकृतम्, "श्रीभ दण्ड इव धीभ स्वस्य परिभूयते" इत्युक्तम्।

(४४८) रणेति।—रणेषु—सङ्ग्रामेषु या रुधिरतरङ्गिण्यः,—रक्तनद्यः, तासां तरङ्गेषु—जालेषु, क्रीडा—खेला तत्र दोहदेन—कामनाया, दुर्ललिता—दर्पिता, राजहंसी नाम।

(४४९) सितेति।—सितानि—धवलानि नृपाणां—राज्ञां, छत्रषण्डानि—आतपत्रमण्डलानि आतपत्रवनानि इत्यर्थः तत्र शिखण्डिनी—मयूरी नाम, अनन्तरे छाया मयूरीणां मुखरपशीलत्वात्।

(४५०) अतीति।—अतिनिशितानां—सुतीक्ष्णानां शस्त्राणां धारा एव वनानि, तेषु भ्रमणम् एव विभ्रमः—विलासः, तत्र सिंही नाम [सिंहे पृषोदरादीनि—" (६।३।१०९ पा०) इत्यादिना हकार सकारयो व्यत्ययेन सिद्ध, ततः "जाते—" (४।१।६३ पा०) इत्यादिना ङीष् रूपम्]। असीति।—असीनां—तरवारीणां, धारा एव—निशिताग्रभाग, जलानि, तत्र कमलिनी—पद्मिनी नाम।

(४५१) अपहृता—आकृष्टा। शौर्यरसेन—शौर्यानुरागेण, शिक्षाना चिर प्रार्थनयाऽपि दर्शनमददत्या शौर्यगुणपक्षपातिन्या सिंहजाया तव राज्ञेन स्वयमाविर्भाव, नरनाथानामशौर्यानुरागात् इति बोध्यम्।

वीराणान्तु (४५२) अपुनरुक्ताः परोपकाराः; यतो राजा तां प्रणम्य स्वार्थविमुखो भैरवाचार्य्यस्य सिद्धिं ययाचे। लक्ष्मीस्तु देवी (४५३) प्रीततरहृदया विस्तीर्य्यमाणेन चक्षुषा क्षीरोदेनेव उपरि पर्य्यस्तेन अभिषिञ्चन्ती भूपालम्—"एवमस्तु" इति अब्रवीत्; अवादीच्च पुनः,—"अनेन (४५४) सत्त्वोत्कर्षेण भगवच्छिवभट्टारकभक्त्या च असाधारणया भवान् भुवि सूर्य्याचन्द्रमसोः तृतीय इव अविच्छिन्नस्य प्रतिदिनम् उपचीयमानवृद्धेः शुचिसुभगसत्यत्यागधैर्य्यशौण्डपुरुषप्रकाण्डप्रायस्य

---

(४५२) अपुनरुक्ताः,—पुनरुक्तिदोषरहिताः, परोपकाराः,—परेषामुपकाराः, वीरा परोपकारं करिष्याम इति प्रतिज्ञाय तथा एव आचरन्ति, कार्य्यस्य न तत्र तेषां क्वापि अन्यथोक्तिरिति भावः, यद्वा,—अपुनरुक्ताः,—अनधिकाः, परोपकारा न तेषाम् अधिका मताः, अवश्यकर्त्तव्यत्वात् स्वतः सिद्धा इति भावः, परोपकार-प्रतिफले तदनुपकारं कदापि न वाञ्छा व्याहरन्तीति तात्पर्य्यम्। ताम्—लक्ष्मीम्। स्वार्थविमुखः,—निःस्वार्थः, स्वोपकारार्थं वरमप्रार्थयमानः इत्यर्थः। सिद्धिम्—अभीष्ट-फलस्य विद्याधरत्वलाभरूपामित्यर्थः, आश्रितेष्टसाधने एव महापुरुषाः व्यवसित-भवन्तीति निष्कर्षः।

(४५३) प्रीततरेति।—प्रीततरम्—अतिशयेन प्रीतं, राज्ञः स्वार्थनिःस्पृहत्वेन इति भावः, हृदयं यस्याः सा। विस्तीर्य्यमाणेन—विस्फार्य्यमाणेन, राज्ञः निःस्पृहत्वदर्शनेन विस्मयोदयादिति भावः। क्षीरोदेनेव—दुग्धसागरेणेव, अतीव धवलत्वादिति भावः। उपरि पर्य्यस्तेन—उपरि पतितेन। एवम् अस्तु—त्वत्प्रार्थनं पूर्णं भवतु इत्यर्थः।

(४५४) सत्त्वोत्कर्षेण—चित्तस्य स्वभावस्य वा औदार्य्येण, मनस्वितया उदार-स्वभावतया वा इत्यर्थः। असाधारणया—निरुपमया। सूर्य्याचन्द्रमसोः,—आदित्य-निशाकरयोः, तृतीय [illegible]—सूर्य्याचन्द्रमसमपेक्ष्य तेजस्वितया तृतीयस्थानमधिकृत इत्यर्थः। अविच्छिन्नस्य—विच्छेदमप्राप्तस्य। उपचीयमानवृद्धेः—सततवर्द्धमानाभ्यु-दयस्य। कालवशात् स्वतेजसः कदाचित् अपचयः कदाचित् वृद्धिमतः सूर्य्यात्, प्रतिमासम् अपचयवृद्धिमतः चन्द्रमसश्चापि उपमानभूतात् सततम् उपचीयमानवृद्धिमत्त्वस्य उपमेय-भूतस्य नरेन्द्रस्याधिक्यप्रतीतेः व्यतिरेकालङ्कारः। शुचीति।—शुचि,—बाह्याभ्यन्तरपूतत्व शुद्धाचरणं वा, सुभगं—सु—शोभनं, भग—वीर्य्यं कीर्त्तिं वा, सत्य—यथार्थभाषणं,

महतो राजवंशस्य कर्त्ता भविष्यति। (४५५) यस्मिन् उत्पत्स्यते सर्वद्वीपानां भोक्ता हरिश्चन्द्र इव हर्षनामा चक्रवर्त्ती त्रिभुवनविजिगीषुः द्वितीयो मान्धातेव; यस्य अयं करः स्वय-मेव ग्रहीष्यति चामरम्" इति वचसोऽन्ते तिरोबभूव।

भूमिपालस्तु तटाकर्ण्य हृदयेन अतिमात्रम् अप्रीयत। भैरवाचार्य्योऽपि तस्या देव्याः तेन वचसा, (४५६) कर्म्मणा च सम्यक् उपपादितेन सद्य एव कुन्तली, किरीटी, कुण्डली, हारी, केयूरी, मेखली, मुद्गरी, खड्गी च भूत्वा अवाप विद्या-धरत्वम्; प्रोवाच च,—"राजन्! (४५७) अदूर-व्यापिनः फल्गुचेतसाम् अलसानां मनोरथाः। सतान्तु भुवि

त्याग,—दान, धैर्य्यं—धीरत्व, तनु सौख्य,—प्रसन्नता, दया वा, दया—तै सौजन्य,—विनयिता, सदाचारपरायणता यथोचित अल्पभाषित्व चदात्मा धीरात्व इत्यर्थ, पुरुषप्रकाण्ड—पुरुषश्रेष्ठः, [प्रशस्त काण्ड प्रकाण्ड "प्रादय गताद्यर्थे प्रथमया" (वा०) इति समास। अत्र प्रकाण्डशब्द श्रेष्ठार्थबोधकमव्यय] प्रार्थित—चाटुवचनेन याच ताडशस्य। कर्त्ता—उत्पादक।

(४५५) यस्मिन—राजवंशे। द्वितीय,—अपर, मान्धातेव—सूर्य्यवंश्य नृप-विशेष इव। अयं—मदीय इत्यर्थ। ["स्वयमेव ग्रहीष्यति" इत्यत्र "स्वयमेव भगवन्तमपहाय ग्रहीष्यति" इत्यधिक पाठ]।

(४५६) कर्म्मणा—शवसाधनरूपकार्य्येण। सम्यक उपपादितेन—सम्यगनु-ष्ठितेन। सद्य एव—तत्क्षणमेव। कुन्तली—कुन्तलवान सुकेश इति यावत्। किरीटी—मुकुटधारी। कुण्डली—कर्णान्दोलितकुण्डल। हारी—हारवान्। केयूरी—अङ्गदी। मेखली—काञ्चीदामालङ्कृतकटि। मुद्गरी—मुद्गर —दण्ड-विशेष तद्वान्, [अत्र सर्व्वत्र इत्यनु "अत इनिठनौ" (५।२।११५ पा०) इति इनिप्रत्यये, मेखली इत्यत्र च "व्रीह्यादिभ्यश्च" (५।२।११६ पा०) इति इनिप्रत्यये रूपम]। विद्याधरत्वं—विद्याधरभावम।

(४५७) अदूरव्यापिन,—अदूरविस्तारा, न दूरप्रसारिण इत्यर्थ। फल्गु-चेतसाम—असारचित्तानाम, ("असार फल्गु" इत्यमर) अलसाना—मन्दाना, कार्य्यपराङ्मुखानाम् इत्यर्थ, मनोरथा,—कामा।

(४५८) विस्तारवत्य: स्वभावेनैव उपकृतय:; स्वप्नेऽपि असम्भाविता दातुमिमां दक्षिणां क्षम: कोऽन्यो भवन्तम् अपहाय ? (४५९) सम्पत्कणिकामपि प्राप्य तुलेव लघुप्रकृति: उन्नतिम् आयाति। (४६०) त्वदीयै: गुणै: उपकरणीकृतस्य त्वत्त एव च लब्धात्मलाभस्य निर्लज्जता इयम् अस्य मूढहृदयस्य। तदिच्छामि येन केनचित् (४६१) कार्यलवोपपादनोपयोगेन स्मारयितुम् आत्मानम्" इति। (४६२) प्रत्युपकारदुष्प्रवेशास्तु भवन्ति धीराणां हृदयावष्टम्भा:; अत: तं राजा—"भवच्छिवैव परिसमाप्तकृत्योऽस्मि; साधयतु मान्यो यथासमीहितं स्थानम्" इति प्रत्याचचक्षे।

---

(४५८) विस्तारवत्य,—प्रसरणशीला दूरव्यापिन इत्यर्थ। उपकृतय,—उपकारा। इमा दक्षिणा—विद्याधरत्वदानरूपाम्। क्षम,—शक्त। अपहाय—त्यक्त्वा, विनेत्यर्थ।

(४५९) सम्पदिति।—सम्पद,—विभवस्य, कणिका—कणामात्र, विभवलेश मित्यर्थ। लघुप्रकृति,—क्षुद्रस्वभाव। उन्नतिम्—ऊर्ध्वगमनम, उन्मार्गगमनञ्च, विषयशालित्वमित्यर्थ।

(४६०) उपकरणीकृतस्य—उपकृतस्य इत्यर्थ। लब्धेति।—लब्ध आत्मनो लाभ,—अभीष्टरूप येन तथाभूतस्य। अस्य—मदीयस्य इति भाव।

(४६१) कार्येति।—कार्यस्य लव,—लेश, बिन्दु इत्यर्थ, यत्किञ्चित्कार्यम इति निष्कर्ष, तस्य उपपादन—सम्पादन, तेन य उपयोग,—उपकार तेन। स्मारयितु—स्मृतिपथ नेतुम।

(४६२) प्रत्युपकारेति।—प्रत्युपकारेण—उपकारप्रतिदानेन अप्रवेश्या इति भाव, दुष्प्रवेशा,—प्रवेष्टुमशक्या इत्यर्थ। हृदयावष्टम्भा —हृदयगाम्भीर्याणि, धीराणा हृदयानि प्रत्युपकार नार्थयन्ते इति भाव। ["अत" इत्यत्र "यत" इति पाठान्तरम]। भवच्छिवा—भवत शिवा—अभीष्टपूरणेनेत्यर्थ। परिसमाप्तम—पर्याप्तं, कृत्य—प्रयोजन यस्य तथाभूत, अलम्प्रत्युपकार इति भाव। साधयतु—गच्छतु। "आदेश व्यञ्जक साधयेति स्थाने प्रयुज्यते" इति साहित्यदर्पण। मान्य, भवानिति शेष। यथासमीहितं—चेष्टितानुरूप, यथाऽभिलषितमित्यर्थ, स्थान—

तथोक्तश्च (४६३) भूभुजा जिगमिषुः सुहृदं समालिङ्ग्य टीटिभादीन् कुवलयवनेनेव अवश्यायशीकरस्राविणा सास्रेण चक्षुषा वीक्षमाणः क्षितिपतिं पुनः उवाच,—"तात। ब्रवीमि यामीति न स्नेहसदृशम्। त्वदीयाः प्राणा इति पुनरुक्तम्। गृह्यताम् इदं शरीरकमिति (४६४) व्यतिरेकेण अर्थकरणम्। तिलशः क्रीता वयमिति न उपकारानुरूपम्। बान्धवोऽसीति (४६५) दूरीकरणमिव। त्वयि स्थितं हृदयमिति अप्रत्ययम्।

---

विद्याधरणीकामित्यर्थः। इति उक्ता इति शेषः। प्रत्याचचक्षे—प्रत्याख्यानं कृतवान् इत्यर्थः, प्रत्युपकृतिग्रहणे असमर्थोऽस्मि इति भावः।

(४६३) भूभुजा—राज्ञा। जिगमिषुः,—गन्तुमिच्छुः (इच्छासन्नन्तस्य गमेः "सनाशंस—" (३।२।१६८ पा०) इति उप्रत्यये रूपम्) भैरवाचार्य्यं इति शेषः। कुवलयवनेनेव उत्पलकाननेन इव। अवश्यायेति,—अवश्यायस्य—तुषारस्य, ("अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम्" इत्यमरः) शीकरान्—बिन्दून्, स्रवति इति तथोक्तेन। सास्रेण—साश्रुणा, अत्र अवश्यायशब्देनैव नयनसलिलार्थावबोधात् पुनः अश्रुशब्दोपादानं निरर्थकमेव तेन सास्रेणेत्यत्र सस्नेहेनेति समुचितम्। "यामि" इत्यादिना सर्वं स्वाभिप्रायं प्रकाशयतीति बोद्धव्यम्। स्नेहसदृशम्—स्नेहानुरूपम्। अत्र स्नेहानुरूपनिर्देशेन स्नेह इव सुतरामाविष्कृत एव, यत्र हि,—प्रतियैव इवैच्छ्य परिपोषाभिधित्सया। यामीति तं सुहृदः प्रभवन्ति कथय मदाः" इति। एवमुत्तरत्रापि। प्राणा मदीया इति शेषः। त्वदीयाः,—त्वदधीनाः, न मम अधीना इति भावः। पुनरुक्तम्—कार्येण प्राक् प्रदर्शितप्रायत्वात् तत् पुनः वाचा समाधानम् अधिकम् इति भावः।

(४६४) व्यतिरेकेण—पृथग्भावेन, अर्थकरणम्—अर्थसाधनम्, भावो ह्यनु अभिप्रायेण तथा कथने तु तस्य विपर्ययः स्यादिति भावः। तिलशः,—खण्डशः, यावन्त उपकाराः कृताः, मदीयेषु अवयवेषु तिलशः खण्डयित्वा प्रदत्तेषु अपि तेषां न परिशोधः स्यात् इति भावः।

(४६५) दूरीकरणम् इव—दूरे निक्षेप इव, बान्धवस्य सतो बहुधा भिन्नतया दूरवर्त्तित्वात् इति भावः। अप्रत्ययं—वचनमात्रम् एतत्, हृदयस्य तथास्थितस्य दृष्टिविषयत्वाभावात् इति भावः।

(४६६) त्वद्विरहकारिणी कारणा इयं नः सिद्धिरिति अश्रद्धेयम्। (४६७) निष्कारणः तव उपकार इति अनुवादः। स्मर्त्तव्या वयमिति (४६८) आज्ञा। सर्व्वथा (४६९) कृतघ्नालापेषु असज्जनकथासु च चेतसि कर्त्तव्योऽयं स्वार्थनिष्ठुरो जनः" इत्यभिधाय वेगच्छिन्नहारोच्छलितमुक्ताफलनिकरताडिततारागणं गगनतलम् उत्पपात; ययौ च सीमन्तितग्रहग्रामः सिद्धाचितं धाम। (४७०) श्रीकण्ठोऽपि,—राजन्। पराक्रमक्रीत'

(४६६) त्वद्विरहकारिणी—तव विच्छेदजननी इयं एव नः—अस्माकम्, इयं सिद्धिः,—विद्याधरत्वलाभः, कारणा—यातना, क्लेश एव इत्यर्थः ["कारणा तु यातना तीव्रवेदना" इत्यमरः। "न सिद्धि" इत्यत्र "न सिद्धि" इति पाठे—भवद्विरहजननात् इयं यातनारूपत्वेन परिणता, न हि एषा तात्त्विकी सिद्धिरिति, यतो हि, प्रियजनविरहिणा सिद्धिलाभस्यापि तथाविधसुखास्वादायकत्वेनाकिञ्चित्करत्वा दित्याशयः] अश्रद्धेयम्—अविश्वास्यम्, एतस्मिन् भवद्विरहे कारणाख्ये कथम् स्व प्रवृत्तिः? इति एतद्वाक्यस्य अश्रद्धेयत्वम् इति भावः।

(४६७) निष्कारणः,—निरर्थकः, अहेतुको वा, अस्मापि मदुपकारस्यानर्हत्वादिति भावः। इति—एतत्कथनम् अनुवादः—उक्तार्थस्य प्रकारान्तरेण कथनम्।

(४६८) आज्ञा—आदेशः, अनुजीविभिः राजा न हि आदिश्यते, अपि तु राज्ञा तु आदिश्यन्ते इति भावः।

(४६९) कृतघ्नालापेषु—कृतं घ्नन्तीति कृतघ्नाः,—उपकारविस्मर्त्तारः, तेषाम् आलापाः,—भाषणानि तेषु अकृतज्ञजनविषयकालापावसरेषु इत्यर्थः, असज्जनकथासु—दुर्जनविषयकालापप्रस्तावेषु इत्यर्थः, भवतामुपकाराकरणात् अहमपि कृतघ्नः—तेषु अन्यतम इति भावः। स्वार्थनिष्ठुरः,—स्वकार्य्यमात्रनिर्वाहपरायणत्वेन निर्दयः। ययौति। —वेगेन—त्वरया, छिन्नात्—त्रुटितात् हारात् उच्छलिताः—स्खलिताः मुक्ताफलानां—मौक्तिकानां, निकरैः,—समूहैः, ताडितः—आहतः, तारागणः,—नक्षत्रसमूहः यस्य यत्र वा तत्। अत्र विच्छिन्ना छिन्नहारकाणां मौक्तिकानां निपतनेन अच्छुतताराणामताडनमध्यवसीयते इत्यसम्बन्धे सम्बन्धरूपा अतिशयोक्तिः। सीमन्तितः—सीमन्तित—द्विधाकृतः, ग्रहग्रामः—नक्षत्रचारिणां सूर्यादीनां ग्रामः,—समूहो येन तदाभूत। सिद्धाचितम्—विद्याधरत्वानुरूपमित्यर्थः धाम—स्थानम्।

(४७०) श्रीकण्ठोऽपि—तदाख्य नागोऽपि। पराक्रमक्रीत,—वीर्य्यक्रीत।

कर्त्तव्येषु नियोगेन अनुग्राह्यो याहितविनयोऽयं जनः।" इत्यभिधाय राज्ञा अनुमोदितः तदैव भूयो भूविवरं विवेश।

(४७१) नरपतिस्तु क्षीणभूयिष्ठायां क्षपायां, प्रवातुम् आरब्धे (४७२) प्रबुध्यमानकमलिनीनिश्वाससुरभौ, (४७३) वनदेवताकुचांशुकापहरणपरिहासखेदिनि इव सावश्यायशीकरे, (४७४) परिमलाकृष्टमधुकृति, (४७५) कुमुदनिद्रावाहिनि,

["कर्त्तृकरणे कृता बहुलम्" (२।१।३२ पा०) इति सूत्रेण तृतीयासमास]। कर्त्तव्येषु—कार्य्येषु, भवत इति भाव, नियोगेन—आदेशेन। याहितविनयः—ग्राहितविनय, पराधीन इति भाव। ["राज्ञा अनुमोदित" इत्यत्र "राजानुमोदित" इति पाठान्तरम्। एतदेव समीचीनं मन्यामहे, "सनिबुद्धि—" (२।२।११८ पा०) इति षष्ठीसमासविहितस्य प्रत्य "क्तेन च—" (२।२।१२ पा०) इत्यादिना षष्ठ्या एव समासनिषेधात्, अतीतविहितेन क्तेन तृतीयाया समासो भवत्येव इति समञ्जस भवेत्। "राज्ञा अनुमोदित" इति पाठे—"कर्त्तृकरणे—" (२।१।३२ पा०) इति बहुलग्रहणात् समाधेय समासाभाव इति दिक्]। भूविवर—पातालम्।

(४७१) "नरपति" इत्यस्य "नगर विवेश" इत्युत्तरेणान्वय। क्षीणभूयिष्ठायां—प्रायेण क्षीणायाम् इत्यर्थं। क्षपायां—रजन्याम्। प्रवातु—पवनेन सञ्चरितुम्।

(४७२) प्रबुध्यमानेति।—प्रबुध्यमानाना—सूर्य्योदयप्रारम्भात् विकाश लभमानाना, कमलिनीना—पद्मिनीनां, निश्वासेन—तदाम्रातवायुनेत्यर्थं, सुरभि,—सुगन्धि तस्मिन्।

(४७३) वनेति।—वनदेवताना कुचयो,—स्तनयो, अंशुकस्य—वसनस्य, अपहरणमेव परिहास,—क्रीडनविशेष, तेन य खेद —घर्म्मोदक, तत्स्वोदयात् इति भाव, तद्वति इव, सावश्यायशीकरे—तुषारबिन्दुयुक्ते इत्यर्थ। एतेन वायौ भुजङ्गव्यवहारसमारोपात् समासोक्तिरलङ्कार।

(४७४) परिमलेति।—परिमल,—पुष्पादिविमर्द्दजनितो गन्ध, सुरतसम्भोगजसन्निभ इति तु अप्रकृतसम्बन्ध तद्वत्त्वादिति भाव, ("विमर्द्दोत्थे परिमल" इत्यमर) तेन आकृष्टा,—आचिता, मधुकृत,—भ्रमरा, यस्य,—तदाघ्रायीत्यादिना तथोक्ते। सिद्धा इति फलितं तेन तयोक्ते।

(४७५) कुमुदेति।—कुमुदानां निद्रा—सङ्कोच इत्यर्थं, तां वाहयति—

(४७६) निशापरिणतिजडे, तुषारलेशिनि वनानिले, (४७७) विरहविधुरचक्रवाकचक्रनिश्वसितसन्तापितायामिव अपरजलनिधिमवतरन्त्यां त्रियामायां, (४७८) साक्षादागतलक्ष्मीविलोकनकुतूहलिनीष्विव समुन्मीलन्तीषु नलिनीषु, (४७९) उन्निद्रषट्पदि, (४८०) वरति कुसुमनिकरमिव तुहिनकणनिकरं, मृदुपवन

---

जनयति इति वर्णितम्, अत्र नायिकान्तरसमागमसमये प्रभातकालसमागतः नायकः मुकुलितां पश्यन्त्या कुमुदिन्या प्रेमगर्भव्यवहारेण निद्रासमुत्पादनात् अस्य नायिकान्तरानुरागदर्शनात् दक्षिणनायकत्वं ध्वन्यते ।

(४७६) निशेति ।—निशायाः—रात्रेः, परिणतिः,—परिणामः, अवसानम् इत्यर्थः, तया जडः,—मन्थरः, एतेन—शिशिरभारेण मन्थरः—सन्ध्या निशा व्याप्य निधुवनक्लमात् मन्दगामी इति भावः सूचितः । तुषारलेशिनि—शिशिरबिन्दुवाहिनि शीतल इति भावः, अनेन—रतिश्रमभेदकत्वम् इत्यर्थः ।

(४७७) विरहेति ।—विरहेण—विच्छेदेन, विधुराणाम्—व्याकुलानां, चक्रवाकानां—रथाङ्गनामकानां पक्षिणां, चक्रस्य—समूहस्य, निश्वसितेन—निश्वासवायुना, उष्णेन इति भावः, सन्तापितायाम् इव, अत एव प्रबलसन्तापशान्तये जलनिधिमवतरन्त्याम् । अपरजलनिधिं—पश्चिमसागरम्, प्रापि तपनस्योदयात् क्रमात् तमसः प्रतीचि अपसरणात् इति तात्पर्यम् । सन्तापितः शीतलं जलम् अवगाहते इति लोकप्रसिद्धम् । त्रियामायाम्—रजन्याम् ।

(४७८) साक्षादिति ।—साक्षादागतायाः—निकटमेव समुपस्थितायाः, प्रत्यक्षमुपस्थितायाः इत्यर्थः, लक्ष्म्याः,—श्रियाः, (नवोदितस्य प्रभाकरस्य शोभायाः इत्यपि व्याख्यायते) विलोकने—दर्शने, दर्शनाभिलाषेण, कुतूहलिन्यः,—कौतुकवत्यः तासु इव । समुन्मीलन्तीषु—विकसन्तीषु, नलिनीषु—पद्मिनीषु, एतेन नलिनीनां मुग्धनायिकाकल्पत्वं ध्वनितम् ।

(४७९) उन्निद्रेति ।—उन्निद्राः,—विगतनिद्राः, प्रबुद्धाः इत्यर्थः, (प्रत्यूषे पतत्त्रिवर्गस्य जागरणस्वभावत्वादिति भावः) षट्पदाः यत्र तस्मिन्, एतेन षट्पदानां शृङ्गारसहायानां विटादीनामिव रत्युत्सुकसहायत्वं प्रतीयते ।

(४८०) वरति—वर्षति । कुसुमनिकरमिव—पुष्पनिकरमिव, अत्र—विरहतापोपशमाय रतिसुखोपभुक्तये वा पुष्पविकीर्णत्वं दृश्यते । मृद्विति ।—मृदुना

लासितलते कानने, (४८१) कमललक्ष्मीप्रबोधमङ्गलशङ्खेषु इव रसत्सु (४८२) अन्तर्बद्धध्वनन्मधुकरेषु, मुकुलायमानेषु कुमुदेषु, (४८३) उज्जिहानरविरथवाजिविसृष्टैः प्रोथपवनैः प्रोत्सार्यमाणासु इव वारुण्यां ककुभि पुञ्जीभवन्तीषु श्यामालताकलिकासु तारकासु (४८४) मन्दरशिखराश्रयिणि मन्दानिललुलितकल्पलतावनकुसुमधूलिविच्छुरिते इव धूसरीभवति सप्तर्षिमण्डले,

---

—मन्देन, पवनेन—वायुना, लासिता—नर्तिता कम्पिता इत्यर्थः, लता,—व्रतत्यः यत्र तादृशे, एतेन वायोः कलापवल्लीललितनायकत्वं गम्यते।

(४८१) कमलेति।—कमलानां—पद्मानां लक्ष्मीः,—श्रीः तस्याः प्रबोधाय—जागरणाय विकसनाय इति भावः मङ्गलशङ्खाः तेषु इव, इत्युत्प्रेक्षा। रसत्सु—ध्वनत्सु।

(४८२) अन्तरिति।—अन्तः—अभ्यन्तरे, बद्धाः—रुद्धाः अतएव पर्याप्तनिर्गमादिति भावः सायन्तु पूर्वदिवसीयमवगन्तव्यम्, अधुना प्रभातवर्णनादर्शनात् कमलानां विकासप्रसङ्गात्, रतिश्रान्ताः कमलानां मधुरसपानेन आगरणार्थं तत्र व्यासक्ता वा, ध्वनन्तः—गुञ्जन्तः, मधुकराः—भ्रमराः येषु, एतेन भ्रमराणां रत्यनुकूलसङ्गमत्वं प्रतीयते। मुकुलायमानेषु—मुकुलभावं गच्छत्सु।

(४८३) उज्जिहानेति।—उज्जिहानैः—उद्गच्छद्भिः, [उत्पूर्वकात् जिहीते इत्यस्य शानचि रूपम्] प्रभूते वा रवेः—सूर्यस्य रथवाजिभिः,—रथाश्वैः, विसृष्टाः,—त्यक्ताः तैः। प्रोथपवनैः—नासामारुतैः। प्रोत्सार्यमाणासु इव—अपसार्यमाणासु इव इत्युत्प्रेक्षा। वारुण्यां ककुभि—पश्चिमायां दिशि। पुञ्जीभवन्तीषु—सङ्घतीभवन्तीषु। श्यामेति।—श्यामा—निशा एव लता—व्रततिः, ("श्यामा स्यात् शारिवा निशा" इत्यमरः) यद्वा—श्यामालता—प्रियङ्गुलतिका मकरिका वा तस्याः कलिका—कोरकाः तासु इवाहृतीषु इत्यर्थः। तारकासु—नक्षत्रेषु, इति परम्परित (प्रियङ्गुलतिकापक्षे तु निरङ्ग) रूपकमलङ्कारः।

(४८४) मन्दरेति।—मन्दरस्य—पर्वतभेदस्य, शिखरं—शृङ्गम्, आश्रयतीति तथोक्ते। मन्दानिलेति।—मन्देन—अत्याल्पेन मृदु प्रवहता इत्यर्थः, अनिलेन—वायुना, लुलितम्—ईषदान्दोलितं यत् कल्पलतावनं—देवतरुविशेषकाननं, तस्य कुसुमानां—पुष्पाणां धूलिभिः—परागैः विच्छुरिते इव—लिप्ते इव [इति वाच्या क्रियोत्प्रेक्षा] धूसरीभवति—धूसरतां व्रजति, सप्तर्षिमण्डले—मरीच्यादिमहर्षिमण्डले, एतेषां स्वर्गाकाशस्थायित्वात् कल्पलतिकाकुसुमपरागलिप्तत्वं साधु सङ्गच्छते।

( ४८५ ) सुरवारणाङ्कुश इव च्युते गलति तारामये स्रगि त्रीनपि टीटिभादीन् गृहीत्वा नागयुद्धव्यतिकरमलीमसानि शुचिनि वनवापीपयसि प्रक्षाल्य अङ्गानि नगरं विवेश। अन्यस्मिन् अहनि तेषाम् आत्मशरीरानन्तरं स्नानभोजनाच्छादनादिना प्रीतिम् अकरोत्।

कतिपयदिवसापगमे च ( ४८६ ) परिव्राट् भूभुजा वार्यमाणोऽपि वनं ययौ। पातालस्वामि-कर्णतालौ तु शौर्यानुरक्तौ तमेव सिषेवाते। ( ४८७ ) सम्पादितमनोरथातिरिक्तविभवौ च सुभटसङ्ग्राममध्ये निष्कृष्टमण्डलाग्रौ समरमुखेषु प्रथमम्

( ४८५ ) सुरेति।—सुरवारणस्य—ऐरावतस्य, अङ्कुश इव, च्युते—स्वस्थानात् भ्रष्टे, गलति—क्षरति, अत एव गच्छति इत्यर्थः तारामये—नक्षत्रमये स्रगि—स्वग्रीवास्थ माल्ये, स हि सितारोऽङ्कुशाकार इति कौस्तुभविशिष्टत्वादस्य सहास्य नक्षत्रमयत्व स्रगिवस्त्व अर्थधर्मसाम्यप्रतिपादनात् उपमाऽलङ्कारः। टीटिभादीन्—टीटिभ कर्णताल-पातालस्वामिन इत्यर्थः। नागेति।—नागेन—श्रीकण्ठाख्येन सह, यत् युद्ध तस्य व्यतिकरः,—सम्पर्कः, तेन मलीमसानि—मलिनानि। शुचिनि—पवित्रे, निर्मले वा, वनवापीपयसि—वनस्थसरसीजले। अन्यस्मिन् अहनि—अन्येद्युः, परदिने इत्यर्थः, निशाऽवसानात् परमिति भावः, तेषां—टीटिभादीनाम्। आत्मेति।—आत्मशरीरम् —आत्मदेहम्, अनन्तरम्—अव्यवहितोत्तरं भवति यस्मिन् कर्मणि तत् यथा स्यात् तथा, स्नानभोजनाच्छादनादिना—स्नानाहारवसनादिना, प्राक् तेषां स्नानभोजनादि व्यापारं समाधाय तेषां शरीरं सन्तर्प्य पश्चात् स्वस्य शरीरसन्तर्पणाय स्नानभोजनादि व्यापारं विदधाविति भावः, यद्वा—आत्मशरीरेण सह, नास्ति अन्तरं—भेदः यस्मिन् कर्मणि तत् यथा तथा, आत्मतुल्यमित्यर्थः।

( ४८६ ) परिव्राट—परिव्राजकः, [ परिव्रजतीत्यर्थे परिपूर्व्वकात् व्रजतेः कर्त्तरि क्विपि निपातः ] टीटिभ इत्यर्थः। भूभुजा—राज्ञा, [ भुवं भुनक्ति पालयतीत्यर्थे भूपदात् भुजतेः कर्त्तरि क्विपि रूपम् ]। वार्यमाणः,—निषिध्यमानः। वनं ययौ—वानप्रस्थाश्रममवलम्बत इति भावः। शौर्येति।—शौर्येण—पराक्रमेण, राज्ञ इति भावः, अनुरक्तौ—जातानुरागौ, न भोगलोलुपतया इति भावः, धनितौ तु तौ गुणलुब्धौ स्वामिनोऽधिकस्नेहावभूतामिति फलितम्।

( ४८७ ) सम्पादितेति।—सम्पादितः,—सम्भावितः, भूभुजेति शेषः, मनोरथस्य

उपयुज्यमानौ कथान्तरेषु च अन्तरान्तरा समादिष्टौ विचित्राणि भैरवाचार्य्यचरितानि शैशववृत्तान्ताय कथयन्तौ तेनैव सार्द्धं अरम् आजग्मतुः इति।

इति श्रीबाणभट्टकृते हर्षचरिते भैरवाचार्य्यसिद्धिसाधन नाम
तृतीय उच्छ्वास ॥ ३ ॥

—अभिरक्षितस्य, प्रतिरक्षित,—अधिक, विभव,—सम्पत् ययो तौ। सुभटमण्डलमध्ये—वीरसमूहमध्ये। निकृष्टेति।—निकृष्टम्—अत्युत्कृष्टमित्यर्थं, मण्डलाग्र—खड्ग ययो तौ, ("खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टय। कौक्षेयको मण्डलाग्र" इत्यमर) यद्वा,—निकृष्ट—प्रख्यात, यत् मण्डल—वीरव्यूह तस्य अग्रौ—प्रधानभूतौ, वीरसमाजेषु प्रसिद्धाविव्यर्थ, अत एव समरमुखेषु—युद्धाग्रेषु सेनाव्यूहमुखेषु इति यावत्, प्रथमम्—अग्रे, प्राधान्येन सेनापतित्वेन वा इति भाव, उपयुज्यमानौ—नियुज्यमानौ, हतौ इत्यर्थ। कथान्तरेषु—आलापप्रसङ्गेषु। अन्तरान्तरा—मध्ये मध्ये। ["आनुपूर्व्ये द्वे वाच्ये" (वा०) इति द्वित्वम्] समादिष्टौ—आज्ञप्तौ, राज्ञा इति शेष। शैशववृत्तान्तान्—बाल्यक्रीडादिव्यापारान्, भैरवाचार्य्यस्यैव इति भाव, कथयन्तौ इति स्निग्धोक्त्यप्रत्यायनपरं बोद्धव्यम्। तेनैव—राज्ञा, [अत्र "सहयुक्तेऽप्रधाने" (२।३।१९ पा०) इति सूत्रे, एव साकं सार्द्धं समं योगेऽपि' इति वृत्ति, तेन सार्द्ध योगे तृतीया ज्ञेया]। सार्द्धं—सह। अरम्—शीघ्रम्।

इत्यमयशाल्मलिटीकाश्वरपञ्चाननेन वाग्यज्ञ[illegible]तमेन पण्डितकुलपतिना बि, ए,
उपाधिधारिणा श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण विरचितायां,
तदात्मजाभ्यां पण्डितश्रीमदाशुबोधविद्याभूषण पण्डितश्रीनित्यबोध
विद्यारत्नाभ्यां परिवर्द्धितायां प्रतिपत्तिव्याख्याख्यायां
श्रीहर्षचरितव्याख्यायां तृतीय उच्छ्वास ॥ ३ ॥

# चतुर्थ उच्छ्वासः ।

योगं स्वप्नेऽपि नेच्छन्ति कुर्व्वते न करग्रहम् ।
महान्तो नाममात्रेण भवन्ति पतयो भुवः ॥ १ ॥
सकलमहीभृत्कम्पकृदुत्पद्यते एक एव नृपवंशे ।
विपुलेऽपि पृथुप्रतिमो दन्त इव गणाधिपस्य मुखे ॥ २ ॥

---

अथेदानीं महता गुणकौशलच्छलेन प्रस्तुतस्य धन्यनायकस्य गुणवत्त्वं प्रख्यापयितुमाह, योगमिति ।—महान्तः,—महानुभावा जनाः, स्वप्नेऽपि—प्रसुप्तस्य विज्ञानेऽपि, निद्रावस्थाया मानसिकज्ञानविषयेऽपि इत्यर्थः, ( "स्वप्नः स्वापे प्रसुप्तस्य विज्ञाने दर्शने पुमान्" इति मेदिनी ) योगम्—विश्रम्भघातकं, विश्वासहन्तृत्वम् इत्यर्थं, पराभिसन्धानार्थमुपधिमिति यावत् ( "योगोऽपूर्वार्थसम्प्राप्तौ सङ्गतिध्यानयुक्तिषु । विश्रम्भघातके   ॥" इति मेदिनी ) नैतत्कृत न इच्छन्ति—नाभिलषन्ति, करग्रहं—करेषु—राजग्राह्यभागेषु ग्रहं,—ग्रहणं तं, पीडनम् इत्यर्थं, दण्डग्रहणमिति वा, पाणिग्रहणञ्च विवाहमित्यर्थ, न कुर्व्वते अथ च नाममात्रेण भुवः,—पृथिव्याः, पतयः —अधिपतयः परिपालकाश्च, भवन्ति, एतत्—नाममात्रग्रहणेन स्वयं कथ्यमानाभ्यां पतित्वं दृश्यन्ते, अन्यत्,—पाणिग्रहण सङ्ग्रामादिकं विनाऽपि भूपतयः इति नामधारिणो भवन्तीति भावः, एतेन भाविनृपस्य गुणस्य अत्यानुपतत् प्रजारञ्जकत्वं प्रभावातिशयश्च सूचितम् । पृथ्यावक्त्रं वृत्तम् ॥ १ ॥

इदानीं पुष्पभूतिवंशे समुत्पद्यमानस्य हर्षनृपतेः सकलोत्कर्षेण पूर्व्वनृपतिभ्यः श्रेष्ठत्वमाह सकलेति ।—विपुले—महति, विशाले च अपि नृपवंशे—राजवंशे, गणाधिपस्य—गणपतेः, मुखे—वदने, गणाः —गणाः —सैन्यभेदाः, ( "गणः प्रमथसङ्घौघे सङ्ख्यासैन्यप्रभेदयोः" इति मेदिनी ) तेषाम् अधिपस्य—अधिपतेः, राज्ञ इत्यर्थः राजसमूहानामिति भावः, मुखे—प्रधाने इत्यर्थः, नृपवंशे इत्यस्य विशेषणत्वेन योजनीयम्, दन्त इव—रदन इव, पृथुः,—आदिराजः, तत्प्रतिमः,—तत्सदृशः, अथवा —पृथ्वी—विशाला प्रतिमा—दन्तबन्धः, दन्तकोषः इत्यर्थः यस्य तथाभूतः, ( "प्रतिमा गजदन्तस्य बन्धे चानुकृतावपि" इति मेदिनी ) एक एव—कश्चिदेव, यथा गणाधिपस्य मुखे दन्तोऽप्येक एव, तथा नरेन्द्रवंशे कश्चिदेक एव इति

(१) अथ तस्मात् पुष्पभूतेः द्विजवरस्वेच्छागृहीतकोपो नाभिपद्म इव पुण्डरीकेक्षणात्, लक्ष्मीपुरःसरो रत्नसञ्चय इव रत्नाकरात्, गुरुबुधकविकलाभृत्तेजस्विभूनन्दनप्रायो ग्रहगण इव उदयस्थानात्, (२) महाभारवाहनयोग्यः सागर इव

---

भावः, सकलानां महीभृतां—राज्ञां, पर्वतानाञ्च, कम्पकृत्—भयप्रद इति भावः, एकत्र—नामश्रवणेनैव वेपथुजननात्, अन्यत्र—स्वस्थानादपसारणात्, उत्पद्यते—जायते। एतेन महाराजस्य हर्षस्य उत्पत्तिः सूचिता। आर्या वृत्तम् ॥ २ ॥

(१) अथेत्यादि।—"अथ" इत्यस्य "निर्जगाम राजवंशः" इति उत्तरेण सम्बन्धः। तमेव विशिनष्टि, द्विजवरेत्यादिभिः।—द्विजवरैः—ब्राह्मणश्रेष्ठैः, अन्यत्र,—विप्रेषु वरः,—श्रेष्ठः, ब्रह्मेत्यर्थः, तेन स्वेच्छया—यथाकाममित्यर्थः, गृहीतः,—लब्धः, स्वीकृतश्च कोषः,—धनं बीजकोषश्च, कर्णिका च इत्यर्थः यस्य तथाभूतः, पुण्डरीकेक्षणात्—कमललोचनात्, पुण्डरीकाक्षात् नारायणाच्च, नाभिपद्म इव—नाभिकमलमिव, यद्यपि "वा पुंसि पद्मं नलिनम्" इत्युक्तममरेण, तथाऽपि पद्मशब्दस्य पुंसि प्रयोगस्तु भवाविशुन्द्ीयद्य(?) एवैत्युक्तमालङ्कारिकैः। इत प्रभृति श्लेषमूलोपमाऽलङ्कारः किञ्च सर्वेषामेवांशानामतिवादनादिति। लक्ष्मीः,—श्रीः, पुरःसरी—प्रथमा यस्य तथोक्तः, लक्ष्मीः,—सम्पत् तत्पुरःसरश्च। रत्नसञ्चय इव—रत्नानां—रत्नभूतानाम् उत्कृष्टानामित्यर्थः, पुत्राणामिति भावः, "जातौ जातौ यदुत्कृष्टं तद्रत्नमिह कथ्यते" इत्युक्तेः, सञ्चयः,—समुत्पत्तिः यस्मात् स रत्नानां सञ्चयः यस्य तथाभूतो वा, रत्नानां—मणीनां, सञ्चयः,—समूहश्च। रत्नाकरात्—रत्नानाम् आकरः,—आश्रयः, उत्पत्तिस्थानञ्च तस्मात् समुद्राच्च। गुर्विति।—गुरवः,—उपदेष्टारः, बुधाः—पण्डिताः, कवयः,—काव्यकर्त्तारः, कलाभृतः,—गृहीतशिल्पाः, ["कलाभृत्" इत्यत्र "कलावत्" इति पाठेऽपि स एवार्थः] तेजस्विनः,—शूराः, भूनन्दनाः,—राजानः, अन्यत्र,—गुरुः,—बृहस्पतिः, बुधः,—सोमात्मजः, कविः,—शुक्रः, कलाभृत्—चन्द्रः, तेजस्वी—सूर्यः, भूनन्दनः,—मङ्गलः, एते प्रायेण यत्र तथाभूतः। उदयस्थानात्—उदयाचलादित्यर्थः; अन्यत्र—प्रभवस्थानादित्यर्थः।

(२) महाभारेति।—महान् भारः—गुरुभार इत्यर्थः, भूपालनरूप इति भावः, तस्य वाहनम्—निर्वाहणम्, तत्र योग्यः, अन्यत्र,—महती भारस्य—भारवाहकस्य, वाहनैः—स्थानात् स्थानान्तरनयनैः, योग्यः,—समर्थः। [समुद्रपक्षे भारोत्पाद्यगाभावेऽपि भारशब्दे राजवंशपक्षे गुरुत्वभारस्य न तथाऽर्थता इति "वाहन—"

सगरप्रभावात्, (३) दुर्जयबलसनाथो हरिवंश इव शूरात् निर्जगाम राजवंशः। (४) यस्मात् अविनष्टधर्मधवलाः प्रजासर्गा इव कृतमुखात्, प्रतापाक्रान्तभुवनाः किरणा इव तेजो-

(८४।८ पा०) इत्यादिना न पाठम्]। सगरप्रभावात्—सगरस्य—सूर्यवंशीयस्य राजर्षिविशेषस्य प्रभावात्—सामर्थ्यात्। पुरा सगरस्य नृपतेः षष्टिसहस्राणि पुत्रा आसन्। ते तु कालेन महात्मना पराक्रामन्ताय धीरा पितुः सगरस्य अश्वमेधीयाश्वं रक्षन्तः सर्वां पृथ्वीं प्रदक्षिणीकुर्वन्त एव। अवान्तरे शक्रेण तेषां मध्यचारी अश्व देवमायया हृत्वा पाताले कपिलमुनिसमीपे रक्षितः। अथ ते रक्षका यज्ञीयमश्वम् अपश्यन्तः सर्वां पृथ्वीं भ्रमन्तः अपि न अपश्यन्। तत पितुराज्ञया पाताल प्रविश्य कपिलसमीपे तमश्वं दृष्ट्वा कपिलं व्यपीडयन्। स च मुनि तान् कोपदृष्ट्या भस्मीचकार। तैर्यां तदा पातालखननेन यो जलराशिरुत्थित, स एव सागराद् इति सागरसंज्ञां लेभे इति पुराणवार्त्ता। अथवा—सगरस्येव प्रभावो यस्य तथाभूतात्। ["प्रभावात्" इत्यत्र "प्रभवात्" इति पाठे,—सगरात् प्रभव,—उत्पत्ति यस्य तस्मात्, सगरपुत्रादित्यर्थः, अथवा,—सगरवत् प्र—प्रकृष्ट, प्रशस्तांशे इत्यर्थः, भव,—उत्पत्ति यस्य तस्मात् इत्यर्थः]।

(३) दुर्जयबलसनाथ,—दुर्जयं बल—पराक्रम येषां ते, तादृशै वीरैरित्यर्थ, यद्वा,—दुर्जयेन—दु खेन जेतु शक्येन पराक्रमेण इत्यर्थः, बलेन—सैन्येन सनाथ,—सहित, किं वा—दुर्जयस्य बलसनाथस्य—महाप्रभस्य सैन्ययुतस्य वा, अपत्यं दुर्जयबलसनाथ, अथवा,—दुर्जयेन—जेतुमशक्येन बलेन—बलदेवेन, सनाथ—सहित, यद्वा,—दुर्जय,—विष्णु, "दुर्जयो दुरतिक्रम" इति विष्णुसहस्रनामवचनात्, बल,—बलदेव ताभ्यां सनाथ, शूरात्—वीरात्, "तस्मात् प्रभव" इति पूर्वेणान्वय, तन्नामक्त् वसुदेवपूर्वपुरुषाच।

(४) यस्मात्—राजवंशात्, "यस्मात्" इत्यत्र "यस्मादेव राजान" इति क्वचित् पाठः। तानेव विशिनष्टि, अविनष्टेत्यादिभि।—अविनष्टेन—अविच्छिन्नेन सम्पूर्णेनेत्यर्थं, धर्मेण—वेदोदितानुष्ठानेन "चोदनालक्षणोऽर्थो धर्म" इत्युक्ते "चोदना वेदविधिवाक्यं कथ्यते" इति तद्व्याख्यानाच्च, धवला—विशदा, शुभ्रा इव इत्यर्थः, यद्वा,—अविनष्टधर्माण् धवलान्—नरान्, आनिन्दन्ति, निवर्तन्त प्रवर्तन्ते वा इति आप तदीया। ("धव पुमान् नरे धूर्ते पत्यौ" इति मेदिनी) प्रजासर्गाः,—मानुषसृष्टय। कृतमुखात्—सत्य

निधेः, (५) विग्रहव्याप्तदिङ्मुखा गिरय इव भूभृत्प्रवरात्, (६) धरणिधारणक्षमा दिग्गजा इव ब्रह्मकरात्, उदधीन् पातुम् उद्यता जलधरा इव घनागमात्, (७) इच्छाफल-दायिन कल्पतरव इव नन्दनात्, (८) सर्व्वभूताश्रया विश्वरूप-प्रकारा इव श्रीधरात् अजायन्त राजानः।

---

मुखान् अन्धकारपूतवचस इति भावः, सत्ययुगप्रारम्भात्। प्रतापेति।—प्रतापेन—कोषदण्डजतेजसा, ("स प्रभावः प्रतापश्च यत्तेजः कोषदण्डजम्" इत्यमरः) तेजसा च, आतपेनेत्यर्थः, आक्रान्तम्—अधिष्ठितम्, भुवनं यैः तथोक्ताः। तेजोनिधेः,—प्रतापशालिनः सूर्याच्च।

(५) विग्रहेति।—विग्रहेण—रणेन, कायेन च, ("विग्रहः कायविस्तारविभागे ना रणेऽस्त्रियाम्" इति मेदिनी) व्याप्तानि दिङ्मुखानि यैः तथोक्ताः। भूभृत्प्रवरात्—भूभृत्सु—राजसु पर्व्वतेषु च, प्रवरः,—श्रेष्ठः तस्मात् [निर्द्धारे षष्ठीसमासनिषेधात् सप्तमी एव साधयितव्या। "भूभृत्प्रवरात्" इत्यत्र "भूभृत्प्रभवात्" इति पाठे,—भूभृत्सु—भूपालेषु, प्रभवः,—पराक्रमः यस्य, अथवा,—भूभृताम्—पर्व्वतानाम्, प्रभवः,—प्रथमप्रकाशस्थानं तस्मात् इत्यर्थः, ("प्रभवो जन्महेतुः स्यात् जन्महेतौ पराक्रमे। स्थानस्य चादिमस्थाने" इति मेदिनी) केचित्तु "भूभृत्प्रभवो ब्रह्मा" इति व्याचख्युः]।

(६) धरणीति।—धरण्याः,—पृथिव्याः, धारणे—पालने, उद्वहने च, क्षमाः,—शक्ताः। ब्रह्मकरात्—ब्रह्म—वेदोक्तं धर्म्मम् इत्यर्थः, करोतीति तस्मात् विधातृहस्ताच्च, हस्तगर्भे कुर्व्वतः ब्रह्मणः करात् क्षत्रियाः उत्पन्ना इति पौराणिकी वार्त्ता। उदधीन्—समुद्रान्, पातुम्—रक्षितुम्, शोषितुञ्च। घनागमात्—घनः,—सान्द्रः, दृढ इत्यर्थः, आगमः,—शास्त्रज्ञानं यस्य तथोक्तात्, मेघागमात्, वर्षाकालात् प्रावृषश्च।

(७) इच्छेति।—इच्छया—कामनया, अर्थिनामिति भावः, फलानि—अभिलषितानि ददति ये तथोक्ताः, [अत्र इच्छाफलपूर्व्वकात् दाधातोः "सुप्यजातौ—" (३।२।७८ पा०) इत्यादिना णिनिप्रत्यये "आतो युक्—" (७।३।३३ पा०) इत्यादिना युगागमे रूपम्]। नन्दनात्—नन्दयतीति तथोक्तात्, तदाख्योद्यानाच्च।

(८) सर्व्वेति।—सर्व्वेषां भूतानां—प्राणिनां, जीवानाम्, आकाशादीनाम्, क्षित्यादिमहाभूतानां वा, आश्रयाः,—आधारभूताः, यद्वा,—सर्व्वेषु—सकलेषु द्रव्येषु

(९) तेषु चैवमुत्पद्यमानेषु क्रमेण उदपादि हूणहरिण-केसरी, सिन्धुराजज्वरः, गुर्जरप्रजागरः, गान्धाराधिपगन्धद्विप-कूटपाकलः, (१०) लाटपाटवपाटच्चरः, (११) मालव-लक्ष्मीलतापरशुः, प्रतापशील इति प्रथितापरनामा,

---

इति भावः, भूतानि—सत्त्वानि, नित्यत्वात् पारमार्थिका इति भावः, अत एव आत्मना। विश्वरूपप्रकारा,—विश्वया—जगता, रूपप्रकरा,—रूपनिवहा, ["विश्वरूपप्रकरा" इत्यत्र "विश्वरूपप्रकारा" इति पाठे—भगवतः श्रीविष्णो दुर्दर्शरूपविशेषा इत्यर्थः]। श्रीधरात्—श्रिय—सम्पदः, राजलक्ष्मीं वा, धरतीति तथोक्तात्, विष्णोः।

(९) तेष्वित्यादि।—"उदपादि" इत्यस्य "प्रभाकरवर्द्धनो नाम राजाऽधिराज" इत्युत्तरेणान्वयः। उदपादि—उत्पन्नः। क्रमेण विशिनष्टि, हूणेत्यादिभिः।—हूणाः,—तदाख्यक्षत्रियविशेषाः, देशविशेषा वा, हरिणा इव—मृगा इव, तेषां तेषु वा केसरी—सिंहः, तेषां विजयेन भीतिहेतुत्वादिति भावः, एवमुत्तरत्रापि बोद्धव्यम्, इतः प्रभृति सर्वत्र रूपकमलङ्कारः, अभेदाध्यवसानात्। सिन्धुराजज्वरः,—सिन्धुराजस्य ज्वरः—सन्तापदायकः रोगविशेषः। गुर्जरप्रजागरः—गुर्जरनिद्राच्छेदः, गुर्जरदेशीया जना यस्य भयेन सततं जाग्रतीति भावः। गान्धाराधिपः,—गान्धारराज एव गन्धद्विपः,—गन्धप्रधानो द्विपः, मत्तहस्तीत्यर्थः, "स्वेद मूत्र पुरीषाणां गन्धात्सैव भवन्ति या। यस्याघ्राय विनश्यन्ति ■ विद्यात् गन्धहस्तिनम्॥" इत्युक्तलक्षणो वा, तस्य कूटः,—निपतन्, अविरुद्धदीति भावः, यद्वा,—कूटे—यन्त्रे, मृगबन्धनविशेषे इत्यर्थः, ("कूटोऽस्त्री निश्चले राशौ •• । ••सीरावयव यन्त्रयोः॥" इति मेदिनी) पाकलः,—हस्तिज्वरविशेषः, ("पाकलः कुष्ठभेषज्ये पुंसि स्यात् कुञ्जरज्वरे" इति मेदिनी)। "विविधैर्नामभिः क्रूरो नानायोनिषु वर्तते। पाकलो गजेष्वभितापी वाजिष्वपस्मारकः कुक्कुटेषु। इन्द्रमदो मत्स्येषु मौक्तिका ज्योतिरोषधिषु मृत्यामुरवी नाम॥" इत्यादि वैद्यके च।

(१०) लाटेति।—लाटानाम्—लाटदेशीयानां क्षत्रियाणां [लाटशब्दात् "तत्र जातः" (४।३।२५ पा०) इत्यणि रूपम्] पाटवस्य—नैपुण्यस्य पाटच्चरः,—चोरः, तद्विनाशकोऽर्थः, ("चौरैकागारिकस्तेन • पाटच्चरमलिम्लुचाः" इत्यमरः)।

(११) मालवेति।—मालवानाम्—तदाख्यजनपदानाम्, लक्ष्मीरेव लता तस्याः परशुः,—कुठारः। तदादिनाशकत्वात् तदाख्यदेशविजयो इति निष्कर्षः। प्रतापशीलः,—यशो तदादिनाशकारी, अत एव प्रतापशील इति, प्रथितापरनामा—

(१२) प्रभाकरवर्द्धनो नाम राजाधिराजः। (१३) यो राज्याङ्गसङ्गीनि अभिषिच्यमान एव मलानीव मुमोच धनानि। यः परकीयेणापि कातरवल्लभेन रणमुखे तृणेनेव धृतेन अलज्जत जीवितेन। यः (१४) करधृतधौतासिप्रतिबिम्बितेन आत्मनाऽपि अदूयत समितिषु सहायेन। रिपूणां पुरः (१५) प्रधनेषु धनुषाऽपि नमता यो मानी मानसेन अखिद्यत। यश्च

---

विख्यातान्यनामधेय, यद्वा,—प्रथित इति अपर,—प्रभाकरवर्द्धनादितर, नाम—समाख्या यस्य तथाभूत ।

(१२) प्रभेति।—प्रभाकर,—सूर्य, सद्वत् वर्द्धते इति तथोक्त, यद्वा,—प्रभाकरवत्तानौ वर्द्धनश्च इति विग्रह, यश प्रभावशालित्वात्।

(१३) राज्याङ्गसङ्गीनि—राज्याङ्गानि—अमात्याद्या प्रकृतय, तत्सङ्गीनि—तत्सङ्गतानि। अभिषिच्यमान,—राज्ये प्रतिष्ठाप्यमान, अथच,—अभित —सर्वत, सिच्यमान,—प्रोक्ष्यमाण, जलैरिति भाव, [अत्र "उपसर्गात्—" (८।३।६५ पा०) इत्यादिना षत्वम्] यस्य सर्वतोभावेन जलसिक्ती भवति, स अङ्गसङ्गीनि मलानि मुञ्चतीति लोकप्रसिद्धम्। मलानीव—दूषितानीव क्लेदानिव च, धनानि मुमोच—तत्याज, दीनानाथादिभ्यो दत्तवानित्यर्थ, अत्र मलै सह धनानामवैधर्म्यसाम्यप्रतीते उपमाऽलङ्कार। परकीयेणापि—परार्थप्रहतेनापि इत्यर्थ, कातरेषु, जनेषु इति शेष, कातराणां—दुर्बलानां जनानां वा वल्लभेन—प्रियेण, त्रातुमशक्तेनेति भाव, तृणेनेव—अतितुच्छेनेति भाव। कातरा अपि मुखे तृणानि धरन्ति इति प्रसिद्धि। अलज्जत—अत्रपत नित्य परोपकाराय जीवनमुत्सृजन्नपि स नाहमेतावता कालेनापि कस्याप्यार्तस्य रक्षणाय जीवनमिदं दत्वाय मया उत्सृष्ट अकृत्यामिति अतृप्यन् किं मया जगति कृतमिति कुण्ठितोऽभूदित्यथ ।

(१४) करेति।—करे—करतले, धृत,—गृहीत, धौत,—निशित, उज्ज्वलो वा, अत्र धौतपदप्रयोगेण प्रतिबिम्बग्रहणसामर्थ्यं प्रतिपादितमिति बोध्यम्, य असि,—तरवारि, तत्र प्रतिबिम्बितेन—प्रतिफलितेन। अदूयत—उपतप्तवान्। समितिषु—युद्धेषु, ("युद्धमायोधनं जन्यं प्रधनं प्रविदारणम्। समुदाय स्त्रिय संयत्समित्याजिसमिद्युध" इत्यमर) सहाय,—सहचर तेन, असहाय एव सर्वान् जिगीषु स इति भाव ।

(१५) प्रधनेषु—युद्धेषु। नमता—न्यायाभावार्थमिति भाव। मानी—अभि-

(१६) अन्तर्गतापरिमितरिपुशल्यशङ्कुकीलितामिव निश्चलामुवाह राजलक्ष्मीम्। यश्च सर्वासु दिक्षु (१७) समीकृततटावटविटपाटवीतरुतृणगुल्मवल्मीकगिरिगहनैर्दण्डयात्रापथैः पृथुभिर्भृत्योपयोगाय व्यभजतेव वसुधाम्। यश्च (१८) अलब्धयुद्धदोहदमात्मीयोऽपि सकलरिपुसमुत्सारकः परकीय इव तताप प्रतापः। यस्य च (१९) वह्निमयो हृदयेषु, जलमयो लोचनपुटेषु, मारुत-

---

मानवान्। मानसेन—मनसा, यदि वस्तुत मया सहायत्वेन नीयते न सन्नाम-धवत्वेन केवलेन उपस्थित्या वा असौ नीयते इति तु चिन्तेति भाव।

(१६) अन्तर्गतेति।—अन्तर्गतै,—अभ्यन्तरस्थै, अपरिमितै,—अगणितै, रिपुभि—शत्रुभि, रिपुभिरिवेति भाव, शल्यशङ्कुभि,—बाणादिरूपकीले, कीलिता—निखाता, सयमिता इत्यर्थं तामिव इत्युत्प्रेक्षा। निश्चलाम्—अनपायिनीम्।

(१७) समीकृतेति।—समीकृतानि—समतलतां नीतानि तटा,—नदीतीराणि अवटा,—गर्ता ("गर्तावटौ भुवि श्वभ्रे" इत्यमर) विटपा—शाखा, अटव्य—विपिनानि, तरव,—वृक्षा, तृणानि गुल्मा,—स्तम्बा, काण्डविरहित वृक्षा इत्यर्थ, ("अप्रकाण्डे स्तम्ब गुल्मौ" इत्यमर) वल्मीका,—वामलूरा, "उइ" इति प्रसिद्धकीटविशेषसञ्चिता मृत्कूटा इत्यर्थ, गिरिगहनानि—पार्वतीयवनानि, यद्वा,—गिरय,—पर्वता, गहनानि—गह्वराणि पर्वतकन्दराणीत्यर्थ तेषु ते, ("गहनं कानने विषु। व्यसके गह्वरे ख्यातं दुःखकाननयोरपि" इति मेदिनी) यद्वा,—समीकृता तटावटा ये तादृशा ये विटपाटवीतरव, तथा तृणगुल्मवल्मीकगिरयश्च ते गहने,—दुर्गे, दुष्प्रवेशैरित्यर्थ, दण्डयात्रापथे,—दण्ड,—सैन्य, ("सैन्ये काले मानभेदे दण्डोऽस्त्री लगुडे पुमान्" इति मेदिनी) तस्य यात्रापथे,—गमनमार्गे, युद्धप्रयाणमार्गैरित्यर्थ। पृथुभि,—महद्भि, प्रशस्तैरित्यर्थ। भृत्योपयोगाय—भृत्यानाम्—अनुजीविनाम्, उपयोगाय—व्यवहाराय, सुखेन गमनायेति भाव : व्यभजत—विभक्तवानित्यर्थ।

(१८) अलब्धेति।—न लब्ध,—प्राप्त, युद्धदोहद,—युद्धाभिलाष येन तम्, अलब्धयुद्धाभिलाषमित्यर्थं। सकलेति।—सकलानां—समग्राणां, रिपूणां—शत्रूणां, समुत्सारक,—निराकर्ता। परकीय इव—परसम्बन्धी इव, परकीय प्रतापो यथा विजिगीषु तपति तथा स्वप्रतापोऽपि सहस्रयुद्धव्यापाराप्राप्तेरिति भाव।

(१९) वह्निमय,—अग्निरूप, तेजोभूतमयश्च, [ अत्र "तत्प्रकृतवचने मयट्"

मयो निःश्वसितेषु, क्षमामयोऽङ्गेषु, आकाशमय शून्यतायाम्, पञ्च-महाभूतमयो मूर्त्त इव अदृश्यत (२०) निहतप्रतिसामन्तान्तःपुरेषु प्रतापः । (२१) यस्य च आसन्नेषु भृत्यरत्नेषु प्रतिबिम्बितेव तुल्यरूपा समलक्ष्यत लक्ष्मीः, तथा च, यस्य (२२) प्रतापाग्निना भूतिः, शौर्योष्मणा सिद्धिः, असिधाराजलेन

---

(५।४।२१ पा०) इति प्राचुर्यार्थे मयट् एवं जलमयादिष्वपि ज्ञेयम् ] इदयेषु चेतः करणेषु समप्रियावज्ञोगाभक्त्योद्दीपकत्वेनातपस्वाद्धितेति भावः । जलमयः—वाष्पमयः इत्यर्थः भूतमयश्च शोकातिशयादजस्रनेत्राम्बुप्रपातादिति भावः । मारुतमयः—उष्णदीर्घनिःश्वासपवनरूपः महाभूतमयश्च दुःखातिशयादविरतोष्णश्वासवायुप्रसारादिति भावः । क्षमामयः—क्षान्तिपूर्णः क्षितिभूतमयश्च विपक्षाणामप्यवरोधवर्गे न पीडनीय इति स्त्रीत्वनाविनाशितत्वादिति भावः, यद्वा—क्षमामयः—भूमिस्वरूपः भूलीलुण्ठनादिना धूलिपूर्णत्वात् कान्तिनाश । आकाशमयः—गगनरूपः, व्योमभूतमयः शून्यतायाम्—विरहितायामिति यावत् निःशून्यत्वात् वा चित्तस्तब्धिच्छेदादिति भावः, अत एव पञ्चमहाभूतमयः—क्षित्यप्तेजोमरुद्व्योमानि महान्ति पञ्चभूतानि तदात्मकः, तत्स्वरूपः परिणत इत्यर्थः मूर्त्तः—मूर्त्तिमान् यथा महाभूतानां प्रकाशादयः गुणाः केवलं परार्थैकरूपा तथैवास्य दहनादाविन्धनादिगुणपरम्परा परोपकारार्थी भ्राम्यतीति तात्पर्यम् ।

(२०) निहतेति ।—निहतानाम्—सङ्ग्रामे व्यापादितानाम् प्रतिसामन्तानाम्—विरोधिक्षत्रसामन्तरूपमहीपालानामित्यर्थः, अन्तःपुरेषु—अन्तःपुरवर्त्तिनीषु नारीषु इत्यर्थः । अत्र एकस्यापि प्रतापस्य तत्तद्गुणयोगादनेकधोल्लेखः प्रदर्शनीयः अतोऽत्र उल्लेखालङ्कारः ।

(२१) आसन्नेषु—सन्निहितेषु भृत्यरत्नेषु—श्रेष्ठा रत्नानीव, यद्वा—भृत्यपु रत्नानि तेषु भृत्यश्रेष्ठेषु प्रधानभृत्येषु इति यावत् ("जातौ जातौ यदुत्कृष्टं तद्रत्नमिति कथ्यते" इति शब्दमाला) प्रतिबिम्बितेव—प्रतिफलितेव, आदर्शानि रत्नानि प्रतिबिम्बं गृह्णन्ति इति दृश्यते लोके, तुल्यरूपा—समभागेन विभक्ता ।

(२२) प्रतापाग्निना—प्रतापरूपेणानलेन, भूतिः—सम्पत् भस्म च (भूतिर्भस्मनि सम्पदि' इत्यमरः) । शौर्योष्मणा—शौर्योष्मणतेजसा अस्त्रनतिविषये ऊष्मणः [अत्र "सम्बधातुभ्यो मनिन्" (उ० ४ पा० १४४ सू०) इति उपधातौ मनिन् प्रत्ययान्तस्य उष्मन्शब्दस्य अपवादे । "इणि युधः—" (उ० १ पा० १४४ सू०) इति सूत्रे बाहुलकग्रहणात उषधातो मकप्रत्यये सिद्धस्याविवक्षितत्वात] । सिद्धिः—

वंशवृद्धिः, शस्त्रव्रणमुखे पुरुषकारोक्तिः, (२३) धनुर्गुणकिणेन करग्रहीतिः अभवत्। यस्य (२४) वैरमुपायनं, विग्रहमनुग्रहं, समरागमं महोत्सवं, शत्रुं निधिदर्शनम्, अरिबाहुल्यमभ्युदयम्, आहवाह्वानं वरप्रदानम्, अवस्कन्दपातं दिष्टवृद्धिं, शस्त्रप्रहारपतनं वसुधारारसम् अमन्यत।

---

राज्याधिलाभः, प्राकट्य। असिधारार्जनेन—खड्गधाराकर्षेण जलेन। वंशवृद्धि,—वंशस्य—कुलस्य वैपरीत्ये वृद्धि—अभ्युदय, वर्धनम्। शस्त्रेति।—शस्त्राणां व्रणानि—क्षतानि एव, यद्वा—शस्त्रव्रणानां—शस्त्रप्रहारैः जातानां क्षतानां मुखानि—अग्राणि आननानि च तै, पुरुषकारोक्तिः,—पौरुषप्रकटनमित्यर्थं, मुखैरेव पुरुषकारं वदतीति यथाऽऽदीप।

(२३) धनुरिति।—धनुषो गुण,—मौर्वी, तस्य किण,—मांसग्रन्थि, व्रणजं चिह्नमित्यर्थं, व्यायामबहुलताप्रकाशो वा येन। करग्रहीति—राजग्राह्यभागग्रहणं, करस्य—हस्तस्य ग्रहणं च। [अत्र सप्तम तृतीयाऽलुकि "सप्तम्या—" (२।२।१८ पा०) इत्यादिसूत्रे "विनाऽपि तद्योगं तृतीया, वृद्धो यूनेत्यादिवाक्यनिर्देशात्" इति उक्त्या अतद्योगेऽपि सहार्थे तृतीया])।

(२४) वैरमित्यादि।—वैरं—विरोध, शत्रुणा सतेन प्रतिष्ठाकरणमित्यर्थं, उपायनम्—उपढौकनं सम्प्रतिसाधनं प्रीत्यातिशय्यादिति भाव। विग्रह—युद्ध शत्रुभि क्रियमाणमिति शेष, अनुग्रहम्—अनुकम्पा तस्यातीव अनुरागादिति भाव। समरागमं—सङ्ग्रामोपस्थिति, महोत्सवं बलपरीक्षणादिभि आनन्दवर्धनत्वादिति भाव। निधिदर्शनं—निधे,—महामूल्यवस्तु [अत्र निपूर्वस्य धाधातो "उपसर्गे—"(३।३।९२ पा०) इति किप्रत्यये निपातनाद्रूपम] दर्शनम्, यद्वा,—निधेरिव दर्शनं यस्य तथाभूतम्, युद्धकण्डूविनोदनोपायत्वादिति भाव। अरिबाहुल्यं—शत्रूणामाधिक्यम्, अभ्युदयम्—उन्नतिजननमित्यर्थं, तन्निसूदने प्रतापविस्तारात् राज्यविस्ताराश्चेति भाव। आहवाह्वानं—युद्धे आकारणं, वरप्रदानम्—अभीष्टदानम्, निरन्तरमभिलषितत्वादिति भाव। अवस्कन्दपात—शत्रुभिरभिगमोऽवस्कन्द, [अत्र अवपूर्वकात् स्कन्दधातो "अकर्तरि—" (३।३।१९ पा०) इत्यादिना अधिकरणे घञि रूपम] तस्य पात,—उपस्थिति त, दिष्टवृद्धि—भाग्यवर्धनम्, आनन्दवर्धनं वा। शस्त्रप्रहारैः शरीरेति शेष, पतनं—धरातले लुण्ठनमित्यर्थं, वसुधारारसं—वसुधा—पृथ्वी, तस्या रा,—दान, [रा दाने इत्यस्मात् क्विपि रूपम्] तस्य रस,—राग, स्वादो वा तम्, यथा भूमिदः स्वर्गे

(२५) यस्मिंश्च राजनि निरन्तरैर्यूपनिकरैरङ्कुरितमिव कृतयुगेन, दिङ्मुखविसर्पिभिः अध्वरधूमैः पलायितमिव कलिना, ससुधैः सुरालयैः अवतीर्णमिव स्वर्गेण, (२६) सुरालयशिखरोद्धूयमानैः धवलध्वजैः पल्लवितमिव धर्मेण, (२७) बहिरुपरचितविकट-सभासत्रप्रपाप्राग्वंशमण्डपैः प्रसूतमिव ग्रामैः, काञ्चनमयसर्वोप-

---

गच्छेत, तथा सङ्ग्रामे अस्त्रप्रहारप्रतिरोधोऽपीति भावः, यद्वा,—यथानलस्य धारा कर्कशि हृदयमपतनादसाधारणानन्दरसमित्याशयः ।

(२५) यस्मिन्निति । यस्मिंश्च राजनि सतीत्यर्थः [अत्र "यस्य च—" (२।३।३७ पा०) इत्यादिना भावे सप्तमी ज्ञेया] निरन्तरैः,—अविच्छिन्नैः, यूपनिकरैः—यूपाः—यज्ञीयपशुबन्धनदारुविशेषाः, तेषां निकराः,—समूहाः तैः, अङ्कुरितमिव—प्ररोहरूपेण समुत्थितमिव इति क्रियोत्प्रेक्षा। कृतयुगेन—सत्ययुगेन। दिङ्मुखविसर्पिभिः,—दिगन्तरालविसृमरैः अध्वरधूमैः,—यज्ञधूमैः, पलायितमिव, स्थानान्तरं गतमिवेति भावः कलिना—चतुर्थयुगेन, कलेः पापरूपत्वात् पापस्य च कृष्णवर्णतया कविसमयप्रसिद्धत्वात् धूमैस्तुल्यभूतकल्मषैः स्फुटीकृता। ससुधैः—सुधा—धवलचूर्णद्रवस्तेन सहितैः, सुरालयैः,—देवमन्दिरैः ।

(२६) सुरेति ।—सुरालयानाम्—देवागाराणां शिखरेषु—चूडासु शीर्षदेशेषु इत्यर्थः, उद्धूयमानाः—उड्डीयमानाः तैः, धवलध्वजैः,—श्वेतपताकाभिः, पल्लवितमिव—समन्तात् प्रसृतमिव, धर्मस्य शुक्लतया कविसमयप्रसिद्धत्वात् तथाविधोत्प्रेक्षाबीजमेतत् ।

(२७) बहिरिति ।—बहिः,—बाह्ये देशे, उपरचितानि—निर्मितानि, विकटानि—बृहन्ति, विशालानीत्यर्थः, सभानाम्—संसदाम्, ("समज्यापरिषद्गोष्ठीसभासमितिसंसदः । आस्थानी क्लीबमास्थानं स्त्रीनपुंसकयोः सदः ॥" इत्यमरः) सत्राणाम्—सदादानानाम्, ("सत्रमाच्छादने यज्ञे सदादाने वनेऽपि च" इत्यमरः) प्रपाणाम्—पानीयशालिकानाम्, जलदानार्थगृहाणामित्यर्थः, ("प्रपा पानीयशालिका" इत्यमरः) प्राग्वंशानाम्—प्राक्—पूर्वभागे वंशः,—सपत्नीकयजमानसमुदायः यत्र तेषाम्, यस्मिन् गृहे हविर्द्व्यादिकं निहितं स्थाप्यते तस्मात् पूर्वं सावरोधयजमानसदस्यादिस्थानानामित्यर्थः, ("प्राग्वंशः प्राग्घविर्गेहात्" इत्यमरः) मण्डपानि—गृहाणि तैः, प्रसूतमिव—उत्पन्नमिव, स्पष्टमित्यर्थः, ग्रामैः, बहुभिः गृहैः अपरं ग्राम इव दृश्यमानः आसीदिति भावः ।

कारणैर्विभवैर्विशीर्णमिव मेरुणा, (२८) द्विजदीयमानैः अर्थकलशैः फलितमिव भाग्यसम्पदा।

(२९) तस्य च जन्मान्तरेऽपि सती पार्वतीव शङ्करस्य, गृहीतहृदया लक्ष्मीरिव लोकगुरोः, (३०) स्फुरत्तरलतारका रोहिणीव कलावतः, सर्वजनजननी बुद्धिरिव प्रजापतेः,

---

कारणमनस्सर्वोपकरणैः,—सर्वनिखिलसर्वद्रव्यसम्भारैः, विभवैः,—सम्पद्भिः, विशीर्णमिव—पतितमिव, समाप्तमित्यर्थः, मेरौ स्वर्णमयत्वात् तत्र च सर्वसुवर्णानामानयनात् स एव विदीर्णः सम्पातित इवेत्युत्प्रेक्षा, यद्वा—विशीर्णमिव—दलितमिव, स्वर्णरहितमित्यर्थः।

(२८) द्विजेति।—द्विजेभ्यः,—विप्रेभ्यः, दीयमानैः,—वितीर्यमाणैः तैः, अर्थकलशैः,—धनकुम्भैः। भाग्यसम्पदा—सौभाग्यसम्पदा।

(२९) "तस्य" इत्यस्य "यशोवती नाम महादेवी . . . अभूत्, या अस्य सर्वमपि अबभत्" इति उत्तरेण सम्बन्धः। [अत्र यशःशब्दात् "तदस्य—" (५।२।९४ पा०) इत्यादिना मतुपि "मादुपधायाश्च—" (८।२।९ पा०) इत्यादिना मतोर्मस्य वकारादेशे यशस्वत्, ततः स्त्रियां ङीपि यशस्वती इति रूपसिद्धिः, असुन्प्रत्ययान्त-प्रातिपदिकात् यशःशब्दात् मतुपि "संज्ञायाम्" (८।२।११ पा०) इति मतोर्मस्य वकारादेशे यशोवत्, ततः ङीपि यशोवती इति कथञ्चित् निर्वाहः]। तामेव विशिनष्टि, सतीत्यादिभिः।—सती—पतिव्रता, सती-नाम्नी च, दक्षदुहितृरूपेण यदा जाता, तदा पार्वत्याः सतीति संज्ञा आसीदिति प्रसिद्धिः। शङ्करस्य—शं—मङ्गलं, करोतीति तथोक्तस्य, हरस्य च। "शङ्करस्य" इत्यादीनि "महामुने" इत्यन्तानि पदानि राजपक्षेऽपि सङ्गमनीयानि। गृहीतहृदया—हृदयग्राहिणी, वक्षःस्थलवासिनी च, ["गृहीतहृदया" इत्यत्र "गृहीतपरहृदया" इति पाठे,—गृहीतम्—आवर्जितं, परेषाम्—अन्येषां, हृदयं—चेतः, सद्व्यवहारादिभिरिति भावः यया सा, अथवा—गृहीतम्—आश्रितं, परस्य—देहस्य विष्णोरित्यर्थः, हृदयं—वक्षःस्थलं, अतलपतिव्रतात्वात् इति भावः यया सा] लोकगुरोः,—जगद्गुरोः नारायणस्य पृथिवीपतेश्च।

(३०) स्फुरदिति।—स्फुरन्ती—दीप्यमाना तरला—चञ्चला, तारका—कनीनिका यस्याः सा स्फुरन्ती—दीप्यमाना, तरला—भासुरा, उज्ज्वला इत्यर्थः, ("तरलं चञ्चले षिड्गे भास्वरेऽपि त्रिलिङ्गकम्" इति मेदिनी) तारका—नक्षत्र-रूपिण्यश्च। कलावतः,—चतुःषष्टिविद्याशालिनः, चन्द्रस्य च। सर्वजनजननी—

( ३१ ) महाभूभृत्कुलोद्गता गङ्गेव वाहिनीनायकस्य, (३२) मानसानुवर्त्तनचतुरा हंसीव राजहंसस्य, ( ३३ ) सकललोकार्चितचरणा त्रयीव धर्मस्य, ( ३४ ) दिवानिशम् अमुक्तपार्श्वस्थितिः अरुन्धतीव महामुनेः, ( ३५ ) हंसमयीव गतिषु, परपुष्टमयीव

सर्वासां प्रजानां जननी—उत्पादनी, [ जनयतेः "अर्तिस्तु—" ( उ० २ पा० १०३ सू० ) इत्यादिसूत्रे बाहुलकग्रहणात् अनिप्रत्यये ततो ङीपि रूपम् ] माता च, "राजभार्या प्रसूः पृथ्वी गुरुदारोपमातृका। स्वसृ पूर्वजपत्नी च सप्तैता मातरः स्मृताः ॥" इत्युक्तेः। प्रजापतेः,—ब्रह्मणः, प्रजापालस्य च।

( ३१ ) महेति।—महत्—विशालम्, भूभृता—राज्ञाम्, कुलम्—वंशः, महाभूभृतः,—हिमाद्रेः, कुलम्—तनुः इति च, ( "कुलं जनपदे गोत्रे सजातीयगणेऽपि च। भवने च तनौ क्लीबम्" इति मेदिनी ) तस्मात् उद्गता—जाता, निर्गता च, [ अत्र "निरादयः क्रान्ताद्यर्थे पञ्चम्या" ( वा० ) इति समासः ]। वाहिनीनायकस्य—सेनापतेः, तरङ्गिणीपतेः समुद्रस्य च ( "वाहिनी स्यात्तरङ्गिण्यां सेनासैन्यप्रभेदयोः" इति मेदिनी )।

( ३२ ) मानसेति।—मानसस्य—चित्तस्य, तदाख्यस्य सरसः, अनुवर्त्तनम्—अनुसरणम्, तस्मिन् चतुरा—निपुणा। राजहंसस्य—कलहंसस्य, नृपोत्तमस्य च, ( "राजहंसस्तु कादम्बे कलहंसे नृपोत्तमे" इति मेदिनी )।

( ३३ ) सकलेति।—सकलैः,—समस्तैः, लोकैः,—जनैः, अर्चितौ—सेवितौ, चरणौ—पादौ, अर्चिताः चरणाः,—बह्वृचादिशाखाश्च यस्याः सा, ( "चरणोऽस्त्री बह्वृचादौ मूले गोत्रे पदेऽपि च" इति मेदिनी ) त्रयी—ऋग्यजुःसामाख्या वेदा इत्यर्थः, [ अत्र "संख्याया—" ( ५।२।४२ पा० ) इत्यादिना विहितस्य तयप "द्वित्रिभ्यां—" ( ५।२।४३ पा० ) इत्यादिना अयजादेशे स्थानिवद्भावात् "टिड्ढाणञ्—" ( ४।१।१५ पा० ) इत्यादिना ङीपि रूपम्। "स्त्रियामृक् सामयजुषी इति वेदास्त्रयस्त्रयी" इत्यमरः ]। धर्मस्य—विहितक्रियाकलापस्य, तज्जनिताऽदृष्टस्य वा, धर्मोऽस्यास्तीति धर्मः तस्य, [ अर्शआदित्वादच्प्रत्ययः ] धर्मवत इत्यर्थः।

( ३४ ) दिवानिशम्—अहोरात्रम्। [ अत्र "विप्रतिषिद्धं च—" ( २।४।१३ पा० ) इत्यादिना समाहारद्वन्द्वः ]। अमुक्तेति।—अमुक्ता—न त्यक्ता, पार्श्वे स्थितिर्यया सा, सततपार्श्वचारिणीत्यर्थः। महामुनेः,—वसिष्ठस्य, राजर्षेश्च। अत्र "सती पार्वतीव शङ्करस्य" इत्यादिषु सर्वत्र श्लिष्टे पदे अनेकार्थप्रत्यायनात् श्लेषसङ्कीर्णोपमाऽलङ्कारः।

( ३५ ) हंसमयीव—हंसरूपिणीव, मृदुमन्दगमनादिति भावः। परपुष्टमयीव

आलापेषु, चक्रवाकमयीव पतिप्रेम्णि, प्रावृण्मयीव पयोधरोन्नती, मदिरामयीव विलासेषु, निधिमयीव अर्थसङ्घेषु, वसुधारामयीव प्रसादेषु, कमलमयीव कोषसङ्ग्रहेषु, (३६) कुसुममयीव फलदानेषु, सन्ध्यामयीव वन्द्यत्वे, (३७) चन्द्रमयीव निरुपमत्वे, दर्पणमयीव प्रतिप्राणिग्रहणेषु, सामुद्रमयीव परचित्तज्ञानेषु, परमात्ममयीव व्याप्तिषु, स्मृतिमयीव पुण्यप्रवृत्तिषु,

---

—कोकिलरूपिणीव, मधुरस्वरत्वादिति भाव। पतिप्रेम्णि—भर्तृप्रणये विरहे कालव्यतिक्रमशरादिति भाव। प्रावृण्मयीव—वर्षामयीव, पयोधरोन्नती—स्तनोन्नती, मेघोन्नती च। ("पयोधरः कोषकारे नारिकेले स्तनेऽपि च। कशेरु मेघयोः" इति मेदिनी)। विलासेषु—विभ्रमचेष्टितेषु। अर्थसङ्घेषु—अर्थानां—धनानां, सङ्घ,—समूह तेषु निधिमयीव—निधि,—गुप्त धन, तन्मयीव, धनसञ्चयकारिणी इति भाव। वसुधारामयीव—वसूनां—धनानां, धारा—वर्षणं, तन्मयीव, प्रसादेषु—अनुग्रहेषु, दयासु इत्यर्थ, एतादृशी दयावती यत् सतत वसूनि अनुजीविभ्योऽर्थिभ्यश्च वितरतीति भाव। कमलमयीव—पद्मरूपिणीव, कोषसङ्ग्रहेषु—धनभाण्डागारसञ्चयेषु इत्यर्थ, कर्णिकासम्पूरणेषु च, बीजकोषसङ्ग्रहेषु इत्यर्थ।

(३६) कुसुममयीव—पुष्परूपिणीव, फलदानेषु—अवश्य कर्त्तव्य पुरस्कारादिदानेषु इच्छादीनां प्रशस्तादिवितरणेषु वा इति भाव, पुष्पानन्तरमेव फलसम्पत्तेरित्याशय। सन्ध्यामयीव—सन्ध्यारूपिणीव, वन्द्यत्वे—पूज्यत्वे, सन्ध्या यथा लोकै पूज्यते, तथाऽसौ पूज्यते इति भाव।

(३७) चन्द्रमयीव—चन्द्ररूपिणीव, निरुपमत्वे—अनुपमत्वे, पक्षीभत्वे इत्यर्थ, अम्बरस्थितत्वे च शीतलप्रकाशत्वादिति भाव। दर्पणमयीव—आदर्शरूपिणीव, प्रतिप्राणिग्रहणेषु—प्राणिनं प्राणिनं प्रति इति प्रतिप्राणि, तत्र ग्रहणम—आकर्षण, सर्वलोकवशीकरणम इत्यर्थ, सर्वजनप्रतिबिम्बधारणं च तेषु। सामुद्रमयीव—सामुद्र—परचित्तज्ञानसाधन समुद्रकृत शास्त्र, येन अन्यस्य चित्तवृत्ति ज्ञायते, तन्मयीव तद्रूपिणीव, परचित्तज्ञानेषु—परेषां चित्तस्य—मनस, ज्ञानकौशलविषयकत्वेनेति भाव, ज्ञानेषु—बोधेषु, उपस्थितस्य एव आगतानां परेषां मनोऽभिमतकार्यसमाचरणादिति भाव। परमात्ममयीव परमेश्वररूपिणीव व्याप्तिषु—व्यापनभावेषु, सर्वत्र कार्येषु अप्रतिहतत्वात्, सकललोकान्तर्यामित्वाच्च। स्मृतिमयीव—स्मरणरूपिणीव, पुण्यप्रवृत्ति

मधुमयीव सम्भाषणेषु, अमृतमयीव तृष्यत्सु, दृष्टिमयीव भृत्येषु, निर्वृतिमयीव सखीषु, चेतनमयीव गुरुषु, गीतवृद्धिरिव विलासानां, प्रायश्चित्तशुद्धिरिव स्त्रीत्वस्य, आज्ञासिद्धिरिव मकरध्वजस्य, (३८) व्युत्थानवृद्धिरिव रूपस्य, दिष्टवृद्धिरिव रतेः, मनोरथसिद्धिरिव रामणीयकस्य, दैवसम्पत्तिरिव लावण्यस्य, वंशोत्पत्तिरिवानुरागस्य, वरप्राप्तिरिव कान्तेः, सर्गसमाप्तिरिव सौन्दर्यस्य, आयतिरिव यौवनस्य, अनभ्रवृष्टिरिव वैदग्ध्यस्य, प्रथम प्रसृष्टिरिव लक्ष्म्याः, यशःपुष्टिरिव चारित्रस्य, हृदय-

---

—पुण्यकर्मानुष्ठानेषु, पुण्यानि कर्माणि न विकर्ष्यन्ते अनुष्ठातस्तयाऽपीति भावः। मधुमयीव सम्भाषणेषु—समालापेषु, मधुरभाषित्वात् इति भावः। अमृतमयीव—सुधामयीव, जलमयीव च, तृष्यत्सु—सतोष्यत्सु सर्वथा तृप्तिसम्पादने पाटवादिति भावः। [ "तृष्यत्सु" इत्यत्र "तृष्यत्सु" इति पाठे,—तृषातुरेषु पिपासुषु इत्यर्थः ]। दृष्टिमयीव—दृष्टरूपिणीव भृत्येभ्यो याच्ञाऽतिरिक्तप्रदत्वादिति भावः। निर्वृतिमयीव—सुखमयीव सखीषु—वयस्यासु, तासां सततसुखविधानादिति भावः। चेतनमयीव चेतनरूपिणीव, निरन्तरसेवनादिति भावः। अत्र सर्वत्र सप्तम्यन्तेषु "सप्तम्यधिकरणे च" (२।३।३६ पा०) इति विषयाधिकरणे सप्तमी ] गीतवृद्धिरिव—वंशोन्नतिरिव विलासानां—विभ्रमचेष्टितानां विभ्रमातिशयविस्तारादिति भावः। प्रायश्चित्तशुद्धि:—प्रायश्चित्तेन—चान्द्रायणादितपसा शुद्धिः,—पूतत्वम्, स्त्रीत्वं हि पापमयं कातर्यादिदोषदूषितत्वात् तत्तु अनया निजगुणैरन्यथाकृत्य पावितम् उज्ज्वलितं वा इति भावः। मकरध्वजस्य—कामस्य आज्ञासिद्धिः—अस्याः तथा कमनीयत्वं यथा एतद्दर्शने कस्यापि कामावेशः न शाम्यतीति कामस्य अव्याहताज्ञत्वमिति भावः।

(३८) व्युत्थानवृद्धिरिव—विशेषेण उत्थाने—अभ्युदये, वृद्धिरिव—प्रसरेव। दिष्टवृद्धिरिव—भाग्योदय इव। रामणीयकस्य—रमणीयत्वस्य. [ अत्र रमणीयशब्दात् "योपधात्—" (५।१।१३२ पा० ) इत्यादिना वुञि रूपम् ]। सर्गसमाप्तिरिव—सृष्टिशेष इव, नान्यद्वितं सौन्दर्यमिति भावः। आयतिरिव—आभोग इव परिपूर्णतेत्यर्थः। अनभ्रवृष्टिरिव—विना मेघं वर्षणमिव असम्भवत्वात् इति भावः, वैदग्ध्यस्य—निपुणतायाः, यथा अनभ्रवृष्टि विस्मयोत्पादिका, तथा अस्या वैदग्ध्यमपि आश्चर्य-

तुष्टिरिव धर्मस्य, सौभाग्यपरमाणुसृष्टिरिव प्रजापतेः, शमस्यापि शान्तिरिव, विनयस्यापि विनीतिरिव, आभिजात्यस्यापि अभिजातिरिव, संयमस्यापि संयतिरिव, धैर्यस्यापि धृतिरिव, विभ्रमस्यापि विभ्रान्तिरिव, यशोवती नाम महादेवी प्राणानां प्रणयस्य विस्रम्भस्य धर्मस्य सुखस्य च भूमिरभूत्, या अस्य वक्षसि नरकजितो लक्ष्मीरिव ललास।

निसर्गत एव च स (३८) नृपतिः आदित्यभक्तो बभूव। प्रतिदिनमुदये दिनकृतः स्नातः सितदुकूलधारी धवलकर्पटप्रावृतशिराः प्राङ्मुखः क्षितौ जानुभ्यां स्थित्वा कुङ्कुमपङ्कानुलिप्ते मण्डलके पवित्रपद्मरागपात्रीनिहितेन स्वहृदयेनेव सूर्यानुरक्तेन रक्तकमलषण्डेन अर्घं ददौ; अजपच्च जप्यं

कल्पनमिति भावः। अयम प्रकृष्टिः,—अयासः,—अकीर्तिः, अपवर्जितमिति भावः, प्रकृष्टिः,—प्रमार्जनम, अपगतमलिनत्वं सा इव, अमलायिनी लक्ष्मीरियमिति भावः। यश पुष्टिरिव—यशसा—कीर्त्तीनां, पुष्टिः,—पोषणं सेव, यशोवृद्धिकारिणीयमिति भावः। अभिजातस्य—कौलीन्यस्य, अभिजातिः,—सत्कुलजातत्वं सेव। महादेवी—कृताभिषेका प्रधाना महिषी। भूमिः,—आश्रयम्। नरकजितः,—नरकासुरजेतुः, नारायणस्य इत्यर्थः, नरक—निरय, जितवानिति तथाभूतस्य च।

(३८) निसर्गतः,—स्वभावतः, आदित्यस्य भक्तः आदित्यभक्तः,—सूर्यपरायण इत्यर्थः, सूर्योपासक इति यावत्, [ अदितिशब्दादपत्यार्थे "दित्यदित्या—" ( ४।१।८५ पा० ) इत्यादिना ण्यप्रत्यये रूपम् ] प्रकृतिः स्वानुकूल भवतीति इति तेजस्विनः तेजस्विसमाराधनसम्भवम्। दिनकृतः,—सूर्यस्य। सितदुकूलधारी—परिहितशुभ्रपट्टवसनः। धवलेति। —धवलेन—श्वेतेन, कर्पटेन—वसनेन, प्रावृतम्—आच्छादितम्, शिरो यस्य तथाभूतः, श्वेतोष्णीषधारीत्यर्थः। कुङ्कुमेति।—कुङ्कुमस्य पङ्केन—घनद्रवेण, घृष्टकुङ्कुमेनेत्यर्थः, अनुलिप्ते—प्रदिग्धे, रञ्जितमिति यावत् तस्मिन्। मण्डलके—मण्डलाकारे पद्मादिरूपेणाङ्किते स्थाने सूर्योपासनाविधिविहिते इति भावः। पवित्रेति।—पवित्रा—विशुद्धा, पद्मरागस्य पात्री—पद्मरागमणिनिर्मितं भाजनं, [ अत्र पात्राशब्दात् "इदिदभ्यश्चौर्णेति" ( उ० ४ पा० १६८ ) इति स्त्रनप्रत्यये "वनो र च" ( ४।१।७ पा० ) इति ङीपि रूपम् ] तस्यां निहितं—रचितं तेन। स्वहृदयेनेव—स्वस्य—आत्मनः, हृदयेनेव—मानसेनेव,

सुचरितः प्रत्युषसि मध्यन्दिने दिनान्ते च अपत्यहेतोः प्राध्वं प्रयतेन मनसा जप्यपूको मन्त्रमादित्यहृदयम्।

(४०) भक्तजनानुरोधविधेयानि तु भवन्ति देवतानां मनांसि; यतः स राजा कदाचित् ग्रीष्मसमये यदृच्छया सितकरकरसितसुधाधवलस्य हर्म्यस्य पृष्ठे सुष्वाप; पार्श्वे चास्य द्वितीयशयने देवी यशोवती शिश्ये। (४१) परिणत-

---

भक्तिप्रदर्शनेन इति भावः। सूर्यांशुदर्शन—आदित्याशुरायिता। रक्तकमलखण्डेन—रक्तोत्पलनिचयेन, ("भक्तादिकदम्बे षण्डमस्त्रियाम्" इत्यमरः) अर्चां—पूजाम्। जप्य—जपनीयम्। सुचरितः—सुशीलः, प्रभाकरवर्द्धन इति भावः। प्रत्युषसि—प्रभाते। मध्यन्दिने—मध्याह्ने। दिनान्ते—सायकाले। अपत्यहेतोः,—पुत्रार्थम्। प्राध्वं—प्रयतः सन्, [अव्ययमेतत्। "प्राध्वन्तु प्रयते चातिदूरवर्त्मनि बन्धने" इति मेदिनी]। प्रयतेन—पवित्रेण। जप्यपूकः,—पुनःपुनर्जपपरायणः। ["यजजपदशां यङः" (३।२।१६६ पा०) इति जपधातोः ऊकप्रत्ययः]। मन्त्रम्—"अर्कन्तु मूर्ध्नि विन्यस्य ललाटे तु रविं न्यसेत्" इत्यादि न्यासपूर्वकम् "आदित्यो मन्मथश्चैव आदित्यो भुवनेश्वर। आदित्यात्परतरो देव आदित्य परमेश्वर॥" इत्यादि भविष्यपुराणोक्तम्, आदित्यहृदयम्—आदित्यस्य—सूर्यस्य, हृत्—चित्तम् अयति—गच्छति इति आदित्यहृदयं—सूर्यचित्तप्रियमित्यर्थः, आदित्यप्रीतिकरमिति यावत्।

(४०) भक्तेति।—भक्तजनाः—तदेकासक्तानां सेवकानामित्यर्थः, अनुरोधस्य—निर्बन्धस्य, विधेयानि—वश्यानि, अनन्यभक्तिभावमनुरुध्य देवप्रसादः इति भावः। यदृच्छया—स्वेच्छया, [यत् या इच्छा इति विग्रहे "मयूरव्यंसकादयश्च" (२।१।७२ पा०) इति निपातनात् समासः] सितेति।—सितकरः,—चन्द्रः, तस्य कराः,—किरणाः, तद्वत् सिताभिः—शुभ्राभिः सुधाभिः,—चूर्णप्रलेपैरिति यावत् धवलस्य—शुभ्रस्य, यद्वा,—सितकरकरसितोऽसौ सुधाधवलश्च तथाभूतस्य निर्मलचन्द्रप्रभोद्भासितस्य सुधाधवलस्य च इति भावः। हर्म्यस्य—प्रासादस्य इति यावत्, ("हर्म्यादि धनिनां वासः प्रासादो देवभूभुजाम्" इत्यमरवचनात्)। पृष्ठे—उपरिभागे। सुष्वाप—निदद्रौ। द्वितीयशयने—अपरशय्यायाम्। "द्वितीयशयने" इत्यनेनास्य संयमित्वं प्रकटीकृतम्, "नाश्नीयात् भार्यया सार्क न च सुप्यात् तया समम्" इति स्मरणात्। शिश्ये—शयितवती।

(४१) "परिणत—" इत्यादि "देवी यशोवती ·· चदतिष्ठत्" इत्यन्तं

प्रायायान्तु श्यामायाम्, आसन्नप्रभातवेलाविलुप्यमानलावण्ये लिलम्बिषमाणे क्षीणतेजसि तारकेश्वरे, (४२) करावसृष्ट-कुमुदिनीप्रमोदजन्मनि शशधरस्वेदे इव गलति अतिशीतले अवश्यायपयसि, (४३) मधुमदमत्तप्रसुप्तसीमन्तिनीनिश्वास-हृतेषु सद्भ्रान्तमदेष्विव घूर्णमानेषु अन्तःपुरप्रदीपेषु, (४४) राजनि च विमलनखप्रतिबिम्बिताभिः संवाह्यमानचरणे इव तारकाभिः, विस्रब्धप्रसारितैः दिगङ्गनानामिवार्पितैरङ्गै-र्मधुसुगन्धिभिः सहस्रकमलतान्महस्सवातैरिव श्वसितैर्मुखश्रिया

---

त्यादय । अत्र "उदोऽनूर्ध्वकर्मणि" (१।३।२४ पा०) इति अनूर्ध्वकत्वात्, अयनात् उत्थानकार्ये आत्मनेपदप्राप्ति ] परिणतप्रायायां—प्रायेणावसितायां, श्यामायां—निशायाम्। ("श्यामा स्यात्शारिका निशा" इत्यमर)। आसन्नेति।—आसन्नया—आपतन्त्या, प्रभातवेलया—प्रत्यूषसमयेन, विलुप्यमानं—क्षीयमाणं, लावण्यं—कान्तिर्यस्य तथाभूते। लिलम्बिषमाणे—अवलम्बितुमिच्छति, अस्तं जिगमिषति इति यावत्, पश्चिमायां दिशीति शेषः। क्षीणतेजसि—क्षीणप्रकाशे। तारकेश्वरे—ताराराशे, चन्द्रमसि इत्यर्थः।

(४२) करेति।—करा एव—किरणा एव, हस्ता इव, सृष्टायां—हस्तस्पर्शयां, कृतायाश्च, कुमुदिन्या—कैरविण्या, यः प्रमोदः—स्पर्शोदयजनितप्रीतिः, तस्मात् जन्म—उत्पत्तिर्यस्य तथोक्ते। शशधरस्वेदे इव—चन्द्रघर्मे इवेत्युत्प्रेक्षा, गलति—पतति, क्षरतीत्यर्थः। अवश्यायपयसि—तुषारजले, ("अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम्" इत्यमरः)।

(४३) मधिति।—मधुमदेन—मद्यपानजनितचित्तविकारेण, मत्ताना—क्षीबाणां, प्रसुप्ताना—निद्रितानां, सीमन्तिनीनां—नारीणां, निश्वासैः हृता,—सुवासिताः तेषु अत एव सद्भ्रान्तमदेष्विव—प्राप्तमद्यपानजनितावस्थाविशेषेष्विवेत्युत्प्रेक्षा, मत्ताना प्रमदानां निश्वाससङ्गादिति भावः। घूर्णमानेषु—भ्राम्यमाणेषु।

(४४) राजनि—नरेन्द्रे। विमलेति।—विमलेषु—निर्मलेषु, स्वच्छेषु इत्यर्थः, नखेषु पादयोरिति भावः, प्रतिबिम्बिताः,—प्रतिफलिताः ताभिः। तारकाभिः,—नक्षत्रैः। संवाह्यमानेति।—संवाह्यमानौ—आमृद्यमानौ, सेव्यमानौ इत्यर्थः, चरणौ यस्य तथाभूते इवेत्युत्प्रेक्षा। विस्रब्धेति।—विस्रब्धं—विश्वस्तं यथा तथा, प्रसारितानि—विस्तारितानि तैः, अङ्गैः,—अवयवैः, [ अत्र "वचय—" (१।४।८० पा०) इत्या-

वीज्यमाने, विमलकपोलस्थलस्थितेन सितकुसुमशेखरेणेव रतिकेलिकचग्रहलम्बितेन प्रतिमाशशिबिम्बेन विराजिते, स्वपति देवी यशोवती सहसैव,—"आर्य्यपुत्र ! परित्रायस्व परित्रायस्व" इति भाषमाणा भूषणरवेण व्याहरन्तीव परिजनम् उत्कम्पमानाङ्गयष्टिः उदतिष्ठत्।

अथ तेन सर्व्वस्यामपि पृथिव्याम् (४५) अश्रुतपूर्व्वेण, किमुत देवीमुखे, "परित्रायस्व" इति ध्वनिना दग्ध इव श्रवणयो एकपद एव निद्रा तत्याज राजा। शिरोभागाच्च कोप-

दिना इत्यत्र सूत्रेणव तृतीया ] मधुसुगन्धिनि,—मधु—मकरन्द, तद्वत् सुगन्धिनि,—सुरभिणि। मुखश्रिया—वदनशोभया। विमलेति।—विमल—स्वच्छ, यत् कपोलस्थल—गण्डदेश, तस्मिन् स्थित—प्रतिफलित तेन। सितकुसुमशेखरेणेव—श्वेतपुष्पशिरोमाल्येनेव। रतीति।—रतिकेलि,—सुरतक्रीडा, तत्र य कचग्रह,—केशाकर्षण, तेन लम्बितं तेन। प्रतिमाशशिबिम्बेन—प्रतिबिम्बितेन इत्यर्थ। स्वपति—निद्राति, राजनीति पूर्व्वेणान्वय। भूषणरवेण—अलङ्कारशिञ्जितेन, भीत्या अङ्गकम्पनेन भूषणरव समुदित इति भाव। व्याहरन्तीव—आह्वयन्तीव, स्वभयमिति शेष, यद्वा,—आश्वयन्तीव। परिजन—सखीजन, भृत्यजनं वा। उत्कम्पमानाङ्गयष्टि,—उच्चै,—अतिशयेन, कम्पमाना—वेपमाना, अङ्गयष्टि,—शरीरदेह इत्यर्थ यस्या तथाभूता।

(४५) अश्रुतपूर्व्वेण—पूर्व्वमश्रुतेन, तादृशी राजन्वति देशे प्रजाना तथाभूतविपत्पातस्य असम्भवादिति भाव। [ अत्र "सुपी—" (२।१।३१ पा०) इत्यादिकृतौ "भूतपूर्व्वे चरट्" (५।३।५३ पा०) इति निर्देशात् पूर्व्वनिपाते भूतपूर्व्ववत् सामान्यात् अश्रुतपूर्व्व इति सिद्धि ] यद्वा,—अश्रुत पूर्व्वं,—प्रागवस्थाविभाव यस्य तथाविधेन, प्राचीनैरप्यश्रुतोत्पत्तिकेन इत्याशय। किमुत—किं पुन, यस्य राज्ये साधारणप्रजानामपि किमपि भयकारण नास्ति, तस्य अन्त पुरे स्वमहिष्या भयकारणस्य अतीव असम्भाव्यत्वमेवेति भाव। दग्ध इव—ज्वलित इव।—एकपदे—तत्काले एव, सद्य इत्यर्थ, ("एकपद तत्काले मपसक्रम . ." इति मेदिनी) अकस्मादेव वा। "शिरोभागाच्च" इत्यस्य "वेगेन उदपात" इति उत्तरेण सम्बन्ध, तमेव विशिनष्टि, शिरोभागादिति। —शिरोभागात्—शीर्षदेशात्, शयनीयस्येति भाव। कोपेति।—कोपेन—क्रोधेन,

कम्पमानदक्षिणकराकृष्टेन कर्णोत्पलेनेव निर्गच्छता मध्य-धारेण धौतासिना सीमन्तयन्निव निशाम्, (४६) अन्तराल-व्यवधायकम् आकाशम् इव उत्तरीयांशुकं विक्षिपन् वामकर-पल्लवेन, करविक्षेपवेगगलितेन हृदयेनेव भयनिमित्तान्वेषिणा भ्रमता दिक्षु कनकवलयेन विराजमानः, (४७) सत्वराव-तारितवामचरणाक्रान्तिकम्पितप्रासादः, पुरः पतितेन असि-धारागोचरगतेन शशिमयूखखण्डेनेव खण्डितेन हारेण राजमानः, लक्ष्मीचुम्बनलग्नताम्बूलरसरञ्जिताभ्यामिव निद्रया कोपेन च अतिलोहिताभ्यां लोचनाभ्यां पाटलयन् पर्यन्तान् आशानाम्,

---

कम्पमान,—वेपमान, दक्षिण,—अपसव्य, कर,—हस्त, तेन आकृष्ट,—आक्षिप्तेन। निर्गच्छता—निःसरता। मध्यधारेण—निर्मलधारेण। धौतासिना—निर्मलकरवालेन, सीमन्तयन्निव—द्विधा कुर्वन्निव, अतिभयया निशया ध्वान्त प्रकाशीभूतत्वात्, समन्तादन्धकाराच्छन्नत्वात् निशायाः सीमन्तीकरणसम्भवम्।

(४६) अन्तरालेति।—अन्तराल—मध्यस्थ, व्यवधायक—व्यवधानकारकमित्यर्थ, आच्छादकमिति यावत्। आकाशमिव—शून्यमिव सूक्ष्मत्वात् स्वच्छत्वात् उज्ज्वलनीलाभासत्वात् तथा बोध्यम्। उत्तरीयांशुकम्—उत्तरासङ्ग, वामकरपल्लवेन विक्षिपन्—पर्यस्यन् अपसारयन् इत्यर्थ। करेति।—करस्य विक्षेप,—प्रसारणमित्यर्थ, तस्य वेग,—रय, तेन गलित—विच्युत तेन। भयेति।—भयस्य निमित्त—कारणम्, अन्विष्यतीति तच्छीलेन। कनकवलयेन—काञ्चनकटकेन।

(४७) सत्वरेति।—सत्वर—सवेगम्, अवतारितेन—अधःस्थापितेन वामचरणेन या आक्रान्ति,—आघात, तया कम्पित,—चालित, प्रासाद,—हर्म्यं येन तथाभूत। असिधारागोचरगतेन—असिधाराया गोचर—विषय, गत,—प्राप्त तेन, असिधाराप्रतिबिम्बितेन इत्यर्थ। शशिमयूखखण्डेनेव—चन्द्रकिरणशकलेनेव शौभ्रात् औज्ज्वल्याच्चेति भाव, खण्डितेन—छिन्नेन। राजमान,—शोभमान। लक्ष्मीति।—लक्ष्म्याः,—कर्तृभूतायाः राजलक्ष्म्याः, चुम्बनं, तेन लग्न—संसक्त, य ताम्बूलरस,—पर्णराग, तेन रञ्जिताभ्याम् इव—अनुलिप्ताभ्यामिवेत्युत्प्रेक्षा। अतिलोहिता-भ्याम्—अतिरक्ताभ्याम्। पाटलयन्—श्वेतरक्तीकुर्वन्। आशाना—दिशां, पर्यन्तान्—प्रान्तदेशान्।

(४८) आबद्धान्धकारया विपताकया भूत्वा पुनरपि त्रियामां परिवर्त्तयन्,—"देवि! न भेतव्यं, न भेतव्यम्" इत्यभिदधानो वेगेन उत्पपात; सर्व्वासु च दिक्षु विक्षिप्तचक्षुः यदा न अद्राक्षीत् किञ्चिदपि, तदा पप्रच्छ तां भयकारणम्।

अथ (४९) गृहदेवतास्विव प्रधावितासु यामिकविलासिनीषु, प्रबुद्धे च समीपशायिनि परिजने, शान्ते च हृदयोत्कम्पकारिणि साध्वसे, सा समभाषत,—"आर्य्यपुत्र! (५०) जानामि, स्वप्ने भगवतः सवितुर्मण्डलात् निर्गत्य द्वौ कुमारकौ तेजोमयौ बालातपेनेव पूरयन्तौ दिग्भागान्, वैद्युतम् इव जीवलोकं कुर्व्वाणौ, मुकुटिनौ, कुण्डलिनौ, अङ्गदिनौ, कवचिनौ, गृहीतशस्त्रौ, इन्द्रगोपकरुचा रुधिरेण धाम्ना स्नातौ,

(४८) आबद्धान्धकारया—आपूर्णतिमिरया, महाक्षोभोत्पत्ते इति भावः। ["आबद्धान्धकारया" इत्यत्र "बद्धान्धकारया" इति पाठेऽपि—स एवार्थः]। विपताकया—रेखारहितेव। त्रियामा—प्रहरत्रितयवतीं रजनीमित्यर्थः। परिवर्त्तयन्—प्रवर्त्तयन्, अतिवाहयन्नित्यर्थः। विक्षिप्तचक्षुः,—प्रेरितनेत्रः पातितनयन इत्यर्थः।

(४९) गृहदेवतासु इव—गृहाधिष्ठात्रीदेवीषु इवेत्युत्प्रेक्षा, प्रधावितासु—सवेगम् आपतितासु आर्त्तनादश्रवणादिति भावः। यामिकविलासिनीषु—प्रहरपालिकासु, अन्तःपुररक्षिकासु नारीषु इति यावत्। ["यामिकविलासिनीषु" इत्यत्र "यामकिनीषु" इति पाठे—यामः—प्रहर एव यामकः, तत्र तिष्ठन्ति या ता यामकिन्यः तासु, प्रहरिणीषु इत्यर्थः। [अत्र "भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने। सम्बन्धेऽस्ति-विवक्षायां भवन्ति मतुबादयः॥" इति नित्ययोगेऽर्थे "अत—" (५।२।११५ पा०) इति इनि ङीपि रूपम्] प्रबुद्धे—जागरिते। साध्वसे—भये ("भीतिर्भीः साध्वसं भयम्" इत्यमरः)।

(५०) जानामि—मन्ये। तेजोमयौ—तेजःपूर्णौ। बालातपेनेव—अभिनवसूर्य्यमयूखेनेव पूरयन्तौ—व्याप्नुवन्तौ। वैद्युतमिव—तडिन्मयमिव। जीवलोकं—जगत्। मुकुटिनौ—किरीटधारिणौ। कुण्डलिनौ—कुण्डलालङ्कृतौ। अङ्गदिनौ—केयूरशोभितौ। कवचिनौ—वर्म्मधरौ। इन्द्रगोपकरुचा—इन्द्रगोपकः,—वर्षाकालिकरक्तवर्णकीटविशेषः, तद्वत् रुक्—प्रभा यस्य तथाभूतेन। धाम्ना—सौरतेजसा, प्रभया

सम्मुखेन उत्तमाङ्गघटमानाञ्जलिना जगता निखिलेन प्रणम्यमानौ, कन्यया चैकया च चन्द्रमूर्त्त्येव सुषुम्णारश्मिनिर्गतया अनुगम्यमानौ क्षितितलमवतीर्णौ; तौ च मे विलपन्त्याः शस्त्रेण उदरं विदार्य्य प्रवेष्टुम् आरब्धौ; प्रतिबुद्धाऽस्मि च आर्य्यपुत्रं विक्रोशयन्ती वेपमानहृदया" इति।

एतस्मिन्नेव च कालक्रमे राजलक्ष्म्याः प्रथमालापः (५१) प्रथयन्निव स्वप्नफलम् उपतीरणं रराण प्रभातशङ्खः। भाविनीं भूतिमिव अभिदधाना दध्वनुः अमन्दं दुन्दुभयः। चकाश

---

इति यावत्, उपलक्षितौ इति भावः, [ "धाम्ना" इति पाठः पुस्तकान्तरे न दृश्यते] अत एव रुधिरेण—रक्तेन, आलौ—आलिप्तौ, इवेति शेषः, यद्वा,—रुधिरेण—रक्तवर्णेन, चन्द्रातपकल्पया धाम्ना—स्वदेहकिरणेन, आलौ। सम्मुखेन—अभिमुखेन। उत्तमेति।—उत्तमाङ्गे—शिरसि, ("उत्तमाङ्गं शिरः शीर्षम्" इत्यमरः) घटमानः—बध्यमानः, अञ्जलिः यस्य तेन, शिरोबद्धाञ्जलिनेति यावत्। जगता—जगद्वासिजनेनेत्यर्थः। निखिलेन—समस्तेन। प्रणम्यमानौ—अभिवन्द्यमानौ। चन्द्रमूर्त्त्येव—चन्द्रस्य शशिनः विग्रहेणेव दृश्यमानया इत्यर्थः, चन्द्रिकासमुद्भासितकलेवरया इति भावः। सुषुम्णारश्मिनिर्गतया—सुषुम्णाख्योऽयनतमसो रविरश्मिः, तस्मात् निर्गता—निःसृता तया। [ सर्वेष्वेव मुद्रितपुस्तकेषु "सुषुम्णरश्मि" इति पाठो विद्यते, स तु लिपिकरप्रमादात् प्रथममुद्रितपुस्तके समागतः, अनन्तरं तमेवादर्शं कृत्वा सर्वत्रैव गड्डलिकाप्रवाहन्यायेन तथैव अवर्त्तत इति मन्यामहे, वस्तुतस्तु सुषुम्णारश्मि" इत्येव प्रकृतः पाठः, शास्त्रेषु सर्वत्रैव सुषुम्णा इति आकारान्तस्यैव प्रयोगदर्शनात् "सुषु इति अव्ययं शब्दं यापयति यस्य इति व्युत्पत्त्या आकारान्तः, कप्रत्ययेन निष्पन्नत्वात् आकारान्त एव युज्यते, न तु अकारान्त इति सुधीभिः विभाव्यम् ]। तौ च—कुमारावित्यर्थः। प्रवेष्टुम् उदरमेवेति शेषः। प्रतिबुद्धा—जागरिता। विक्रोशयन्ती—आर्त्तस्वरेण आकारयन्ती।

(५१) प्रथयन्निव—विस्तारयन्निव। उपतीरणं—तोरणे इति उपतोरणम्, ["अव्ययं—" (२।१।६ पा०) इत्यादिना विभक्त्यर्थेऽव्ययीभावः ] तोरणसमीपे वा। ... । प्रभातशङ्खः—प्रातःकाले वाद्यमानः शङ्खः। भाविनीम्—... ीं, भूतिम् अभ्युदयम् अभिदधानाः—कथयन्तः, सूचयन्तः इत्यर्थः, अमन्दम्—

कोणाहता आनन्दादिव प्रत्यूषनान्दी; जय जयेति प्रबोधमङ्गलपाठकानाम् उच्चैर्वाचोऽयूयन्त। पुरुषश्च वल्लभतुरङ्गमन्दुरामन्दिरे मन्दमन्दं समुत्थितः सप्तीनां कृतमधुरहेषारवाणां पुरश्शीततुषारसलिलशीकरं किरन् मरकतहरितं यवसं वक्त्रापरवक्त्रे पपाठ,—

"निधिस्तरुविकारेण सम्भविः स्फुरता धाम्ना।
शुभागमो निमित्तेन स्पष्टमाख्यायते लोके ॥ ३ ॥

अनल्पम, उच्चैरित्यर्थः। दुन्दुभय,—भेर्य। चकाण—दध्वान। [ कणते भौवादिकस्य लिटि रूपम् ]। कोणाहता—कोण,—वीणादिवादनदण्ड, तेन आहता—ताडिता। प्रत्यूषनान्दी—प्राभातिकभेरीवाद्यविशेष.। प्रबोधेति।—प्रबोधे—जागरणार्थम्, राज्ञ इति शेष, मङ्गलपाठकाना—माङ्गलिकस्तोत्रपाठिनाम्। पुरुषश्च—कश्चित् अश्वपाल इति भाव। वल्लभेति।—वल्लभाना—प्रियाणां, तुरङ्गाणाम—अश्वानां, मन्दुरा—वाजिशाला एव, [ मन्दिधातो "मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच्" ( उ० १ पा० ३९ सू० ) इति उरचि रूपम ] "वाजिशाला तु मन्दुरा" इत्यमर ]। मन्दिर तस्मिन् मन्दिधातो "इषिमदि—" ( उ० १ पा० ५२ सू० ) इत्यादिना किरचि प्रत्यये रूपम। मन्दमन्द—शनै शनै। सप्तीनाम्—अश्वानाम्। ( "घोटके घोटि तुरग ·  ·। · ·हयसैन्धवसप्तय" इत्यमर )। कृतेति।—कृत मधुर,—मनोज्ञ, हेषारव—हेषाध्वनि यै तथोक्तानाम्। ( "अश्वाना हेषा ह्रेषा च निस्वन" इत्यमर ) पुर,—अग्रत। शीतदिति।—शीतला,—स्वच्छ, तुषारसलिलाना—हिमजलाना, शीकरा—बिन्दव यस्मात तथोक्तम्। मरकतहरित—मरकतवत् —"पान्ना" इत्याख्यहरिद्वर्णमणिविशेषवत हरित,—श्यामवर्ण तम। [मरकतशब्द. मरकपूर्वकात् तृधातो डप्रत्यये सिद्ध, "अन्येष्वपि दृश्यते" ( ३।२।१०१ पा० ) इति सूत्रे "अपि शब्द सर्वोपाधिव्यभिचारार्थ, तेन धातुरूपादपि कारकान्तरेष्वपि क्वचित" इति वृत्ते ]। यवस—घास ( "घासो यवसम" इत्यमर ) किरन्—विक्षिपन, ददादित्यर्थ। वक्त्रापरवक्त्रे—वक्त्रञ्च अपरवक्त्रञ्च ते, तदाख्ये मात्रावृत्ते।

अथ प्रभाते सुमोत्थितावपाल यदृच्छया पठिताभ्या श्लोकाभ्या राज्ञ भाविसुपुत्रलाभ सूचयति, निधिरिति।—लोके—जगति, तरुविकारेण—तरुणा—वृक्षाणा, विकारेण—विकृतभावेन, शाखाना परिवाहोद्गतानामधोमुखत्वादिरूपेण इत्यर्थ, ( भूम्या अध यत्र निधि वर्तते, तद्वत्या वृक्षा अधोमुखशाखाद्दलभाजो भवन्ति इति

अरुण इव पुरःसरो रविं पवन इवातिजवो जलागमम्।
शुभमशुभमथापि वा नृणां कथयति पूर्वनिदर्शनोदयः" ॥४॥

नरपतिस्तु तच्छ्रुत्वा प्रीयमाणेन अन्तःकरणेन तामवादीत्,—"देवि। (५२) किं मुदोऽवसरे विषीदसि? समृद्धाः ते गुरुजनाशिषः, पूर्णा नो मनोरथाः, परिगृहीतासि कुलदेवताभिः, प्रसन्नस्ते भगवान् अंशुमाली न चिरेणैव अतिगुणवदपत्यप्रलाभेन आनन्दयिष्यति भवतीम्" इति अवतीर्य

---

प्रसिद्ध ) निधि,—अत्र सितदर्विमेव, स्फुरता—विसरता, भासा—तेजसा, प्रभयेति यावत्, सन्नपि,—सदपि, तथा निमित्तेन—शुभसूचकलक्षणेन, शुभागमम्,—मङ्गलोत्पत्तिं, स्फुट—स्फुटम्, आख्यायते—सूच्यते। अत्र प्रस्तुतस्य शुभागमस्य निमित्तेन, अप्रस्तुतस्य च निधेः तदधिकारिणः तथा सम्पत्तेरपि स्फुरता भासा आख्यानरूपैकक्रियाऽभिसम्बन्धात् मालादीपकमलङ्कारः। यथा वा,—"बल मादाय सौ [illegible]" इति [illegible] ॥ २ ॥

अरुण इति।—पूर्वनिदर्शनोदयः,—प्राग्भव शुभाशुभलक्षणाविर्भावः, पुरःसरः,—अग्रेसरः इति यावत्, अरुणः,—सूर्यसारथिः, रविं—सूर्यमिव, अतिजवः,—अतिवेगवान्, पवनः,—वायुः, जलागममिव—वारिवर्षणमिव, नृणां—मानवानां, शुभम्—मङ्गलम्, अथापि वा अशुभम्—अमङ्गलम्, कथयति—आचष्टे, सूचयतीत्यर्थः। अत्र पूर्वनिदर्शनोदयेन सह अरुणस्य तथा पवनस्य च अवैधर्म्यसाम्यप्रतीतेः मालोपमालङ्कारः। अपरवक्त्रं वृत्तम्,—"अयुजि ननरला गुरुः समे तदपरवक्त्रमिदं नजौ जरौ" इति लक्षणात् ॥ ४ ॥

(५२) [पुस्तकान्तरे "किम्" इति पाठो न विद्यते]। मुदोऽवसरे—आनन्दसमये इत्यर्थः। विषीदसि—विषण्णा भवसि। समृद्धाः,—सम्पन्नाः सिद्धा इति यावत्। पूर्णाः,—सफलाः। नः,—अस्माकम्। कुलदेवताभिः,—वंशाराध्याभिः देवताभिः, परिगृहीतासि—अनुकम्पितासि अनुकम्पालेन स्वीकृताऽसीत्यर्थः, अन्यथा कथं स्वीक दुर्लभाभीष्टफलप्राप्तिसूचकस्वप्नावलम्? इति भावः। अंशुमाली—सूर्यः। न चिरेणैव—अचिरेणैव। अतिगुणवदिति।—अतिगुणवताम्—अतिगुणशालिनाम्, अपत्यप्रलाभः—अपत्यस्य पुत्रस्य लाभः, आ[illegible]—इदानीमिति यावत्। ["इति" इत्यनन्तरम् "अभिधाय" इति पाठः पुस्तकान्तरे दृश्यते, तत्र पाठे "अवादीत्" इति क्रियायाऽन्वितस्य सन्दर्भस्य

च यथाक्रियमाणाः क्रियाश्चकार; यशोवती अपि तुतोष तेन पत्युः भावितेन।

(५३) ततः समतिक्रान्ते कस्मिंश्चित् कालांशे देव्याश्च यशोवत्या देवो राज्यवर्द्धनः प्रथममेव सम्बभूव गर्भे। गर्भस्थितस्यैव च यस्य यशसेव पाण्डुतामादत्त जननी। (५४) गुणगौरवक्लान्तेव गात्रमुद्वोढुं न शशाक। कान्तिविसरामृतरसतृप्तेव आहारं प्रति पराङ्मुखी बभूव। शनैः शनैः उपचीयमानगर्भभरालसा च गुरुभिः वारिताऽपि वन्दनाय कथमपि सखीभिर्हस्तावलम्बेन अनीयत। विश्राम्यन्ती शालभञ्जिकेव समीपगतस्तम्भभित्तिषु अलक्ष्यत। (५५) कमललोभनिलीनैः

---

पुनरभिधाय इत्यनेनान्वये क्रियापुनरुक्तदोषापादक इति न सदादृत इति ध्येयम् ]।
यथाक्रियमाणाः—नित्यं सम्पाद्यमाना इत्यर्थः।

(५३) समतिक्रान्ते—समतीते। कालांशे—समयविभागे। सम्बभूव—सम्भूतः, सञ्जात इत्यर्थः। यस्य—राज्यवर्द्धनस्य, भाविन इति भावः। जननी—यशोवती, पाण्डुताम्—पाण्डुवर्णत्वं, यशसः शुक्लत्वेन कविभिर्वर्ण्यमानत्वादिति भावः, आदत्त—जग्राह, पाण्डुवर्णा अभूदित्यर्थः।

(५४) गुणेति।—गुणानां—दयादाक्षिण्यादीनां गर्भस्थार्भकस्य इति भावः, गौरवेण—अतिशयगुरुत्वेन, क्लान्तेव—खिन्नेव इत्यर्थः। उद्वोढुं—धारयितुमित्यर्थः, न शशाक—न शेके, कथञ्चिद्धारयामास इति भावः। कान्तीति।—कान्तीनां—लावण्यानां, विसरः—प्रसर एव, अमृतरसः—पीयूषास्वादः, सुधास्वादजन्यानन्दसन्दोह इति यावत्, तेन तृप्ता इव—लब्धतृप्तिः इव। पराङ्मुखी—विमुखी बभूव—अरुचिमती जाता इत्यर्थः। उपचीयमानेति।—उपचीयमानः,—वर्द्धमानः, यो गर्भभरः,—गर्भस्य भारः, तेन अलसा—मन्थरा। वारिताऽपि—निषिद्धाऽपि। वन्दनाय—प्रणामादिरूपार्चनाय, गुरूणामिति शेषः, [ अत्र "क्रियार्थो—" (२।३।१४ पा०) इत्यादिना चतुर्थी ]। हस्तावलम्बेन—हस्तधारणेन। विश्राम्यन्ती—विश्रामार्थं तिष्ठन्ती, शालभञ्जिकेव—पुत्तलिकेव, समीपगतस्तम्भभित्तिषु—सन्निहितस्थूणाकुड्येषु, अलक्ष्यत—अदृश्यत।

(५५) कमलेति।—कमलेषु लोभः,—अत्यधिका कमलतुल्या लोलुपता इत्यर्थः,

अलिभिरिव हृतौ उद्धर्तुं नाशकत् चरणौ। मृणाललोभेन च चरणनखमयूखलग्नैः भवनहंसैरिव सञ्चार्य्यमाणा मन्दमन्दं बभ्राम। (५६) मणिभित्तिपातिनीषु प्रतिमास्वपि हस्तावलम्बनलोभेन प्रसारयामास करकमलं, किमुत सखीषु!! (५७) माणिक्यस्तम्भदीधितीः अपि आलम्बितुम् आचकाङ्क्ष, किं पुनर्भवनलताः॥ समादेष्टुमपि असमर्था आसीत् गृहकार्य्याणि, कैव कथा कर्तुम्॥ आस्तां नूपुरभारखेदितं चरणयुगलं, मनसाऽपि न उदसहत सौधम् आरोढुम्। अङ्गान्यपि न अशक्नोत् धारयितुं, दूरे भूषणानि। चिन्तयित्वाऽपि क्रीडापर्वताधिरोहणम् उत्कम्पितस्तनी तताम। प्रत्युत्थानेषु उभयजानुशिखर-

[ अत्र चरणौ कमलभ्रान्त्या सम्मिलितभ्रमरैरिभिर्व्याप्तत्वम् इति भ्रान्तिमदलङ्कारानुप्राणितोत्प्रेक्षेयम्. ] ते न शिशीर्णे,—उद्धर्तुं, चरणशोणितिति भाव, अलिभि,—भृङ्गैः, हृतौ इव—आक्रान्तौ इव। मृणाललोभेन—मृणालानि एतानीति धिया यो लोभ तेन; अत्रापि अलङ्कार पूर्ववत् बोध्य। चरणेति।—चरणयोः नखा, तेषां मयूखेषु—किरणेषु लग्ना,—सक्ताः तै। सञ्चार्य्यमाणा इव—सञ्चाल्यमाना इव, भ्रमणमद इति: मृदुर्गतिंहंसादिकानया शिक्षितेति हृदयम। अत्र सर्वत्र सम्भाव्योत्प्रेक्षा इति ज्ञेयम्।

(५६) मणीति।—मणिभित्तिषु—मणिमयकुड्येषु, पतन्तीति पातिन्य तासु, प्रतिमासु—प्रतिबिम्बेषु, हस्तावलम्बनलोभेन—हस्तधारणाशया। किमुत—किं पुन। एवमग्रेऽपि। अत्र अर्थापत्तिरलङ्कार। यात्रालङ्कार।

(५७) माणिक्येति।—माणिक्यस्य—रत्नविशेषस्य, स्तम्भा,—स्थूणा, माणिक्यनिर्म्मितस्तम्भा इत्यर्थं, तेषां दीधितय,—मयूखा ता। भवनलता,—गृहाङ्गणवर्त्तिन्यः वल्लीरित्यर्थं। समादेष्टुम्—आज्ञप्तुम। कथा—विचार। नूपुरेति।—नूपुरयो,—मञ्जीरयो, भारेण खेदित—उत्पादितखेदम्। उदसहत—उत्साहमकरोत। सौधम्—सुधाधवलितगृहमित्यर्थं, आरोढुमित्यनेन कर्तुं नाशक्नोत, किं पुनरन्याभ्यासारोहणमिति भाव। दूरे—किमुतेत्यर्थं, दूरे भूषणानि धारयितुम् इति वाक्यं। क्रीडेति।—क्रीडापर्वते—विहारार्थनिर्म्मितकृत्रिमशैले, अधिरोहणम्—आरोहणम्। उत्कम्पित स्तनी—उत्कम्पितौ—उद्वेलितौ, हृत्कम्पनादिति भाव, स्तनौ—कुचौ यस्याः तादृशी। तताम—ग्लानिं जगाम। ["तताम" इत्यत्र "ततान" इति पाठे,—पुस्तक. यात्रावसर

विनिहितकरकिसलयाऽपि गर्व्वादिव गर्भेण अधार्य्यत। (५८) प्रतिदिवसञ्च अधोमुखी स्तनपृष्ठसङ्क्रान्तेन अपत्यदर्शनौत्सुक्यात् अन्तःप्रविष्टेन इव मुखकमलेनैव प्रीयमाणा ददर्श गर्भम्। उदरे तनयेन हृदये च भर्त्रा निष्ठता द्विगुणितामिव लक्ष्मीमुवाह। पत्युरङ्कमुक्तशरीरा च शरीरपरिचारिकाणाम् अङ्केषु, सपत्नीनान्तु शिरःसु पादौ चकार। (५९) अवतीर्णे च दशमे मासि (६०) सर्व्वोर्व्वीभृत्पक्षपाताय वज्रपर-

---

धानि चकारेत्यर्थः ]। अभ्युत्थानेषु—गुरुजनाद्यागमने अभ्युद्गमनेषु, उभयोरंशयोः—स्कन्धयोः, करौ अभिनिहितयोरित्यर्थः, शिखरयोः,—अग्रयोः, विनिहित,—अर्पित, करकिसलय—हस्तपल्लव यया तथाभूता। अधार्य्यत—अधार्यत इत्यर्थः, अभ्युत्थातुमुपक्रममाणाऽपि तेजोत्कर्षवत्त्वात् सत अन्यबध्यत इव इति भावः।

(५८) [ "प्रतिदिवसञ्च" इत्यत्र "दिवसञ्च" इति पाठे,—तस्य दिन व्याप्येत्यर्थः। अत्र पक्षे "कालाध्वनोः—" (२।३।५ पा०) इत्यादिना अत्यन्तसंयोगे द्वितीया। प्रथमपक्षे—दिवसं दिवसं प्रति इत्यव्ययीभावे क्रियाविशेषणम् इति विवेकः ]। स्तनेति।—स्तनपृष्ठे स्तनयोरुपरि, सङ्क्रान्त—प्रतिबिम्बित तेन, पाण्डुरतया स्वच्छत्वादिति भावः। अपत्येति।—अपत्यस्य—पुत्रस्य, गर्भस्थितस्येति भावः, दर्शने यत् औत्सुक्यं—कुतूहलं तस्मात्। द्विगुणिता—द्विराहृता, लक्ष्मीं—श्रियम्। पत्युरङ्केति।—पत्युः,—स्वामिनः, उत्सङ्गे—क्रोडे मुक्तं—निहितं शरीरं यया तथाभूता। [ "पत्युरङ्क—" इत्यत्र "सख्युरङ्क—" इति पाठान्तरम् ]। शरीरेति।—शरीर—देह, परिचरन्ति—सेवन्ते या ताः, पादादिसंवाहिकानामित्यर्थः, अङ्केषु—क्रोडेषु, तत्तदवयवेषु वा इत्यर्थः। सपत्नीना—समानभर्तृकाणां, दुर्भगानामिति भावः। अनुरागातिशयात् भर्त्ता सपत्नीरतिक्रम्य अतिष्ठदिति भावः, न तु वास्तवत्वेन तासां शिरःसु पादौ स्थापितवती। अत्र पादयोः युगपदनेकत्र स्थापनमसम्भवम् इति आपाततः विरोधस्य भिन्नसमयत्वेन समर्थनात् विरोधाभासोऽलङ्कारः।

(५९) अवतीर्णे—उपस्थिते।

(६०) सर्व्वेति।—सर्व्वेषाम् उर्व्वीभृता—भूभृताम्, एकत्र—नृपाणाम्, अन्यत्र,—भूमिधराणां, पर्व्वतानामित्यर्थः, ("भूभृद्भूमिधरे नृपे" इत्यमरः) पक्षपाताय—सहायार्थनिपतनाय, पक्षच्छेदनाय च, ("पक्षो मासार्द्धके ०० । सखिसहाययोः । चुल्लीरन्ध्रे पतत्रे च ००" इति

माणुभिः इव निर्मितं, (६१) त्रिभुवनभारधारणसमर्थं शेषफणामण्डलोपकरणैः इव कल्पितं, सकलभूभृत्कम्पकारिणं दिग्गजावयवैः इव विहितम् असूत देवं राज्यवर्द्धनम्; (६२) यस्मिन् जाते जातप्रमोदा नृत्यमय्य इव अजायन्त प्रजाः। पूरिताशङ्खशब्दमुखरं प्रहतपटहशतपटुरवं गभीरभेरीनिनादनिर्भरभरितभुवनं प्रमोदोन्मत्तमर्त्यलोकमनोहरं मासमेकं दिवसमिव महोत्सवम् अकरोत् नरपतिः।

अथ अन्यस्मिन्नतिक्रान्ते कस्मिंश्चित् काले (६३) कन्दलिनि, कुड्मलितकदम्बतरौ, तोयदस्तम्बे, स्तम्भिततामरसे,

---

मेदिनी) वज्रपरमाणुभिरिव—वज्रस्य—कुलिशस्य, परमाणव,—अतिसूक्ष्मा अवविभागा तैरिव। इन्द्र पुरा वज्रेण पर्वतानां पक्षच्छेदं कृतवान् इति पुराणवार्त्ता।

(६१) त्रिभुवनस्य—त्रिजगत, भारस्य धारणे—धारणे, वहने च, समर्थं—योग्यम्। शेषेति।—शेषस्य—अनन्तनागस्य, फणामण्डलानि—फटाचक्राणि एव, उपकरणानि—उपादानकारणानि तैरिव, अन्यथा कथं त्रिभुवनभारधारणे सामर्थ्यमस्येति भाव। सकलेति।—सकलानां भूभृतां—राज्ञां, पर्वतानाञ्च, कम्पकारिणं—कम्पयितु रिपूनाशयितुं शक्तिमानिति भाव, अत एव दिग्गजैः।—दिग्गजानाम्—ऐरावतादीनाम् अवयवैः,—अङ्गैरिव। असूत—प्रसूतवती। राज्यवर्द्धनं—राज्यं वर्द्धयतीति तथोक्तम्, अन्वर्थाभिधेयमिति भाव।

(६२) यस्मिन्—राज्यवर्द्धने। जातप्रमोदाः,—समुत्पन्नहर्षाः। नृत्यमय्य,—नृत्यपरा, यथा नृत्यपरायणा इव। प्रजाः,—जना। पूरितेति।—पूरितानाम्—आपूरितानाम् शङ्खानाम्—कम्बूनां, शब्दैः,—रवै मुखरं,—कोलाहलपूर्णं तम्। प्रहतेति।—प्रहतानां—ताडितानां, पटहशतानां—वादित्रविशेषसमूहानां, पटुः,—महान्, रवः ध्वनिः यत्र तथाविधम्। गभीरेति।—गभीरैः,—मन्द्रैः, भेरीणां—दुन्दुभीनां निनादैः,—निस्वनैः, निर्भरम्—अत्यन्तं यथा तथा, भरितम्—आपूरितं, भुवनं यत्र तथाविधम्। प्रमोदेति।—प्रमोदेन—हर्षेण, उन्मत्तैः,—हर्षमत्तैः, मर्त्यलोकैः,—मनुष्यैरित्यर्थः, मनोहरं—रमणीयम्।

(६३) कन्दलिनि—कन्दलैः नवाङ्कुरैः युक्ते, यद्वा—नवाङ्कुरशालिनि। कुड्मलितेति।—कुड्मलिता,—मुकुलिताः, कदम्बतरवः, यस्मिन् तथोक्ते। तोयदस्तम्बे

(६५) श्यामायमानचारुचूचुकचूलिकौ चक्रवर्तिनः पातुं मुद्रिताविव पयोधरकलशौ बभार। (६६) स्तन्यार्थम् आनननिहिता दुग्धनदीव दीर्घस्निग्धधवला माधुर्यम् अधत्त दृष्टिः। सकलमङ्गलगणाधिष्ठितगात्रगरिमेव गतिः अमन्दायत। (६७) मन्दमन्दं सञ्चरन्त्या निर्मलकुट्टिमनिमग्नप्रतिबिम्बनिभेन गृहीतपादपल्लवा पूर्वसेवामिव आरेभे पृथिवी अस्याः।

(६५) श्यामायमानेति।—श्यामायमानौ—नीलायमानौ, चारू,—मनोज्ञौ, चूचुकयो,—कुचाग्रयोः, ("चूचुकन्तु कुचाग्रं स्यात्" इत्यमरः) चूलिका—[illegible] शिखरं ययोः तादृशौ, [चुष समुच्छ्राये इति धातोः "ण्वुल्तृचौ" (३।१।१३३ पा०) इति ण्वुल् "प्रत्ययस्थात्—" (७।३।४४ पा०) इत्यादिना अत इत्वे, "पृषोदरादीनि यथोपदिष्टम्" (६।३।१०९ पा०) इति षकारस्य चत्वे रूपम्]। चक्रवर्तिनः,—भाविनः सम्राजो हर्षस्य पातुं [illegible]। मुद्रिताविव—मुद्रया अङ्किताविव, पयोधरकलशौ—स्तनकुम्भौ, दुग्धाधारकुम्भौ च।

(६६) स्तन्यार्थे—स्तनदुग्धाय। दीर्घेति।—दीर्घा—आयता, स्निग्धा—मसृणा, धवला—शुभ्रा च तथाभूता, विशेषणत्रयम् दुग्धनदीपक्षेऽपि योजनीयम्। माधुर्यं—मधुररसं मधुरभावञ्च। अधत्त—धृतवती। सकलेति।—सकलं मङ्गलमयं,—कल्याणकरवस्तुनिवहे [अभिधाने "मङ्गलम्" (स० ९ पा० ७० सू०) इति [illegible] दर्शनात् क्लीबे रूपम्] अधिष्ठितम्—आश्रितं, यत् गात्रं—शरीरं, तस्य गरिमा—गुरुत्वं तेनेव। अमन्दायत मन्दा इव—शान्ता इव धीरा इवाति यावत् आचरत्।

(६७) मन्दमन्दं—शनैः शनैः, ["मन्दमन्दम्" इत्यत्र "मन्द मन्दम्" इति पाठान्तरम्, प्रथमपक्षे,—"प्रकारे—" (८।१।१२ पा०) इत्यादिना द्विवचनस्य कर्मधारयवद्भावात् सुपो लुकि कृते तथा रूपम्, पाठान्तरपक्षे—"नित्यवीप्सयोः" (८।१।४ पा०) इति वीप्सायां द्विर्वचनम् इति विवेकः]। निर्मलेति।—निर्मलेषु—स्वच्छेषु कुट्टिमेषु—रत्नाबद्धभूतलेषु निमग्नं—निपतितं, यत् प्रतिबिम्बं प्रतिच्छायेति भावः, तन्निभेन—तद्व्याजेन, गृहीतपादपल्लवा—धृतचरणकिसलया पृथिवी—भूमिः, अस्याः—[illegible], [illegible] इति भावः, पूर्वसेवां—प्रथमपरिचर्याम्, भाविनं चक्रवर्तिनं श्रीहर्षस्य जननीत्वात् इति भावः। अत्र पादयोः प्रतिबिम्बस्य [illegible] [illegible] पृथिवीपाद[illegible], यदि च, यत्रत्र पृथ्वी

(६८) दिवसम् अधिशयानायाः शयनीयम् अपाश्रयपत्रभङ्ग-पुत्रिकाप्रतिमा विमलकपोलोदरगता प्रसवसमयं प्रतिपालयन्ती लक्ष्मीरिव अलक्ष्यत। (६९) क्षपासु सौधशिखराग्रगताया गर्भोष्मायमुक्तांशुके स्तनमण्डले सङ्क्रान्तमुडुपतिमण्डलम् उपरि गर्भस्य श्वेतातपत्रमिव केनापि धार्यमाणम् अदृश्यत। (७०) सुप्ताया वासभवने चित्रभित्तिचामरग्राहिण्योऽपि

---

अपि श्रियाः परिचर्या पृथिव्या प्राक् कदाचिदपि नैव कृता, एतस्याः तत्कारणेन त्रिजगन्मङ्गलनाथ सौभाग्योत्कर्षवती ति इति व्यतिरेको व्यङ्ग्यः।

(६८) दिवसम्—वासरम्। शयनीय—शय्याम् ["अधिशीङ्स्थासां कर्म" (१।४।४६ पा०) इति आधारस्य कर्मसंज्ञा] अधिशयानायाः,—अधितिष्ठन्त्या इत्यर्थः। अपाश्रयस्य—खट्वाभ्यन्तरभागपट्टस्य, "वालिश" इति ख्यातस्य उपाधानस्य यद् या पत्रभङ्गपुत्रिका—पुत्तलिकारूपेण निर्मिता, तस्याः प्रतिमा—प्रतिबिम्बम्। विमल—स्वच्छ, गर्भस्थसन्तानतेजःप्रभावादिति भावः, यत् कपोलोदरं—गण्डाभ्यन्तरं, तद्गता—तत्र प्रतिफलिता इत्यर्थः। प्रतिपालयन्ती—प्रतीक्षमाणा, वितानेषु उपाधानेषु वा चित्रितानां नारीणां मूर्तिषु राजश्रियः उपचारार्थं प्रतीक्षणमुपपादितम्। लक्ष्मीरिव—राजश्रीरिव, [लक्षधातोः "लक्षेर्मुट् च" (उ० ३ पा० १६० सू०) इति ईप्रत्यये मुडागमे रूपम्, अचलत्वात् न सुगोप]। अत्र "लक्ष्मीरिव" इति पदं गर्भस्थबालस्य भाविचक्रवर्तित्व-सूचकं ज्ञातव्यम्, एवमुत्तरत्र "श्वेतातपत्रमिव" इत्यादिस्थलेऽपि।

(६९) क्षपासु—रजनीषु, सौधशिखरस्य—प्रासादचूडायाः, अग्रम्—उपरिभागं, तद्गतायाः,—तत्र स्थिताया इत्यर्थः। गर्भेति।—गर्भस्य उष्माधिक्येन—पीडनेन इत्यर्थः, गर्भभारवहनजनितक्लेशेन इति यावत्, मुक्तं—त्यक्तम्, अपसृतमित्यर्थः, अंशुकं—वसनं यस्मात् तथाभूते, स्तनमण्डले सङ्क्रान्तम्—प्रतिफलितम्, उडुपतिमण्डलम्—चन्द्रबिम्बम्। केनापि—अनिर्दिष्टेन जनेन सेवकेनेति भावः, यद्वा,—केन—ब्रह्मणा सूर्येण वा, उपर्युक्तगर्भस्थबालकादरात् स्नेहानुरागाद्वा इति ध्येयम्। एतेन लोकातीतप्रतापशालित्वगमनं गर्भस्थस्य सूच्यते इति।

(७०) सुप्तायाः—निद्रितायाः। चित्रेति।—चित्रभित्तिषु—आलेख्याङ्कितकुड्येषु इति यावत्, स्थिताः,—चित्रिता इत्यर्थः या चामरग्राहिण्यः—बालव्यजनधारिण्यः, ताः। अत्र अपिशब्दः सम्भावनार्थकः इत्युत्प्रेक्षा, निश्चयार्थके तु न तथा।

चामराणि चालयाञ्चक्रुः। (३१) स्वप्नेषु करविधृतकमलिनीपत्त्रपुटसलिलैः चतुर्भिः अपि दिक्करिभिः अक्रियत अभिषेकः। (३२) प्रतिबुध्यमानायाश्च चन्द्रशालिकाशालभञ्जिकापरिजनो जयशब्दम् असकृत् अजनयत्। (३३) परिजनाह्वानेषु आदिश इति अशरीरा वाचो निश्चेरुः। क्रीडायाम् अपि न असहत आज्ञाभङ्गम्। अपि च (३४) चतुर्णामपि महार्णवानाम् एकीकृतेन अम्भसा स्नातुं वाञ्छा बभूव। वेला-

(३१) स्वप्नेषु—स्वप्न —निद्रावस्थायां विषयानुभवः तेषु, "स्वप्नो निद्रानुदेशस्य विषयानुभवस्तु च" इति रुद्रः। करेति।—करैः—शुण्डैः, विधृतानि—गृहीतानि, कमलिनीपत्त्राणाम्—पद्मिनीपत्राणां, पुटैः—पात्रविशेषैः, सलिलानि—जलानि यैः तथाभूतैः, दिक्करिभिः,—दिग्गजैः। अभिषेकः,—स्नपनं, गर्भस्थैनेति भावः। अत्र अपिशब्दः समुच्चयार्थकः तेन एतेषां सर्वेषां बहु इति सङ्क्रान्तदशाभिर्न राजसौभाग्यभाक्त्वं गर्भस्य सूचितम्।

(३२) प्रतिबुध्यमानायाः,—जाग्रत्याः। चन्द्रशालिका—शिरोगृहं, प्रासादोपरिस्थं "चिलेकोठा" इति वङ्गभाषाप्रसिद्धं गृहविशेषं इत्यर्थः, तत्र या शालभञ्जिका,—काष्ठनिर्मितपुत्तलिका, सा एव परिजनः। असकृत्—पुनः पुनः। अजनयत्—अकरोत्, गर्भस्थस्य सार्वभौमनरपतित्वनिमूचनाय आसन्नस्थानेऽपि तथाविधं जयशब्दमिव सा श्रावयीदिति भावः।

(३३) परिजनाह्वानेषु—परिवाराह्वानेषु। आदिश—आज्ञापय। अशरीरा,—आकाशचारिण्य इत्यर्थः। निश्चेरुः,—निर्गताः। एतेन भवीश्वर्यं भौमपार्थिवा दिव्याश्च "यदादिशति" इत्यादिसेवकनिवेदनरूपधर्मं, सर्वभूतवाचस्य तस्याः आज्ञाभाजः इत्यर्थः सूचितम्। क्रीडायामित्यादिना तस्य चक्रवर्तित्वमपि दर्शितम्। अत्र सा कदा गर्भं धार्यमाणा इदं सम्पादनीयं इति अपि अध्याहार्य।

(३४) "चतुर्णाम्" इत्यादिना "दक्षिणवामानि पदानि" इत्यन्तं ग्रन्थेन तस्य भावि सार्वभौमत्वं महाराजत्वश्च प्रकटीकृतम्, अपि च गर्भं च दर्शयति, गर्भिण्या यदि [illegible] तथाविधो जायते, यदुक्तं सुश्रुते,—"गर्भं चतुर्थे मासि यत्र सार्थमिन्द्रियार्थेषु करोति, द्विहृदयाश्च नारी दौहृदिनीत्युच्यते"।..... अतः च [illegible] नारी सन्निधाति दौहृदम्। गर्भोत्पादनार्थाशंसा एतदर्थे

लतागृहोदरपुलिनपरिसरेषु पर्यटितुं हृदयम् अभिललाष। (७५) आत्ययिकेषु अपि कार्येषु सविभ्रमं भ्रूलता चचाल। (७६) सन्निहितेषु अपि मणिदर्पणेषु मुखम् उत्खाते खड्गपट्टे वीक्षितुं व्यसनमाप्नोत्। (७७) उत्सारितवीणाः स्त्रीजनविरुद्धा धनुर्ध्वनयः श्रुतौ असुखायन्त। (७८) पञ्जरकेसरिषु चक्षुः अरमत।

---

च्यति॥" इति। अनेन गर्भस्थस्यैव तस्य महावीरसार्वभौमसौभाग्याभिलाष प्रतीयते इति दोहदम्। वेलेति।—वेलासु—समुद्रतीरेषु यानि लतागृहाणि—कुञ्जभवनानि, तेषाम् उदरेषु—अभ्यन्तरेषु यानि पुलिनानि—सैकतभागाः, तेषां परिसराः,—प्रान्तदेशाः तेषु। एतेनास्य ससागरधराऽधीश्वरत्वावश्यभाव्यत्वमनुमीयते।

(७५) आत्ययिकेषु—विपत्तिजनकेषु कार्येषु [ अत्यये भव इत्यर्थे "तत्र भवः" (४।३।५३ पा०) इति ठञि रूपम् ] सविभ्रमं—सविलासं भ्रूलता चचाल—जगामेत्यर्थः, तस्या इति शेषः, आयतभ्रूचिका भ्रुकुटिमकरोदिति भावः। गर्भे वीरपुरुषस्य अवस्थित्या विपज्जनककार्ये प्रकृति आसीत् अथवा,—आत्ययिकेषु—अवश्यकर्तव्येषु सविभ्रमं—सविलासं भ्रूलता चचाल—अस्पन्दे, भ्रूलताचालनेनैव अवश्यकर्तव्यानि कारयामास, न तु हस्तादिना गर्भभारालसत्वादिति भावः।

(७६) सन्निहितेषु अपि—निकटस्थितेषु अपि मणिदर्पणेषु ["षष्ठी चानादरे" (२।३।३८ पा०) इति अनादरे सप्तमी ] तान् अनादृत्येत्यर्थः। उत्खाते—उद्धृते परिग्रहेण इति भावः, खड्ग—निष्कोषिते इत्यर्थः, महावीराश्रितगर्भत्वात्, मुखं वीक्षितुं—द्रष्टुं व्यसनम्—आसक्तिं अभिलाषं इत्यर्थः खड्गपट्टे—असिफलके, विजिगीषुभिः वीरैरेव खड्गफलके एव मुखदर्शनस्य प्राकृतिकत्वादिति भावः।

(७७) उत्सारितवीणाः—उत्सारिता—अपसारिता वीणा—वाद्यविशेषः येभ्यः तथाभूताः तद्ध्वनिभिः वीणादिमधुरशब्दाः तिरस्क्रियन्ते इति भावः। धनुर्ध्वनयः,—धनुर्निनादाः श्रुतौ—श्रवणेन्द्रिये असुखायन्त—सुखसुखाः जाता इति यावत्, पूर्ववत् महावीराश्रितगर्भत्वात् प्रत्यर्थिमर्दनपरायणानां वीराणाम् धनुष्टङ्कारस्यैव श्रुतिसुखकरत्वादिति भावः।

(७८) पञ्जरकेसरिषु—पञ्जरं गतेषु सिंहेषु इत्यर्थः, चक्षुः अरमत—अप्रीयत; महापराक्रमस्य गर्भस्य मृगयादिव्यापारेषु सिंहादपि भीत्यभावात् तेनैव च सह क्रीडादिकरणात् इति भावः, अपि च पञ्जरकल्पोदरस्थायिनः दर्पस्य केसरिणः दर्शनजनितत्वमपि चक्षुः अजनीति ज्ञेयम्।

(७९) गुरुचरणेषु अपि स्तम्भितमिव शिरः कथमपि ननाम। (८०) सखीजनाश्च अस्याः प्रमोदविस्फारितैः लोचनपुटैः आसन्नप्रसवमहोत्सवधियेव धवलयन्तो भवनं विकच कुमुदकमलकुवलयपलाशवृष्टिमयं रक्षाबलिविधिमिवानवरतं विदधाना दिक्षु क्षणमपि न मुमुचुः पार्श्वम्। (८१) आलोचितस्थाननिषण्णाश्च महान्तो विविधौषधिधरा भिषजो भूधरा इव भुवो धृतिं चक्रुः। (८२) पयोनिधीनां हृदयानीव

(७९) गुरुचरणेषु—पूज्यानां जनकजनन्यादीनां चरणेषु, स्तम्भितमिव—निश्चलीकृतमिव, गर्भे समुदभवे सति प्रतिवद्धास्तरमिव महावीरस्य सार्वभौमस्य च गर्भस्य प्रकृतिविरोधिवादसम्भवाद्। पूर्वोक्तेषु गुरुषु एव वाक्येषु वीरपुरुषाणिव वर्त्तमान तयोर्भिरिति भाव।

(८०) सखीजना—सहचारिण्य। ["सखीजनाश्च" इत्यत्र "सखायः" इति पाठान्तरम्] प्रमोदविस्फारितैः, आनन्दविकसितैः। आसन्नेति।—आसन्न,—समीपवर्त्ती य प्रसव—गर्भमोचन स एव तेन वा महोत्सव,—आनन्दजनकव्यापार, तद्धियेव तद्बुद्ध्या इव महोत्सव समीपवर्त्ती इति विदित्वा इवेत्यर्थ.। धवलयन्त—शुभ्रीकुर्वाण। विकचेति।—विकचानि—विकसितानि यानि कुमुदकमलकुवलयानि—कैरवपद्मनीलपद्मानि तेषां पलाशानि—दलानि, तेषां वृष्टिमय—वर्षणात्मक रक्षाबलिं—रक्षार्थं—गर्भस्य विघ्नाभावसम्पादनाय, बलिविधि—पूजाविधानमिव। विदधाना,—कुर्वन्त। मुमुचु,—तत्यजु, आसन्नप्रसवाया नियतपार्श्ववर्त्तित्वनियमादिति भाव।

(८१) आलोकेति। आलोक,—सम्यक् अवेक्षितेषु—योग्येषु स्थानेषु निषण्णा,—उपविष्टा, महान्त,—उत्तमा इत्यर्थ, भिषज,—वैद्या, विविधा,—नानाविधा, औषधी,—गर्भरक्षा रक्षपूतनादिग्रहनिवारकाणि, तथा रोगोपशमनानि भेषजानि, द्रुमलतादीनि च, धरन्तीति तथोक्ता, यद्वा—भूधरपक्षे,—विविधा औषध्य यासु तादृश्य धरा—भूमय येषु तथाभूता। भूधरा इव—पर्वता इव, भुव,—भूमे, प्रसवस्थानस्य इत्यर्थ, पृथिव्याश्च धृतिम्—अवधारण धारणञ्च, चक्रु,—कृतवन्त, गर्भस्य सततमेव चिकित्सका एतत्पार्श्वात् क्षणमपि न प्रचेलु इति भाव।

(८२) पयोनिधीनां—समुद्राणाम्। हृदयानीव—मध्यस्थानीवेत्यर्थ, यथा

लक्ष्म्या सहागतानि ग्रीवासूत्रग्रन्थिषु प्रशस्तरत्नानि बबन्ध ।

ततश्च प्राप्ते (८३) ज्येष्ठामूलीये मासि बहुलासु बहुलपक्षद्वादश्यां व्यतीते प्रदोषसमये समारूढवति क्षपायौवने सहसैवान्तःपुरे समुदपादि कोलाहलः स्त्रीजनस्य । निर्गत्य च ससम्भ्रमं यशोवत्याः स्वयमेव (८४) हृदयनिर्विशेषा धात्र्याः सुता सुयात्रा इति नाम्ना राज्ञः पादयोर्निपत्य,—"देव । दिष्ट्या वर्द्धसे द्वितीयसुतजन्मना" इति व्याहरन्ती पूर्णपात्रं जहार ।

अस्मिन्नेव च काले राज्ञः (८५) परमसम्मतः, शतशः

---

समुदायान्तरे बहूनि प्रशस्तरत्नानि विद्यन्ते, तथेति भावः । लक्ष्म्या—कमलया, पयोनिधिसमुत्थितयेति भावः, सह आगतानि—उपस्थितानि, ग्रीवासूत्रग्रन्थिषु—ग्रीवायां ये सूत्रग्रन्थयः तेषु रक्षाविधानार्थमिति भावः । प्रशस्तरत्नानि—उत्कृष्टमणयः, [प्रशस्तानि तानि रत्नानि इति कर्मधारयः, अथवा,—प्रशस्तानि रत्नानि यस्मिन् इति बहुव्रीहिः] बबन्ध—बद्धानि परिजने इति शेषः ।

(८३) ज्येष्ठामूलीये—ज्येष्ठानक्षत्राधिदैवते, ज्यैष्ठे मासि इत्यर्थः, बहुलासु—कृत्तिकासु नक्षत्रेषु बहुलपक्षद्वादश्याम्—कृष्णपक्षद्वादश्यां तिथौ, ("बहुला नीलिकायां स्यादेलायां गवि योषिति । कृत्तिकासु स्त्रियां भूम्नि विहायसि नपुंसकम् । पुंसयोः कृष्णपक्षे च ॥" इति मेदिनी)। व्यतीते—अतिक्रान्ते, प्रदोषसमये—रजनीमुखे, समारूढवति—समारोढुमिच्छति, प्रादुर्भवतीत्यर्थः क्षपायौवने रात्रितारुण्ये, निशीथे इत्यर्थः । समुदपादि समजनि ।

(८४) हृदयनिर्विशेषा—हृदयादभिन्ना इत्यर्थः । धात्र्याः सुता—धात्रेयीत्यर्थः, [धाञ् धेट्धातुभ्यां "धः कर्मणि ष्ट्रन्" (३।२।१८१ पा०) इति ष्ट्रन् षित्त्वात् ङीष् धात्री दात्री ङीषि वा करणम्]। दिष्ट्या—भाग्येन, दैवेनेत्यर्थः, [दिशधातोः "भसाः ष्ट्यः" (उ० ४ पा० ११२ सू०) इति ष्ट्यप्रत्यये निपातनात् सिद्धम्] व्याहरन्ती—कथयन्ती, पूर्णपात्रं प्रियवार्तादानजपारितोषिकजनितवसनरत्नादिपूरितपात्रं दीयमानं पूर्णपात्रम्, "मानद्दर्शितसौहार्दादेत्य वस्त्रादिकं बलात् । अज्ञानती हरत्येव पूर्णपात्रन्तु तत् स्मृतम् ॥" इत्यत्र नववधू सुखा परिहितवस्त्रालङ्कारादिकं वा । जहार—गृहीतवती ।

(८५) परमसम्मतः,—प्रातिप्रियः । शतशः,—शतप्रकारात्, बहुश इत्यर्थः ।

संवादितातीन्द्रियादेशः, दर्शितप्रभावः, सङ्कलितो ज्योतिषि, सर्वासां ग्रहसंहितानां पारदृश्वा, सकलगणकमध्ये महितो हितश्च, त्रिकालज्ञानभाक्, भोजकस्तारको नाम गणकः समुपसृत्य विज्ञापितवान्,—"देव ! श्रूयतां, मान्धाता किलैवंविधे (८६) व्यतीपातादिसर्वदोषाभिषङ्गरहितेऽहनि सर्वेषु उच्चस्थानस्थितेषु एवं ग्रहेषु ईदृशि लग्ने भेजे जन्म।

---

संवादितेति ।—संवादितः,—प्रत्ययीकृतः, अतीन्द्रियः,—इन्द्रियमतिक्रान्तः, [ अत्र "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" ( वा० ) इति समासः ] आदेशः,—आज्ञा, घटना इति यावत् येन तथाभूतः, भविष्यद्वक्तेति भावः, यद्वा,—संवादितः, अवैतथीकृत इति भावः, अतीन्द्रियः,—अलक्ष्यः, आदेशः,—आज्ञावाक्, आवश्यमित्यर्थः यस्य तथाभूतः। दर्शितप्रभावः,—दर्शितः,—प्रकटितः, प्रभावः—सामर्थ्यं येन तथोक्तः, यद्वा,—दर्शितः,—दर्शः,—दर्शनं सञ्जातोऽस्य इति विग्रहे [ "तदस्य—" ( ५।२।३६ पा० ) इत्यादिना तारकादित्वात् इतच्प्रत्यये सिद्धः ] प्रभावः यस्य तथाभूतः, एतेनास्य विश्वप्रत्ययप्रतिभावत्त्वं सूचितम्। सङ्कलितः—सङ्कलितम् अस्यास्तीति सङ्कलितः, सङ्कलनाभिज्ञः, गणिताभिज्ञ इति यावत्, ज्योतिषि—ज्योतिःशास्त्रे। ग्रहसंहितानां—ग्रहाः,—रव्यादयः, तेषां संहिता,—संहताः, तत्कृतज्ञानशास्त्राणीति यावत् तासां पारदृश्वा—पारदर्शी, विशेषज्ञ इति यावत् [ पारं दृष्टवान् इत्यर्थे "दृशः क्वनिप्" ( ३।२।९४ पा० ) इति क्वनिपि रूपम् ]। महितः,—पूजितः। हितः,—हितकरः सूर्यकृतज्योतिर्विद्याविज्ञानेन निरन्तरमनन निदिध्यासनादिभिः इति भावः। गणकः,—दैवज्ञः, सूर्योपासका हि प्रायशः गणका भवन्ति, ये देशान्तरे "मगाः" इति प्रसिद्धाः, आम्नायत इत्यर्थः। भोजकः,—आहारभट्ट इति भावः, यद्वा,—भोज एव इत्यर्थे स्वार्थे कनि तथाविधः भोजकश्चासौ भोजवत् त्रिकाल समक्षो वा इत्याशयः। मान्धाता—युवनाश्वपुत्रः सार्वभौमः नृपतिविशेषः।

(८६) व्यतीपातादीति।—व्यतीपातः—"अयने हि मकरार्कौ युगपत् स्यातां यदैकमार्गस्थौ। अथवार्कार्कयोः यदा ग्रहौ स भवेत् व्यतीपातः॥" इत्युक्तलक्षणः अन्यतरेव राशिचक्रे समभागांशस्थयोः चन्द्रसूर्ययोः योगविशेषः, आदिपदेन तदितरेषां, सर्वे दोषाः, तेषाम् अभिषङ्गः—व्यतिकरः, सम्बन्ध इति यावत् तेन रहितः—वर्जितः तस्मिन्, अहनि—दिवसे। उच्चस्थानस्थितेषु—तुङ्गेषु इत्यर्थः।

(८७) अर्वाक् ततोऽस्मिन् अन्तराले पुनः एवंविधे योगे चक्रवर्त्तिजनने न अजनि जगति कश्चिदपरः। (८८) सप्तानां चक्रवर्त्तिनाम् अग्रणीः, चक्रवर्त्तिचिह्नानां महारत्नानाञ्च भाजनं, सप्तानां सागराणां पालयिता, सप्ततन्तूनां सर्वेषां प्रवर्त्तयिता, सप्तसप्तिसमः सुतोऽयं देवस्य जातः" इति।

अत्रान्तरे स्वयमेव (८९) अनाध्माता अपि तारमधुरं

---

ग्रहेषु—रव्यादिषु। ईदृशि—एवंविधे शुभे इति भावः। लग्ने—राश्युदये, ("राशीनामुदयो लग्नम्" इत्यमरः)। भिन्ने—भिन्ने।

(८७) अर्वाक् ततः,—तत्पदादित्यर्थः। अस्मिन् अन्तराले—अभ्यन्तरे, कथं साम्प्रतीः जन्मकालमध्ये इत्यर्थः, एवंविधे—ईदृशे, सर्व्वशुभावसरे इति भावः, योगे—ग्रहादीनां सम्मेलने इत्यर्थः, चक्रवर्त्तिजनने—चक्रवर्त्तिनः,—सम्राजः, जननम्—उत्पत्तिर्यस्मिन् तादृशे। अपरः,—हर्षनृपात् अन्य इति यावत्, न अजनि—न जातः। एतेन मान्धाता तु कदाचित् सत्ययुगे आसीत्, इदानीमेष एव त्रिलोक्यामप्रतिमवीर्य्य इत्यवगम्यते।

(८८) सप्तानां चक्रवर्त्तिनां—सार्व्वभौमनृपतीनां, "भरतार्जुनमान्धातृभगीरथयुधिष्ठिराः। सगरो नहुषश्चैव सप्तैते चक्रवर्त्तिनः॥" इत्युक्तानाम्, अग्रणीः,—अग्रगण्यः, तेषां सप्तानामपि श्रेष्ठ इत्यर्थः। चक्रवर्त्तिचिह्नानां—सार्व्वभौमलक्षणानां, मत्स्यजालच्छत्रादीनामित्यर्थः, महारत्नानां—"मण्यश्वकरिचक्राणि वरा स्त्री परिनायकः। (परिनायकः—सेनापतिः) षडेतानि तु रत्नानि कीर्त्तितानि मनीषिभिः॥" इत्युक्तविधानां रत्नविशेषाणां। भाजनं—पात्रम्। सप्तानां सागराणां—लवणेक्षुसुरासर्पिर्दधिदुग्धजलात्मनाम् इत्यर्थः। सप्ततन्तूनां—यज्ञानां, सप्तभिः भूरादिमहाव्याहृतिभिः साध्यमानत्वादिति भावः, ("यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः" इत्यमरः) प्रवर्त्तयिता—सम्पादकः। सप्तसप्तिसमः,—सप्त—सप्तसङ्ख्यकाः, सप्तयः,—अश्वाः यस्य सः सप्तसप्तिः,—सूर्य्य इत्यर्थः, [गमनार्थकात् सपधातोः "वसेस्तिः" (उ० ४ पा० १७८ सू०) इति सूत्रे बाहुलकग्रहणात् तिप्रत्यये रूपम्] तत्समः, आदित्यसदृश इत्यर्थः, तद्वत्प्रभवत्वात् इत्याशयः, ("भास्कराहस्करब्रध्नप्रभाकरविभाकराः। भास्वद्विवस्वत्सप्ताश्व ...॥" इत्यमरः)। अत्र नरेन्द्रसूनोः लोकासाधारणसम्पत्तिमहिमाविलक्षण वस्तुवर्णनविषयत्वात् उदात्तालङ्कारः।

(८९) अनाध्माता,—अपूरिता, मुखानिलेनेति भावः। तारमधुरम्—

शङ्खा विरेसुः। अताडितोऽपि क्षुभितजलनिधिजलध्वनिधीरं जुगुञ्ज अभिषेकदुन्दुभिः। अनाहतानि अपि (८०) मङ्गलतूर्य्याणि रेणुः। (८१) सर्व्वभुवनाभयघोषणापटह इव दिगन्तरेषु बभ्राम तूर्य्यप्रतिशब्दः। (८२) विधुतकेशरसटाश्च साटोपगृहीतहरितदूर्वापल्लवकवलग्रस्तैर्मुखपुटैः समक्रेषन्त हृष्टा वाजिनः। (८३) सलीलम् उच्चितैः हस्तपल्लवैः नृत्यन्त इव श्रवणसुभगं जगर्जुः गजाः। (८४) ववौ च अचिरात् चक्रायुधम् उत्सृजन्त्या लक्ष्म्या निश्वास इव सुराऽऽमोदसुरभिः दिव्यानिलः।

---

क्षेमंधुरम्। विरेसुः,—दध्वनुः। अताडित,—अनाहत। क्षुभितेति।—क्षुभितस्य—विक्षोभितस्य, जलनिधे,—सागरस्य, जल, तस्य ध्वनिवत् धीरं—गम्भीरम्। जुगुञ्ज—दध्वान। अभिषेकदुन्दुभि,—अभिषेकसमये वाद्यमानभेरी, ("भेरी स्त्री दुन्दुभि पुमान्" इत्यमरः)।

(८०) मङ्गलतूर्य्याणि—माङ्गलिकवाद्यविशेषाः, रेणु,—दध्वनि स्म।

(८१) सर्व्वेति।—सर्वेषां भुवनानाम् अभयघोषणाय—निर्भयताख्यापनस्य, पटह इव—आनकाख्यवादित्रमिव इव, ("आनकः पटहोऽस्त्री स्यात्" इत्यमरः) तूर्य्यप्रतिशब्द,—नान्दीवाद्यप्रतिध्वनि।

(८२) विधुतेति।—विधुता,—कम्पिता केशरा,—ग्रीवारोमाणि एव सटा,—जटा यै तथोक्ता। साटोपेति।—साटोप—साडम्बर, सवेगमित्यर्थं, गृहीतानां हरितानां—श्यामलानां, दूर्वापल्लवानां कवलै—ग्रासै, ग्रस्तानि—विघृतानीत्यर्थं, व्याप्तानीति यावत् तै, मुखपुटै,—मुखविवरै। समक्रेषन्त—क्रेषारवम् अकुर्वन, अश्वाश्चादेव हर्षोद्गमादिति भाव। ["समक्रेषन्त" इत्यत्र "समहेषन्त" इति पाठोऽपि दृश्यते]। हृष्टा,—प्रहृष्टा। वाजिन,—अश्वा।

(८३) सलील—सावहेलम्, उच्चितै,—उन्नमितै इत्यर्थ, हस्तपल्लवै,—शुण्डाग्रशिकरनरत्नैश्च। श्रवणसुभग—श्रुतिसुख, जगर्ज्जु,—ननदु, गर्ज्जितवन्त, इत्यर्थ, आनन्दाविर्भाव एव गजानां गर्ज्जने हेतु इति बोध्यम्।

(८४) ववौ—प्रववौ स्म। चक्रायुध—विष्णुम्, उत्सृजन्त्या,—त्यजन्त्या। सुराऽऽमोदसुरभि,—सुराणां,—मद्यस्य, आमोद,—दूरप्रसारिगन्ध, तद्वत् सुरभि,—घ्राणतर्पक गन्ध, अथवा—सुराणाम्—देवतानामपि, आमोद,—आनन्द यस्मात्

(८५) यज्वनां मन्दिरेषु प्रदक्षिणशिखाकलापकथितकल्याणागमाः प्रजज्वलुः अनिन्धना वैतानवह्नयः। (८६) भुवस्तलात् तपनीयशृङ्खलाबन्धबन्धुरकलशीकोशाः समुद्गुः महानिधयः।

---

सौरभ्यवान् सुरभिश्च इति विग्रहः, अमरतरुसम्पर्कसञ्जातगन्धवान् इत्यर्थः, दिव्यानिलः, —स्वर्गीयवायुः, तथाच श्रीहर्षस्य जातस्य स्तुतिश्रुतिविधिबोधितानां कल्पया भावि-विभवसम्प्रदायप्रवर्तकत्वज्ञानेन देवानामपि प्रमुदितत्वादिति भावः।

(८५) यज्वनां मन्दिरेषु—यज्ञशालासु इत्यर्थः ["इषिमदि—" (उ० १ पा० ५२ सू०) इत्यादिना किरचि रूपम्]। प्रदक्षिणेति।—प्रदक्षिण,—अनुकूल, दक्षिणा-वर्त इति यावत्, अन्यथा हवनसमये वह्निशिखा वामावर्तापातात्, तेन चाप्रे-अमङ्गलसमापत्त्यापत्तेः तथा हि रघौ कालिदासः,—"प्रदक्षिणार्चिर्व्याजेन" इति, शिखाकलापः,—ज्वालासमूहः, तेन कथितः,—सूचितः, कल्याणागमः,—शुभोदयः यैः तथोक्ताः। अनिन्धनाः,—इन्धन—दारु, दारुकाष्ठमित्यर्थः, तद्रहिताः, वैतानवह्नयः, —वितानं—क्रतुः, तत्र भवाः वैतानाः—यज्ञीयाः इत्यर्थः [विपूर्वकात् तनधातोः "अकर्तरि च—" (३।३।१९ पा०) इत्यादिना घञि, ततः भवार्थे अणि च रूपम्] तथाविधाः वह्नयः,—यज्ञाग्नयः इत्यर्थः।

(८६) भुवस्तलात्—पृथ्वीतलात्, भूम्यन्तः विदार्य इत्यर्थः ["ल्यब्लोपे कर्म-ण्यधिकरणे च" (वा०) इति पञ्चमीविभक्तिः]। तपनीयेति।—तपनीय—स्वर्ण, ["तव्यत्तव्यानीयरः" (३।१।९६ पा०) इति कर्मणि अनीयरप्रत्यये रूपम्। "स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम्। तपनीयम् ॥" इत्यमरः] तस्य शृङ्खला—हारविशेषः, सौवर्णदामेत्यर्थः निगडी वा ("शृङ्खला पुंस्कटीवस्त्रबन्धे च निगडे त्रिषु" इति मेदिनी) तस्याः बन्धेन बन्धुराः—मनोज्ञाः, रम्याः वा ("बन्धुरं सुन्दरं नतम्" "बन्धुरं मुकुटे पुंसि । त्रिषु सुन्दरनम्रयोः ॥" इत्यमर मेदिन्यौ) कलशीकोशाः,—कुम्भभाजनानि, तदाधारभूतकुम्भस्य पिधानानि वा येषां तथाविधाः, सौवर्णशृङ्खला-बद्धकुम्भपरिपूर्णाः इत्यर्थः महानिधयः,—महान्ति अमूल्यरत्नानि, शङ्खपद्मादयः शेवधिभेदा इति यावत् समुद्गुः,—समुद्गच्छन्ति स्म समुत्तस्थुरित्यर्थः, महापुरुषजन्मप्रभावात् सर्वाण्येव शुभचिह्नानि सर्वत्र प्रादुरासन्निति भावः। अत्र जन्मानुकूलाभ्युदयिक-दैवादिसंस्काराणाम् अप्रसिद्धगौणहेतुना सत्त्वेऽपि मुख्यकारणस्य प्रसिद्धमुख्यहेतोः, अभावात् विभावना।

(९७) प्रहतमङ्गलतूर्यप्रतिशब्दनिभेन दिक्षु दिक्पालैरपि प्रमोदात् अक्रियत इव दिष्टवृद्धिकलकलः। (९८) तत्क्षण एव च शुक्लवाससो ब्रह्ममुखाः कृतयुगप्रजापतय इव प्रजावृद्धये समुपतस्थिरे द्विजातयः। साक्षाद्धर्म इव (९९) शान्त्युदककलशहस्तः तस्थौ पुरः पुरोधाः। (१००) पुरातन्यः स्थितय इव

(९७) प्रहतेति।—प्रहतस्य—ताडितस्य मङ्गलतूर्यस्य—माङ्गलिकवाद्यविशेषस्य, प्रतिशब्द,—प्रतिध्वनि, तन्निभेन—तद्व्याजेन। प्रमोदात्—आनन्दात्। दिष्टवृद्धिकलकल —दिष्ट—भाग्य, ("दैवं दिष्टं भागधेयं भाग्यम्" इत्यमरः) तस्य वृद्धि,—उन्नति तस्यै कलकल,—कलरव, [अल्पप्रकार इत्यर्थ "प्रकारे—" (८।१।१२ पा०) इत्यादिना द्वित्वे रूपम्] जातवति सति श्रीहर्षे राजनि सुशासन-गुणेन प्रजानां निरुपद्रवतया तस्मात् तेषां स्वस्वकार्य्यभारलाघवसम्भावनयेति भाव। अक्रियत इव—कृत इव। अत्र सम्भावनाया उत्कटैककोटिकत्वात् उत्प्रेक्षा।

(९८) तत्क्षण एव—तज्जन्मसमये एव किञ्चित्कालक्षेपमप्यकृत्वा इति भाव, शुक्लवासस —श्वेतवसना, ब्रह्ममुखा,—ब्रह्म—वेद, [वृंहिधातो "वृंहेर्नोऽच्च" (उ० ४ पा० १४५ सू०) इति मनिनि नकारस्य अकारे तत रत्वे रूपम्। सर्वेभ्योऽपि इति किंचित्। "वेदस्तत्त्वं तपो ब्रह्म" इत्यमर ] मुखे येषां तथोक्ता, वेदानुध्यायन इति यावत्, पितामहप्रमुखाश्च, कृतयुगप्रजापतय इव—कृतयुगे—सत्ययुगे प्रजापतय —लोकसृष्टिकर्त्तार इव, परमेष्ठिप्रधाना प्रजापतय सृष्ट्यादौ यथा समवेता आसन् तद्वत् इत्यवैधर्म्यसाम्यादुपमालङ्कार। प्रजावृद्धये—प्रजानां—जनानां, प्रजाया,—सन्तानस्य च, ("प्रजा स्यात् सन्ततौ जने" इत्यमर ) वृद्धये—अभ्युदयाय शान्ति सम्पादयितुमित्यर्थ, ["क्रियार्थोपपदस्य—" (२।३।१४ पा०) इत्यादिना चतुर्थी]। समुपतस्थिरे—उपस्थिता। द्विजातय,—ब्राह्मणा, भाव ब्राह्मणोपस्थिति सर्वोत्पातनाशनत्वात् अतीवमङ्गलप्रदा इति हृदयम्।

(९९) शान्तीति।—शान्त्यर्थमुदक—जलं शान्त्युदकं कलशश्च, आशीर्वादार्थमिति भाव हस्ते यस्य तथाभूत। पुरोधा,—पुरोहित। [पुरस्पूर्व्वकात् धाधातो "पुरसि च" (उ० ४ पा० २३० सू०) इति असि प्रत्यये रूपम्] माङ्गलिककार्य्यादौ सर्वत्र पुरोहितोपस्थिति सनातनी पद्धतिरेवेति भाव।

(१००) पुरातन्य,—चिरन्तन्य [तत्र भवेऽर्थे "सायंचिर—" (४।३।२३

अदृश्यन्त आगता बान्धववृद्धाः। (१०१) प्रलम्बश्मश्रुजालजटिलाननानि बहलमलपङ्ककलङ्ककालकायानि नश्यतः कलिकालस्य बान्धवकुलानि इव आकुलानि अधावन्त मुक्तानि बन्धनवृन्दानि। (१०२) तत्कालापक्रान्तस्य अधर्मस्य शिबिरश्रेण्य इव अलक्ष्यन्त लोकविलुण्ठिता विपणिवीथ्यः। (१०३) विलसदुन्मुखवामनकबधिरवृन्दवेष्टिताः साक्षात् जातमातृदेवता इव बहुबालकव्याकुला ननृतुः वृद्धधात्र्यः।

---

पा० ) इत्यादिना ल्युट्प्रत्यये मुडागमे तस्य टित्त्वात् ङीपि रूपम् ] स्थितय इव—मर्यादा इव, शिष्टाचारपद्धतय इवेति यावत्। बान्धववृद्धाः,—बान्धवेषु—स्वजनेषु, वृद्धाः,—स्थविराः, चिरन्तनाचारपरिरक्षणशीलत्वात् तेषामिति भावः।

(१०१) प्रलम्बेति।—प्रलम्बेन—लम्बमानेन, क्षौराभावात् इति भावः, श्मश्रुजालेन—कूर्चसमूहेन, जटिलानि—व्याप्ततया निबिडानि, आननानि येषां तानि। बहलेति।—बहलानां—बहूनां, मलपङ्कानां—गात्रक्लेदरूपकर्दमानां, कलङ्केन—रूपवर्णविकारेण, कालः,—कृष्णवर्णः, मलिन इत्यर्थः, कायः,—देहो येषां तानि, स्नानाद्यभावादिति भावः। नश्यतः—पलायमानस्य, आविर्भूतराजदण्डभयादिति भावः। बान्धवकुलानि इव—स्वजनवृन्दानि इव। आकुलानि—अधिकारश्रयात् विह्वलानि इत्यर्थः। मुक्तानि—बन्धनागारात् त्यक्तानि बन्धनवृन्दानि—कारानिरुद्धलोकसङ्घाः, [बन्धननिरुद्धानि वृन्दानि इति विग्रहे शाकपार्थिवादित्वात् उत्तरपदलोपिसमासः], महोत्सवे राज्ञा कारावासिनो मुच्यन्ते इति चिरप्रसिद्धिः।

(१०२) तत्कालेति।—तस्मिन् काले—हर्षजन्मसमये इत्यर्थः, अपक्रान्तस्य—अपसृतस्य, धर्मतः शासितुः हर्षस्य भयात् पलायितस्य इत्यर्थः, अधर्मस्य—वेदनिषिद्धकर्मजन्यपापाचारस्य, शिबिरश्रेण्य इव—सेनानिवेशस्थानानि इव। लोकेति।—लोकैः,—जनैः, विलुण्ठिता,—विशेषेण हृतद्रव्या इत्यर्थः विपणिवीथ्यः,—पण्यवीथिकाः निवहाः, आनन्देन राजाज्ञया लोका राजदेयपारितोषिकतया विपणिस्थिता वणिजां विपणिद्रव्याणि पराजितशिबिरधनानीव लुण्ठितवन्त इत्यर्थः।

(१०३) विलसदिति।—विलसद्भिः,—आनन्देन स्फुरद्भिः, उन्मुखैः,—ऊर्ध्वमुखैः, वामनकानां—क्षुद्रकायानां खर्वविग्रहाणां, बधिराणाम्—षण्डानां, श्रुतिशक्तिरहितानामित्यर्थः, अन्तःपुरचारिणामिति भावः, वृन्दैः,—समूहैः, वेष्टिताः,—परिवृताः। साक्षात्—मूर्तिमत्य इत्यर्थः, जातमातृदेवता इव—जातस्य—प्रसूतस्य

( १०४ ) प्रावर्तत च विगतराजकुलस्थितिः, अधःकृतप्रतीहाराकृतिः, अपनीतवेत्रिवेत्रः, निर्दोषान्तःपुरप्रवेशः, समस्वामिपरिजनः, निर्विशेषबालवृद्धः, समानशिष्टाशिष्टजनः, दुर्ज्ञेयमत्तामत्तप्रविभागः, तुल्यकुलयुवतिवेश्याविलासः, प्रनृत्तसकलकटकलोकः, पुत्रजन्मोत्सवो महान्।

---

धात्र्या मातृदेवता इव—षष्ठीदेव्या इव इत्यर्थः सा च मार्जारवाहिनी बहुबालकपरिवृता मूर्तिकाऽऽकारेण स्थाप्यते। बहुभिर्बालकैः—क्रीडासहितैः शिशुभिः इति भावः। व्याकुला,—विह्वला, उद्वेजिता इत्यर्थः, युगपद्बहूनामनुरोधे व्यग्रतापातात् इति हृदयम्, वृद्धधात्र्यः,—स्थविरा उपमातरः ननृतुः,—नृत्यन्ति स्म।

( १०४ ) प्रावर्तत—प्रारभत, प्रादुरभवदित्यर्थः। विगतेति।—विगता—विनष्टा, राजकुलस्य—राजभवनस्य, स्थितिः,—नियमः यस्मिन् तथोक्तः, कुमारदर्शनार्थं परितः प्रजानां पर्याकुलतया स्थितेरिति भावः। अधःकृतेति।—अधःकृता—पातिता, परित्यक्ता इत्यर्थः, प्रतीहाराणां—दौवारिकाणाम्, आकृतिः,—आकारः, भीषणवेशेन स्थितिरिति यावत् यत्र तथाभूतः, यद्वा,—अधःकृता—न्यक्कृता, अगणिता इत्यर्थः, कुमारदर्शनार्थिभिरिति भावः, प्रतीहाराणाम् आकृतिः,—भ्रूभङ्गादिभिर्निग्रहेति यावत् यत्र तथाभूतः। अपनीतवेत्रिवेत्रः,—अपनीतानि—पराणि, दूरीकृतानि,—वेत्रधारिभिः, लोकापसारणायेति भावः, वेत्राणि—स्वर्णदण्डविशेषाः येन यस्मिन् तथोक्तः। निर्दोषेति।—निर्दोषः,—दोषरहितः, अन्तःपुरे—राजावरोधे, प्रवेशः यस्मिन् तथाभूतः, अवारितान्तःपुरप्रवेश इत्यर्थः। समेति।—समौ—तुल्यौ, स्वामिपरिजनौ—प्रभुभृत्यौ यस्मिन् तथोक्तः अयं स्वामी, समुचितमुपचरितव्यः, अयं परिजनः, तथा नोपचरितव्य इत्येवं विचाररहित इति भावः। निर्विशेषेति।—निर्विशेषाः,—विशेषरहिताः, अभिन्ना इत्यर्थः, बालाः,—शिशवः, वृद्धाः,—स्थविराश्च यस्मिन् तथाभूतः, बालवृद्धयोः परस्परं मिलित्वा तुल्यभावेन उत्सवकरणादिति भावः। समानेति।—समानाः,—तुल्यप्रकाराः, शिष्टाः,—साधवः सन्तः, अशिष्टाः,—उद्धताः मूर्खाश्च, जनाः यस्मिन् तथोक्तः। दुर्ज्ञेयेति।—दुर्ज्ञेयः,—कः पानोन्मत्तः, को वा कुमारजन्मानन्द इति विशिष्य निर्णेतुमशक्यः, पानेन आनन्देन विवेकविच्युतेरुभयत्र तुल्यत्वादिति भावः, मत्तानां—क्षीबाणाम्, अमत्तानां—प्रकृतिस्थानाञ्च जनानां प्रविभागः,—प्रभेदः यस्मिन् तथाभूतः, सर्वेषामेव तत्र प्रमत्तत्वादिति भावः। तुल्येति।—तुल्यः,—समः, कुलयुवतीनां—कुलाङ्गनानां, वेश्यानां—वारनारीणाञ्च, विलासः,—विहारः

( १०५ ) अपरेद्युः आरभ्य सर्वाभ्यो दिग्भ्यः स्त्रीराज्यानि इव आवर्जितानि, असुरविवराणि इव अपावृतानि, नारायणावरोधानि इव प्रचलितानि, अप्सरसामिव महीमवतीर्णानि कुलानि, ( १०६ ) परिजनेन पृथुकरण्डपरिगृहीता स्नानीयचूर्णावकीर्णकुसुमाः सुमनःस्रजः, स्फटिकशिलाशकलशुक्ल-

यस्मिन् तदीशः, कुत्राऽपि वैशाख धरस्पर मिलितैव मनसाऽपि विहरन्ति स्म, सर्वासामेव तदानीं निर्भरानन्दसन्दोहविमुग्धत्वादिति भावः। प्रकृतीति।—प्रकर्षेण नृत्ता —नर्तनरता, सकम्पा कटकलोका,—शिबिरस्थजना यस्मिन् तथाभूतः।

( १०५ ) अपरेद्यु इत्यादि।—"अपरेद्यु" [ "सद्य—" ( ५।३।२२ पा० ) इत्यादिना निपातनात् सिद्धम् ] इत्यस्य "सामन्तान् पुरस्कृत्याऽपि अङ्गनाः" इत्युपरि अन्वयः। तानि एव विशिनष्टि,स्त्रीराज्यानीव इत्यादिभि।—आवर्जितानि—आकृष्टानि। स्त्रीराज्यानि इव—कुमारदर्शनाय मेलनं गता, स्त्रीसमूहा इत्यर्थः, एवमादिषु प्रकृतस्य पराश्रया सम्भावनोदयात् उत्प्रेक्षाऽलङ्कारः। असुरविवराणि इव—रसातलानि इव, अपावृतानि—उद्घाटितानि, सुरूपत्वादिति भावः। नारायणावरोधानि इव—लक्ष्मीकान्तपुरिका अन्ता इव, तेषां सातिशयगौरववत्त्वात् पीडमण्डपस्थानसम्भवाच्चेति भावः, [ अत्र अवरुध्यन्ते या ता अवरोधा, इति अर्थेऽपि अत्र अवरोधशब्दस्य नियतपुंलिङ्गता, तथा हि मेदिनी,—"अवरोधस्तिरोधाने राजदारेषु तद्गृहे" इति, एवञ्च कोषशास्त्रविघटनात् विधाविरुद्धत्वदोष विशेषः, अपि अस्ति च लिङ्गादितन्त्र नियतपुंस्त्वानुशिष्टत्वात् व्याकरणादिसम्बन्धहीनत्वेन वा च्युतसंस्कारत्वमुक्तम्। अवरोधानां समूह इत्यर्थे "तस्य समूहः" ( ४।२।३७ पा० ) इति सूत्रेण समूहार्थे अणि कृते अवरोधानि—अवरोधाना कुलानि इत्यत्रपरत्वे तु कोषस्य कथञ्चित् सम्पादनीयमिति, तथा च नाशङ्कितदोषावसर इति विवेकः ]। मही—पृथ्वीम्, अवतीर्णानि—आगतानि, अप्सरसां [ अद्भ्यः सरन्ति इत्यर्थे "अप्पूर्वकात् सृधातो "अप्सरा" ( उ० ४ पा० २३६ सू० ) इति असिप्रत्यये रूपम् ] कुलानीव—वृन्दानीव। अप्सरसामिव सुन्दरीणां नारीणामिकत्व मङ्गलत्वादिति भावः।

( १०६ ) परिजनेन—दासदासीवर्गेण। पृथ्विति।—पृथुभिः,—स्थूलैः, महद्भिर्वा, करण्डैः,—सम्पुटकैः, भाजनविशेषैः इत्यर्थः, परिगृहीताः,—सम्यक् आनीता इत्यर्थः। स्नानीयेति।—स्नानीय—स्नानोपकरणं, चूर्णं—चोट, सुगन्धद्रव्यविशेषचूर्णमिति भावः, तेन अवकीर्णं—युक्तं, व्याप्तं वा, कुसुमं यासां ताः, सुमनःस्रजः,—पुष्पमाल्यानि,

कर्पूरखण्डपूरिताः पात्रीः, (१०७) कुङ्कुमाधिवासभाञ्जि भाजनानि च मणिमयानि, सहकारतैलसिक्ततनुखदिरकेसरजालजटिलानि चन्दनधवलपूगफलफालीदन्तुरदन्तशफरुकाणि, (१०८) गुञ्जन्मधुकरकुलपीयमानपारिजातपरिमलानि पाटलानि पाटलकानि च, सिन्दूरपात्राणि च, पिष्टातकपात्राणि च, बाललतालम्बमानविटकवीटकाश्च ताम्बूलवर्धमानान् बिभ्राणेन

---

"बिभ्राणेन" इत्यनेनान्वयः, एवमुत्तरत्र। स्फटिकेति।—स्फटिकं—तदाख्य, शिलाशकलं—प्रस्तरखण्ड, महत् शकलेन—खण्डेन, कर्पूरखण्डेन पूरिताः,—व्याप्ताः, पात्रीः,—कर्पूरभाजनानि इत्यर्थः।

(१०७) कुङ्कुमेति।—कुङ्कुमस्य—काश्मीरजन्मनः, अधिवासाः,—अधिवासनद्रव्याणि सुगन्धिद्रव्याणि इत्यर्थः तान् भजन्ते इति तथोक्तानि, तत्पूरितानि इत्यर्थः। मणिमयानि—रत्ननिर्मितानि। सहकारेति।—सहकारस्य—अतिसौरभचूतफलस्य तैलेन—स्नेहविशेषेण सिक्तः—सिक्ताः तनुः—अल्पाः खदिरकेसरः—खदिरसारः, यद्वा—खदिरः केसरश्च—किञ्जल्कश्च, तस्य जालेन—समूहेन, जटिलानि—युक्तानि, सम्भृतानि इत्यर्थः। चन्दनेति।—चन्दनवत् धवलानि—शुभ्राणि पूगफलानि—गुवाकफलानि तेषां फाल्यः,—शकलैः, दन्तुराणि—सञ्जातदन्तानीव लक्ष्यमाणानि, दन्तशफरुकाणि—गजदन्तनिर्मितभाजनविशेषाः इत्यर्थः, [ शफरीपदात् राधातो "स्नगादयः" (उ० १ पा० २८ सू०) इति कुपप्रत्यये स्वार्थे कनि रूपम् ]।

(१०८) गुञ्जदिति।—गुञ्जद्भिः,—रणद्भिः, मधुकरकुलैः,—भ्रमरसङ्घैः पीयमानः—आस्वाद्यमानः आघ्रायमाणः इत्यर्थः, पारिजातानां—तत्पुष्पाणामित्यर्थः, राज्ञः महाप्रभावशालित्वात् देवानां सम्मतत्वाच्च, तेन पारिजातपुष्पाणि सुलभानीति बोध्यम्, यद्वा—पारिजातानां—पारिभद्राख्यपुष्पविशेषाणां, परिमलः—अतिमनोहरः गन्धः येषां तानि। पाटलानि—श्वेतरक्तवर्णानि पाटलकानि—पात्रविशेषान्। [ पाटलकानि इत्यत्र "पाटलकानि" इति पाठान्तरम् ]। पिष्टातकपात्राणि—पिष्टातक,—पटवासक, वस्त्रवासक सुगन्धिद्रव्यचूर्णमित्यर्थः, ("पिष्टातः पटवासकः" इत्यमरः) तस्य पात्राणि—भाजनानि। बालेति।—बाला—अभिनवा, लता नाम्नि लम्बमानानि—प्रसरन्ति इत्यर्थः, विटकवीटकानि—पत्रास्ताम्बूलदले क्रियमाणा सप्तकविशेषा येषु तान्। ताम्बूलवर्धमानान्—पर्णकरण्डानित्यर्थः। बिभ्राणेन—दधता, [ बिभर्ते

(१०८) अनुगम्यमानचरणानि, कुट्टनरणितमणिनूपुरमुखरित-दिङ्मुखानि, नृत्यन्ति, राजकुलम् आगच्छन्ति, समन्तात् सामन्तान्तःपुरसहस्राणि अदृश्यन्त।

(११०) शनैः शनैः व्यजृम्भत च क्वचित् नृत्तानुचितचिरन्तनशालीनकुलपुत्रकलोकलास्यप्रथितपार्थिवानुरागः, क्वचित्

(१११) अन्तःस्मितक्षितिपालापेक्षितक्षीबक्षुद्रदासीसमाकृष्य-

"ताच्छील्य—" (३।२।१२९ पा०) इत्यादिना वय अर्थे कर्तरि चानश् रूपम्] परिजनेन इत्यस्य विशेषणम्।

(१०९) अनुगम्यमानेति।—अनुगम्यमाना,—सेव्यमाना, चरणा येषा तानि तथाभूतानि चरणानि इत्यर्थः। कुट्टनेति।—कुट्टनेन—दलनेन पदविक्षेपणेन इति यावत् ["अनुगम्यमानचरणानि कुट्टन—" इत्यत्र "अनुगम्यमानानि, चरणनिकुट्टन—" इति पाठे—पूर्वोक्तविधिविशिष्टेन परिजनेन अनुस्रियमाणानि। चरणौ,—पादौ, निकुट्टनेन—द्रुतपातनेन इत्यर्थः] रणिते —क्वणिते, मणिनूपुरे —रत्नमयमञ्जीरे मुखरितानि—ध्वनितानि दिशा मुखानि येषा येषा तानि। नृत्यन्ति—क्रियमाणनर्तनानि इवेति प्रतीयमानोत्प्रेक्षा, यद्वा,—स्वदिग्गात्रविन्यस्तैव विश्वासाय अपूर्वसुखोदयात् अतिशयानन्दकारीणि इत्यर्थः। राजकुलम्—राज्ञः —श्रीहर्षपितुः गृहम् आगच्छन्ति—आयान्ति कुमारदर्शनार्थमिति भावः। समन्तात्—चतुर्दिक्षु। सामन्तेति।—सामन्तानाम्—अधीनभूपतीनाम्, अन्तःपुराणि —अवरोधनानि ["कक्पू—" (५।४।७४ पा०) इत्यादिना समासान्ते अचि रूपम्] तेषां सहस्राणि—समूहाः। अत्रार्थापत्ति सामन्तावरोधाना माङ्गल्यपूर्णोचितद्रव्यसमारम्भेण राजभवनागमनोत्सुकता यथायथं प्रतिपादितमस्ति।

(११०) "शनैः शनैः व्यजृम्भत" इत्यस्य "उत्सवामोद" इत्युत्तरेणान्वयः। शनैः शनैः—क्रमेण। व्यजृम्भत—प्रावर्तत। नृत्तेति।—नृत्ते—नर्तने, अनुचित,—अयोग्य अनभ्यस्त इत्यर्थः, चिरन्तनशालीन—चिरलज्जाशील चिरविनीतो वा, [शालीनकौपीने "अदृष्टे" (५।२।२० पा०) इति खञि रूपम] यः कुलपुत्रकलोकः,—सत्कुलजात सुजनवर्गसमवाय, तस्य लास्येन—नर्तनेन, निरतिशयानन्दात् एतादृशैः एतैरपि नर्तितं तस्मात्याम् क्षते इति भावः, प्रथित,—प्रकाशित, पार्थिवस्य—राज्ञः पार्थिवे—राज्ञि वा अनुरागः,—प्रीतिः यस्मिन् तथाविधः।

(१११) अन्तरिति।—अन्तःस्मितेन—अन्तरीषद्धसता इत्यर्थः, क्षुद्रजन्तुनि

माणराजवल्लभ', क्वचित् ( ११२ ) मत्तकटककुट्टनीकण्ठलग्न-वृद्धार्य्यसामन्तनृत्तनिर्भरहसितनरपति', क्वचित् ( ११३ ) क्षिति-पाज्ञिसंज्ञादिष्ट दुष्टदासेरकगीत सूच्यमान सचिवचौर्य्यरतप्रपञ्चः, क्वचित् ( ११४ ) मदोत्कटकुटहारिकापरिष्वज्यमानजरत्प्र-व्रजितजनितजनहासः, क्वचित् ( ११५) अन्योऽन्यनिर्भरसद्दोद्धुर-

---

क्षुद्रदासीनामपि प्रमोदातिशयदर्शनादिति भाव क्षितिपालेन—राज्ञा, अपेक्षिता,—निरीक्षिता , यद्वा,—अपेक्षिता ,—उपेक्षिता इत्यर्थ, दृष्टेनापि अदृष्टेनेव, तद्दास-स्वप्रतिकूलस्वभाववत्त्वात इति भाव, क्षीबाभि,—मद्यपानेन मत्ताभि, चुद्राभि,—इतर-जातीयाभि, दासीभि —परिचारिकाभि, समाकृष्यमाणा,—आक्षिप्यमाणा, राज-वल्लभा,—राज्ञ सम्मानिता इत्यर्थ। यत्र तादृश ।

( ११२ ) मत्तेति।—मत्ताना—मधुपानविह्वलानां, कटककुट्टनीना—राजधानी-स्थितव्यभिचारिणीना, ("कटकोऽस्त्री नितम्बोऽद्रे ०। राजधानी वलययोरपि" इति मेदिनी ) कण्ठेषु—गलेषु लग्ना,—सम्बद्धा, ये वृद्धा',—स्थविरा, आर्य्या,—साधव, सामन्ता,—अधीश्वरा नृपतय, तेषा नृत्तेन—सविलासाङ्गविक्षेपरूपनर्त्तनेन हेतुना, निर्भरम्—अत्यन्त हसित,—कृतहास, नरपति,—सम्राट यत्र तथाभूत, विलासिनीभि सह राजरक्षाना नर्त्तन हास्यरसानुकूलमेव इति भाव ।

( ११३ ) क्षितिपेति।—क्षितिपस्य—राज्ञ, अक्षिसंज्ञया—नेत्रेङ्गितेन आदिष्ट',—आज्ञप्त दुष्ट,—दुर्जन, यो दास्या अपत्यं दासेरक,—दासीपुत्र इत्यर्थं, ["क्षुद्राभ्यो वा" (४।१।१३१ पा० ) इति पक्षे ढ्रकि तत कनि रूपम् ] षष्ठी वा, [ तस्येदमित्यर्थे तत्पालक' इत्यर्थं, अन्यथा सूच्यमानत्वानापत्ते ] तस्य गीतेन—गानेन, सूच्यमान,—प्रकाश्यमान, सचिवानाम—अमात्याना, चौर्य्येण—गोपनेनैषयं, रतप्रपञ्च,—निधुवनविहारविस्तार यत्र तथोक्त ।

( ११४ ) मदोत्कटेति।—मदोत्कटाभि,—मदमत्ताभि, कुटहारिकाभि,—कुट—घट, कुम्भमिति यावत् ( "कुट कोटे पुमानस्त्री घटे स्त्री परशौ गृहे" इति मेदिनी ) हरन्ति वहन्ति या तथोक्ताभि, कुम्भयोगेन जलवाहिनीभि दासीभि, परिष्वज्यमाना,—आलिङ्ग्यमाना नौरिव सकुटपुरुषार्थमिति भाव, ये जरन्त,—स्थविरा, प्रव्रजिता,—सन्न्यासिन तै जनित,—उत्पादित, जनाना हासो यस्मिन स ।

( ११५ ) अन्योऽन्येति।—अन्योऽन्यस्मिन —परस्पर, निर्भरसद्दो—अत्यन्तमाम्य, आत्यन्तिकी ईर्ष्यार्थ, तया उद्धुरा,—दृढा, उन्नतप्राया इत्यर्थ, उच्छृङ्खला इति,

चेटकपेटकारब्धावाच्यवचनयुद्धः, क्वचित् (११६) नृपाबला बलात्कार नर्त्यमान नृत्यानभिज्ञान्तःपुरपाल भावित भुजिष्यः, (११७) सपर्वत इव कुसुमराशिभिः, सधारागृह इव सीधुप्रपाभिः, सनन्दनवन इव पारिजातामोदैः, सनीहार इव कर्पूररेणुभिः, साट्टहास इव पटहरवैः, सामृतमथन इव कलकलैः, सावर्त इव रासकमण्डलैः, सरोमाञ्च इव भूषणमणिकिरणैः,

---

यावत, प्रवरधाध्यम वागयुद्ध रता इति भाव ये चेटका,—नीचदासा, गायकनर्त्तकपरिवारकादय इति यावत, तेषां पेटकेन—कदम्बकेन, समूहेन इत्यर्थः, ("पेटक पुस्तकादीनां मञ्जूषायां कदम्बके" इति मेदिनी) आरब्ध—प्रक्रान्तम्, अवाच्यम—अवक्तव्य वचनयुद्ध—मुखकलह यत्र तथोक्त, अन्योऽन्य कुवाक्यप्रयोग एव कौतुकानन्दप्रद इति भाव।

(११६) नृपेति।—नृपस्य—राज्ञ, अबलाभि,—नारीभि, राजयोषिद्भिरित्यर्थः, बलात्कारेण—बलप्रयोगेण,नर्त्यमाना,—नर्त्तिनु प्रवर्त्यमाना, नृत्यानभिज्ञा, —नर्त्तनज्ञानरहिता ये अन्तःपुरपाला —अन्तःपुररक्षिण, तैषु तै वा भाविता,—भद्री। एते अस्माक नर्त्तनशता हास्यमीति चिन्तिता, यद्वा,—सततपरिचयेन सद्भावान्विता; इत्यर्थ भुजिष्या,—किङ्कर्य यस्मिन तथोक्त।

(११७) सपर्वत —पर्वतसहित इव पुष्पपूर्ण इत्यर्थ। कुसुमराशिभि,—राशीकृत पुष्पसमूहै इत्यर्थः। सीधुप्रपाभि,—सुराया पानीयशालिकाभि, सधारागृह इव—जलधारागृहसमन्वित इवेत्युपमा, सीधुप्रपा धारागृहयो साहश्यञ्चोत्सुकताजनकत्वम्, एवमग्रेऽप बोध्यम। पारिजातामोदै,—पारिजातपुष्पसौरभै ["पारिजातामोदै" इत्यत्र "पारिजातकामोदै" इति पाठे,—पारिजात एवेत पारिजातक तस्य आमोदै] सनन्दनवन इव—नन्दनवन—देवोद्यान तत्सहित इव, देवोद्याने यथा पारिजातानामामोद, तथा अत्रापि पारिजातगन्धैर्भरित भाव। सनीहार इव—हिमबिन्दुसहित इव, कर्पूररेणुभि,—कर्पूरचोदै। साट्टहास इव—अट्टहास —उच्चैर्हासविशेष, तेन सहित इव पटहरवै,—आनकध्वनिभि। सामृतमथन इव—अमृतमन्थनसहित इव कलकलै—कोलाहलै, अमृतमन्थनकाले यथा देवासुराणा कलकल सञ्जात, तथाऽत्रापीति भाव। सावर्त इव—जलभ्रमसहित

सहित इव रासकमण्डलै,—क्रीडा परस्पर हस्तधारणेन मण्डलाकारेण नर्त्तन रास, धर्माधिनस्त्रीपुरुषाणां विभङ्गिमान्नर्त्तन वा, [तत स्वार्थे कन्प्रत्यय] रासकानां

सपट्टबन्ध इव चन्दनललाटिकाभिः, सप्रसव इव प्रतिशब्दकैः, सप्ररोह इव प्रसाददानैः उत्सवामोदः।

(११८) स्कन्धावलम्बमानकेसरमालाः काम्बोजवाजिन इव आस्कन्दन्तः, तरलतारका हरिणा इव उड्डीयमानाः, सगरसुता इव खनित्रैः निर्दयैः चरणाभिघातैः दारयन्तो भुवम् अनेकसहस्रसङ्ख्याः चिक्रीडुः युवानः। कथमपि (११९) तालाव-

---

गणनानि—समूहा ते। सरोमाञ्च इव—रोमहर्षसहित इव। भूषणेति।—भूषणमणीनाम्—अलङ्कारीभूतानां रत्नानाम् अलङ्कारयोजितरत्नानां वा, किरणैः,—प्रभाभिः। सपट्टबन्ध इव—बद्धोष्णीष इव चन्दनललाटिकाभिः,—चन्दनतिलकरूपैः अलङ्कारैः। सप्रसव इव—सफल इव प्रतिशब्दकैः—प्रतिध्वनिभिः। सप्ररोह इव—साङ्कुर इव प्रसाददानैः,—पारितोषिकवितरणैः पारितोषिकार्थं कोशागारादानीय प्रीतिभावसम्मुखे इतस्ततः प्रक्षिप्तैः धनादिभिरित्यर्थः, उद्दामपवने विक्षोभित महाम्बुतरङ्गितनीरधाम यथा मणिकादिषु न माति, तथा महोत्सवेषु महाराज दीयमानार्थसङ्घः साधारणानुजीविषु अपर्याप्ततया न समाविष्याम्य।

(११८) स्कन्धेति।—स्कन्धेषु—गलदेशेषु इत्यर्थः, अवलम्बमाना,—दोलायमाना केसरमाला—बकुलमाला, ("केसरः किञ्जल्के। सिंहसटायां पुन्नागे बकुले नागकेसरे॥" इति मेदिनी) दोलायमानबकुलस्रजः येषां तथोक्ताः। काम्बोजवाजिन इव—काम्बोजाः—काम्बोजदेशीयाः बाह्लीकदेशजा इत्यर्थः, वाजिनः,—अश्वा इव, आस्कन्दन्तः—आस्फोटयन्तः आक्रामन्तो वा परस्परमिति शेषः, यद्वा परोत्कर्षेच्छया इति भावः। तरलतारकाः—चञ्चलकनीनिकाः, हरिणा इव—मृगा [illegible] उड्डीयमानाः,—उत्प्लवमाना इत्यर्थः, यद्यपि पक्षिणां गतौ प्रयुज्यमानस्य डीयते धातोः मनुष्यगमनार्थकत्वं दृश्यते तथापि इहातिचमत्कृत्यर्थमुत्प्लवने प्रयुक्तः, तस्य विषयः बहुतरत्वात् तेन च न प्रसिद्धिविरोधाख्यः काव्यदोषः। सगरसुता इव—सगरस्य—तदाख्यस्य राज्ञः सुता इव—पुत्रा इव षष्टिसहस्रसङ्ख्याका इति भावः। खनित्रैः—अवदारणैः, खननसाधनैः अस्त्रैरित्यर्थः। चिक्रीडुः,—क्रीडन्ति स्म। ते खनित्रैः, एते चरणाघातैः ते नियतसङ्ख्याकाः, एते असङ्ख्याका इति तेभ्योऽतिरेकमेतेषाम् इति हृदयम्।

(११९) तालेति।—तालैः,—कांस्यतालैः, करतालैरित्यर्थः, ८

चरचारणचरणक्षोभं चक्रमे क्षमा। (१२०) क्षितिपाल-कुमारकाणां खेलताम् अन्योन्यास्फालैः आभरणेषु मुक्ताफलानि पेतुः। (१२१) सिन्दूररेणुना पुनरुत्पन्नहिरण्यगर्भगर्भशोणित-शोणायम् इव ब्रह्माण्डकपालम् अभवत्। (१२२) पटवास-पांशुपटलेन प्रकटितमन्दाकिनीसैकतसहस्रमिव शुशुभे नभ-स्तलम्। (१२३) विप्रकीर्यमाणपिष्टातकपरागपिञ्जरितातपा भुवनक्षोभविशीर्णपितामहकमलकिञ्जल्करजोराजिरञ्जिता इव

---

"तालावा" इति ख्याते मल्लीनाट्यीभूतभ्रमणविशेषे वा, यदुक्तम्,—"स्फुटितालि-कामतेर्दुत चारणजनस्य क्रीडितभ्रमणम्। तस्मात्सतालिकधाराजाडितापदबहुलाकारि-वका ॥" चरचरन्तीति तालावचराः, तादृशाश्च चारणाः—कुशीलवाः, नृत्यता-मिति भावः, चरणक्षोभं—पदविक्षेपजनिताघातं, चक्रमे—केनापि प्रकारेण, एतेन अतिबाहुल्यमुत्प्रेक्ष्यते। चक्रमे—सेहे। क्षमा—पृथ्वी।

(१२०) क्षितिपालकुमारकाणां—सामन्तकुमाराणाम्। खेलतां—क्रीडताम्। अन्योन्यास्फालैः,—परस्पराक्रन्दनैः, आभरणेषु—अलङ्कारेषु मध्ये, मुक्ताफलानि—मौक्तिकानि, पेतुः—विकरणानि प्रापुः, निभिन्नानि।

(१२१) सिन्दूरेति।—सिन्दूररेणुना—सिन्दूरचूर्णेन। पुनरिति।—पुन-रुत्पन्नस्य—द्वितीयवारं समुत्पन्नस्य हिरण्यगर्भस्य—प्रजापतेः ब्रह्मणः, दृश्यस्य चेति भावः, गर्भशोणितेन—गर्भादि प्रसवजनितप्रचुरतरशोणितेन, शोणा,—रक्ता, आया,—दिशो यस्य तथोक्तम्। ब्रह्माण्डकपालं—पृथ्वीतलमित्यर्थः।

(१२२) पटवासेति।—पटवासानां—वस्त्रवासकगन्धद्रव्यविशेषाणां, पांशुपटलेन—रजःसमूहेन, विक्षिप्यमाणेनेति भावः, यद्वा,—पटवासाः,—वस्त्रगृहाः एव पांशवः,—धूलिविशेषाः, धावनादिति भावः, तेषां पटलेन। प्रकटितेति।—प्रकटितं—दर्शितं सहस्रं मन्दाकिन्याः—स्वर्गगङ्गायाः, सैकतसहस्रं—वालुकामयभूमिसमूहः यस्मिन् तथोक्तमिव। नभस्तलम्—अन्तरीक्षम्, बहलोत्क्षिप्तगन्धचूर्णधारावाहुल्यादेवमुत्प्रेक्षितम्।

(१२३) विप्रकीर्यमाणेति।—विप्रकीर्यमाणैः,—प्रसार्यमाणैः, पिष्टातकानां—पटवासकानां, परागैः,—रेणुभिः पिञ्जरिता,—रञ्जिता इत्यर्थः, आतपाः—धर्मयूखा येषु तथाभूता। भुवनेति।—भुवनस्य—जगतः, क्षोभेण—सञ्चलनेन, आनन्दजनितेनेति भावः, विशीर्णं—विदलितं, यत् पितामहकमलं—ब्रह्मकमलं

रिपुर्दिवसः। (१२४) सहट्टविघटितहारपतितमुक्ताफलपटलेषु चस्खाल लोकः।

(१२५) स्थानस्थानेषु च मन्दमन्दमास्फाल्यमानालिङ्ग्यकेन शिञ्जानमञ्जुवेणुना (१२६) झणझणायमानझल्लरीकेण ताड्यमानतन्त्रीपटहिकेन (१२७) वाद्यमानानुतालालाबुवीणेन काल-

---

प्रत्येकं सम्पादकारकीभूत पदमित्यर्थः, तथा किञ्जल्काः,—केसराः, तेषु ये रजसां—परागाणां, राजयः,—समूहाः, तैः रञ्जिता इव। रेणु—परागैः।

(१२४) सहट्टेति।—सहट्टेन—परस्परसंघर्षेण, लोकानाम् अतिनिविडत्वादिति भावः, विघटितेभ्यः,—छिन्नेभ्यः हारेभ्यः पतितानि यानि मुक्ताफलानि—मौक्तिकानि, पटलानि—समूहाः तेषु, चस्खाल—पपात, पिच्छिलत्वात् उन्नतानतत्वाच्च तेषामिति भावः।

(१२५) स्थानस्थानेषु—क्वचित् क्वचित् प्रदेशेषु, स्थानं—स्थितिः, मर्यादा च, तत्प्रकारकेषु इत्यर्थः, अथवा "प्रकारे—" (८।१।१२ पा०) इत्यादिना न द्विरुक्तिः कर्मधारयवद्भावः इति स्थानेषु स्थानेषु वाक्यमेव स्यात् ], यद्वा,—स्थानानां—भूमि-भागानां मध्यानां, स्थानानि—प्रधानमण्डपादीनि तेषु इति विग्रहः, [ "षष्ठ्यर्था बहु समस्यत इति वाच्यम्" (वा०) इति समासविधानात् ]। "स्थानस्थानेषु" इत्यस्य "पदपल्लवकाशिषु प्रवृत्ते" इत्युत्तरेणान्वयः, तं विशिनष्टि—कालीयवाद्येनानुगम्यमाना इत्यादिभिः।—कालीयवाद्येनेति विशिनष्टि, मन्देत्यादिभिः।—मन्द मन्दम्—शनैःशनैः, आस्फाल्यमानः,—ताड्यमानः, आलिङ्ग्यकः,—मुरजवाद्यभेदः यस्मिन् तेन, ("मृदङ्गा मुरजा भेदास्त्वङ्क्यालिङ्ग्योर्ध्वकास्त्रयः" इत्यमरः)। शिञ्जानेति।—शिञ्जानः,—रणन् [ चक्षिङ्‌धातोरनेपदिनः शिञ्जिधातोः "लटः—" (३।२।१२४ पा०) इत्यादिना शानचि रूपम् ] मञ्जुः,—मनोज्ञः, वेणुः,—वंशीवाद्यभेदः यत्र तथोक्तेन।

(१२६) झणेति।—झणझणायमाना—झणझणेति शब्दं कुर्वाणा झल्लरी—वाद्यभेदः यत्र तादृशेन। ताड्यमानेति।—ताड्यमाना—वाद्यमाना, तन्त्रीपटहिका—पटहवाद्यविशेषः यत्र तथोक्तेन।

(१२७) वाद्यमानेति।—वाद्यमाना—वादयमाना, अनुताला—अनुगततालाः, अलाबुवीणा—अलाबुनिर्मिता वीणा यस्मिन् तेन। कालेति।—का-

कांस्यकोशीक्वणितकाहलेन (१२८) समकालदीयमानानुत्तालतालकेन चातोद्यवाद्येन अनुगम्यमाना, पदे पदे झणझणितभूषणरवैः अपि सहृदयैः इव अनुवर्त्तमानताललयाः, कोकिला इव (१२९) मदकलकाकलीकोमलालापिन्यो विटानां कर्णामृतानि अश्लीलरासकपदानि गायन्त्यः, समुण्डमालिकाः, सकर्णपल्लवाः, सचन्द्रतिलकाः, समुच्छ्रिताभिर्बलयावलीवाचालाभिः

---

मधुरस्वना, या कांस्यकोशी—करतालिका, तया क्वणितेन—रणितेन सह काहला—महाशब्दवाद्यभाण्डभेदः, यद्वा—कांस्यकोशी—"कांसी" इति प्रसिद्ध कांस्यनिर्मितवाद्यभेदः, तया सह क्वणिता काहला—वाद्यभाण्डविशेषः यत्र तथाविधेन, ("काहला वाद्यभाण्डस्य भेदे चास्फुटवाचि भिदि" इति मेदिनी)।

(१२८) समेति।—समकालम्—युगपत्, दीयमानः—सम्पाद्यमानः इत्यर्थः, अनुत्तालः—अनुत्कटः, तालः—स्वरविशेषः, दिवमात्रादिकालक्रियामानं वा यत्र तेन, ["तालकेन" इत्यत्र "तानकेन" इति पाठे,—जनपदाश्रयविशेषेण नानाङ्गस्वरभेदेन इत्यर्थः] चातोद्यवाद्येन—"ततं वीणादिकं वाद्यमानद्धं मुरजादिकम्। वंशादिकन्तु सुषिरं कांस्यतालादिकं घनम्। चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम्॥" इत्यमरोक्तेन वाद्यविशेषेण, अनुगम्यमाना—अनुस्रियमाना। पदे पदे—प्रतिपदमेव, झणझणितभूषणरवैः—झणझणायमानालङ्कारध्वनिभिः। सहृदयैरिव—रसग्राहिभिः सामाजिकैरिव। अनुवर्त्तमानेति।—अनुवर्त्तमानौ—अनुसरन्तौ, ताललयौ—यथाक्रमं दीयमानमानसाम्यरूपौ यासां ताः ("तालः कालक्रियामानं लयः साम्यमथास्त्रियाम्" इत्यमरः) तत्र हस्तेन अङ्गुल्या वा आकुञ्चनप्रसारणवर्तिक्रियया कालस्य परिमाणं मानम्, कालक्रियायां वादित्रादिदशायां तथाविधं मानं ताल उच्यते। लयः पुनः गीतवाद्यपादन्यासादीनां क्रियाकालयोः परस्परं समतारूपः इत्यवगन्तव्यम्।

(१२९) मदेति।—मदेन—मद्यपानजनितेन उल्लासेन, मदेन—मदात्—हर्षात्, कला—मधुरास्फुटा काकली—सूक्ष्ममधुरध्वनिः, ("काकली तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुटे। कलः" इत्यमरः) तया कोमलम्—मृदुमन्दं, पेशलमित्यर्थः, मनोज्ञमिति यावत् तद्यथा तथा आलपन्तीति तथोक्ताः। विटानाम्—लम्पटानां, विलासिनामित्यर्थः, कर्णामृतानि—श्रुतिसुखानीत्यर्थः। अश्लीलेति।—अश्लीलानि—ग्राम्याणि, लज्जावहानि इति यावत्, रसयन्तीति रासकानि—शृङ्गाररसोद्दीपनानीति भावः, पदानि—शब्दवस्तूनि, गायन्त्यः—उच्चारयन्त्यः। समुण्डमालिकाः—सपुष्प

बाहुलतिकाभिः सवितारम् इव आलिङ्गयन्त्यः, कुङ्कुमप्रकट-रुचिरकायाः (१२०) काश्मीरकिशोर्य इव वल्गन्त्यः, नितम्बबिम्ब-लम्बिविकटकुरुण्टकशेखराः प्रदीप्ता इव रागाग्निना, सिन्दूर-च्छटाच्छुरितमुखमुद्राः शासनपट्टपङ्क्तय इव अप्रतिहतशासनस्य

---

कामिनः। समुच्छ्रिताभिः,—समुत्क्षिप्ताभिः, वलयावलीवाचालाभिः,—वलयराजिभिः शब्दकारिणीभिः इत्यर्थः, बाहुलतिकाभिः,—भुजवल्लीभिः, सवितारं—सूर्यम्, आलिङ्गयन्त्य इव—आश्लिष्यन्त्य इव, [ आङ्पूर्वकात् लिङ्गयतेः चौरादिकात् शतरि ङीपि रूपम् ] नर्तनकाले बाहुद्वय विक्षिप्तियोगादिव ऊर्ध्वं प्रसार्य च गमनात् सूर्यालिङ्गन कल्पनैवमुत्प्रेक्षा। कुङ्कुमेति।—कुङ्कुमेन प्रकटः,—प्रकाशमानः, अङ्गरागेण लिप्तत्वं, रक्तवर्णोऽसि भावः, एवम्,—सौन्दर्यवर्धनाभिलाषात्, अथवा,—कुङ्कुमपङ्केषु लोठनादिति भावः, तथा रुचिरः,—मनोज्ञः, कायः,—देहः यासां ताः।

(१२०) काश्मीरकिशोर्य इव—कुङ्कुमनिर्मिता कुमार्य इव, काश्मीर-देशीया कुमार्य इव वा, [ कश्मीरे शब्दार्थत्वात् "कश्मीरुच च" ( अ० ४ पा० १२ सू० ) इति ईरणि मुडागमे काश्मीर इति, तत्र भवा ता इति बोध्यम ] वल्गन्त्यः,—चलन्त्यः। नितम्बेति।—नितम्बबिम्बेषु—नितम्बभागेषु, लम्बिनः,—लम्बमानाः, विकटाः,—आयताः इत्यर्थः, कुरुण्टकशेखराः,—रक्तपुष्पविशिष्टमल्ल्यः इत्यर्थः यासां ताः, [ "कुरुण्टक" स्थाने "कुरवक" इति पाठोऽपि न पर्याय। प्रथम पाठे—कुपूर्वात् रुण्टते चषि, द्वितीये,—कुरधातो अवक्प्रत्यये सिद्धि ]। प्रदीप्ता इव—प्रज्वलिता इव, रागाग्निना—अनुरागवह्निना, रक्तकुरुण्टकशेखरत्वात् रक्तत्वादिति भावः। सिन्दूरेति।—सिन्दूरच्छटाभिः,—सिन्दूरतिलकरागैः, इत्यर्थः, छुरिता —रञ्जिता, मुखमुद्रा,—मुखशोभा, ललाटसीमन्तादयो वा, मुखमेव मुद्रा इति वा यासां ताः, मुद्राविशेषाणां सिन्दूरेण रञ्जितत्वं लोके दृश्यते, अथवा,—सिन्दूरच्छटाभिः,—सिन्दूरप्रभाभिः, छुरिता मुखे—अग्रभागे, मुद्रा,—प्रत्ययोत्पादकचिह्नविशेषो यासां ताः, शासनपट्टानामग्रभागेऽपि सिन्दूराङ्किता मुद्रा मुद्राङ्के इति लोकव्यवहारः। शासनपट्टपङ्क्तय इव—शासनपट्टाः,—नियोगपत्राणि दानपत्राणि वा, "सनन्दपत्र" इति भाषया प्रसिद्धाः, तेषां पङ्क्तय इव—राजय इव। अत्र बहुवचनेन बहुनियुक्तविविधशासनपट्टविधि प्रतिदिनं प्रतिस्थानं लिखितुः शासितुः समग्रमहाराजस्य आज्ञाबहुत्वम्, आय, यथा न केनचिदपि शक्यं, तथा,

कन्दर्पस्य,(१३१) मुष्टिप्रकीर्य्यमाणकर्पूरपटवासपांशुला मनोरथ-सञ्चरणरथ्या इव यौवनस्य, (१३२) उद्दामकुसुमदामताडित-तरुणजनाः प्रतीहार्य्य इव तरुणमहोत्सवस्य, प्रचलत्पल्लवकुण्डला ललन्त्यो लता इव मदनचन्दनद्रुमस्य, (१३३) ललितपदहंसकरव-मुखराः समुल्लसन्त्यो वीचय इव शृङ्गाररसस्य, (१३४) वाच्यावाच्य-विवेकशून्या बालक्रीडा इव सौभाग्यस्य, घनपटहरवोत्कण्टकित-

मन्मथस्य राज्ञ शासनपरभूता ता इहा सर्वे एव दर्शका कन्दर्पवशीभूता तच्छासन स्वीकुरु इति घयगम्यते। अमतिकृतशासनस्य—अव्याहताज्ञस्य।

(१३१) मुष्टीति।—मुष्टिभि,—बद्धकरै प्रकीर्य्यमाणे,—प्रक्षिप्यमाणे, विलासिभिरिति भाव कर्पूरपटवासै—कर्पूरबहुलसुगन्धिचूर्णैरित्यर्थ, पांशुला,—धूलाभिरावृता इत्यर्थ। मनोरथेति।—मनोरथेन—स्वेच्छया, सञ्चरण—भ्रमण, तस्य रथ्या इव—पन्थान इव, यौवनस्य—तारुण्यस्य यथेच्छसम्भोगयौवनशालिन्य इति भाव, रथ्या अपि रथ्यासु सञ्चरणात पांशुला भवन्ति।

(१३२) उद्दामेति।—उद्दामै—उत्कटै, विपुलैरित्यर्थ, कुसुमदामभि,—पुष्पमाल्यै ताडिता,—आहता तरुणजना,—युवजना याभि तथोक्ता, तरुण-महोत्सवस्य—तरुणाना—यूना, महोत्सव तस्य प्रतीहार्य्य इव—रक्षिण्य इव स्वयं प्रतीहार्य्योऽपि महोत्सवस्थले जनान ताडयन्ति। प्रचलत्पल्लवकुण्डला,—प्रचलन्ति—नृत्यवेगात आन्दोल्यमानानीत्यर्थ पल्लवानि—किसलया एव, कुण्डलानि—कर्णभूषणानि यासा,—पल्लवानि कुण्डलानीव यासा ता, अत एव ललन्त्य,—स्फुरन्त्य, ["ललन्त्य" इत्यत्र 'लसन्त्य' इति पाठोऽपि तु दृश्यते] लता इव—प्रतत्य इव। मदनचन्दनद्रुमस्य—मदन,—काम एव, चन्दनद्रुम —चन्दनतरु तस्य।

(१३३) ललितेति।—ललितानि—रमणीयानि, पदानि—चरणानि, तेषु हंसका—नूपुरा, (पादाङ्गद तुलाकोटिमञ्जीरो नूपुरोऽस्त्रियाम्। हंसक पादकटक" इत्यमर) क्षुद्रहंसाश्च, [अल्पार्थे कनप्रत्ययः] तेषां रवेण—ध्वानेन, मुखरा,—शब्दिता, यद्वा—ललितानि पदानि यासा ताश्च ता हंसकरवमुखराश्च तथाभूता। समुल्लसन्त्य,—समुल्लासमाना। वीचय इव—तरङ्गा इव। शृङ्गाररसस्य—प्रधानोज्ज्वलरसस्य, रसस्य—जलस्य च।

(१३४) वाच्येति।—वाच्य—वक्तव्यम अवाच्यम—अवक्तव्य, तयोर्विवेकेन—विचारेण, शून्या,—रहिता, यथाकाम व्याहारिण्य इत्यर्थ। बालक्रीडा इव—मातृ

गात्रयष्टयः केतक्य इव कुसुमधूलिमुद्गिरन्त्यः, कमलिन्य इव दिवसमुत्फुल्लाननाः, कुमुदिन्य इव रात्रावनुपजातनिद्राः, (१३५) आविष्टा इव नरेन्द्रवृन्दपरिवृताः, प्रीतय इव हृदयमपहरन्त्यः, गीतय इव रागमुद्दीपयन्त्यः, पुष्टय इव आनन्दमुत्पादयन्त्यः, मदमपि मदयन्त्य इव, रागमपि रञ्जयन्त्य इव, आनन्दमपि आनन्दयन्त्य

---

विलासवशामिव, अन्यत्र—बालाना—शिशूना, क्रीडा—खेला, ("क्रीडा केलिप्रकारे स्यात् विलासवशगयोरपि" इति मेदिनी), नवाभ्युदयमागच्छन् दरिद्र अविवेकी यथा सौभाग्यमदेन यथेच्छव्यवहार शिष्टाशिष्टजनविषयकविवेकविच्युत बाल्याबाल्यचापलयुक्तो भवति, तथैव ता पण्ययोषितोऽपि नृत्यकालेऽभूवन् इत्याशय। सौभाग्यस्य—शुभादृष्टविलासस्य। घनेनेति।—घनेन—गम्भीरेण, पटहस्य—वाद्यविशेषस्य, नृत्यसमकाल ताड्यमानस्येत्यर्थ, रवेण—ध्वनिना, अन्यत्र,—घन,—मेघ एव, पटह,—वाद्यविशेष तस्य ध्वनिना—रवेण, उत्कण्टकिता,—उद्गत रोमहर्षा, सहसा वाद्यध्वनिश्रवणादिति भाव, अन्यत्र,—प्रकटितकण्टका गात्रयष्टय,—अङ्गलता यासा तथोक्ता, अन्यत्र,—शाखाप्रशाखा इव यष्टय,—काण्डा, यासा ता। केतक्य इव—केतकलता इव। कुसुमधूलि—पुष्परागम उद्गिरन्त्य,—उत्क्षिपन्त्य इत्यर्थ। दिवसं—दिनं व्याप्य, उत्फुल्लानना,—उत्फुल्लानि—प्रफुल्लानि, आननानि—मुखानि, प्रियजनदर्शनेन सह हृदयनायकविषयकालापेन इति भाव यासा ता, अन्यत्र,—विकसिता, कमलिनीना दिवाविकासित्वात्। अनुपजातनिद्रा,—न उपजाता—उपगता, कामोद्रेकातिशय्यात्, राजसभादौ नर्तनादिविलासव्यापारव्यस्तत्वात् वा इति भाव, निद्रा—स्वाप यासा ता, अनिमीलन्त्यश्च, कुमुदिनीना रात्रिविकासित्वादिति भाव।

(१३५) आविष्टा इव—अधिष्ठिता इव, भूतादिभिरिति शेष। नरेन्द्रेति।—नरेन्द्राणा—राज्ञा, भूतवैद्यानाञ्च, भूतापसारणमन्त्रविदामित्यर्थ, ("नरेन्द्रस्तु महीपाले विषवैद्ये च पुस्ययम्" इति मेदिनी, अत्र चकारग्रहणात् भूतवैद्यादय तदर्थका ज्ञेया) वृन्दे,—समूहे, परिवृता—वेष्टिता, पिशाचोपहता जना यथा भूतवैद्यपरिवेष्टिता भवन्ति तथा एतस्योषितोऽपि राजवृन्दपरिवृता आसन्निति भाव, इति श्लेषमूलादुपमाऽलङ्कार। हृदयमपहरन्त्य,—मनोहारिण्य। राग—गायनविशेषम्, अनुरागमिति यावत्, अन्यत्र—गान्धारादिकञ्च, उद्दीपयन्त्य,—उत्तेजयन्त्य। पुष्टय

इव, नृत्यमपि नर्त्तयमाना इव, उत्सवमपि उत्सुकयन्त्य इव, (१३६) कटाक्षितेषु पिबन्त्य इवापाङ्गशुक्तिभिः, तर्ज्जनेषु संयमयन्त्य इव नखमयूखपाशैः, कोपाभिनयेषु ताडयन्त्य इव भ्रूलताऽतिभागैः, प्रणयसम्भाषणेषु वर्षन्त्य इव सर्व्वरसान्, चतुरचङ्क्रमणेषु विकिरन्त्य इव विकारान्, पण्यविलासिन्यः प्रानृत्यन् ।

---

इव—स्फुरंत्य इव इत्यर्थः । मदमपि—मत्ततामपि, मदयन्त्यः,—समुत्तेजयन्त्य इत्यर्थः, मदो हि सर्वजनानुत्तेजको भवति, मदस्तु ता आश्रित्य स्वयमेव उत्तेजितोऽभवत् इति भावः । एवमुत्तरत्रापि सङ्गतिः वरणीया, अत मदादीनां यदि एतादृशी दशा, तदा का कथा मदभिज्ञानामिति अपिशब्दस्यार्थः । राग—सम्भोगाभिलाषमित्यर्थः, रञ्जयन्त्यः,—वर्द्धयन्त्य इत्यर्थः । उत्सवम्—आनन्दजनकानुष्ठानमिति यावत्, उत्सुकयन्त्यः,—उत्सुकं कारयन्त्यः, [ "तत्करोति तदाचष्टे" (ग०) इति इयन्ता उत्सुकात् करोति णौचि रूपम् ] उत्सवदर्शनार्थं सर्वे उत्कण्ठिता भवन्ति, उत्सवस्तु स्वयमेव ता द्रष्टुमुत्सुको जात इति भावः । [ मदादिषु वाक्यनिकरेषु लोकोत्तर चमत्कारातिशयजननोत्पादनमदिक्रिया उत्प्रेक्षिता इति क्रियोत्प्रेक्षालङ्कारः ] ।

(१३६) कटाक्षितेषु—अपाङ्गदर्शनेषु इत्यर्थः, [ "तदस्य सञ्जातम्—" (५।२।३६ पा०) इत्यादिना इतचि रूपम् ] अपाङ्गशुक्तिभिः,—अपाङ्गाः,—नेत्रप्रान्तभागा एव, ("अपाङ्गौ नेत्रयोरन्तौ" इत्यमरः) शुक्तयः,—मुक्तास्फोटाः ताभिः, ("मुक्तास्फोटः स्त्रियां शुक्तिः" इत्यमरः ) पिबन्त्य इव—ग्रसन्त्य इव तरुणानिति शेषः, लोकेऽपि शुक्तिभिर्दुग्धादिपानं पिबन्ति । [ दुग्धादिपानयन्त्रं शुक्तिभिः तरुणपानमसम्भवमिति विरोधः, ताभिः प्रियहृदया कर्षकत्वेन तासां पितृभूमिधारकत्वेन वा कामार्त्ती क्रियते इति विरोधाभासः उत्प्रेक्षा-सङ्कीर्णः ] तर्जनेषु—भर्त्सनासु अङ्गुलिसञ्चालनविशेषेषु, नखमयूखपाशैः—नखानां मयूखाः,—किरणाः,पाशाः,—रज्जव इव तैः, संयमयन्त्य इव—बध्नन्त्य इव । कोपाभिनयेषु—कोपसूचकाङ्गचेष्टासु भ्रूलताऽतिभागैः,—भ्रुवौ सङ्कोचनानन्तरमतिविक्षेपैरित्यर्थः, भ्रूलताभिघातैरित्यर्थो वा । [ "भ्रूलताऽतिभागैः" इत्यत्र "भ्रूलताऽऽदिभागैः" इति पाठः,—भ्रूनेत्रमुखप्रभृत्यवयवैरित्यर्थः ] प्रणयसम्भाषणेषु—प्रेमालापेषु, सर्व्वरसान्—सर्वान्—सम्पूर्णान् न तु किञ्चिन्मात्रानिति भावः, रसान्—शृङ्गाररसान्, अनुरागकथान् वा, वर्षन्त्य इव—मुञ्चन्त्य इव । चतुरचङ्क्रमणेषु—विदग्धभ्रमणेषु, इतस्ततो सविलासपरिभ्रमणेषु इत्यर्थः, विकारान्—कामभावविभ्रमान्, विकिरन्त्य इव—विक्षिपन्त्य इव, तद्दर्शकेभ्य इति भावः ।

मानानीलोत्पलवनाः, काश्चित् (१४१) चलच्चरणच्युतालक्तकारुणस्वेदशीकरसिच्यमानभवनहंसाः सन्ध्यारागरज्यमानेन्दुबिम्बा इव कौमुदीरजन्यः, काश्चित् (१४२) कण्ठनिहितकाञ्चनकाञ्चीगुणाञ्चितकञ्चुकिविकारकुञ्चितभ्रुवः, कामवागुरा इव प्रसारितबाहुपाशा राजमहिष्यः प्रारब्धनृत्या विरेजुः।

---

चामराणां—चामरव्यजनानां, छटासु—श्रेणिषु, लग्न,—सक्तः, य विकण्टक,—"विकण्ठकस्तु चास्य स्यात् विभीरवेण भूषणम्" इत्युक्तलक्षण रत्नवयघटितकर्णाभरणभेद, तेन वलिता,—सवलिता, सङ्कुचिता इत्यर्थ वा, चाकर्षणेन कर्णपीडाऽनुभवात् शालीनताऽऽतिशय्यात् वा इति भाव, विकटा,—उत्कटा, विशाला वा, कटाक्षा,—अपाङ्गावलोकनानि यासां तथोक्ता, अत एव ध्वनीति।—हसै,—मराले; आक्रम्यमाणानि—आश्रित्य नीयमानानि, नीलोत्पलवनानि यासां तथाविधा, सरस्य इव—वाप्य इव।

(१४१) चलदिति।—चलद्भ्या—सञ्चरद्भ्यां, चरणाभ्यां—पादाभ्यां, च्युतानि—निर्गलितानि अलक्तकानि—लाक्षाद्रवा, अरुणा,—रक्ता, स्वेदा इव, तेषां शीकरै,—बिन्दुभि, सिच्यमाना —आर्द्रीक्रियमाणा, रज्यमाना इति यावत, भवनहंसा,—गृहपालितहंसविशेषा याभि तथोक्ता, अत एव सन्ध्यायां,—सन्धौ भवा, सन्ध्यायते परस्परं अस्यामिति वा तस्या, राग,—लौहित्यं, तेन रज्यमान—लोहितायमानम्, इन्दुबिम्ब—चन्द्रबिम्बं यासां ता, कौमुदीरजन्य इव—"कौ मोदन्ते जना यस्यां नानाभावै परस्परम्। हृष्टास्तुष्टा सुखायत्तास्तेन सा कौमुदी स्मृता॥" इत्युक्तलक्षणा कार्त्तिकपौर्णमासीपूर्णा रात्रय [illegible] इत्यर्थः। [illegible] शीतलीकृतशोदारकान्तिमतीनां इपात्नदाना चन्द्रिकारजनीसाम्येन हर्षोद्दीपनसत्कातिशय सूच्यते।

(१४२) कण्ठेति।—कण्ठेषु—गलेषु, निहितेन—अर्पितेन, काञ्चनकाञ्चीगुणेन—सौवर्णमेखलादाम्ना, अञ्चितानां—पूजितानां, परिहासार्थं नियन्त्रितानां वा, कञ्चुकिनाम्—"अन्तःपुरचरो वृद्धो विप्रो (विप्रो) गुणगणान्वितः। सर्वकार्य्यार्थकुशलः कञ्चुकीत्यभिधीयते॥" इत्युक्तलक्षणानाम् अन्तःपुरचारिणां दौवारिकविशेषाणां, (विप्रविशेषाणां) विकारेण—विकृतभावेन, कण्ठे काञ्चीप्रदानादिति भाव, कुञ्चिता—कुटिलिता, [ "विकारकुञ्चित—" इत्यत्र "विकाराकुञ्चित—" इति पाठे,—आकुञ्चिता—ईषत्कुटिलिता इत्यर्थ ] भ्रू यासां तथोक्ता, कञ्चुकिनः विकारदर्शनेन तस्य तत्परिधाने अनिच्छा मुदा ईषत्कोपभावप्रकटनार्थम् इति भाव। कामवागुरा इव—कामस्य

विसस्मरु । (१५४) निर्गमिषया मुनीनामपि मनांसि विपुस्फुरु । सर्व्वस्वञ्च ददौ नरपतिः । दिशि दिशि (१५५) कुबेरकोषा इव अलुप्यन्त लोकेन द्रविणराशयः ।

(१५६) एवञ्च वृत्ते तस्मिन् महोत्सवे, शनैः शनैः पुनरपि अतिक्रामति काले, देवे च (१५७) उत्तमाङ्गनिहितरक्षासर्षपे, समुन्मिषत्प्रतापाग्निस्फुलिङ्गे इव गोरोचनापिञ्जरितवपुषि, (१५८) समभिव्यज्यमानसहजक्षात्रतेजसि इव हाटकबद्ध-

गाम्भीर्य्यमपहाय उन्मत्तवत् आचरन्ति स्म इति भावः । मत्ता इव—मद्यपानजविकारग्रस्ता इव विसस्मरुः—विस्मृतवन्तः ।

(१५४) निर्गमिषया—निर्गन्तुमिच्छया । विपुस्फुरुः,—विशेषेण स्पन्दन्ते स्म । विरागिणामपि वासनारहितेऽपि हृदये नर्त्तनानुरागोदयः किं वक्तव्यमन्येषाम् इत्याशयः । ["विपुस्फुरुः" इत्यत्र "विपुस्फुलुः" इति पाठोऽपि स एवार्थः] । सर्व्वस्वं—सकलं धनम् ।

(१५५) कुबेरकोषा इव—कुबेरस्य—धनाधिपस्य देवस्य ['कुम्बेर्नलोपश्च' (उ० १ पा० ६० सू०) इति कुम्बिधातोः एरचि नलोपे रूपम् अन्यस्मादपीष्यते इति भावः] कोषा इव—भाण्डागाराणीव अक्षयाणि इति भावः । द्रविणराशयः,—धनराशयः । लोकेन—याचकजनेन इति भावः । अलुप्यन्त—हृतानि इत्यर्थः ।

(१५६) "एवञ्च" इत्यस्य "देवी यशोवती गर्भेण आधत्त राज्यश्रियम्" इत्युत्तरेणान्वयः । वृत्ते—अवसिते इत्यर्थः । अतिक्रामति—अतिगच्छति । "देवे" इत्यादिपदं "हर्षे" इत्यस्य विशेषणम् ।

(१५७) उत्तमेति ।—उत्तमाङ्गे—शिरसि निहितानि—प्रक्षिप्तानि रक्षासर्षपाणि—भूताद्युपद्रवेभ्यः रक्षार्थे मन्त्रपूतसर्षपाणि येन यस्य तथोक्ते । समुन्मिषदिति ।—समुन्मिषन्—बहिः स्फुरन्, प्रतापाग्निः अन्तःस्थितस्येति भावः, स्फुलिङ्गाः,—कणसमूहाः यस्य तथाभूते इव । गोरोचनेति ।—गोरोचनया—तदाख्येन पीतवर्णमाङ्गलिकद्रव्यभेदेन पिञ्जरितं—पिङ्गलितं रञ्जितमित्यर्थः, वपुः—शरीरं यस्य तथोक्ते ।

(१५८) समभीति ।—समभिव्यज्यमान—सम्यक् स्फुटीभवदित्यर्थः, सहजं—स्वाभाविकं क्षात्रं—क्षत्रियोचितं तेजः—प्रतापः यस्य तथाभूते इव । हाटकेति ।—हाटकेन—स्वर्णेन, ("स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम्" इत्यमरः)

विकटव्याघ्रनखपङ्क्तिमण्डितग्रीवके, (१५९) हृदयोद्भिद्यमानदर्पाङ्कुर इव प्रथमाव्यक्तजल्पितेन सत्यस्य शनैः ओङ्कारमिव कुर्व्वाणे, मुग्धस्मितैः कुसुमैरिव मधुकरकुलानि बन्धुहृदयानि आकर्षति, (१६०) जननीपयोधरकलशपयःशीकरसेकादिव जायमानैः विलासहसिताङ्कुरैः दशनकैः अलङ्क्रियमाणमुखकमलके, (१६१) चरित्रे इव अन्तःपुरस्त्रीलोकदत्तकेन पाल्य-

---

बद्धा—नियन्त्रिता, विकटा—भीषणा, व्याघ्रस्य—शार्दूलस्य, नखपङ्क्तिः,—नखरराजिः, तया मण्डिता—अलङ्कृता, ग्रीवा—कण्ठदेशः यस्य तथाभूते, विशेष्य बालस्य रक्षाविधानार्थं स्वर्णादिमण्डितव्याघ्रनखमालिकया बालकग्रीवाऽलङ्करणं क्रियते इति लोकाचारः।

(१५९) हृदयेति।—हृदये—मनसि, उद्भिद्यमानः,—उद्भेदं गच्छन्, दर्पस्य—अहङ्कारस्य स्पर्द्धाया इत्यर्थः अङ्कुरः,—प्ररोहः यस्य तथाभूत इव, मानिव्रतानां मानाङ्कुरोद्गमः जन्मसहज इत्याशयः। प्रथमाव्यक्तेति।—प्रथम—वाक्स्फुरणप्रारम्भे इत्यर्थः, यत् अव्यक्तम्—अस्फुटं, जल्पितं—वचनं तेन, सत्यस्य—सत्ययुगस्य, सत्यवचसो वा, ओङ्कारमिव—प्रणवमिव तस्य अनधिकारिजनश्रवणशङ्कया अस्पष्टतया उच्चार्य्यत्वादिति भावः, यद्वा,—ओङ्कारमिव—अभ्युपगममिव, स्वीकारमिवेत्यर्थः, कुर्व्वाणे—उच्चारयतीत्यर्थः, अवश्यमेव सत्यमुपाचारं प्रवर्त्तयामि, सत्यमेव वच्मि, आहतमिति वा सदर्पम् अभिव्याहरतीति भावः। मुग्धस्मितैः,—रमणीयहास्यैः। बन्धुहृदयानि—बन्धुजनमनांसि, प्राकृतिकसारल्यमेव बन्धुहृदयावर्ज्जनकारणमिति भावः।

(१६०) जननीति।—जनन्याः,—मातुः यशोवत्याः, ["पतिवत्—" (उ० २ पा० १०१ सू०) इत्यत्र बाहुलकादनि ततो ङीपि रूपम्] पयोधरौ—स्तनौ, पयोधराः,—मेघाश्च, तौ कलशौ इव तयोः, ते कलशा इव इति च, जलाधारत्वादिति भावः, तेषां पयःशीकरसेकादिव—पयसा—दुग्धेन, जलेनापि च, शीकराः,—बिन्दवः, तेषां सेकात्—सेचनात्, वदने इति भावः, जायमानैः,—उत्पाद्यमानैः, विलासहसिताङ्कुरैः,—लीलाहास्यप्ररोहैः, अल्पसेकात् भूमावपि अङ्कुरः उद्गच्छति, दशनकैः—क्षुद्रदन्तैः, अलङ्क्रियमाण—शोभां नीयमानं, मुखकमलं—वदनपद्मं यस्य तथाभूते।

(१६१) चरित्रे इव—सुचरित्रे इव, ["चरित्रे इव" इत्यत्र "चारित्रे इव"

(१६७) पूर्वेषु च प्रसवदिवसेषु दीर्घरक्तनालनेत्राम् उत्पलिनीमिव सरसीं, (१६८) हंसमधुरस्वरां शरदमिव (१६९) प्रावृट्, (१७०) कुसुमसुकुमारावयवां वनराजिम् इव (१७१) मधुश्रीः, (१७२) महाकनकावदातां वसुधारा-

---

सन्नाय पुष्करे॥ महाविराट्शरीरस्य जलस्थस्य चिरं स्फुटम्। नवी बभूव कालेन सर्वाङ्गव्यापको ध्रुवम्॥ स च प्रविष्टः सर्वेषां लोम्नां विवरेषु च। कालेन महतः तस्मात् बभूव वसुधा मुने।॥ प्रत्येकं प्रतिलोमाच कूपेषु सा स्थिरा स्थिता। आविर्भूता तिरोभूता सा जले च पुनः पुनः॥ आविर्भूता सृष्टिकाले तज्जलोपर्यवस्थिता। प्रलये च तिरोभूता जलाभ्यन्तरवस्थिता॥" इति। राज्यश्रियं—तदाख्यां कन्यां, गर्भेण आधत्त—धृतवती, यथा,—भगवत्कमण्डलुरपि भूमिं पृष्ठेन धारितोऽपि यशोवती राज्यश्रियं गर्भेण दधार इत्यर्थः।

(१६७) "पूर्वेषु" इत्यस्य "दुहितरं प्रसूतवती" इत्युत्तरेणान्वयः। पूर्वेषु प्रसवदिवसेषु—दशमे मासि इत्यर्थः। दीर्घेति।—दीर्घे—आयते, रक्ते—रक्तवर्णे, नलेव—कमलमिव इति नाल तस्मिन् ("नलं पीठवनी राजि पिढरेषे कपीश्वरे। कमलेऽपि च नल्वाख्य क्रमेण कोविदोपिते॥" इति मेदिनी) नाले—अक्षणी, रक्तनाल—रक्तोत्पले इत्यर्थं, ते इव नेत्रे यस्याम्—रक्तोत्पले नेत्रे इव, यद्वा,—दीर्घाणि रक्तानि—रक्तवर्णानि, नालानि—दण्डानि, नेत्राणि—मूलानि च यस्याः तां, ("नेत्रं मन्थ-गुणे वस्त्रभेदे मूले द्रुमस्य च। रथे चक्षुषि॥" इति मेदिनी) उत्पलिनीमिव—पद्मिनीमिव।

(१६८) हंसेति।—हंसवत् मधुरः स्वरः यस्याः, अन्यत्र,—हंसस्य मधुरः स्वरः यस्यां ताम्।

(१६९) प्रावृट्—वर्षर्तुः इत्यर्थः, प्रावृषोऽनन्तरमेव शरदागमे तथा उपनीयते।

(१७०) कुसुमेति।—कुसुमवत् सुकुमाराः,—सुकोमलाः, अवयवाः,—अङ्गानि, अन्यत्र,—कुसुमान्येव सुकुमाराः अवयवाः,—अंशाः यस्याः ताम्।

(१७१) मधुश्रीः —वसन्तलक्ष्मीः ["मधु पुष्परसक्षौद्रमद्ये ·। वसन्तदैत्य-भिद्वैत्ये ··" इति मेदिनी। "मधुश्रीः" इत्यत्र "माधवश्रीः" इति पाठे,—मधुरिव माधवः,—वसन्तः, स्वार्थे अण्। "माधवोऽस्त्री मधौ राधे यादवे मा स्त्रियां श्रियौ" इति मेदिनी तस्य श्रीरित्यर्थः]।

(१७२) महेति।—महाकनक—विशुद्धस्वर्णं, तद्वत् अवदाता—गौराङ्गी

मिव द्यौः, प्रभावर्षिणीं (१७२) रत्नजातिमिव वेला, सकलजननयनानन्दकारिणीं चन्द्रलेखामिव प्रतिपत्, (१७४) महस्रनेत्रदर्शनयोग्यां जयन्तीमिव शची, (१७५) सर्वभूभृदभ्यर्थितां गौरीमिव मेना प्रसूतवती दुहितरं, (१७६) यया द्वयोः सुतयोः उपरि स्तनयोः इव एकावलीलतया नितराम् अराजत।

(१७७) अस्मिन्नेव तु काले देव्या यशोवत्या भ्राता सुतम् अष्टवर्षदेशीयम् उह्यमानकुटिलकाकपक्षकशिखण्ड

---

नाम, अथवा,—महद्भिः,—प्रभूतैः, कनकैः,—स्वर्णैः, अवदाता—उज्ज्वला नाम। वसुधारामिव—धनवृष्टिमिव। द्यौः,—अन्तरीक्षम्, सा हि जगतो महाऽभ्युदयाय हिरण्यवृष्टिमात् करोतीति प्रसिद्धिः।

(१७२) रत्नजातिमिव—रत्नराशिमिव। वेला—अब्ध्यम्बुविकृतिः, समुद्रजलवृद्धिः इत्यर्थः, समुद्रकूलम् वा, ("अब्ध्यम्बुविकृतौ वेला" "वेला काले च सीमायामब्धेः कूल-विकारयोः" इत्यमर मेदिन्यौ) चन्द्रलेखामिव—शशिकलामिव। प्रतिपत्—प्रथमा तिथिः।

(१७४) सहस्रेति।—सहस्रं नेत्रैः,—बहुजननयनैरिति भावः, सहस्रनेत्रेण—इन्द्रेण च दर्शनयोग्या—दर्शनीया ताम्, जयन्तीमिव—तदाख्यां कन्यकामिव। ("जयन्ती शक्रभिद्दीर्याविन्द्रपुत्री पताकयोः" इति मेदिनी) शची—इन्द्राणी।

(१७५) सर्वेति।—सर्वैः भूभृद्भिः,—राजभिः, अन्यत्र—सकलभूभृता—अखिलभूभृतामभिव्याप्य स्थितेन हिमाद्रिणा इत्यर्थः, यद्वा,—सर्वैः भूभृद्भिः,—पर्वतैः, राजकुमारीदर्शनेच्छया इति भावः, अभ्यर्थिता—प्रार्थिता ताम् गौरीमिव—पार्वतीमिव। मेना—हिमवत्पत्नी, हिमवन्महिषीति यावत्। [ पूर्वोपमिव्यारभ्यैतत्पर्यन्तं एक प्रसूतवत्त्वमेव साहश्य हेतुः, इति साधारणधर्मस्य उत्पत्तिवादिमहूपमानसम्बन्धात् मालोपमाऽलङ्कृतिः इति सहेयम् ]।

(१७६) यया—दुहित्रा, द्वयोः सुतयोः,—राज्यवर्द्धन-हर्षवर्द्धनयोः, उपरि—अग्रे स्थितया इति शेषः, यद्वा,—उपरि—अनन्तरमित्यर्थः, जातया इति शेषः, स्तनयोः ऊर्द्ध्वभागविराजमानया च। एकावलीलतया—एकसरेण हारेण इत्यर्थः। यशोवती नितराम—अतिशयेन अराजत इति सम्बन्धः।

(१७७) अस्मिन्नेवेति।—अस्मिन्नेव समये—दुहितृजननकाले। "अस्मिन्नेव" इत्यस्य "यशोवत्या भ्राता सुतं · भण्डिनामानम् अनुचरं कुमारयोः अर्पितवान्" इति उत्तरेण

परशुपाशचिह्नितं बाल्यतां गतं, (१८२) कण्ठसूत्रग्रथितभङ्गुरप्रवालाङ्कुरं हिरण्यकशिपुमिव उरःकाठिन्यखण्डितनरसिंहनखरखण्डं गृहीतजन्मान्तरं, शैशवेऽपि सावष्टम्भं बीजमिव वीर्यद्रुमस्य भण्डिनामानम् अनुचरं कुमारयोः अर्पितवान्।

(१८३) अवनिपतेस्तु तस्य उपरि पुत्रयोः तृतीयस्य नेत्रयोः इव ईश्वरस्य तुल्यं दर्शनमासीत्। राजपुत्रौ अपि

---

गत, परशु,—कुठार, अत एव पाश —रज्ज्वाकार,, यद्वा,—अभिप्रायदेन चीर्ण,—रेखामात्रावशिष्ट, अत एव अपकृष्ट परशु,—परशुपाश, प्रथमाभावाभाव इति भाव, तेन चिह्नित,—परशुपाशोऽस्यमिवति लक्षित, महावीरनिवर्तनशील क्षत्रियप्रदत्तपरिचयपवित्रवक्षेन इदानीमपि परशौ किञ्चित् खण्ड भूषणमिव दधानं वा इत्यर्थं तम्। बाल्यता—शिशुत्वं, गत—प्राप्त पुनरन्यावं परशुरामभिवेत्यर्थः। श्रीराम-लक्ष्मणयोरिव राज्यवर्धन-हर्षयो उपायसाधनमेव परशुरामत्वेन कुमारयो तद्रक्षाधिकत्वमेतत् इति भाव ।

(१८२) कण्ठेति।—कण्ठसूत्रे—कण्ठदेशभूषितसूत्रे, ग्रथित —गुम्फित, भङ्गुर —कुटिल प्रवालाङ्कुर,—विद्रुमखण्ड यस्य तम, अत एव हिरण्यकशिपुमिव—तदाख्यमादितेयमिव। उर इति।—उरस,—वक्षस, काठिन्येन—दार्ढ्येन खण्डित —भग्न नरसिंहस्य—नृसिंहाकृतेर्भगवतो विष्णो, नखरखण्ड यस्मिन् तथोक्तम। अर्थात् भगवन्नरसिंहनखरत्वेन एतस्य विशीर्णत्व ध्वनितम, एवञ्च बाध्यबाधकत्वभेदाद्द्वादशदीर्घावाप्ते। गृहीतजन्मान्तर—पुनर्जातमित्यर्थः। अभिद्वेष स्वान भग्नभयवज्रखरेणापि अनुरूप साम्यप्रतिपादनात् हीनोपमेयमिति, अत तथा विधासुराभावात् अवश्यत्वाच्च भगवतोऽवतारमात्रसम्बन्धे सम्बन्धरूपातिशयोक्ति व्यङ्ग्या। सावष्टम्भ—सतेजस्कम् इत्यर्थ, बीजमिव—प्ररोहमूलमिव, बालवान बीजमिवेत्युत्प्रेक्षा उक्ता। वीर्यद्रुमस्य—शौर्यवृक्षस्य।

(१८३) अवनिपते —राज्ञ। तस्य—भण्डिनामकस्य कुमारस्य। पुत्रयो तृतीयस्य—आत्मजौ अपेक्ष्य तृतीयस्थानमधिकृतस्य इत्यर्थं तृतीयपुत्रत्व मतस्येति भाव, [ पूरणगुण—' ( २।२।११ पा० इति न षष्ठीसमास ] ईश्वरस्य—हरस्य, नेत्रयो तृतीयस्य—तृतीयनेत्रस्य इव, तुल्य—समान न तु भिन्नविधमित्यर्थ, दर्शनम्—अवलोकनम्, अत्रच,—दृष्टिम्, राजा आत्मपुत्राविव तं ददर्शेत्यर्थ।

सकलजीवलोकहृदयानन्ददायिनौ तेन (१८४) प्रकृतिदक्षिणेन मधु माधवौ इव मलयमारुतेन उपेतौ नितरां रेजतुः। क्रमेण च अपरेणेव आत्मा प्रजानन्देन सह वर्द्धमानौ यौवनम् अवतेरतुः। (१८५) स्थिरोरुस्तम्भौ च पृथुप्रकोष्ठौ दीर्घभुजार्गलौ (१८६) विकटोरःकवाटौ प्रांशुशालाभिरामौ महानगरसन्निवेशौ इव सर्व्वलोकाश्रयक्षमौ बभूवतुः।

---

सकलेति।—सकलानाम्—सर्वेषां, जीवलोकानाम्—प्राणिपूर्णजगताम्, हृदयस्य—मन-करस्य आनन्दम्—उल्लासं, ददत,—जनयत इति तौ।

(१८४) प्रकृतिदक्षिणेन—प्रकृत्या—स्वभावेन, दक्षिण,—सरल, उदारो वा तेन, दक्षिणदिग्भवेन च। मधु माधवाविव—चैत्र वैशाखाविव, ("स्याच्चैत्रे चैत्रिको मधुः वैशाखे माधवो राध" इत्यमर) उपेतौ—युक्तौ, सङ्गतौ इत्यर्थ। अपरेण—द्वितीयेन प्रजानन्देन—प्रजानामानन्देन, आत्मजन्मना यथा आनन्दो भवति, तथैवैषमोदयेन प्रजानां तथाऽऽनन्दोऽपि जातेति भाव। अवतेरतु,—प्रापतु, यौवनोद्गममभिव्यक्तौ बभूवतु इत्यर्थ।

(१८५) स्थिरोरुस्तम्भौ—स्थिरो—दृढौ, ऊरू—सक्थिनी, स्तम्भाविव, स्तम्भ,—स्थिरा,—दृढा, उरव —महान्त, स्तम्भा,—स्थूणा ययो तौ, पृथुप्रकोष्ठौ—पृथू—स्थूलौ, विपुलौ, प्रकोष्ठौ—"प्रकोष्ठो मणिबन्धस्य कूर्परस्यान्तरेऽपि च" इत्युक्तौ कूर्पराधोभागौ इत्यर्थ, कक्षविशेषाश्च ययो तौ ("प्रकोष्ठो मणिबन्धस्य … / गृहकक्षान्तरेऽपि स्यात्॥" इति मेदिनी) दीर्घेति।—दीर्घौ—आयतौ, भुजौ—बाहू, अर्गलाविव—कपाटरोधककाष्ठदण्डाविव, अथवा,—भुजा एव अर्गलौ ययो तौ।

(१८६) विकटेति।—विकट,—विशाल, उर,—वक्षस्थल, कवाट इव—द्वारमिव, द्वाराच्छादनभूतकाष्ठफलकमिव इत्यर्थ, अथवा,—उर इव कवाटौ ययो तौ प्रांश्विति।—प्रांशू—उन्नतौ, शालौ इव—तरुप्रकाण्डौ इव, अभिरामौ—रमणीयौ, अथवा,—प्रांशुना शालेन—प्राकारेण, ("प्राकारो वरण शाल." इत्यमर) यद्वा,—प्रांशुभि शालाभि,—गृहविशेषै, अभिरामौ। महेति।—महत,—विशालस्य, नगरस्य सन्निवेशौ इव—अवस्थानभूतौ इवेत्यर्थ। सर्वेति।—सर्वेषां लोकानाम्—जनानाम्, आश्रये—आश्रयदाने, अभयदाने इति यावत्, रक्षणे इति भाव, अधिष्ठाने च, क्षमौ—समर्थौ, यौवराज्योचितगौरवत्वात् बहुप्रासादवत्त्वाद्वेति भाव।

माननयनौ, (१८४) सन्ध्याऽञ्जलिघटनेषु अपि शूलायमानोत्तमाङ्गौ, (१८५) जलधरधृतेन अपि धनुषा दोदूयमानहृदयौ, आलेख्यक्षितिपतिभिः अपि अप्रणमद्भिः सन्तप्यमानचरणौ, (१८६) परिमितमण्डलसन्तुष्टं तेजः सवितुरपि अबहुमन्यमानौ, (१८७) भूभृदपह्नुतलक्ष्मीकं सागरमपि उपहसन्तौ, अनवस्तमकृतविग्रहं मारुतमपि निन्दन्तौ, हिमवतोऽपि चमरी-

कुमार, प्रभुत्व शब्देन असूयायमानश्रवणौ—दुःखानुभाविकर्णौ इत्यर्थ, कथमस्मदतिरिक्तः अपि स्वामीति प्रयुज्यते इति धियेति भाव। दर्पणहृष्टेन—आदर्शावलोकितेन प्रतिपुरुषेण—प्रतिबिम्बगतेन जनेन प्रतिस्पर्द्धिपुरुषेण वा, स्वप्रतिबिम्ब दर्पणगतम् दृष्ट्वा प्रतिस्पर्द्धी अयमिति धियेति भाव, दूयमाननयनौ—असन्तुष्टनेत्रौ।

(१८४) सन्ध्येति।—सन्ध्यायाम् अञ्जलिघटनानि—सन्ध्याकालिकदेवतावन्दने शिरसि अञ्जलिनिवेशनानि इत्यर्थः तेषु शूलायमान—शूलविद्धमिवाचरत, उत्तमाङ्ग—शिरो ययो तौ अस्मदभिमन्यैव शीर्षे शिरसि अञ्जलिर्बध्यते, अयन्तु अयमञ्जलि शिरसि बद्धीम ॥ इति धियेति भाव।

(१८५) जलेति।—जलधरधृतेन—मेघधृतेन, धनुषा—शक्रधनुषेत्यर्थ, दोदूयमानहृदयौ—पुनःपुन सन्तप्यमानमानसौ, कथमपरेणापि धनुर्भ्रियते अस्माक समक्षम् ॥ इति क्रोधादिति भाव। आलेख्यक्षितिपतिभि,—चित्रार्पितनृपतिभिः इत्यर्थ। सन्तप्यमानचरणौ—दूयमानपादौ, कथमिते अस्माक चरणेषु न प्रणमन्ति ॥ इति क्रोधादिति भाव।

(१८६) परिमितेति।—परिमित—परिच्छिन्न इयत्तया ईदृशतया च इति भाव, मण्डल—बिम्ब, देश च विषय इत्यम ("मण्डल परिधौ ग्रामे कोठ द्वादशराजसु। कोशस्य निवहे बिम्ब त्रिषु ॥" इति मेदिनी) सन्तुष्टम्—एतदेव पर्याप्तमिति मत्वा हृष्टमित्यर्थ, सवितु—सूर्यस्य, तेज—आतप प्रभावश्च, अबहु—न प्रभूतमित्यर्थं, मन्यमानौ—अवधारयन्तौ, स्वस्य अपरिमितदेश शासित्वादिति भाव।

(१८७) भूभृदिति।—भूभृता—मन्दराचलेन इत्यर्थ, भूभृद्भि,—राजभिश्च, अपहृता लक्ष्मी—श्री, रत्नादिसम्पच्च यस्मात् तथाभूत, सागरमपि उपहसन्तौ—सपरिहास कुर्वन्तौ, ततोऽपि स्वस्य दुर्धर्षत्वादिति भाव। अकृत,—अनाचरित, विग्रह युद्धम्, अकृत,—अशरीर, विग्रह,—शरीरं येन तयोक्तञ्च, मारुत—वायु निन्दन्तौ—कुत्सयन्तौ, यदि विग्रहमस्य अभविष्यत्, तदा क्रियत्

बालिशाः। (२०३) दर्पणमिवानुप्रविश्य आत्मीयां प्रकृतिं सङ्क्रामयन्ति पल्लविकाः। (२०४) स्वप्ना इव मिथ्यादर्शनैः

---

तेषाञ्च नरनाथानुरागयो एकवाक्यत्वमलात् इति भावः। क्षुद्राः,—नीचाशयाः, साधारणा जना इत्यर्थः, अन्यत्र—क्षुद्राः,—अतिसूक्ष्मावयवाः, परमाणव इव समवायेषु—संयोगेषु, मिलिताः सन्तः कार्य्येषु इत्यर्थः, संहतिषु च, समवाद्द अनुगुणीभूयायुतसिद्धानामाधाराधेयभूतानां कथमिह प्रत्ययहेतुः इति संयोगोऽयोऽवहेयः, अनुगुणीभूय—अनुकूलीभूय अनुकूलमतं प्रदर्श्य इत्यर्थः, प्रविश्य च, अन्योऽन्यमिति भावः, पार्थिवं—राजानं, द्रव्य—सामान्य जनरूप वस्तु, स्वार्थसाधनाय उपकरणीभूतमिति यावत् अस्यापि स्थित्यर्थत्वादिति भावः, अन्यत्र,—पार्थिवं—पृथिवीसम्बन्धि, द्रव्य—वस्तु, घियद्घटादिरूपमिति यावत् प्रायेण—बाहुल्येन, कुर्वन्ति—निष्पादयन्ति, "प्रायेण" इत्यनेन अदृष्टादिकमपि हेतुत्वं विद्यते, प्राधान्यस्तु पुरुषकारशक्तिमतां तेषामेव इति ध्वनितम्। नीचाशया मध्ये मन्त्रणासदसि मानस्य राज्ञः अनुकूलमतं प्रकाश्य मन्दे मन्दं राजानम् आयत्तीकृत्य स्वमतानुवर्त्तिनं कुर्वन्ति इति समुदितार्थः। अत्रायमाशयः,—यथा समवायिकारणे समवायसम्बन्धेन परमाणवः सम्भूय द्रव्याणि उत्पादयन्ति तथा क्षुद्रा जना अनुगुणीभूय पार्थिवम् अभिविधमेव घटयन्ति, क्षुद्रा जना परिहरणीया इति फलितम्। क्रीडारसेनेति।—बालिशा—धूर्त्ताः, [बालाः सन्ति एषाम् इति बालिनः,—मूर्खाः, तान् श्यन्ति—कदर्थभावापन्नकपटान्तरितपरामर्शं दीनविचारं च लघूकुर्वन्ति तथोक्ताः। आत्युपपदात् शोधातोः "आतोऽनुपसर्गे कः" (३।२।३ पा०) इति कप्रत्ययः] अकृत्यगुणाचाटुवाक्यादिभिः कोमलमतिसायत्तीकरणपटवः इत्यर्थः, शिशवश्च, ("शिशावज्ञे च बालिशः" इत्यमरः) क्रीडारसेन—क्रीडारागेण मर्दयन्त— चालयन्त इत्यर्थ, पृथ्वी कारयन्तः, मयूरता—धूर्त्तजनवैच्यसामित्यर्थ, उपहास्यतां च, शिखिताञ्च, नयन्ति—प्रापयन्ति, बालका यथा क्रीडन्तो मयूरं नर्त्तयन्ति, तथा धूर्त्ता अबोधं नृपमन्यं वा क्रीडारसेन उन्मत्तीकृत्य क्रीडनकं कुर्वन्तीति भावः।

(२०३) दर्पणमिति।—दर्पणमिव अनुप्रविश्य—अभ्यन्तरं प्रविश्य, अनर्थानुकूलचाटुवाद मनोज्ञरूपं कृत्वा इति भावः राजानम् अन्यं वा इति शेषः, आत्मीयां प्रकृतिं—स्वभावं प्रतिच्छायाञ्च, सङ्क्रामयन्ति—समारोपयन्ति, दर्पणे यथा प्रतिबिम्बं पतति तथा रहस्यज्ञमायाकचतुरैः अभ्यन्तरं प्रविष्टैर्धूर्त्तैः चित्तरञ्जनेन राजा अपि आत्मीया प्रकृतिं धूर्त्तता नीयते इति भावः। पल्लविका —विटाः।

(२०४) स्वप्ना इव—"स्वप्नो निद्रामुपेतस्य विषयानुभवस्तु यः" इत्युक्तलक्षणा

असद्बुद्धिं जनयन्ति विप्रलम्भकाः। (२०५) गीतनृत्यहसितैः उन्मत्ततामावहन्ति उपेक्षिता विकारा इव वातिकाः। (२०६) चातका इव तृष्णावन्तो न शक्यन्ते ग्रहीतुमकुलीनाः। (२०७) मानसे मीनमिव स्फुरन्तमेव अभिप्रायं गृह्णन्ति जालिकाः। (२०८) यमपट्टिका इव अम्बरे चित्रमालिखन्ति उन्नीतकाः।

---

इव, मिथ्यादर्शनैः,—असत्कथनैः, अलीकवस्तुप्रकटनैश्च, असतीम्—अशोभनां, दुष्टामित्यर्थं बुद्धिम्—ज्ञानम्, असति—अविद्यमाने अलीके च, बुद्धिं—धियं, जनयन्ति—उत्पादयन्ति, निरन्तरमसत्प्रपञ्चप्रदर्शनचतुरत्वात् इति भावः। विप्रलम्भकाः,—प्रतारकाः, असन्मार्गप्रवर्त्तकाः इति भावः।

(२०५) गीतेति।—गीतं—गानं नृत्यं—नर्त्तनं, हसितं—हासः तैः, उपेक्षिताः,—अवधीरिताः, अचिकित्सिता इत्यर्थः, वातिकाः,—वायुजनिता इत्यर्थः, ["तत आगतः" (४।३।७४ पा०) इति वातात् ठञि रूपम्] विकाराः,—रोगविशेषा इव, वातिकाः,—धूर्त्ताः, उन्मत्तताम्—विकलचित्तताम्, आवहन्ति—नयन्तीत्यर्थः, सदसद्विचारशक्तेर्दुर्बलीकरणात् इति भावः।

(२०६) चातका इव—तदाख्यपक्षिविशेषा इव, तृष्णावन्तः,—धनलुब्धाः, पिपासिताश्च, अकुलीनाः,—अकुलजाः, दुष्कुलजाता इत्यर्थः, अन्यत्र,—न कौ—पृथिव्यां, लीनाः,—स्थिताः, आकाशचारिण इत्यर्थः, ग्रहीतुं—वशीकर्त्तुं, धर्त्तुञ्च, न शक्यन्ते—न पार्यन्ते, एकत्र—दुष्टहृदयत्वात् खलप्रकृतिकत्वाच्च, अन्यत्र,—आकाशचारित्वात् इति भावः।

(२०७) मानस इति।—जालिकाः,—कूटकारकाः, शठा इत्यर्थः, जालोपजीविनः कैवर्त्ताश्च, मानसे—चित्ते, तदाख्यसरसि च, स्फुरन्तम्—विराजमानम्, अभिप्रायम्—आशयं, गृह्णन्ति—अवबुध्यन्ते, धरन्ति च, उभयत्र निरपराधसरलप्राणिनियन्त्रणं समानम् इत्याशयः।

(२०८) यमपट्टिका इवेति।—उन्नीतकाः,—अतिदुश्चरितत्वेन उद्गीतं—कीर्त्तनं येषां तथाभूताः, अतिदुर्विनीता इत्यर्थः, यमपट्टिका इव—यमस्य पट्टिका येषां ते, यमदूता इत्यर्थः, यमपट्टेन—यमपट्टप्रदर्शनेन जीवन्ति इति वा ते यमपट्टिका इति, अन्तकशासनपत्रकाः, गृहीतपट्टलिखितसपरिजनधर्मराजा वा, ते इव, बहुव्रीहिसमासान्तकप्रत्ययौ यद्वा स्त्रीलिङ्गपुंल्लिङ्गयोः उपमानोपमेय-भावस्य साधुत्वाभावात्, अम्बरे—आकाशे, अभित्तौ इत्यर्थः; वस्त्रे च, चित्रम्—

( २०९ ) शल्यं हृदये निक्षिपन्ति अतिमार्गणाः। ( २१० ) यतः सर्वदोषाभिषङ्गैः असङ्गतौ बहुधा उपधाभिः परीक्षितौ शुची विनीतौ विक्रान्तौ अभिरूपौ मालवराजपुत्रौ भ्रातरौ भुजौ इव मे शरीरात् अव्यतिरिक्तौ कुमारगुप्त माधवगुप्तौ अस्माभिर्भवतोः अनुचरत्वार्थम् इमौ निर्दिष्टौ। अनयोः उपरि भवद्भ्यामपि न अन्यपरिजनसमवृत्तिभ्यां भवितव्यम्" इत्युक्त्वा तयोः आह्वानाय प्रतीहारम् आदिदेश।

( २११ ) न चिरात् द्वारदेशनिहितलोचनौ राज्यवर्द्धन हर्षौ

---

आश्चर्यम्, अस्माकमीयं वस्तु इति भाव, आनिल्वश्च आलिखन्ति—चित्रयन्ति, यमदूता यथा अतर्कितमेव खड्गप्रहारमनुतिष्ठन्ति, तथा तादृशा धूर्ता सहसा वध माल्यमनिष्टमुत्पादयन्ति, यद्वा,—यमपट्टिका यथा विविध चित्र यमपुरस्य वध्ये पापिष्ठस्य दर्शयित्वा विस्मयमुत्पादयन्ति, तथा धूर्ता आकाशकुसुमोपम विविध सुख चित्र प्रदर्श्य राजानमात्मवशीकुर्वन्तीति भाव।

(२०९) शल्यमिति।—अतिमार्गणा,—अत्यर्थमन्वेषणपरा अतिशयेन किरातविशेष इत्यर्थं, याचकभक्तिप्रदर्शिन धूर्तविशेषा इति भाव, तीक्ष्णशराश्च, ("मार्गणो याचके शरे। याञ्चाऽन्वेषणयो क्लीबम्" इति मेदिनी) हृदये—अन्तरात्मनि, वक्षसि च, शल्य—व्यथाविशेष इव फलकञ्च, निक्षिपन्ति—निदधतीत्यर्थं।

(२१०) यत इति।—यत,—यस्मात, सर्वे दोषाभिषङ्गै, दोषै,—अविनयादिभि, अभिषङ्गा,—पराभवा तै, ("अभिषङ्ग पराभवे" इत्यमर) असङ्गतौ—असंसृष्टौ, सर्वदोषविनिर्मुक्तौ इत्यर्थ। बहुधा—बहुना प्रकारेण, उपधाभि,—छलै, भृत्यानां परीक्षणोपायविशेषैरित्यर्थ "उपेत्याधीयते यस्मादुपधेति ततः स्मृता। उपाय उपधा ज्ञेया तया भृत्यान् परीक्षयेत्॥" इत्युक्ते, परीक्षितौ—अवेक्षितौ। शुची—विशुद्धचरितौ। विनीतौ—विनयवन्तौ। विक्रान्तौ—पराक्रमशालिनौ। अभिरूपौ रमणीयौ, सुन्दराकृती इत्यर्थ। ("अभिरूपो बुधे रम्ये" इति मेदिनी)। अव्यतिरिक्तौ—अभिन्नौ। अनुचरत्वार्थं—साहचर्यार्थम्। इमौ इति।—तत्र असन्निधानयोरपि तयोरनन्तरमेव आगमनात् इदमशब्देन निर्देशो ज्ञेयः। निर्दिष्टौ—निरूपितौ। तयो,—मालवराजपुत्रयो कुमारगुप्त-माधवगुप्तयो आह्वानाय।

(२११) "न चिरात्" इत्यस्य "राज्यवर्द्धन हर्षौ · कुमारगुप्त प्रहत तस्य"

प्रतीहारीभिः सह प्रविशन्तम्, अग्रतो ज्येष्ठम् अष्टादशवर्षवयसं, नात्युच्चं, नातिखर्वम्, अतिगुरुभिः पदन्यासैः अनेकनरपतिसञ्चरणचलां निश्चलीकुर्वाणम् इव उर्वीम्, (२१२) अनवरताभ्यस्तलङ्घनघनोपचयकठिनमांसमेदुरात् ऊरुद्वयात् निष्पततेव अनुल्बणजानुग्रन्थिप्रसृतेन तनुतरजङ्घाकाण्डयुगलेन भासमानम्, (२१३) उल्लिखितपार्श्वप्रकाशितकार्श्येन मन्दरमिव सुरासुरभसभ्रमितवासुकिकषणक्षीणेन मध्येन लक्ष्यमाणम्,

---

आगच्छन्तं ददर्श" इत्यनेन सम्बन्धः। प्रथमं तावत् कुमारगुप्तं विशिनष्टि, प्रतीहारीभिरित्यादिभिः।—प्रतीहारीभिः—दौवारिकीभिः। अष्टादशवर्षवयसम्—अष्टादशवर्षाः वयः यस्य तादृशम्। अतिगुरुभिः—अतिभारवद्भिः सत्त्ववत्त्वादिति भावः, पदन्यासैः—पदविक्षेपैः। अनेकेति।—अनेकेषु—बहुषु नरपतिषु—राजसु सञ्चरणेन—चङ्क्रमणेन, चलाम्—चञ्चलाम्, एकस्यैवाधिपत्याभावादिति भावः, बहुस्वामिकामिति भावः। निश्चलीकुर्वाणमिव—स्थिरीकुर्वाणमिव एकस्वामिकां कुर्वाणमिव इत्यर्थः। उर्वीम्—पृथ्वीम्।

(२१२) अनवरतेति।—अनवरतम्—अविच्छेदं यथा तथा, अभ्यस्तेन—पुनः पुनः शीलितेन, लङ्घनेन—उत्प्लवनेन उल्लम्फनेन इति यावत्, बाल्यसुलभचापलात् इति भावः घनः—सान्द्रः, निबिडमिति यावत्, उपचयेन—वृद्ध्या, कठिनम्—कठिनम्, दृढमित्यर्थः, यत् मांसं तेन मेदुरात्—पुष्टात् तस्मात्, ["अङ्गभाव—" (३।२।१६१ पा०) इत्यादिना कुरच् प्रत्ययः] ऊरुद्वयात्—ऊरुयुगलात् निष्पततेव—निर्गच्छतेव। अनुल्बणेति।—अनुल्बणः,—अनुत्कटः, यः जानुग्रन्थिः,—जङ्घोर्वोः सन्धिः, तस्मात् प्रसृतम्—प्रसृतं तेन, तनुतरजङ्घाकाण्डयुगलेन—तनुतरः,—क्षीणतरः, कार्श्यवशात् इति भावः, यः जङ्घाकाण्डः,—प्रसृतादण्डः, जानुगुल्फयोर्मध्यप्रदेश इत्यर्थः, तद्युगलेन—तद्द्वयेन, तनुतरजङ्घाकाण्डद्वयेन इत्यर्थः, भासमानम्—राजमानम्, भासमानत्वञ्चास्य जानुप्रान्तस्थस्यातिरमणीयत्वात् इत्याशयः।

(२१३) उल्लिखितेति।—उल्लिखितेन—तनूकृतेन, ("स्यादुल्लिखितमुल्लीढे तनूकृते च वाच्यवत्" इति मेदिनी) पार्श्वेन—पार्श्वदेशेन, प्रकाशितः,—प्रकटितः, कार्श्यम्—काश्यं यस्य तेन। सुरेति।—सुराश्च असुराश्च ते, रभसेन—वेगेन, भ्रमितस्य—सञ्चालितस्य, वासुकेः,—नागराजस्य, कषणेन—घर्षणेन, क्षीणः—कृशः तेन, मध्येन—मध्यभागेन, कटिदेशेन इत्यर्थः। मन्दरमिव—मन्दराचलमिव, लक्ष्य-

प्रलापसुभगः पारिजात इव जातः श्रिया सह पुनः अवतारितौ, मेदिनी नववधूवदनावलोकनकुतूहलेन इव ( २०० ) क्राथ्यमाण-हृदयः, पतन्निव मुखेन प्रत्यासन्नलग्नो ग्रहवर्मा।

( २०१ ) राजा तु तम् उपद्वारम् आगतं चरणाभ्यामेव राजचक्रानुगम्यमानः ससुतः प्रत्युज्जगाम। अवतीर्णं च तं कृत-नमस्कारं मन्मथमिव माधवः प्रसारितभुजो गाढम् आलिलिङ्ग। यथाक्रमं परिष्वक्तराज्यवर्द्धनहर्षौ च हस्ते गृहीत्वा अभ्यन्तरं

---

( १९९ ) कुसुमेति।—कुसुमानां—पुष्पाणां, सौरभात्—आमोदात्, गर्वेण—उल्लासेन भ्राम्यताम्—भ्रमताम् भ्रमराणाम्—मधुकराणाम्, कुलस्य—वृन्दस्य कलप्रलापैः—मधुरास्फुटैः झङ्कारैः, सुभगः,—मनोहरः, पारिजात इव—देवतरुविशेष इव, श्रिया—लक्ष्म्या सौन्दर्येणैश्वर्येण, सहोदरया इति भावः। अवतारितः,—अवतारं नीतः, विधात्रेति शेषः, लग्ननियतत्वादवतारणं युगपदाविर्भावादिसाम्यादिकमित्यभिप्रायः।

(२००) क्राथ्यमाणहृदयः—प्रमथ्यमानमानसः। पतन्निव—स्वस्थानाद् भ्रश्यन्निव, अतिपरिचालितधावमानतुरङ्गोद्दामसमर्पणवेगात् इति भावः, मुखेन—"ओष्ठौ च दन्तमूलानि दन्ता जिह्वा च तालु च। गलो गलादिसकलं षडङ्गं मुखमुच्यते॥" इत्युक्तावयववता वदनेन इत्यर्थः, [ क्रमधातोः "ञित् क्रमेर्मुट् च चोदात्तः" ( उ० ५ पा० २० सू० ) इति अचि ञित्वात् धातोर्मुडागमे रूपम् ] वेगाक्रान्तानाम् अधोमुखेन पतनं लोके प्रसिद्धम्। प्रत्यासन्नलग्नः —प्रत्यासन्नः—समीपवर्त्ती, लग्नः—विवाहकालिकशुभराश्युदयः यस्य तथाभूतः, अनुकूलग्रहप्रसादात् सन्निहितवैवाहिकशुभसमय इत्यर्थः।

( २०१ ) राजेत्यादि।—उपद्वारम्—द्वारसमीपं द्वारे वा, [ विभक्त्यर्थे अव्ययीभावः ]। राजचक्रानुगम्यमानः,—राजचक्रेण,—स्वसभास्थराजसमूहेन सौहार्दादि-सम्बन्धोपस्थितैर्वा, अनुस्रियमाणः, एतेनास्य चक्रवर्त्तित्वं व्यज्यते। प्रत्युज्जगाम—प्रत्युद्गमनं चकार अनादिविवाहप्रथावत्त्वात् लौकिकैरपि कन्यापितृभिः समित्रकुटुम्बादिभिः सन्निकृष्टागमने आश्रिता अपि सामन्तसामान्यनरपाश्च स्वयमुपगम्यन्ते पाद-चारिभिः एव सदातनः सदाचार इति मन्यते। अवतीर्णम्—अवरूढं वैवाहिक-यानादिति शेषः। माधवः,—कृष्णः, वसन्तो वा, मन्मथमिव—प्रद्युम्नमिव कामभिव

(३०७) साध्वसनिरुध्यमानहृदयदेशदुःखमुक्तैः निभृतायतैः श्वसितैः अपयान्तं कुमारभावम् इव अनुशोचन्तीम्, (३०८) अत्युत्कम्पिनीं पतनभिया इव त्रपया निष्पन्दं धार्यमाणां, हस्तं तामरसप्रतिपक्षम् आसन्नग्रहणं शशिनमिव रोहिणीं भयवेपमानमानसाम् अवलोकयन्तीं, (३०९) चन्दनधवलतनुलता ज्योत्स्नाऽऽदानसञ्चितलावण्यात् कुमुदिनीगर्भादिव प्रसूतां,

---

(३०७) साध्वसेति।—साध्वसेन—सुचिरमध्युषितं मद्धृदयं सपदि विहाय गते त्वयि अहं निराश्रया भवेयमिति भयेनेति भावः, निरुध्यमानः—मा मा निर्गच्छेति इति अवरुध्यमानः, हृदयदेशः,—चित्तदेशः, तस्मात् दुःखेन—क्लेशेन, कुमारभावनिरोधजनितेनेति भावः, समापतता बलवता तारुण्यस्य तदानीं प्रसभमाक्रमणात् तद्विरोधिनः कौमार्यस्य सहसा तद्धृदयदेशादपसरणं बोद्धव्यम्, अत अत्यायेऽपि तन्निरोधोऽभूदिति तात्पर्यम्, मुक्तैः,—त्यक्तैः, अत एव निभृतायतैः,—अस्फुटदीर्घैः दुःखं, उद्वेगादिति भावः, श्वसितैः,—दीर्घनिश्वासैः, अपयान्तम्—अपसरन्तम्, आत्मानं त्यजन्तमिति यावत्, कुमारभावं—कौमारम्, अनुशोचन्तीं—विलपन्तीं, गतस्य पुनरप्रत्यागमनसम्भवात् इति भावः।

(३०८) अत्युत्कम्पिनीम्—अतिशयेन उत्कम्पमानाम्, अत एव पतनभिया—पातनाशङ्कया त्रपया—लज्जया निष्पन्दं—निश्चलं यथा तथा, धार्यमाणाम्—अवलम्ब्यमानाम् अत्यधिककम्पवतीमिव, सौभाग्यवतीभिः विवाहे तदा तत्तद्धारणस्याचारदर्शनात् इति भावः। तामरसप्रतिपक्षं—रक्तोत्पलविरोधिनं, रक्तकमलवैरिणम् इत्यर्थः, तदानीं यौवनोद्गमाभावात्, आसन्नग्रहणम्—अचिरप्राप्तिपीडनं, अचिरेण प्राप्स्यमानमिति भावः, शशिनमिवेत्यत्र ("ग्रहणं स्वीकारादरक्तपरागोपरागेष्वपि ग्रहः" इति मेदिनी) भयेति।—भयेन वेपमानं—कम्पमानं, मानसं—चित्तं यस्याः तां अवलोकयन्तीं—पश्यन्तीम्। शशी हस्तश्च आसन्नग्रहणः तस्य अदृष्टपूर्वमवलम्बनम् इदानीन्तु यौवनोद्गमात् तस्य रक्तोत्पत्तेः, शशिनः राहुग्रस्ते रोहिण्याः तत्प्रियायाः [illegible] यौवनभिया चापि भयमुत्पन्नमिति मनोभावः, यौवनकान्त्या पूर्णतां दर्शितं इति।

(३०९) चन्दनेति।—चन्दनेन—चन्दनानुलेपनेन, चन्दनवत् निर्मलत्वा इति भावः, धवला—विशदा, तनुलता—अङ्गयष्टिः यस्याः ताम्। ज्योत्स्नेति।—ज्योत्स्नायाः—कौमुदीनाम्, आदानेन—ग्रहणेन, सञ्चित—पुष्ट,

(२१०) कुसुमामोदनिर्झरिणीं वसन्तहृदयात् इव निर्गतां, निश्वासपरिमलाकृष्टमधुकरकुलां मलयमारुतात् इव उत्पन्नां, क्षतकन्दर्पानुमरणां रतिमिव पुनर्जातां, (२११) प्रभालावण्यमदसौरभमाधुर्य्यैः कौस्तुभशशिमदिरापारिजातामृतप्रभवैः सर्व्वरत्नगुणैः अपरामिव सुरासुरकथा रत्नाकरेण कल्पितां श्रियं,

---

लावण्य—कान्तिविशेष यस्य तस्मात्, कुमुदिनीगर्भात्—कैरविण्याः जठरात्, प्रसूतामिव—निर्गतामिव, अन्यथा जगदाह्लादिनी कथमेतस्याः कान्तिः? इत्युत्प्रेक्षाबीजम्।

(२१०) कुसुमेति।—कुसुमानां—पुष्पाणाम्, आमोदः,—सौरभ, तेन निर्झरति —नीजाणं नामस रञ्जयतीति यावत् तदीशा तां, वसन्तहृदयात्—वसन्तस्य—पुष्पसमयस्य, कन्दर्पपरिजनस्य इति यावत्, हृदयात्—वक्षःस्थलात्, प्रस्फुटितसर्वकुसुमामयस्य वसन्तकालस्य मध्यभागादित्यर्थः, उत्पन्नामिव—उद्भूतामिव, एतेनास्याः अङ्गेषु प्रसूनसौरभमत्वात् पद्मिनीस्त्रीत्व व्यञ्जितमिति। एतदेव विशिष्य व्यनक्ति, निश्वासेति। —निश्वासपरिमलेन—निश्वाससौरभेण, आकृष्टानि—आनीतानि, मधुकरकुलानि—भ्रमरवृन्दानि यया ताम्, उत्तमानामङ्गनानां निश्वासादि पद्मगन्धादिविशिष्टत्वादिति भावः, मलयेति।—मलयमारुतस्यापि चन्दनामोदवाहित्वेन सुगन्धत्वादिति भावः। क्षतेति।—क्षत—विहित, कर्तुमभीप्सितमिति यावत्, कन्दर्पस्य—मदनस्य, अनुमरणम्—अनुगमनं यया ताम्। एतेनास्याः अपि कन्दर्पप्रतिमत्वं ध्वनितमिति वेदितव्यम्।

(२११) प्रभेति।—प्रभा—कान्तिः, लावण्य—"मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते॥" इत्युक्तलक्षण, मदः,—मद्यपानजनित उल्लास, सौरभ—परिमल, माधुर्य्यं—"सर्वावस्थाविशेषेषु माधुर्य्यं रमणीयता" इत्युक्तलक्षण वैः, कौस्तुभशशिमदिरापारिजातामृतप्रभवैः,—कौस्तुभ,—नारायणवक्षःस्थलस्थमणिविशेष, शशी—चन्द्र, मदिरा—मद्य, पारिजात,—नन्दनकाननीयपुष्पविशेष, अमृत—सुधा, तेभ्यः, क्षीरोदमथनोद्धृतेभ्य इति भाव, प्रभवैः,—उद्भूतैः, तत्र कौस्तुभस्य गुण प्रभा, शशिनो गुणो लावण्यं, मदिराया गुण मदः, पारिजातस्य गुण सौरभम्, अमृतस्य गुणो माधुर्यमिति द्रष्टव्यम्। सर्व्वरत्नगुणैः,—सर्वेषां रत्नानाम्—उत्कृष्टानां वस्तूनां, ("जातौ जातौ यदुत्कृष्टं तत् रत्नमिह कथ्यते" इत्युक्तलक्षणानां) गुणाः,—उत्कर्षाः वैः। सुरासुरकथा—देवासुरान् प्रति कोपेन,

(२१२) स्निग्धेन बालिकालोकेन सितसिन्धुवारकुसुममञ्जरीभिः इव मुक्तादीधितिभिः कल्पितकर्णावतंसां, (२१३) कर्णाभरणमरकतप्रभाहरितशाद्वलेन कपोलस्थलीतलेन विनोदयन्तीम् इव हारिणी लोचनच्छायाम्, (२१४) अधोमुखं वरकौतुकालोकनाकुलं मुहुर्मुहुः कृतमुखोन्नमनप्रयत्नं सखीजनं हृदयश्च निर्भर्त्सयन्ती वधूम् अपश्यत्।

---

मन्थनेन खलु निरवशेषस्य सर्वोत्कृष्टाया रत्नराशेरुद्धृतत्वात् दुग्धाब्धौ रत्नलेशोऽपि नावशिष्ट इति भावः, रत्नाकरेण—समुद्रेण, कल्पिता—निर्मिताम्। पुरा देवासुराभ्यां मिलित्वा यत्नपूर्वकं समुद्रं विमथ्य निखिलरत्नजातं ततः समुद्धृत्य गृहीतमिति पौराणिकी वार्ता, एतामेवोपजीव्य हृतरत्नेन रत्नाकरेण कोपवशादेव अखिलगौरवशाली रत्नगुणानाम् एकत्रैव सन्निवेशः निर्मितामिवेत्युत्प्रेक्षितमिति वेदितव्यम्, अन्यथा विधिः कथं न एतादृशीम् अलौकिकरूपसम्पत्तिं निर्मातुं प्रभवेत् इत्याशयः।

(२१२) स्निग्धेन—प्रणयिना बालिकालोकेन—कुमारीदर्शनेन सिताभिः—शुभ्राभिः, सिन्धुवारकुसुमानां—निर्गुण्डीपुष्पाणां, मञ्जरीभिः—मञ्जरीभिः, मुक्तादीधितिभिरिव—मौक्तिकप्रभाभिरिव, इत्यत्र वैधर्म्यसाम्ययोगादुपमालङ्कारः, कल्पितः—रचितः कर्णावतंसः—कर्णभूषणं यस्याः ताम्।

(२१३) कर्णेति।—कर्णाभरणेषु—कर्णभूषणेषु, यानि मरकतानि—हरिन्मणयः, तेषां प्रभाभिः—कटाक्षैः हरितशाद्वलेन—मधुरश्यामघासयुक्तेनेवेत्यर्थः, ("शाद्वलः शाद्वहरिते" इत्यमरः) कपोलस्थलीतलेन—गण्डतटेन, विनोदयन्तीमिव—प्रीणयन्तीमिव, हारिणीं—मनोहारिणीं, हरिणीसम्बन्धिनीञ्च, लोचनच्छायां—नेत्रकान्तिम्, हरिणीलोचनच्छायामपि शाद्वलं सम्प्राप्य स्वाभिरामतया वलेन विनोदयति इति। अनेनास्या हरिणायतलोचनत्वं व्यज्यते।

(२१४) अधोमुखम्—अवनतमुखं, कन्यकाजनसाहजिकत्रपासत्त्वात् इति भावः। वरेति।—वरस्य—वोढुः कौतुकेन—कुतूहलेन आलोकने—दर्शने आकुलं—व्याकुलम्। कृतेति।—कृतः मुखस्य उन्नमने—उत्तोलने प्रयत्नः—चेष्टा येन तम्। हृदयं—चित्तम्, हृदयमपि उक्तविशेषणद्वयविशिष्टमिति बोद्धव्यम्। निर्भर्त्सयन्तीं—निन्दन्तीम्, लज्जां विहाय वरदर्शनार्थं प्रयासकरणात् सखीजनं निर्भर्त्सन तथा दर्शनतृष्णायां प्रवृत्तायां स्वस्यामपि सहजलज्जावशात् तत्करणमक्षमतया

प्रविशन्तमेव (२१५) तं हृदयचोरं बध्वा समर्पितं जग्राह कन्दर्पः। परिहासस्मेरमुखीभिश्च नारीभिः कौतुकगृहे यत् यत् कार्य्यते जामाता, तत् तत् सर्व्वम् अतिपेशलं चकार। (२१६) कृतपरिणयानुरूपवेशपरिग्रहां गृहीत्वा करे वधूं निर्जगाम; (२१७) जगाम च नवसुधाधवलां निमन्त्रितागतैः तुषारशैलोपत्यकाम् इव

---

हृदयनिर्भर्त्सनं व्रीडयम्। "कन्या सजातीयपरमा संनग्ना नवयौवना" इति दर्पण हनुतानखलनौसाहश्यात नवोढायामप्येतस्या तदानीमपि तद्गुणस्यानपायादित विभाव्यम।

(२१५) स—तदवस्थायाम। हृदयचौरं—चेतोऽपहर्त्तारं मनोहरमिति भाव'। बध्वा—राज्ञप्रिया, समर्पितं—धृत्वा प्रदत्तं कन्दर्पायेति भाव, यदा लोके कश्चित् कमपि चौरं धृत्वा कस्यापि राजपुरुषस्य हस्ते समर्पयति तथा राज्यश्रीरपि तं हृदयचौरं ज्ञात्वा, धृत्वा च कन्दर्पराजहस्ते मनसौर्थ्यविचाराय समर्पितवतीत्यर्थः, पत्ववश्यो राज्यश्रिय दृष्ट्वा कन्दर्पवशगो जात इति भाव। परिहासेति।—परिहासेन स्मेर—मृदुहसित मुखं यासां ताभि। कौतुकगृहे—वैवाहिकमङ्गल्यानुष्ठानमन्यनिर्द्दिष्टभवने। कार्य्यते—आचार्य्यते। अतिपेशलम्—अतिरुचिरम, अतिदक्ष वा यथा तथा ("पेशलो रुचिरे दक्षे" इति मेदिनी) चकार—कृतवान्, नवीनजामातरं प्रवञ्चित्वा आनन्दमनुभवितुं परिहासप्रियाभि ताभि यत्किञ्चित् नव्यव्यवहारादिकम कार्य्यते स वश्यायत्तहृदयत्वात तत्सर्वं सत्य वा कृत्यं वा इति निर्णेतुमसक्ततया अविचार्य्यैव तेन सम्पादितम् इति भाव।

(२१६) कृतेति।—कृत परिणयस्य—विवाहस्य, अनुरूपस्य—सदृशस्य, वेशस्य—परिच्छदस्य, परिग्रह,—स्वीकार, परिधानमित्यर्थं यया तथोक्ता, विवाहसमयोचितप्रसाधनवतीम इत्यर्थ।

(२१७) "जगाम" इत्यस्य "वेदीम" इत्युत्तरेणान्वय। तां विशिनष्टि, नवत्यादि।—नवाभि,—नूतनाभि सद्य प्रदत्ताभिरित्यर्थं सुधाभि,—चूर्णलेपै इत्यथ, धवला—श्वेता ताम। निमन्त्रिता,—आहूता इत्यथ, तथाभूता सन्त आगता —उपस्थिता, तै। तुषारशैलस्य—हिमगिरे, ("तुषारस्तु हिनं हिमम" इत्यमर), उपत्यकामिव —आसन्ना भूमिमिव, ("उपत्यकाद्रेरासन्ना भूमि" इत्यमर)।

(३१८) लम्बकाम्बिकाविवाहाहूतैः भूभृद्भिः परिवृतां, (३१९) सेकसुकुमारयवाङ्कुरदन्तुरैः पञ्चास्यैः कलशैः कोमलवर्णिकाविचित्रैः अमत्रमुखैश्च (३२०) मङ्गल्यफलहस्ताभिः अञ्जलिकारिकाभिः उद्भासितपर्यन्ताम्, (३२१) उपाध्यायोपधीयमानेन्धनधूमायमानाग्निसन्धुक्षणक्षणिकोपद्रष्टृद्विजाम्, (३२२) उपक्रमानुनिहितानुप-

(३१८) लम्बकाम्बिकाविवाहाहूतैः,—हरगौरीविवाहनिमन्त्रितैः, भूभृद्भिः,—राजभिः, पर्वतैश्च परिवृताम्—व्याप्ताम्। अत्र भूभृद्भिः इव भूभृद्भिः इति उपमानोपमेययोः समानधर्मोक्तिसमुत्थानात् श्लेषसदृशोपमा।

(३१९) सेकेति।—सेकेन—जलसेचनेन, सुकुमाराः,—सुकोमलाः ये यवाङ्कुराः,—यवप्ररोहाः तैः दन्तुराः,—सञ्जातदन्ताः इव लक्ष्यमाणाः तैः, [दन्तशब्दात् उन्नतदन्तार्थे "दन्त—" (५।२।१०६ पा०) इत्यादिना उरच् प्रत्ययः] पञ्चास्यैः,—पञ्चमुखैः, कलशैः,—कुम्भैः। कोमलेति।—कोमलाभिः,—नयनसुभगाभिरित्यर्थः, वर्णिकाभिः,—वर्णविशेषैः, चन्दनादिभिः खटिकादिभिर्वा इति यावत् विचित्राः,—रम्याः तैः, अमत्रमुखैः,—दीपमठैः, घटाः,—अम०—पात्रम्, भाजनपात्रविशेष इति यावत्, ("आवपनं भाण्डं पात्रामत्रं च भाजनम्" इत्यमरः) मुखे—अग्रभागे येषां तैः। ["अमत्रमुखैश्च" इत्यत्र "अमितमुखैश्च" इति पाठेऽपि—अयमेवार्थः]।

(३२०) मङ्गल्येति।—मङ्गल्यम्—मङ्गलाय हितम्, फलम्—नारिकेलाम्रादिकम्, हस्ते यासां ताभिः, अञ्जलिकारिकाभिः,—अञ्जलिबद्धप्रतिमाभिः, शालभञ्जिकाभिर्वा, उद्भासितपर्यन्ताम्—विद्योतितप्रान्तभागाम्।

(३२१) उपाध्यायेति।—उपाध्यायेन—गुरुणा, पुरोधसेति यावत्, उपधीयमानानि—अर्प्यमाणानि इन्धनानि—काष्ठानि, अग्निसन्धुक्षणार्थमिति भावः, तैः धूमायमानः,—धूमसमुद्गमनशीलोऽग्निः,—अनलः, वैवाहिकहोमीय इति भावः, तस्य सन्धुक्षणे—प्रज्वालने, क्षणिकः,—क्षणेन कार्यसम्पादनार्थी, व्यग्र इत्यर्थः, ["सन्धुक्षणक्षणिको—" इत्यत्र "सन्धुक्षणाक्षणिको—" इति पाठे,—अक्षणिकः,—क्षणादतीतः अक्षणः,—कालासहिष्णुरित्यर्थः, तत्सदृशम् अक्षणिकः,—कार्यनिष्पादने क्षणादिविचारबहिष्कृतः, व्यग्र इत्येवार्थः] उपद्रष्टा—साक्षीभूतः, "उपदेष्टा" इति केचित्, द्विजः,—ब्राह्मणः, ऋत्विगित्यर्थः यस्यां तयोक्ताम्।

(३२२) उपेति।—उपक्रमानु—अविच्छिन्नैः, निहिताः,—स्थापिताः, अनुप-

हतहरितकुशां, सन्निहितदृषदजिनाज्यस्रुक्समित्पूलीनिवहां, (२२३) नूतनशूर्पार्पितश्यामलशमीपलाशमिश्रलाजराजिनीं वेदीम्। आरुरोह च तां दिवमिव सज्योत्स्नां शशी। (२२४) समुत्ससर्प च वेल्लितारुणशिखापल्लवस्य शिखिनः कुसुमायुध इव रतिद्वितीयो रक्ताशोकस्य समीपम्। हुते च (२२५) हुतभुजि दक्षिणावर्त्तप्रवृत्ताभिः वधूवदनविलोकनकुतूहलिनीभिः इव ज्वालाभिः एव सह प्रदक्षिणं बभ्राम। पात्यमाने च

---

हता,—अच्छिन्ना, हरिता,—हरिद्वर्णा, अत्र समाहृता इति यावत् सद्योत्खातौ तथाविधानामेवोपयोगात् इति भाव, कुशा,—दर्भा यस्यां ताम्। सन्निहितेति।—सन्निहिता,—समीपस्था, दृषत्—शिला, अजिनं,—चर्म, आज्यं—घृतं, स्रुक—होमभाण्डं, समिध,—काष्ठानि, तेषां पूल्य,—निचय, तासां निवहा —सङ्घाः यस्यां ताम्।

(२२३) नूतनेति।—नूतने—नवे, शूर्पे—प्रस्फोटने, "कुला" इति बङ्गीयैः परिभाषिते, अर्पितानि—स्थापितानि, श्यामलानि—हरिद्वर्णानि, यानि शमीपला-शानि—शमीपत्राणि तै मिश्रा,—सम्मिलिता, लाजा,—अक्षतानि, भ्रष्टधान्यानीत्यर्थ, "खइ" इति बङ्गीयै "लाइ" इति च पाश्चात्यै परिभाषितानि, तै राजति—राजते इति तथाविधा ताम् अतिधावल्यात् लाजानां तेषु हासत्वमुपचरितं कविभिः "यशांसि धवलता वर्ण्यते हासकीर्त्यो" इति कविसमयप्रसिद्धेरिति। तां—वेदीम्, आरुरोह—आरूढवान्। सज्योत्स्नं,—ज्योत्स्नासहितं, सचन्द्र इति भाव।

(२२४) समुत्ससर्प—उपातिष्ठत्। वेल्लितेति।—वेल्लिता,—चञ्चिता अरुणा, —रक्ता, शिखा,—ज्वाला, पल्लवा इव—किशलया इव शिखा एव पल्लवाः यस्य तथाभूतस्य शिखिन,—अग्ने, द्रुमस्य च वृक्षस्य चेत्यर्थ, "शिखी वह्नौ बलीवर्दे शरे केतुग्रहे द्रुमे" इति मेदिनी) कुसुमायुध इव—काम इव। रक्ताशोकस्य—विकसित पुष्पाशोकपादपस्य। तस्य रक्तप्रसूनत्वात् अग्निसाम्य, मदनोद्दीपकत्वाच्च तत्सन्नियतकाल मवस्थायिना सस्त्रीकमदनेन सह सवधूककुमारस्य साम्यं सुस्पष्टमेवेति प्रथम मत उपमालङ्कार।

(२२५) हुतभुजि—अग्नौ, दक्षिणावर्त्तप्रवृत्ताभि,—दक्षिणस्यां दिशि आवर्त्तनेन प्रवृत्ताभि, तथा च, ज्वालानां दक्षिणा हि आज्यगन्धाय समुन्मुखं प्रधावताभि,

लाजाञ्जलौ नखमयूखधवलिततनुः अदृष्टपूर्व्वबधूवररूपविस्मयस्मेर इव अदृश्यत विभावसुः।

अत्रान्तरे (२२६) स्वच्छकपोलोदरसङ्क्रान्तमनलप्रतिबिम्बमिव निर्वापयन्ती (२२७) स्थूलमुक्ताफलविमलबाष्पबिन्दुसन्दोहदर्शितदुर्दिना निर्वदनविकारं रुरोद बधूः। (२२८) उदश्रुविलोचनानाञ्च बान्धववधूनाम् उदपादि महान् आक्रन्दः। परिसमापितवैवाहिकक्रियाकलापस्तु जामाता

---

[illegible]हस्ताभिरित्यर्थः; दक्षिणावर्त्तस्य तस्य शुभसूचकत्वादिति भावः। ज्वालाभिः,—शिखाभिः। पात्यमाने—प्रक्षिप्यमाणे, अर्प्यमाणे इत्यर्थः, लाजाञ्जलौ—अक्षताञ्जलौ, भृष्टधान्याञ्जलावित्यर्थः; कुमारिकाकर्त्तृके लाजहोमसम्पादनार्थमिति भावः। नखेति।—नखानाम्—करजानाम्, वधूवरयोरिति भावः, मयूखेन—प्रभया, धवलिता—शुभ्रीभूता, तनुः—देहः यस्य तथाभूतः, अत एव अदृष्टेति।—अदृष्टपूर्व्वम्—प्रागनवलोकितम्, वधूवरयोः,—कन्याजामात्रोः, रूपेण—सौन्दर्य्येण, यो विस्मयः,—आश्चर्य्यभावः, तेन स्मेर इव—सहास इव, विभावसुः,—वह्निः। [illegible] लाजाञ्जलौ स्वगुणग्रामात् नखमयूखे[illegible]धवलितत्वगुणग्रहणेन तद्गुणालङ्कृतिः सहोत्प्रेक्षया।

(२२६) स्वच्छेति।—स्वच्छम्—उज्ज्वलम्, कपोलस्य—गण्डस्य, उदरम्—अभ्यन्तरम्, तत्र सङ्क्रान्तः,—प्रतिफलितः तम्, अनलप्रतिबिम्बमिव—अग्निप्रतिच्छायामिव, निर्वापयन्ती—प्रशमयन्ती। अग्निदाहमसौ निराकर्त्तुमैवाश्रुविसर्ज्जनमित्युत्प्रेक्षावोऽप्यमनन्यम।

(२२७) स्थूलेति।—स्थूलानि—पृथूनि मुक्ताफलानि—मौक्तिकानि इव, विमलाः—स्वच्छाः, बाष्पबिन्दूनाम्—अश्रुकणानां सन्दोहः,—समूहः, तैः दर्शितम्—प्रकटितम्, दुर्दिनम्—मेघाच्छन्नम् अहः, पतदश्रुधारामाराकारमिति यावत्, दुःखजनकं दिनञ्च, सामयिकपित्रादिविच्छेदसम्भावनया इति भावः यया तथाभूता। निर्वदनविकारम्—निः,—नास्ति, वदनस्य—मुखस्य, विकारः,—विकृतिः यस्मिन् तत् यथा तथा, निःशब्दमिति भावः।

(२२८) उदश्रुविलोचनानाम्—उद्गतबाष्पनेत्राणाम्, बान्धववधूनाम्—स्वजननारीणाम्, आक्रन्दः,—क्रन्दनम्, ("आक्रन्दः क्रन्दने दाने मित्र दारुणयुद्धयोः" इति मेदिनी)।

बध्वा मम प्रणनाम स्रग्गौ। (३२८) प्रविवेश च द्वारपक्ष-लिखितरतिप्रीतिदैवतं, प्रणयिभिः इव प्रथमप्रविष्टैः अलिकुलैः कृतकोलाहलम्, (३३०) अलिकुलपक्षपवनप्रेङ्खोलितैः कर्णोत्पलप्रहारभयप्रकम्पितैः इव मङ्गलप्रदीपैः प्रकाशितम्, (३३१) एकदेशलिखितस्तवकित रक्ताशोकतरुतलभाजा अधिज्यचापेन तिर्यक्कूणितनेत्रविभागेन शरमृजुकुर्वता

---

(३२८) "प्रविवेश" इत्यस्य "वासगृहम्" इत्युत्तरेण सम्बन्धः। तदेव विशिनष्टि, द्वारेत्यादि।—द्वारपक्षे—द्वारपार्श्वे ("पक्षो मासार्द्धके। पार्श्वे कुञ्जरपार्श्वयो" इति मेदिनी) लिखित—चित्रितं, रतिप्रीतिदैवतं—रतिरेव—कामवधूरेव, प्रीतिदैवतं—प्रणयदेवता यस्य तत्, यद्वा,—रतेः,—दाम्पत्यानुरागस्य, प्रीतेः,—हर्षे, दैवतम्—अरुन्धत्यादीनां पतिव्रताभ्यासमभूतानां देवतानां समूहः यत्र तथाविधम्, एता हि दाम्पत्यसुखविधायिन्य इति वेदितव्यम्। प्रणयिभिरिव—सुहृद्भिरिव, प्रथमप्रविष्टैः—अग्रे एव आगतैः, कुसुमामोदसमाकृष्टैरिति भावः, प्रणयिनः प्रणयवताम् अन्तःपुरादावपि स्वच्छन्दसञ्चारित्वं भवन्तीति गम्यते।

(३३०) अलीति।—अलिकुलानां—भ्रमरवृन्दानां, पक्षपवनेन—पत्राभिनिलेन, प्रेङ्खोलिता,—कम्पिताः तैः, अत एव कर्णेति।—कर्णोत्पलस्य—कर्णभूषणीभूतस्य उत्पलस्य प्रहारात्—ताडनात्, भयेन—शङ्कया, प्रकम्पितैरिव—प्रचलितैरिव, मङ्गलार्थितानां ताडनभञ्जस्य सततविभावात् इति भावः। ननु सत्स्वपि बहुषु वस्तुषु वासगृहे कथमत्र ताडनाशङ्का मङ्गलप्रदीपानां जाता? इति चेदभिधीयते,—सम्पत्तिपक्षा तुल्यबला परस्परं प्रतिहतिमाप्नुवन्ति इति दृश्यते, अत एव कर्णोत्पलायमानाः मङ्गलदीपाः भ्रमराभिहननजन्ति कर्णोत्पलान्दोलनं तेषां स्वताडनार्थं समुद्योगमिवामन्यन्त इत्युत्प्रेक्षाबीजमवधेयम्।

(३३१) एकेति।—एकदेशे—एकस्मिन् विभागे, लिखितः,—चित्रितः, स्तवकितः—सञ्जातगुच्छः, यः रक्ताशोकतरुः,—रक्तपुष्पाशोकवृक्षः, तस्य तलं—निम्नदेशं, भजते—आश्रयति इति तथोक्तेन तत्तलस्थितेन इत्यर्थः, अधिज्यचापेन—मौर्वीयुतधन्वना, तिर्यगिति।—तिर्यक्—वक्रं यथा तथा, कूणितः,—सङ्कोचितः, नेत्रविभागः,—नयनस्य तृतीयांशः येन तथाविधेन, लक्ष्यस्थिरीकरणार्थं अपाङ्गाश्रीकृततत्परत्वेनेत्यर्थः, शरं—बाणम्, ऋजूकुर्वता—सन्दधतेत्यर्थः।

कामदेवेन अधिष्ठितम्, (२३२) एकपार्श्वन्यस्तेन काञ्चनचामरकेण इतरपार्श्ववर्त्तिन्या च दान्तशफरकधारिण्या कनकपुत्रिकया साक्षाल्लक्ष्म्येव उद्दण्डपुण्डरीकहस्तया सनाथेन सोपधानेन स्वास्तीर्णेन शयनेन शोभमानं, (२३३) शयनशिरोभागस्थितेन च कृतकुमुदशोभेन कुसुमायुधसाहायकाय आगतेन शशिनेव निद्राकलशेन राजतेन विराजमानं वासगृहम् ।

तत्र च (२३४) व्रीडाया नववधूकायाः पराङ्मुखप्रसुप्ताया मणिभित्तिदर्पणेषु मुखप्रतिबिम्बानि (२३५) प्रथमालापाकर्णनकौतुकागतगृहदेवताऽऽननानीव मणिगवाक्षकेषु वीक्षमाणः

(२३२) एकपार्श्वन्यस्तेन—एकपार्श्वनिहितेन, काञ्चनचामरकेण—काञ्चनं—सौवर्णं, चामरकम्—चमरव्यजनमिति यावत् तेन। "काञ्चनचामरकेण" इत्यत्र "काञ्चनचामरकेण" इति पाठकल्पनं साधु, काञ्चनचामरकेण—सुवर्णदण्डशोभितवालव्यजनेन। इतरपार्श्ववर्त्तिन्या—अपरपार्श्वस्थायिन्या, दान्तेति।—दान्त—गजदन्तमय, शफरकं—कुसुमविशेषमित्यर्थः, धरति—धारयतीति तथोक्तया, कनकपुत्रिकया—काञ्चनपुत्तलिकया। उद्दण्डेति।—उद्दण्डम्—उन्नतनालम्, पुण्डरीकं—श्वेतपद्मं, हस्ते यस्याः तथाभूतया। सनाथेन—युक्तेन। सोपधानेन—उपधान—"बालिश" इति भाषया प्रसिद्ध, तत्सहितेन, स्वास्तीर्णेन—शोभनास्तरणयुक्तेन, शयनेन—शय्यया, पर्यङ्केनेत्यर्थः।

(२३३) शयनेति।—शयनस्य—शय्यायाः, शिरोभागे—अग्रभागे, स्थितेन—निहितेन, कृतेति।—कृता—विरचिता, कुमुदैः—कैरवैः, कुमुदस्य च, शोभा—सौन्दर्यं यस्य तेन च तेन, कुसुमेति।—कुसुमायुधस्य—पुष्पशरस्य, कामस्येत्यर्थः, साहायकाय—साहाय्यकरणाय, शशिना उद्दीपकत्वादिति भावः। राजतेन—रौप्यमयेन, निद्राकलशेन—निद्रायाः—शयने, शयनगृहे इत्यर्थः, यः कलशः,—घटः, नीराजनादीनामर्थं मङ्गलार्थं स्थापित इति भावः तेन।

(२३४) व्रीडया,—लज्जितायाः। पराङ्मुखप्रसुप्तायाः,—पराङ्मुखं निद्रितायाः, लज्जावशादेवेति भावः। मणीति।—मणिभित्तयः,—रत्नकुड्यानि एव, दर्पणाः,—आदर्शाः तेषु, मुखप्रतिबिम्बानि—आननप्रतिच्छायाः।

(२३५) प्रथमेति।—प्रथमालापस्य—आद्यसम्भाषणस्य, आकर्णने—श्रवणे, यत् कौतुकं—कौतूहलं, तस्मात् आगताः,—उपस्थिताः, या गृहदेवताः,—भवनाधि-

क्षणदां निन्ये। स्थित्वा च श्वशुरकुले (२३६) शीलेन अमृतमिव श्वश्रूहृदये वर्षन्, अभिनवाभिनवोपचारैः अपुनरुक्तानि आनन्दमयानि दश दिनानि स्थित्वा, दत्त्वा राजदौवारिकमिव राजकुले रणरणकं, यौतुकनिवेदितानि इव संवलानि आदाय हृदयानि सर्व्वलोकस्य, कथङ्कथमपि विसर्ज्जितो नृपेण वध्वा सह स्वदेशम् अगमदिति।

इति श्रीबाणभट्टकृते हर्षचरिते चक्रवर्त्तिजन्मवर्णनं नाम
चतुर्थ उच्छ्वासः ॥ ४ ॥

---

हाटदीव्य, तासाम् आननानि इव—मुखानि इव, अधिगवाक्षकेषु—रन्ध्रमयवातायनेषु, [ गवाम् अक्षीव इत्यत्र "अक्ष्णोऽदर्शनात्" (५।४।७६ पा०) इति समासान्ते अचि "अवङ्—" (६।१।१२२ पा०) इत्यादौ व्यवस्थितविभाषाश्रयणात् अवङि रूपम् ] वीक्षमाण,—पश्यन्, क्षणदा—रात्रि, निन्ये—यापयामास इत्यर्थः।

(२३६) शीलेन—सच्चरित्रेण। अभिनवाभिनवोपचारैः,—प्रतिदिन नूतननूतनसत्कारैः। अपुनरुक्तानि—अनास्वादितपूर्वाणि। राजदौवारिक—राजद्वाररक्षकम्। रणरणक—विच्छेदजनितमुद्वेगमित्यर्थः, [ रण,—शब्द, तत्प्रकारः रणरण इति, ततः स्वार्थे कन् ] दौवारिको यथा नियतमेव द्वारमाक्रम्य वर्त्तते, तथा तद्गमनजनितरणरणकोऽपि सदैव राजपरिजनानां हृदयमाक्रम्य अतिष्ठदिति भावः। यौतुकेति।—यौतुकाय—वैवाहिकोपहाराय निवेदितानि—समर्पितानि। संवलानि—पाथेयानि, आदाय—गृहीत्वा, इत्यर्थः। कथङ्कथमपि—अतिक्लेशेन, अनिच्छयेत्यर्थः, अपत्यभूत वस्तु न हि केनापि नयनगोचरादपसारयितुं शक्यते सहसा मातापितृहृदयैरपीति भाव, विसर्ज्जित,—गमनाय अनुमत इति यावत्। वध्वा—राज्यश्रिया।

इत्यर्थसमाम्नाटश्रीमद्धरचपञ्चाननेन शास्त्रज्ञानवत्सेन पण्डितकुलपतिना बि ए,
उपाधिधारिणा श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण विरचितायां,
तदात्मजाभ्यां पण्डितश्रीमदाशुबोधविद्याभूषण पण्डितश्रीमन्नित्यबोध
विद्यारत्नाभ्यां परिवर्द्धितायां प्रतिसंस्कृतायामभिनवाख्यायां
श्रीहर्षचरितव्याख्यायां चतुर्थ उच्छ्वासः ॥ ४ ॥

---

बलानुयातं चिरन्तनैः अमात्यैः अनुरक्तैश्च महासामन्तैः कृत्वा साभिसारम् उत्तरापथं प्राहिणोत्।

(२) प्रयान्तञ्च तं देवो हर्षः कतिचित् प्रयाणकानि तुरङ्गमैः अनुवव्राज। प्रविष्टे च (३) कैलासप्रभाभासिनीं ककुभं भ्रातरि, वर्त्तमानो नवे वयसि विक्रमरसानुरोधिनि (४) केसरिशरभशार्दूलवराहबहुलेषु तुषारशैलोपकण्ठेषु (५) उत्कण्ठमानवनदेवताकटाक्षाच्छादितशरीररक्षाभिः क्रीडन् मृगया

---

पूर्ब्बोपमाऽलङ्कारश्च। अपरिमितबलानुयातम्—अपरिमितैः,—प्रभूतैः, बलैः,—सैनिकैः, सामन्तैश्च, अनुयातम्—अनुगतं, चिरन्तनैः,—प्राचीनैः, मुख्यायनैरित्यथः, "सेवकाः पुरातनाः" इत्युक्तेर्निरतिशयविश्वासपात्रैः इति भावः, अनुरक्तैः,—स्वामिनि अनुरागवद्भिः, महासामन्तैः—सामन्तप्रधानैः। साभिसारं—ससहायमित्यर्थः। ["साभिसारम्" इत्यत्र "साभिसरम्" इति पाठेऽपि स एवार्थः, यथा—तैः सानुचरः सम्राट् सुतत्वात् सामन्तैः सेवकादिभिरनुसृतम्]। उत्तरापथम्—उत्तरदिकस्थप्रदेशविशेष, प्राहिणोत्—प्रेषयामास।

(२) प्रयान्तं—गच्छन्तं, इत्यादीति शेषः। प्रयाणकानि—पदं। अनुवव्राज—अनुजगाम, निजस्नेहौदार्यभावात् प्रवासगमनप्रवृत्ते प्रियजने कियदूरं तदनुसरणस्य लोकाचारसिद्धत्वाच्च इति भावः।

(३) कैलासेति।—कैलासस्य—तदाख्यस्य अद्रेः, प्रभया—कान्त्या, भासते—द्योतते इति तथोक्ता ताम्, ककुभम्—दिशम्। भ्रातरि—राज्यवर्द्धने। नवे वयसि—प्रथमयौवने इत्यर्थः। विक्रमरसानुरोधिनि—विक्रमे—शौर्ये यो रसः,—अनुरागः, उत्साह इति यावत् तम् अनुरुध्यते—अनुबध्नाति इति तथाभूते, यौवनकालस्वभावात् शौर्यप्रदर्शनोपयोगिनीत्यर्थः।

(४) केसरीति।—केसरिणः—सिंहाः, शरभाः—अष्टापदमृगाः शार्दूलाः,—व्याघ्राः, वराहाः,—शूकराः, तैः बहुलेषु—आकीर्णेषु, यद्वा—तैः बहुलाः—प्रभूताः येषु तथोक्तेषु, दुर्गमस्थानादौ तेषां प्राचुर्य्यात् इति भावः, तुषारशैलोपकण्ठेषु—हिमाचलान्तिकेषु।

(५) उत्कण्ठेति।—उत्कण्ठमानानां—राजकुमारशोभनाकृतिसौन्दर्यदर्शनेन तत्

मृगलोचनः कतिपयानि पदानि बहिरेव व्यलम्बत। चकार च (६) आकर्णान्ताकृष्टकार्मुकनिर्गतभासुरभल्लवर्षी स्वल्पीयोभिः एव दिवसैः निःश्वापदानि अरण्यानि।

एकदा तु (७) वासतेय्याः तुरीये यामे प्रत्युषसि एव स्वप्ने चटुलज्वालापुञ्जपिञ्जरीकृतसकलककुभा दुर्निवारेण दवहुतभुजा दह्यमानं केसरिणम् अद्राक्षीत्। तस्मिन् एव च दावदहने (८) समुत्सृज्य शावकान् उत्प्लुत्य च आत्मानं पातयन्तीं सिंहीम् अपश्यत्। आसीच्च अस्य चेतसि,—

---

कलिकावती, तद्दर्शनमात्रेण अनुरागोदयात् दर्शनीयकलामित्यर्थः, वनदेवतानां— वनाधिष्ठातृदेवीनां, कटाक्षाः—सानुरागतिर्यग्वीक्षितानि तेषाम् लक्ष्मभिः—समूहैः, आविला—मिलिता, शरीरकान्तिः—देहलावण्यं यस्य तथाभूतः। मृगलोचनः— हरिणायतलोचनः, रूपं इति भावः। व्यलम्बत—विलम्बं कृतवान्।

(६) आकर्णेति।—कर्णान्तात् आ आकर्णान्त—कर्णसमीपपर्यन्तम्, ["आङ्—" (२।१।१३ पा०) इत्यादिना अव्ययीभावः] आकृष्टात्—आकर्षितात्, कार्मुकात्—धनुषः, निर्गतात्—निःसृतात्, भासुरात्—प्रदीप्तात्, शाणितत्वात् इति भावः, भल्लात्—शराख्यास्त्रविशेषात् वर्षति—मुञ्चतीति तथाभूतः। स्वल्पीयोभिः—अत्यल्पैः। निःश्वापदानि—श्वापदरहितानि, अत्यर्थमृगयासक्तत्वात् हिंस्रजन्तुशून्यानीत्यर्थः।

(७) वासतेय्याः—वसति,—रात्रिरिति वासतेयी तस्याः, [तत्र साधु इत्यर्थे "पथ्यतिथि—" (४।४।१०४ पा०) इत्यादिना ढञ्प्रत्ययः] (वसती रात्रिवेदमनी" इत्यमरः) तुरीये—चतुर्थे, यामे—प्रहरे। प्रत्युषसि—प्रभाते। चटुलेति। —चटुलानां—चञ्चलानाम् इतस्ततः सञ्चरणशीलानामित्यर्थः, ज्वालानां—शिखानां, पुञ्जैः—समूहैः, पिञ्जरीकृताः—पिङ्गलीकृताः, सकलाः—समस्ताः, ककुभः—दिशः येन तथाभूतेन, दुर्निवारेण—निवारयितुमशक्येन अनिर्वापणीयेनेत्यर्थः, दवहुतभुजा —दावाग्निना। केसरिणं—सिंहम्, एतेन पितुर्भाविदाहकरो व्याधिः सूचितः, प्रत्यूषकालिकस्वप्नानां प्रायशः निरर्थकत्वाभावात्।

(८) समुत्सृज्य—परित्यज्य। उत्प्लुत्य—उल्लम्फ्य। पातयन्ती—निक्षिपन्तीम्, अनुगमनादिति भावः, एतेन अस्य मातुरग्निप्रवेशः सूचितः।

(९) "लोके हि लोहेभ्यः कठिनतराः खलु स्नेहमया बन्धनपाशाः, यदाकृष्टाः तिर्य्यञ्चोऽपि एवम् आचरन्ति" इति। (१०) प्रबुद्धस्य च अस्य मुहुर्मुहुः दक्षिणेतरम् अक्षि पस्पन्दे; गात्रेषु च अकस्मादेव वेपथुः विपप्रथे; निर्निमित्तम् एव अन्तर्बन्धनस्थानात् चचाल इव हृदयम्; अकारणादेव च अजायत गरीयसी दुःखासिका। "किमिदम्?" इति च (११) समुत्पन्नविविधविकल्पविमथितमतिः अपगतधृतिः चिन्ताऽवनमितवदनः स्तिमिततारकेण चक्षुषा (१२) समुद्भिद्यमानस्थलकमलिनीवनामिव चकार चकोरेक्षणः क्षणं क्षौणीम्। अह्नि च तस्मिन् शून्येन एव च चेतसा चिक्रीड मृगयाम्।

---

(९) लोके—जगति, संसारे इत्यर्थः, कठिनतराः,—अतिशयकठिनाः, स्नेहमयाः,—स्नेहात्मकाः, बन्धनपाशाः—बन्धनरज्जवः। यदाकृष्टाः,—यैः,—पाशैः, आकृष्टाः,—नियन्त्रिताः तिर्य्यञ्चः,—पशुपक्ष्यादयः, एवम्—अग्निप्रवेशेन आत्मत्यागरूपं व्यवसायमिति भावः।

(१०) प्रबुद्धस्य—जागरितस्य। दक्षिणेतरम्—वामम्, अक्षि—नेत्रम्, पस्पन्दे—पुस्फोर। वेपथुः,—कम्पः, विपप्रथे—प्रचकाश, आविरभूदित्यर्थः। निर्निमित्तम्—अहेतुकम्, अन्तरिति।—अन्तः,—देहाभ्यन्तरे हृदयस्य, यत् बन्धनस्थानं—संयमनस्थानं हृदयस्येति भावः तस्मात् चचाल—चकम्पे, हृत्कम्पः जातः इत्यर्थः। गरीयसी—अतिगुर्वी, दुःखासिका—दुःखेन अवस्थानम्, प्राक्तनकारणस्याविर्भावात्, निमित्तप्राया घटनुदा शोकसन्ततिर्वा।

(११) समुत्पन्नेति।—समुत्पन्नेन—आविर्भूतेन, विविधेन—नानाप्रकारेण, विकल्पेन—संशयेन, विमथिता—आलोडिता, मतिः,—बुद्धिर्यस्य तथाभूतः, अपगतधृतिः,—अधीरः, शुभमशुभं वा इति निर्णेतुमशक्यत्वात् इति भावः, चिन्तेति।—चिन्तया—दुर्भावनया, अवनमितम्—अधःकारितम्, वदनं—मुखं येन तथाभूतः। स्तिमिततारकेण—निश्चलकनीनिकेन।

(१२) समुद्भिद्यमानेति।—समुद्भिद्यमानं—विकासं गच्छत्, स्थलकमलिनीवनं—स्थलपद्मिनीकाननं यस्यां तामिव। चकोरेक्षणः,—चकोरनेत्रः, स्वाभाविकारुण्यात् इति भावः। क्षौणीं—पृथ्वीम्।

(१३) आरोहति च हरितहये मध्यमह्नो भवनम् आगत्य उभयतो मन्दमन्दं संवाह्यमानतनुतालहस्तः चितितलवितताम् (१४) अतिशिशिरमलयजरसलवलुलितवपुषम् इन्दुधवलोपधान-धारिणीं वेत्रपट्टिकाम् अधिशयानः साशङ्क एव तस्थौ।

(१५) अथ दूरादेव लेखगर्भया नीलीरागमेचकरुचा चीरचीरिकया रचितमुण्डमालकं, (१६) श्रमातपाभ्याम् आरोप्यमाणकायकालिमानम्, अन्तर्गतेन शोकशिखिना दह्य-

---

(१३) हरितहये—हरिदश्वे, सूर्ये इत्यर्थः, अह्नः,—दिवसस्य, मध्यं,—मध्यभागं तम्, आरोहति—उपगतति, मध्याह्ने जाते इत्यर्थः। उभयत,—उभयोः पार्श्वयोरित्यर्थः। संवाह्यमानेति।—संवाह्यमान—सञ्चाल्यमान, किङ्कराधिभिः इति भावः, तनु—स्वल्प, क्षुद्रमित्यर्थः, मन्द मन्द यथा स्यात्तथा वा, तालहस्त—व्यजन यस्य तथाभूतः। चितितलविततां—भूतलविस्तृताम्।

(१४) अतिशिशिरेति।—अतिशिशिरेण—अतिशीतलेन, मलयजरसस्य—चन्दनद्रवस्य, लवेन—बिन्दुना लुलित—क्लिन्न, वपुः,—अवयव यस्याः तथोक्ताम्। इन्दुधवलेति।—इन्दु,—चन्द्र, तद्वत् धवलं—शुभ्रम्, उपधानम्—उपबर्हं, "बालिश" इति ख्यात शिरस्य मनोपर्यामितृतपूर्णद्रव्यविशेष इत्यर्थ, तत् धारयतीति ता, इक्षिणिस्थामित्यर्थ, वेत्रपट्टिका—"शीतलपाटी" इति समाख्यया वङ्गदेशे प्रसिद्ध-वेत्रनिर्मितशयनसाधनविशेषम्। साशङ्क,—सोद्वेग।

(१५) "अथ" इत्यस्य "दूरादेव ··कुरङ्गकनामानम् आयान्तम् अद्राक्षीत" इति अग्रेण सम्बन्ध। तं विशिनष्टि, लेखगर्भयेत्यादिभि।—लेखगर्भया—अन्तर्गतलिप्या, नीलीति।—नीलीराग,—नीलवर्ण, यद्वा,—नीली—"नील" इति प्रसिद्ध ओषधिविशेष, तस्या राग,—रञ्जन, तेन तद्वत् मेचका—श्यामला, मयूरकण्ठाभा इत्यर्थ, ('कृष्णे नीलासितश्यामकालश्यामलमेचका" इत्यमर) रुक्—कान्ति यस्या तया, चीरचीरिकया—वसनखण्डेन, रचितेति।—रचिता—कृता, मुण्डमाला—शिरो माला, शिरोवेष्टनमित्यर्थ येन तम्।

(१६) श्रमेति।—श्रम,—आयास, आतप,—रौद्रञ्च ताभ्याम्, आरोप्य-माणेति।—आरोप्यमाण,—उत्पाद्यमान, कायस्य—देहस्य, कालिमा—कार्ष्ण्य यस्य तम्। अन्तर्गतेन—हृदयस्थेन, शोकशिखिना—शोकाग्निना, दह्य-

रताम् इव नीयमानम्, (१७) अनिलवगाऽऽगमनद्रुततरपदोद्धूयमानधूलिराजिव्याजेन राजवार्त्ताश्रवणकुतूहलिन्या मेदिन्या इव अनुगम्यमानम्, (१८) अभिमुखपवनप्रेङ्खत्प्रविततोत्तरीयपटप्रान्तवीज्यमानोभयपार्श्वम् अतित्वरया कृतपक्षम् इव आशु परापतन्तं, प्रेर्यमाणम् इव पृष्ठत स्वाम्यादेशेन, कृष्यमाणम् इव पुरस्तात् आयतै श्रमश्वासमोक्षैः, (१९) स्विद्यल्ललाटतटघटमानप्रतिबिम्बकेन कार्य्यकौतुकात् अपह्रियमाणलेखमिव भास्वता, सम्भ्रमभ्रष्टै इव इन्द्रियैः शून्यीकृतशरीरं,

---

रतामिव—अभ्यासकृतामिव नीयमान—प्राप्यमाण अत्यायासातिरेकस्य जायमानत्वात् कृशत्वापद्यमानमिति भाव ।

(१७) अनील।—अनलत्वरया—अतिवेगेन आगमनम्—आगति तस्मिन् द्रुततरेण—अतिशीघ्रम् शीघ्रागमनेनेत्यर्थ पदेन—पदक्षेपेण उद्धूयमाना—उत्क्षिप्यमाणा या धूलीना—रजसा राजि —श्रेणी समूह इत्यर्थ तद्व्याजेन—तच्छलेन राजवार्त्ताश्रवणकुतूहलवत्या—राज्ञ प्रभाकरवर्द्धनस्य सवादाकर्णनौत्सुक्यवत्या मेदिन्या—पृथिव्या इव क्षितिपतिवार्त्ता राजप्रवार्त्ता इति भाव अनुगम्यमानम्—अनुस्रियमाणम् ।

(१८) अभमुखेति।—अभिमुखपवनेन—सम्मुखागतेन वायुना प्रेङ्खत्—चलत् प्रवततस्य सुविस्तृतस्य उत्तरीयपटस्य—उत्तरीयवसनस्य य प्रान्त —पर्य्यन्तभाग तेन वीज्यमानौ—प्राप्तवीजनौ उभयौ—द्वौ पार्श्वौ—कक्षयोरधोभागौ यस्य तम् अत एव कृतपक्ष—जनितपक्षमिव। परापतन्त समागच्छन्तम्। प्रेर्यमाणमिव—प्रख्यमाणमिव। स्वाम्यादेशेन—प्रभुनियोगेन। पुरस्तात—अग्रत, आयतै—दीर्घै श्रमश्वासमोक्षै—परिश्रमजनितनिश्वासमोचनै अविश्रामधावने तथैव प्रकाशात इति भाव ।

(१९) स्विद्यदिति।—स्विद्यत—घर्म्माक्तेषु ललाटतटेषु—भालदेशेषु घटमान—पतत् प्रतिबिम्ब—प्रतिरूप यस्य तथाभूतेन *भास्वता*—सूर्य्येण कार्य्यकौतुकात—केन कार्य्यानुरोधेन अयमीदृक द्रुततर गच्छति इति ज्ञातुमौत्सुक्यात अपह्रियमाणा—चौर्य्यमाणा लेखा—लिपि यस्मात यस्य वा तम् ("लेखा लिपिराजि- कयोरपि" इति मेदिनी)। सम्भ्रमभ्रष्टैरिव—सम्भ्रम —कार्य्यव्यग्रता तेन भ्रष्टानि—

(२०) लेखापितप्रयोजनगौरवात् इव समेऽपि वर्त्मनि शून्यहृदयतया स्खलन्तं, कालमेघशकलम् इव पतिष्यतो दुर्वार्त्तावज्रस्य, धूमपल्लवम् इव ज्वलिष्यतः शोकज्वलनस्य, बीजम् इव फलिष्यतो दुष्कृतशालेः, अनिमित्तभूतदीर्घाध्वगं कुरङ्गकनामानम् आयान्तम् अद्राक्षीत्।

दृष्ट्वा च (२१) पूर्वनिमित्तपरम्पराऽऽविर्भूतभीतिः अभिद्यत हृदयेन। कुरङ्गकस्तु कृतप्रणामः समुपसृत्य प्रथमम्

---

भूतानि हैरिव, इन्द्रियैः,—करचरणादिभिः, शून्यीकृतेति।—शून्यीकृत—विरहितमित्यर्थं, शरीर—देह यस्य तयोक्त, महाऽऽपदि तथैव वैकल्योत्पत्ते इति भाव।

(२०) लेखेति।—लेखे—पत्रिकायाम्, अर्पितस्य—निहितस्य, लिखितस्येत्यर्थं, प्रयोजनस्य—कार्यस्य, गौरव—गुरुत्व तस्मादिव, समे—समतले, अबन्धुरे इत्यर्थं, अपि वर्त्मनि—पथि, शून्यहृदयतया—विमनस्कतया, महाराजामङ्गलाशङ्कयेति भाव, स्खलन्त—पतन्तम्। कालमेघशकलमिव—कृष्णवर्णमेघखण्डमिव, प्रलयकालिकसंवर्त्तादिवलाहकखण्डमिव वा, दुर्वार्त्तावज्रस्य—दु,—दुष्टा, कठिना इत्यर्थ, वार्त्ता—संवाद एव वज्रम—अशनि तस्य (वजधातो "ऋज्रेन्द्राग्र—" (उ० २ पा० २८ सू०) इत्यादिना रनि रूपम्)। धूमपल्लवमिव—धूमनिचयमिव, शोकज्वलनस्य—शोकाग्नेः। फलिष्यत—फलं प्रसविष्यमाणस्य, दुष्कृतशालेः—दुःखशाखिविटपस्य, दुर्दैवधान्यविशेषस्य वा, त्वरितफलाविर्भावबोधनाय आशुरोपणम्। अनिमित्तभूतदीर्घाध्वग—दुर्निमित्तसूचक दीर्घपथिकम्, यद्वा,—अनिमित्तभूत—दुर्निमित्तरूपं, दीर्घम—आयतम्, अध्वान—पन्थानं गच्छतीति तथोक्त, विशिष्टसङ्कटसम्भावनाव्यतिरेकेण दीर्घाध्वागमनप्रयोजनाभावात् इति भाव।

(२१) पूर्वेति।—पूर्वाश्च,—प्रागनुभूताश्च, अनिमित्तपरम्पराश्च,—दुर्लक्षणसमूहाश्च, दुःस्वप्नदर्शनादिरूपेभ्य इति भाव, ["पूर्वनिमित्त—" इत्यत्र "पूर्व्वनिमित्त—" इति पाठे,—पूर्वेषा—पूर्व्वदृष्टाना, निमित्तानां—हेतूना, दुःस्वप्नादिदुर्निमित्तसूचकानामिति भाव] आविर्भूता—सञ्जाता, भीति,—भयं यस्य तथाभूत, ["—आविर्भूत—" इत्यत्र "—आविर्भावित—" इति पाठान्तरम्, तत्र पूर्व्वनिमित्तपरम्पराभि कर्त्रीभि आविर्भाविता—सञ्जनिता, भीति यस्य तादृश] हृदयेन अभिद्यत—भग्नहृदयोऽभूदित्यर्थं, दूतस्य व्यग्रमलिनवदनदर्शनात् इति भाव।

कृताचमनश्च (२३) जनयितुः आयुष्कामोऽपरिमितमणि-कनकरजतजातमात्मपरिवर्हम् अशेषं ब्राह्मणसात् अकरोत्, (२४) अभुक्त एव उच्चचाल। "दापय वाजिनः पर्य्याणम्" इति च पुरःस्थितं शिरःकृपाणं बिभ्राणं बभाषे युवानम्। (२५) वेपमानहृदयश्च ससम्भ्रमप्रधावितपरिवर्हकोपनीतम् आरुह्य तुरङ्गमम् एकाकी एव प्रावर्त्तत।

(२६) अकाण्डप्रयाणसंज्ञाशङ्खक्षुभितम् सम्भ्रमात् सज्जीभूतम् उद्भूतमुखरखुररवभरितसकलभुवनविवरम् आगत्यागत्य सर्व्वाभ्यो दिग्भ्यो धावमानम् अश्वीयम् अद्राक्षीत्।

---

(२३) जनयितुः—पितुः, आयुष्कामः,—जीविताकाङ्क्षी, अपरिमितेति।—अपरिमितानि—असङ्ख्यानि, मणयः,—रत्नानि, कनकानि—काञ्चनानि, रजतानि—रौप्याणि, तेषां जातं—समूहम्, आत्मनः,—स्वस्य, परिवर्हं—परिच्छदम्, सर्व्वोपकरणभूतमिति यावत्, अशेषं—समग्रं, ब्राह्मणसात्—विप्रदेयं, ब्राह्मणाधीनमित्यर्थः।

(२४) अभुक्त एव—असम्पन्नाशनपानादिक्रिय एव, उच्चचाल—गन्तुमियेष इत्यर्थः। दापय—आरोपय इत्यर्थः, वाजिनः—अश्वस्य, पर्य्याणं—पल्ययनम्। शिर इति।—शिरसि—मूर्द्धि, कृपाणम्—असिं, निहितमिति भावः, बिभ्राणं—धारयन्तं, प्रभुनिर्देशाकाङ्क्षिणे भक्त्या तदाचारवत्त्वात् इति भावः। बभाषे—उवाच।

(२५) वेपमानहृदयः—कम्पमानचित्तः। ससम्भ्रमेति।—ससम्भ्रमं—सत्वरं, प्रधावितः,—प्रचलितः, यः परिवर्हकः,—अश्वपालः तेन उपनीतं—उपस्थापितं तम्। एकाकी एव—असहाय एव। प्रावर्त्तत—प्रचक्रमे, गन्तुम् इति शेषः।

(२६) अकाण्डेति।—अकाण्डे—असमये सहसा इत्यर्थः, प्रयाणं—यात्रा, प्रस्थानमिति यावत् तस्य संज्ञा—सूचना, ("संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना" इत्यमरः) तस्यै शङ्खः—शङ्खनादः इत्यर्थः, तेन क्षुभितं—समाकुलितम्। सम्भ्रमात्—आवेगात्, उद्वेगात्, सज्जीभूतं—कृतसज्जम्, उद्भूतेति।—उद्भूतेन—उत्थितेन मुखरेण—उच्चैः शब्देन इत्यर्थः, खुराणाम्—अश्वशफानां रवेण—नादेन, भरितम्—आपूरितं सकलं भुवनानां—जगतां, विवरम्—अवकाशः येन यस्य वा तथाभूतम्। सर्व्वाभ्यः—चतसृभ्य इत्यर्थः। अश्वीयम्—अश्वानां समूहः अश्वीयम्—

(२७) प्रस्थितस्य च अस्य प्रदक्षिणेतरं प्रयान्तो विनाशम् उपस्थितं राजसिंहस्य हरिणाः प्रकटयाम्बभूवुः। (२८) अशिशिररश्मिमण्डलाभिमुखश्च हृदयम् अवदारयन् इव दावशुष्के दारुणि दारुणं रराव वायसः। (२९) कज्जलमय इव बहुदिवसम् उपचितबहलमलपटलमलिनिततनुः अभिमुखम् आजगाम शिखिपिच्छलाञ्छनो नग्नाटकः।

---

अन्यमेनामन्य सर्वादिक, स्वकृतामपि त्वाम इति भाव सन्मार्गनयनात् नेत्री हितम अस्मादीहितैर्यानयोर्वा ["तस्य समूह" (४।२।३७ पा०) इति "तस्मै हितम्" (५।१।५ पा०) इत्यर्थे वा कविधानात इति ज्ञेयम्] चक्षुषो—चक्षुष्यौ, तन्निति शेष।

(२७) प्रस्थितस्य—प्रचलितस्य अस्य—नृपस्य। प्रदक्षिणेतरम्—अप्रदक्षिणं यथा तथा, वामभागेन इति यावत प्रयान्त,—गच्छन्त। राजसिंहस्य—राजश्रेष्ठस्य, ("स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जरा। सिंहशार्दूलनागाद्या पुंसि श्रेष्ठार्थगोचरा॥" इत्यमर), यद्वा—राजा सिंह इव राजेव सदृश तस्य, हरिणा,—मृगा हरिणा हि अरण्ये उद्धत पशव तदुपरत्यय सिंहाभाववत्त्व सूचयन्ति। प्रकटयाम्बभूवु,—सूचयामासु उक्तञ्च—"वामे मार्गशिवाकुम्भा दक्षिणे गोमृगद्विजा" इति।

(२८) अशिशिरेति।—अशिशिरा —उष्णा, रश्मय,—किरणा यस्य तस्य, सूर्यस्येत्यर्थ, मण्डल—बिम्ब तदभिमुख,—तत्सम्मुखीभूय उपविष्ट इत्यर्थ। अवदारयन् —विदारयन् व्यथयन्निति यावत् तादृशवायसशब्दानामशुभसूचकत्वादिति भाव। दावशुष्के —वनाग्निना दग्धावशिष्टे इति यावत दारुणि—काष्ठे, अर्द्धदग्धशुष्कवृक्षे इत्यर्थ, स्थित इति शेष। दारुणं—श्रुतिकठोरं यथा तथा रराव—दध्वान, एतस्य दर्शनमप्यशुभ बराहमिहिरेण, यथा—"छिन्नाग्रशुष्कद्रुमसंस्थिते धाङ्क्षे" इति।

(२९) कज्जलमय इव—अञ्जनमय इव। उपचितेति।—उपचितम—वृद्धिं नीतम अङ्गमलेषु जीवानां सञ्चारसम्भावनया जैनशास्त्ररतानां तत्क्षालननिषेधादिति भाव बहलम—प्रभूतेन मलपटलेन—किट्टनिचयेन मलिनिता—सञ्जातमला तनु,—शरीरं यस्य तथाभूत। शिखीति।—शिखिन,—मयूरस्य, पिच्छं—बर्हं लाञ्छनं—चिह्नं यस्य तथाभूत नग्नाटक,—नग्न,—विवसन सन्, अटति—भ्रमतीति तथोक्त, नग्नक्षपणक इत्यर्थ दिगम्बरबौद्धसन्न्यासीति यावत। अहिंसा परम धर्मो वदन्ति बौद्धा शरीरकीटविनाशशङ्कया न शरीरसंस्कार कुर्वते, मयूरपिच्छकृतेन

(३०) दुर्निमित्तैः अनभिनन्द्यमानगमनश्च नितराम् अप्रहृत-हृदयेन पितृस्नेहाहितम्रदिम्ना च तत्तदुपेक्षमाणः, (३१) तुरङ्गमस्कन्धबद्धलक्ष्यं चक्षुः अविचलं दधानः, समवसितहसितसङ्कथः, (३२) तूष्णीभूतेन भूपाललोकेन अनुगम्यमानो (३३) बहुयोजनसम्पिण्डितम् अध्वानम् एकेन एव अह्ना समलङ्घयत्।

(३४) उपलब्धनरेन्द्रमान्द्यवार्त्ताविवशे इव नष्टतेजसि

---

व्यजनेन च पथि आकाशे च सञ्चारिता क्रीडा अपसार्यन्ते आवातोपस्वातादिभ्य-सन्तापभयात् इति प्रसिद्धिः, तेषाञ्च दर्शनस्य दुर्लक्षणत्वमुक्तं यथा,—"नपुंसकव्यञ्जनमुण्डकखल्वाटितानां। प्रस्थाने वा प्रवेशे वा नैषाञ्च दर्शनं मता॥" इति।

(३०) दुर्निमित्तैः,—पूर्वोक्तैः वामनकरिपादिभिः दुर्लक्षणैः, अनभिनन्द्यमानम्—अप्रशस्यमानम्, अनाद्रियमाणमिति यावत्, गमनं यस्य तथाभूतः, तस्मात् किं करिष्यामि? किं मोक्ष्यामि? अथवा मत्प्रत्यूष एव समये कदाचित् अनर्थपात घटेत, तर्हि किं मुखं दर्शयामि अम्बायाः? इति चिन्तया मन्दोत्साहगतिकः इत्यर्थः, नितराम्—अतिशयेन। पित्रिति।—पितरि—जनके, स्नेहः,—प्रेम अनुरागविशेष इत्यर्थः तेन आहितः,—जनितः, म्रदिमा—मार्दवं यस्य तेन, जनकस्नेहाकुलेन इति भावः, तत्तत्—दुर्निमित्तजातमित्यर्थः, उपेक्षमाणः,—अगणयन्।

(३१) तुरङ्गमेति।—तुरङ्गमस्य—अश्ववाहनस्य, स्कन्धे—गलदेशे एव, बद्ध—स्थापितमित्यर्थः, लक्ष्यं—दृष्टिविषयः यस्य तथोक्तम्, अविचलं—स्थिरं, चक्षुः,—नेत्रं, दृष्टिमित्यर्थः, दधानः,—धारयन्। समवसितेति।—समवसिता—अवसानं गता, ["समवसित—" इत्यत्र "दु समवसित—" इति पाठे,—दु,—दुःखात्, समवसिता इत्यर्थः.] हसितेन—हास्येन सह, सङ्कथा—आलापः यस्य सः।

(३२) तूष्णीभूतेन—मौनिना, महादुर्भावनया विस्मृतान्यावेशेन इति भावः।

(३३) बहुयोजनेति।—बहुभिः,—अनेकैः, योजनैः,—क्रोशचतुष्टयैः ("स्यात् योजनं क्रोशचतुष्टयेन" इति लीलावती) सम्पिण्डितं—सम्बद्धं, पूर्णमिति यावत् गुम्फितं वा, बहुयोजनविस्तृतमित्यर्थः। अह्ना—दिवसेन, ["अपवर्गे तृतीया" (२।३।६ पा०) इति तृतीया]। समलङ्घयत्—अतिचक्राम।

(३४) उपलब्धेति।—उपलब्धया—विदितया, नरेन्द्रस्य—राज्ञः, मान्द्यवार्त्तया

अधोमुखीभवति भगवति भानुमति भक्तिप्रमुखेण प्रणयिना राजपुत्रलोकेन बहुशो विज्ञाप्यमानोऽपि न आहारम् अकरोत्। (३५) पुरःप्रवृत्तप्रतीहारगृह्यमाणग्रामीणपरम्पराप्रकटितप्रगुणवर्त्मा च वहन्नेव निन्ये निशाम्।

(३६) अन्यस्मिन् अहनि मध्यन्दिने विगतजयशब्दम्, अस्तमितर्तूर्यनादम्, उपसंहृतगीतम्, उत्सारितोत्सवम्, अप्रगीतचारणम्, (३७) अप्रसारितापणपण्यं, स्थानस्थानेषु पवन-

—अकुशलसंवादेन, विषण्ण इव—विषादं गत इव, व्यथित इव इत्यर्थः, नष्टतेजा इव—मन्दप्रभः, स्वगुरुजनैर्वकालेऽनवरणात् इति भावः, अधोमुखोभवति—पश्चिमाशामवलम्बति इत्यर्थः। भानुमति—सूर्ये। भक्तिप्रमुखेन—भक्तिप्रभृतिना। विज्ञाप्यमानोऽपि—अनुरुध्यमानोऽपि, प्रणयप्राचुर्यात् सहचराचारनियमभङ्गात् वा इति भावः।

(३५) पुर इति।—पुरः,—अग्रतः, प्रवृत्तेन—प्रचलितेन, प्रतीहारैः—दौवारिकैः, गृह्यमाणा—क्रियमाणा, पश्चिमाशामाश्रित्य आनीयमाना इत्यर्थः, या ग्रामीणपरम्परा,—ग्रामवासिगणः, स्कन्धावारात् ग्रामात् अदर्शनग्रामपर्यन्तं पन्थानं प्रदर्शय, तस्मात्तस्मात् पुरःस्थग्रामपर्यन्तमित्येवंरूपैः आदिश्यमानप्रतिग्रामस्थजना इति भावः ताभिः प्रकटित—प्रदर्शित प्रगुणम्—ऋजु, सुगममित्यर्थ, ("ऋजावजिह्मप्रगुणौ" इत्यमरः) वर्त्म—पन्था यस्य तथाभूत सन्, वहन्नेव—अविश्रान्तं चलन्नेव, पितृपादद्दर्शनोत्सुकेन इति भावः।

(३६) "अन्यस्मिन्" इत्यस्य "स्कन्धावारमाससाद" इत्युत्तरेणान्वयः। मध्यन्दिने—मध्याह्ने। स्कन्धावारं विशिनष्टि, विगतेत्यादि।—विगत —विरहित, जयशब्दः,—जयसूचकमङ्गलनिनादः यस्मात् यस्मिन् वा तं, शुद्धाशौचवादात् इत्याशय। अस्तमितेति।—अस्तमिता,—अस्तं गता, नष्टा इत्यर्थः, तूर्याणां—वाद्यविशेषाणां, नादाः,—ध्वनयः यस्मिन् तम्। उपेति।—उपसंहृतानि—त्यक्तानीति यावत्, गीतानि—गानानि यस्मिन् यस्माद्वा तम्। उत्सारितोत्सवम्—अपनीतानन्दम्। अप्रगीतचारणम्—प्रकृष्टं गीतं येषां ते प्रगीताः, न सन्ति प्रगीताः अप्रगीताः,—अप्रकृतसङ्गीता इत्यर्थः, चारणाः,—कुशीलवाः, नटा इति यावत् यस्मिन् तम्।

(३७) अप्रसारितेति।—न प्रसारितानि—न विस्तारितानि, आपणेषु—निषद्यासु, हट्टेषु इत्यर्थः, ("आपणस्तु निषद्यायाम्" इत्यमरः) पण्यानि - विक्रेयवस्तूनि

वनकुटिलाभिः कोटिहोमधूमलेखाभिः उल्लसन्तीभिः (३८) यम-महिषविषाणकोटिभिः इव उल्लिख्यमानं, कृतान्तपाशवागुराभिः इव वेष्ट्यमानम्, (३९) उपरि कालमहिषालङ्कारकालायस-किङ्किणीभिः इव कटु क्वणन्तीभिः दिवस वायसमण्डलीभिः भ्रमन्तीभिः आवेद्यमानप्रत्यासन्नाशुभं, (४०) क्वचित् प्रतिशायित-स्निग्धबान्धवाराध्यमानाहिबुध्नं, क्वचित् (४१) दीपिकादह्यमान-

---

यस्मिन् तम्। पवनेति।—पवनस्य—वायोः बलेन—वेगेन कुटिलाः,—वक्रिमत्यः ताभिः, कोटीति।—कोटिहोमस्य—राज्ञः पीडानिवृत्त्यर्थं स्वस्त्ययनेषु कोटिकृत्वः अनुष्ठितहोमस्य इति भावः, धूमलेखाभिः,—धूमराजिभिः, उल्लसन्तीभिः,—उद्गच्छन्तीभिः।

(३८) यमेति।—यमस्य—कृतान्तस्य, राज्ञो ग्रहणाय आगतस्य इति भावः, यो महिषः,—वाहनभूत इति भावः, तस्य विषाणकोटिभिरिव—शृङ्गाग्रैरिव, उल्लिख्यमानम्—उद्घृष्यमाणं समन्तादाकृष्यमाणमिव यावत्। कृतान्तेति।—कृतान्तस्य—यमस्य, पाशाः,—प्राणिसंयमनार्थं रज्जुविशेषा एव, वागुराः,—मृगबन्धनजालविशेषाः ताभिः, [ वाधातोः "मद्गुरादयश्च" (उ० १ पा० ४२ सू०) इति आकृतिगणत्वात् उरचि गुगागमे निपातनात् रूपम्। "वागुरा मृगबन्धनी" इत्यमरः ] वेष्ट्यमानमिव—बध्यमानमिव।

(३९) उपरि—ऊर्ध्वदेशे, अन्तरीक्षे इत्यर्थः, कालेति।—कालस्य—यमस्य, ("शमनो यमराड् यमः। कालो दण्डधरः" इत्यमरः) यो महिषः,—वाहनस्वरूपः तस्य अलङ्काराः,—आभरणरूपाः, याः कालायसकिङ्किण्यः—कृष्णलोहनिर्मितक्षुद्रघण्टिकाः ताभिरिव, कटु—श्रुतिविरसं यथा तथा इत्यर्थः, क्वणन्तीभिः,—स्वनन्तीभिः दिवस—कृत्स्नं दिनं व्याप्य इत्यर्थः, भ्रमन्तीभिः—विचरन्तीभिः, वायसमण्डलीभिः,—काकनिकरैः, आवेद्येति।—आवेद्यमानम्—सूच्यमानं, प्रत्यासन्नम्—आगतप्रायम्, अशुभम्—अमङ्गलं राजविनाशरूपमिति भावः यस्मिन् तत्, महोत्पातादौ क्रूरजीवानां स्वयं ग्रामसमापतनवत्त्वादिति भावः।

(४०) क्वचित्—कुत्रचित् विभागे, प्रतिशायितेति।—प्रतिशायितैः—कृतोपवासैः इत्यर्थः, स्निग्धैः,—वत्सलैः, राजनि अनुरक्तैरित्यर्थः, बान्धवैः,—बन्धुजनैः, आराध्यमानः,—उपास्यमानः आरोग्यकामनयेति भावः, अहिबुध्नः,—अहिना सर्पेण उपलक्षितः बुध्नः,—दीर्घः, अङ्घ्रिरिव बुध्नो वा यस्य सः अष्टमूर्तिः, शिव इत्यर्थः, सततकण्ठावेष्टितभुजङ्गत्वात्

(४७) उपहतमिव श्मशानपांशुभिः, अमङ्गलैरिव परिगृहीतं, यातुधानैरिव विध्वस्तं, कलिकालेन इव कवलितं, (४८) पापपटलैः इव सञ्छादितम्, अधर्मविप्लवैः इव लुण्ठितम्, अनित्यताधिकारैः इव आक्रान्तं, नियतिविलासैः इव आत्मीकृतं, शून्यमिव, सुप्तमिव, मुषितमिव, विलुञ्चितमिव, छलितमिव, मूर्च्छितमिव स्कन्धावारम् आससाद ।

---

विषये तदनुरागात् न राजदण्डभयं न लोकनिन्दाभयं वा इति तथाविधमन्देन आवर्हितम् ।

(४७) श्मशानेति ।—श्माः,—शवाः शेरतेऽत्र इति श्मशानं—शवदाहस्थानम्, [श्मनुपपदात् 'शीङ्' स्वप्ने' धातोः "शुषि—" (उ० २ पा० ९० सू०) इत्यादिना उणादिविधीना दाहुल्यवत्त्वात् इति आनचि सर्वत्र अकारलोपस्यात् ङित्त्वात् रूपम्] तस्य पांशुभिः—श्मशानस्थधूलिपुञ्जैः इत्यर्थः, उपहतमिव—दूषितमिव शोकेन आनन्दाभावात् पापदुष्टमिति भावः । अमङ्गलैः,—अशुभैः, परिगृहीतमिव आक्रान्तमिव, सर्वेषामेव प्रबलविषादग्रस्तत्वादिति भावः । यातुधानैरिव—राक्षसैरिव, ("राक्षसः कौणपः क्रव्यात् क्रव्यादोऽस्रप आशरः । यातुधानः पुण्यजनः" इत्यमरः) विध्वस्तं—विनष्टं सर्वत्र स्थितिनियमानुकूलसङ्घाभावात् । कवलितं—ग्रस्तं, शासनाभावात् दुर्जनानां प्रभावाधिक्यात्, सुष्ठकार्यव्यापारविरतत्वाच्च इति भावः ।

(४८) पापपटलैरिव—कलुषनिचयैरिव, सञ्छादितम्—व्याप्तम् । अधर्मविप्लवैः इव—अधर्मसञ्चारैरिव लुण्ठितम्—लुण्ठनम् । अनित्यताधिकारैरिव—अनित्यं—संसारेऽस्मिन् क्षणभङ्गुरं, तस्य भावः अनित्यता—विनश्वरता तस्याः अधिकाराः—अनित्यः संसारः धिगिति वचनानि तैरिव, आक्रान्तम्—अभिभूतं, शोकावेगात् सर्वत्रैव कर्तव्येषु औदासीन्यादिति भावः । नियतिविलासैरिव—भाग्यविपाकैरिव, आत्मीकृतं—गृहीतम्, अहो दुर्दैवम् । कथमस्माकमीदृशी दशा समुपस्थिता इत्येवं दैन्यवाक्यप्रवर्तनादिति भावः । शून्यमिव—जनरहितमिव, सुप्तमिव—निद्रितमिव, महाशोकवैकल्येन सर्वेषां निःस्पन्दत्वात् इति भावः । मुषितमिव—हृतसर्वस्वमिव इत्यर्थः, विभूषिताङ्गानामपि जनानां भूषणादिकं परित्यज्य दीनभावेनाव स्थानादिति भावः । विलुञ्चितमिव—अप्रतिभमिव, लुञ्जितमिव वा । छलितमिव—प्रतारितमिव, दुर्भावनया सुखादिवैकल्यादिति भावः । मूर्च्छितमिव—मोहं गतमिव,

(५१) तेन च अधिकतरम् अवदीर्य्यमाणहृदयः क्रमेण राजद्वारं प्रतिषिद्धसकललोकप्रवेशं ययौ। तुरगात् अवतीर्य्य अभ्यन्तरात् निष्क्रामन्तम् अप्रसन्नमुखरागं मुक्तमिव इन्द्रियैः सुषेणनामानं वैद्यकुमारम् अद्राक्षीत्। कृतनमस्कारश्च अप्राक्षीत्, —"सुषेण। अस्ति तातस्य विशेषो न वा?" इति। सोऽब्रवीत्, —"नास्ति, इदानीं यदि भवेत् कुमारं दृष्ट्वा" इति। (५२) मन्दमन्दं द्वारपालैः प्रणम्यमानश्च दीयमानसर्वस्वः, पूज्य-

---

मातेति।—मातापितृणा—मातरपितृणाम् ["आनङ् ऋतो द्वन्द्वे" (६।३।२५ पा०) इति सूत्रेण आनङादेशः मातुरानङ्] सहस्राणि—समूहाः, पुत्रदारशतानि च—पुत्र-कलत्रसमूहाश्च, युगे युगे—प्रतियुगं, अतीतानि—अतिक्रान्तानि, स्व सम्बन्धित्वेन ज्ञाता नाम गतानि इत्यर्थः ते—मातापित्रादयः स्त्रीपुत्रादयश्च, कस्य?—न कस्यापि इत्यर्थः, भवान् त्वं वा कस्य?—न कस्यापि इत्यर्थः। श्लोकेनानेन राजनन्द्यै त्वया अशरीरिणि न भाव्यं प्रागिकामिवनेव मति निधया, तयाऽप्येवमेव गन्तव्यमिति उप-दिष्ट इव हर्षः इति बोध्यम्। अत्र पितुरेव निधनं भविष्यति, तेन पितृविरहजनितक्रन्दन-शोकस्तु त्वया परिहरणीयः, तत्सम्बन्धस्यानित्यत्वात् अयितत्त्वस्वरूपपरिज्ञानत्वादिति विशेषे प्रस्तुते वक्तव्ये मातापित्रादीनां प्रतियुगकृत अपि च सामान्यमभिहितमिति सामान्येन विशेषस्य गम्यमानत्वेनाप्रस्तुतप्रशंसाऽलङ्कारः]। पथ्यावक्त्रं वृत्तम्॥ ९॥

(५१) तेन—तत्कालश्लोकेन, अवदीर्य्यमाणहृदयः,—भिद्यमानाभ्यन्तरः। प्रतिषिद्धेति।—प्रतिषिद्धः,—निवारितः, सकलानां लोकानां—जनानां, प्रवेशः,—अन्तर्गमनं यस्मिन् तत्। अभ्यन्तरात्—गृहमध्यात्, अन्तःपुरादिति भावः, निष्क्रामन्तं—निर्गच्छन्तम्। अप्रसन्नेति।—न प्रसन्नः,—प्रसादयुक्तः, मुखस्य रागः,—कान्तिः यस्य तम् इन्द्रियैः,—चक्षुरादिभिः, मुक्तमिव—परित्यक्तमिव, राज्ञः रोगप्रशमनोपायानुसन्धान-व्याकुलचित्ततया बाह्यज्ञानरहितमिव इत्यर्थः। विशेषः—अवस्थापरिवर्त्तनमित्यर्थः, कियता परिमाणेन रोगोपशम इति यावत्। नास्ति, विशेष इति शेषः। भवेत्, विशेष इति शेषः, प्रवासागतपुत्रमुखनिरीक्षणेन महानन्दोदये रोगप्रशमनस्य कथञ्चित् सम्भावितत्वात् इति भावः।

(५२) "मन्दमन्दम्" इत्यस्य "प्रणम्यमानश्च ....राजकुलं विवेश" इति अनेन सम्बन्धः। मन्दमन्द—शनैः शनैः। ["मन्दमन्दम्" इत्यत्र "मन्द मन्दम्" इति

मानकुलदेवत, (५३) प्रारब्धान्नतचरुपचनक्रियं, क्रियमाणषडाहुतिहोमं (५४) हूयमानपृषदाज्यलवलिप्तप्रबलदूर्वापल्लव, (५५) पठ्यमानमहामायूरी, प्रवर्त्यमानगृहशान्ति,

पाठान्तरम्]। तत विशिनष्टि, दीयमानेत्यादिभिः।—दीयमानानि—वर्ष्यमाणानि, ब्राह्मणादिभ्य इति भावः, सर्वस्वानि—सर्वाणि स्वानि—धनानि यत्र तत्, ब्राह्मणादीनां महाबाधाप्राप्तिकरत्वात् इति भावः॥ पूज्यमानेति।—पूज्यमाना,—अर्च्यमाना, कुलदेवता,—चण्डीप्रभृतयो गृहदेवता यस्मिन् तत्।

(५३) प्रारब्धेति।—प्रारब्धा—प्रक्रान्ता, चरुतचरोः—दीयमानयोः देवेभ्यः दीयमानस्य चौरपकान्नविशेषस्य, पायसस्येति यावत, पचनक्रिया—पाकानुष्ठानं यस्मिन् तत, पुष्यनक्षत्रसमागतशान्तये हुतपायसेन होमविधानादिति भावः, उक्तञ्च षट्कर्मदीपिकायां,—"पुष्ये हुतपायसम्" इति। क्रियमाणेति।—क्रियमाणा,—अनुष्ठीयमाना, षट्—षट्संख्यका, आहुतयः,—देवोद्देशेन वह्नौ समन्त्रघृतादिप्रक्षेपरूपा यस्य, होमा यस्मिन् तत्, षडाहुतिहोमानामसमाप्तिकरत्वे तदसमाप्तौरैवोक्तं, यथा शाकुने,—"ओं देवकृतस्यैनसोऽवयजनमसि स्वाहा १। ओं मनुष्यकृतस्यैनसोऽवयजनमसि स्वाहा २। ओं पितृकृतस्यैनसोऽवयजनमसि स्वाहा ३। ओं आत्मकृतस्यैनसोऽवयजनमसि स्वाहा ४। ओं एनसोऽवयजनमसि स्वाहा ५। ओं यच्चाहमेनो विद्वांश्चकार यच्चाविद्वांस्तस्य सर्वस्यैनसोऽवयजनमसि स्वाहा" ६। इति। यद्वा,—"ओं प्रजापतये स्वाहा" इत्यादिमन्त्रैः षण्णां देवतानां नामोच्चारणपूर्वकमग्नौ षण्णामाहुतीनां दानेन यत्र होमः षडाहुतिहोम उच्यते।

(५४) हूयमानेति।—हूयमाना,—अग्नौ प्रक्षिप्यमाणा, पृषदाज्यस्य—दधियुक्ताज्यस्य, ("पृषदाज्यं सदध्याज्ये" इत्यमरः) लवेन—बिन्दुना, लिप्ता,—सिक्ता अतएव, प्रबला,—सबला, हरिद्वर्णा इति भावः, दूर्वापल्लवा,—दूर्वाकिसलया यस्मिन् तत, उक्तञ्च षट्कर्मदीपिकायाम्,—"आयुःकामी हुनेदाज्यं दूर्वाभिः पायसैर्ज्वरं सद्यो विनाशयेत्" इति।

(५५) पठ्यमानेति।—पठ्यमाना—उच्चार्यमाणा, महामायूरी—बौद्धविद्याविशेषः, मन्त्रविशेषो वा यत्र तत, सार्वभौमस्य निरामयत्वकामनया राज्ञास्ति विभिन्नसाम्प्रदायिकैः समतलिखस्वस्त्ययन-मन्त्रपाठादीनामर्चादौ अनुष्ठानात् इति ज्ञेयम्। प्रवर्त्यमानेति।—प्रवर्त्यमाना—सम्पाद्यमाना, गृहशान्तिः,—गृहदोष

(५६) निर्वर्त्त्यमानभूतरक्षाबलिविधानं, प्रयतविप्रप्रस्तुतसंहिताजपं, (५७) जप्यमानरुद्रैकादशीशब्दायमानशिवगृहम्, अतिशुचि-शैवसम्पाद्यमान-विरूपाक्ष-क्षीरकलश-सहस्रस्नपनम्, (५८) अजिरोपविष्टैश्च अनासादितस्वामिदर्शनदूयमानमानसैः

---

संवर्द्धिरिति यावत् यत्र तत्, दुष्टग्रहाणां कोपदृष्टिभयया भूम्यां मल्लादयश्छिन्नशिरसा वा इति भावः।

(५६) निर्वर्त्त्यमानेति।—निर्वर्त्त्यमानं—सम्पाद्यमानं भूतेभ्यः,—देवयोनिविशेषेभ्यः रक्षार्थं—त्राणार्थं बलिविधानं—माषभक्ताद्युपहारप्रदानं यस्मिन् तत्, तत्प्रदानमन्त्रश्च उक्तो यथा—"ओं भूताः प्रेताः पिशाचाश्च ये वसन्त्यत्र भूतले। ते गृह्णन्तु मया दत्तं बलिमेतं प्रसाधितम्॥ अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः। ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया॥" इति। [ पच्यमान बलिविधानम्" इत्यत्र "पच्यमानमहामायूरीप्रवर्त्स्यमानरक्षाशान्तिनिवर्त्त्यमानभूतरक्षाबलिविधानम्" इति समस्तपाठे,—पच्यमाना या महामायूरी तया प्रवर्त्स्यमानायै—करिष्यमाणायै रक्षायै शान्त्यै—दोषप्रशमनाय निवर्त्त्यमानं भूतरक्षाबलिविधानं यत्र तत् ]। प्रयतेति।—प्रयतैः,—संयमशालिभिः, विशुद्धचित्तैः इति यावत् विप्रैः—द्विजैः प्रस्तुतः,—प्रारब्धः, संहिताजपः—वेदपाठः यस्मिन् तत्, अपौरुषेयवाक्यसमष्टिसीमाना निरन्तरपाठमात्रप्रत्यवायनाशानुमापनात् इति भावः।

(५७) जप्यमानेति।—जप्यमानया—पठ्यमानया रुद्रैकादश्या—"नमस्ते रुद्रमन्यव" इत्यादि यजुर्वेदोक्तरुद्राध्यायस्तुतिरूपया शब्दायमानं—निनादयमानं शिवगृहं—शिवमन्दिरं यस्मिन् तत्, दुःसाध्यपीडादौ शिवसमक्षं रुद्राध्यायपाठस्य महाफलप्रदत्वात् इति हृदयम्। अतिशुचीति।—अतिशुचिना—अतिपूतेन शैवेन—शिवोपासकेन, सम्पाद्यमानम्—अनुष्ठीयमानं, विरूपाक्षस्य—शिवस्य, [ "बहुव्रीहौ—" (५।४।११३ पा०) इत्यादिना षच् ] क्षीरकलशानां—दुग्धकुम्भानां, सहस्रेण—सहस्रसंख्यया स्नपनम्—अभिषेचनं यस्मिन् तत्, शैवतन्त्रावधानेन तथाविधानुष्ठानस्य उत्पातप्रशमकत्वात् इति भावः।

(५८) अजिरोपविष्टैः—चत्वरासीनैः [ अजधातोः "अजिर—" (उ० १ पा० ५४ सू०) इत्यादिना किरचि वीभावाभावे रूपम्। "अङ्गनं चत्वराजिरे" इत्यमरः ] अनासादितेति।—अनासादितेन—अप्राप्तेन, स्वामिदर्शनेन—प्रभुसाक्षात्कारेण, स्वामिदर्शनालाभेन इत्यर्थः, दूयमानं—तप्यमानं, मानसं—चित्त

अभ्यन्तरनिष्पतितनिकटवर्त्तिपरिजननिवेद्यमानवार्त्तैः वार्त्तीभूतस्नानभोजनशयनैः (५९) उज्झितात्मसंस्कारमलिनवेशैः लिखितैः इव निश्चलैः नरपतिभिः नीयमाननक्तन्दिनं, (६०) दुःखदीनवदनेन च प्रघणेषु बद्धमण्डलेन उपांशुव्याहृतैः केनचित् चिकित्सकदोषान् उद्भावयता, केनचित् (६१) असाध्यव्याधिलक्षणपदानि पठता, केनचित् दुःस्वप्नान् आवेदयता, केनचित् पिशाचवार्त्तां विहस्खता, केनचित्

---

येषां तैः। अभ्यन्तरेति।—अभ्यन्तरात्—प्रासादमध्यात्, अन्तःपुरादिति यावत्, निष्पतितेन—निर्गतेन, निकटवर्त्तिना—समीपस्थेन, राज्ञ इति भावः, परिजनेन—परिचारकेण, निवेद्यमाना—विज्ञाप्यमाना, वार्त्ता—राजवृत्तान्तः येषां तैः। वार्त्तीभूतेति।—वार्त्तीभूतानि—वार्त्तामात्रावशेषाणि, कथाशेषाणीति भावः, स्नानानि—आप्लावाः, भोजनानि—आहाराः, शयनानि—स्वापाश्च येषां तैः, स्वामिनो जीवननाशशङ्कया उद्विग्नचित्तत्वादिति भावः।

(५९) उज्झितेति।—उज्झितेन—परित्यक्तेन, आत्मसंस्कारेण—स्वकीयशरीरमार्जनादिरूपेण प्रसाधनकर्मणा इत्यर्थः, मलिनाः—विवर्णाः, वेशाः—परिच्छदाः येषां तैः। लिखितैरिव—चित्रार्पितैरिव, निश्चलैः—निस्पन्दैः। नीयमानेति।—नीयमानम्—अतिक्रम्यमाणम्, नक्तन्दिनम्—रात्रिन्दिवं यस्मिन् तत्। [नक्तञ्च दिवञ्च इत्यत्र "विप्रसिद्ध—" (२।४।१२ पा०) इत्यादिना एकवद्भावे रूपम्। 'नक्तन्दिनम्' इत्यत्र "नक्तन्दिवम्" इति पाठोऽपि स एवार्थः, "अचतुर—" (५।४।७७ पा०) इत्यादिना समासः]।

(६०) दुःखेति।—दुःखेन—मनःपीडया, शोकेनेति यावत्, दीनम्—म्लानम्, वदनं यस्य तेन। प्रघणेषु—बहिर्द्वारप्रकोष्ठविशेषेषु, ("प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके" इत्यमरः) बद्धमण्डलेन—मण्डलाकारोपविष्टेन, उपांशुव्याहृतैः—अनुच्चभाषितैः, चिकित्सकदोषान्—चिकित्सकाः रोगमेव न निर्वक्तुं शक्नुवन्ति, औषधान्यपि न तथा सुप्रयुक्तानीत्येव दोषान्, उद्भावयता—प्रकटयता।

(६१) असाध्येति।—असाध्यस्य—दुश्चिकित्स्यस्य, व्याधेः—रोगस्य, ("रोगव्याधिगदामयाः" इत्यमरः) लक्षणपदानि—लिङ्गप्रकाशकवाक्यानि, पठता—कीर्त्तयता, सद्वैद्याभिमानित्वादिति भावः। दुःस्वप्नान्—अमङ्गलसूचकस्वप्नदर्शनानि,

( ६२ ) कार्त्तान्तिकादेशान् प्रकाशयता, केनचित् उपलिङ्गानि गायता, अन्येन अनित्यतां भावयता, संसारञ्च अपवदता, कलिकालविलसितानि च निन्दता, दैवञ्च उपालभमानेन अपरेण धर्माय कुप्यता, राजकुलदेवताश्च अधिक्षिपता, अपरेण ( ६३ ) क्लिष्टकुलपुत्रकभाग्यानि गर्हयता बाह्यपरिजनेन कथ्यमानकष्टपार्थिवावस्थं राजकुलं विवेश।

( ६४ ) अविरलबाष्पपयःपरिप्लुतलोचनेन पितृपरिजनेन वीक्ष्यमाणो विविधौषधिद्रव्यद्रवगन्धगर्भसुरक्षयतां छायानां

---

आवेदयता—ज्ञापयता, परस्परमिति भावः। पिशाचवार्त्ता—पिशाच,—अधमदेवयोनिविशेष, तस्य वार्त्ता—वृत्तान्तं तां, पिशाचाविष्टो वा राजा, अदस्य तथा चेष्टितं दृश्यते, इत्येवंरूपवचनमित्यर्थः, विहसता—प्रकटयता।

( ६२ ) कार्त्तान्तिकादेशान्—गणकादेशान्, ज्योतिर्विद राज्ञ एवमेव मरणं निर्णीतमत इत्येवंरूपानित्यर्थः। ("सांवत्सरो ज्यौतिषिको दैवज्ञगणकावपि। स्युर्मौहूर्तिकमौहूर्तज्ञानिकार्तान्तिका अपि॥" इत्यमरः)। उपलिङ्गानि—उत्पातविशेषान्, अमङ्गलसूचकरक्तवृष्ट्यादिरूपान् इति भावः, गायता—कीर्त्तयता। अनित्यता—क्षणभङ्गुरता, देहस्य इति भावः, भावयता—चिन्तयता। अपवदता—निन्दता। कलिकालविलसितानि—कलिकालस्य—चतुर्थयुगस्य, विलसितानि—दुर्विचेष्टितानि, कलिकाले पापिजनसङ्कुले ईदृशो धर्मपरायणो राजा कथमपि न जीवति इत्यादिरूपाणीति भावः। दैव—विधिम्, उपालभमानेन—तिरस्कुर्वता। अधिक्षिपता—निर्भर्त्सयता।

( ६३ ) क्लिष्टेति।—क्लिष्टानां—क्लेशाभिभूतानां, दुर्गतानामित्यर्थः, कुलपुत्राणां—सत्कुलजातकुमाराणां, पित्रादिविहीनतया निराश्रयाणां राज्ञा पाल्यमानानामिति भावः, भाग्यानि—दुरदृष्टानि, गर्हयता—निन्दता। बाह्यपरिजनेन—बहिःस्थपरिवारवर्गेण, कथ्यमानेति।—कथ्यमाना—मिथः आलप्यमाना कष्टा—दारुणा, पार्थिवस्य—राज्ञः अवस्था—दशा यस्मिन् तत्।

( ६४ ) अविरलेति।—अविरलैः,—निरन्तरैः, अविच्छिन्नैरिति यावत्, बाष्पपयोभिः,—नेत्रजलैः, [ अत्र पयःपदमधिकमेव, बाष्पशब्देनैव विवक्षितार्थलाभादिति ज्ञेयं ] परिप्लुते—सिक्ते, लोचने—नयने यस्य तेन। विविधेति।—विविधानां

सर्पिषां तैलानाञ्च पच्यमानानां गन्धम् आजिघ्रन् अवाप तृतीयं कक्ष्यान्तरम्।

(६५) तत्र च अतिनिःशब्दे शङ्खायष्टद्वीपातिबहुवेदिनि, विगुणतिरस्करिणीतिरोहितसुवीथीपथे, (६६) पिहितपक्षद्वारके, परिहृतकवाटरटिते, घटितगवाक्षरचितमरुति, दूयमानपरिचारके, (६७) चरणताडनस्वनत्सोपानप्रकुपितप्रती-

—नानाप्रकाराणाम्, औषधद्रव्याणां—रोगोपशमकलतागुल्मादीनां द्रवस्य—रसस्य, गन्धं,—आघ्राणं, गर्भे—मध्ये यत्र तत् यथा तथा, उत्क्वथतां—पच्यमानानां क्वाथानां—कषायविशेषाणाम्। सर्पिषां—घृतानाम्। अवाप—प्राप, प्रविवेश इति यावत्। कक्ष्यान्तरं—कक्षे—राजान्तःपुरे भवा कक्ष्या,—हर्म्यादिप्रकोष्ठ इत्यर्थः, तासामन्तरम्—मध्यगृहम्।

(६५) तत्रेत्यादि।—"तत्र च" इत्यस्य "चन्द्रगृहे स्थित · पितरमद्राक्षीत्" इत्युत्तरेण सम्बन्धः। शङ्खेति।—शङ्खायष्टद्वी—देहली, द्वारारम्भप्रदेश इत्यर्थः, ("शङ्खायष्टद्वी देहली" इत्यमरः) तद्द्वाधिनि,—तद्धारिणि तत्रावस्थायिनि इत्यर्थः, बहवः,—अनेके, वेदिनः—वचनाभावसुचका पुरुषा यस्मिन् तथोक्ते। विगुणेति।—विगुणाभिः,—विरलतानि तिरस्करिणीभिः,—जवनिकाभिः, तिरोहिता,—अन्तर्हिता, सुवीथिना—शङ्खारणाम् अभ्यन्तरकविशिष्टावासमित्यर्थः, ("वीथी पङ्क्ती गृहाङ्गे च रूपकान्तरवर्त्मनी" इति मेदिनी) पन्थाः,—अभ्यन्तरमार्गः इत्यर्थः, यस्मिन् तादृशे, अत्यन्तमध्याने राजद्वारस्था नि:शब्दावस्थाभावारीति भावः।

(६६) पिहितेति।—पिहितम्—आवृतं, पक्षद्वारम्—अभ्यन्तरस्थ प्रच्छन्नद्वारं, "खिड़्की" इति ख्यातं गुप्तद्वारमित्यर्थः पार्श्वद्वारं वा यस्य तादृशे, ("प्रच्छन्नमन्तर्द्वारं यत् पक्षद्वारं तदुच्यते" इति "पक्षद्वारन्तु पक्षक" इति च कोषान्तरे)। परिहृतेति। —परिहृत—परित्यक्तं, कवाटानाम्—अररीणां, द्वारोद्घाटककाष्ठफलकानामित्यर्थः, रटितं—शब्दं यस्मिन् तथोक्ते रोगः कर्णपीडाशङ्कया प्रवेशनिर्गमनयोरपि सन्नद्धारोधनात् नि:शब्द इति भावः। घटितेति।—घटिते,—बद्धे, गवाक्षे—वातायने, रचिताः,—निरुद्धाः, मरुतः,—वायवः यस्मिन् तथोक्ते निवारितबाह्यवायाविति भावः। दूयमानपरिचारके—दूयमाना—तप्यमाना, परिचारका,—भृत्या यस्मिन् तथोक्ते।

(६७) चरणेति।—चरणस्य—पदस्य, इतस्ततः सञ्चरतो जनानामिति भावः, ताडनेन—आघातेन, चेपणेन इति यावत्, स्वनत्—नदत्, यत् सोपानम्—अधिरोहणी तेन

श्वेतार्द्रकर्पटार्पितकर्पूरपरागशीतलीकृतशलाके, (७७) नाश्यान-पङ्कलिप्यमाननवभाण्डगतगण्डूषग्रहणमस्तुनि, तिम्यत्कोमल-कमलिनीपलाशप्रावृतमृदुमृणालके, सनालनीलोत्पलपूली-सनाथ सलिलपानभाजन भुवि, धारानिपात निर्वाप्यमाण-

---

तुषारस्य—हिमस्य, परिकरः,—समारम्भः, घनसन्निवेश इत्यर्थः, तस्मात् य करकः,—वर्षोपलः, "करक्" इति वङ्गभाषया प्रसिद्ध जलसङ्घातविशेष, इत्यर्थः, यद्वा,—तुषारेण परिकरितः,—मिश्रितः, यः करकः,—कमण्डलुः, ("कमण्डलौ च करकः" इत्यमरः) तेन, तत्र स्थापनेनेत्यर्थः, शिशिरीक्रियमाणं—शीतलीक्रियमाणम्, उदश्वित्—घर्ममुदकं तक्रं यस्मिन् तथोक्ते ("तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्धाम्बु निर्जलम्" इत्यमरः)। श्वेतेति।—श्वेते—शुभ्रे, धौते इत्यर्थः, आर्द्रे—जलसिक्ते इत्यर्थः, कर्पटे—जीर्णवस्त्रखण्डे, अर्पितं,—निहितं, कर्पूरस्य—घनसारस्य, [ कुम्भवादौ "खर्वे—" (छ० ४ पा० ९० सू०) इत्यादिना ऊरप्रत्यये सत्वाभावे रूप ] परागैः,—रजोभिः, शीतलीकृता,—शिशिरीकृता, शलाका,—शिलाजतिका, यद्वा,—शीतकादिकृतवर्णजायतद्रव्यावलेपा इत्यर्थः, त्रिवीजदयादिषु च शवशाखादिकुसुमारान्तेषु च तस्य शर्यालेन स्पर्शकर्मस्यविनोदानुभवात् इति भाव यत्र तथोक्ते।

(७७) नाश्यानेति।—नाश्यानेन—अघनेन, तरलेन इत्यर्थः, (आङ्पूर्वकस्य "श्यायते" इत्यस्य निष्ठाया रूपं, पश्चात् नञ्समासः ) पङ्केन—कर्दमेन, मुखशोष-प्रशमनाय शीतलीकरणार्थमिति भावः, लिप्यमानं—दिह्यमानं, यत् नवं—नूतनं भाण्डं —घट, तद्गतं—तत्स्थं, गण्डूषग्रहणाय—मुखपूरणाय इत्यर्थः ("गण्डूषो मुखपूर्तौ च पुष्करस्याङ्गुलीमिते" इति मेदिनी) मस्तु—दधिभवं मस्तु, दध्न उपरिभागात् निःसृतं दधिसम्पृक्तं जलमित्यर्थः यत्र तादृशी, तस्य मुखशोषाद्युपशमकरगुणवत्त्वात् इति भावः, ("मस्तु दधिभवं मस्तु" इत्यमरः)। तिम्यदिति।—तिम्यता—आर्द्रीभवता सद्यः आनीततया जलसम्पर्केण इत्यर्थः, कोमलेन—मृदुना, कमलिनीपलाशेन—पद्मिनीपत्रेण, प्रावृतानि—आच्छादितानि, मृदूनि—कोमलानि, मृणालकानि—उशीराणि, बिसानि वा यस्मिन् तथोक्ते, ("मृणालं नलदे क्लीबं पुंनपुंसकयोर्बिसे" इति मेदिनी। नलदम् —उशीरम्) एतत्स्पर्शात् चाङ्गदाहस्य कथञ्चिदुपशमः स्यादिति द्रव्यगुणविदामाशयः। सनालेति।—सनालानां—नालसहितानां, नीलोत्पलानाम्—इन्दीवराणां, पूलीभिः,—समूहैः, सनाथा—युक्ता, आच्छादितेति यावत्, सलिलपानभाजना—जलपान-पात्राणां, भूः,—स्थानं यस्मिन् तथोक्ते, सुरभिता शीतलत्वाच्च चेतु भूमौ सनाल-

क्वथिताम्भसि, ( ७८ ) पटुपाटलाशर्करामोदमुचि, मञ्चकाश्रितसिकतिलकर्करीविश्रान्तातुरचक्षुषि, ( ७९ ) सजलशैवलवलयितगलद्दोलयन्मल्लके, गल्वर्कशालाजिरोन्नासितलाजसक्तुनि, · पीतमसारपारीपरिगृहीतकर्कशर्करे,

---

शीतोत्पलसमूहं विन्यस्य तदुपरि सजलपात्रं स्थापितवान् इति भावः। धारेति।—धाराया—प्रणालाया, अवस्रवेति भावः, निपातेन—पातनेन, निर्वाप्यमाणानि—शीतलीक्रियमाणानि, क्वथितानि—उष्णीकृतानि, अम्भांसि—जलानि यस्मिन् तादृशे, त्वरितशैत्यापादनायेति भावः।

( ७८ ) पट्विति।—पटु—स्फुटं यथा तथा, पाटलाया—श्वेतरक्तवर्णाया, शर्करायाः,—पुष्पविशेषस्य, ( "शर्करा स्यादश्मखण्डे पुष्पभेदे पिपासयोः। इक्षुपाकविशेषे च पुमान् सैन्धवनागरी" इति रभसः ) आमोदं—सौरभं, मुञ्चति—स्रवतीति तस्मिन्। मञ्चकेति।—मञ्चकम्—आधारविशेषः, तत्र आश्रिता—अधिष्ठिता, सिकतिला—सिकतामयी, मध्ये वालुकानिक्षिप्तेति भावः, [ सिकताशब्दात् "देशे लुबिलचौ च" (५।२।१०५ पा०) इतीलचि रूपं ] [illegible] कर्करी भाजनभेदः, जलाधारविशेष इत्यर्थः, ( "कर्करी भाजनभेदे ना दर्पणे कठिने त्रिषु" इति मेदिनी ) तस्यां विश्रान्ते—कृतविश्रामे, निश्चलतया अवस्थिते इति यावत्, अतितृष्णासंस्थापिते इति भावः, आतुरस्य—पीडितस्य राज्ञः, चक्षुषी—नयने यत्र। [ "विश्रान्तातुरचक्षुषि" इत्यत्र "विश्रान्तालरचक्षुषि" इति पाठे,—आलरौ—अन्तर्निलीने दीर्घातिशय्यात कोटरं गते इति भावः, चक्षुषी, राज्ञ इति भावः यस्मिन् यस्य वा तस्मिन्।

( ७९ ) सजलेति।—सजले—जलसहिते, [ "सजल—" इत्यत्र "सरल—" इति पाठे,—सरले—ऋजुनि दीर्घे इति यावत् ] शैवले,—शैवाले, वलयित—वेष्टितं, गलत्—स्यन्दमानं, दोलयन्—बहुधा धारेति प्रविष्टबहुच्छिद्र जलयन्त्र यस्मिन् तस्मिन्, सदनस्य शैत्यविधानार्थम् इति भावः। गल्वर्केति।—गल्वर्कः,—मणिविशेषः, तस्य शालाजिरः,—शरावः, गल्वर्कनिर्मित इति यावत् ( "शाल्वरा-वस्तु मार्त्तिके शालाजिरः" इति त्रिकाण्डशेषः ) तत्र उन्नासिता —उद्वासिताः, लाजसक्तवः,—भृष्टतण्डुल, भृष्टधान्यचूर्णानि इत्यर्थः यत्र तथाभूते, कदाचित् पथ्यार्थमिति भावः। पीतेति।—पीतः,—पीतवर्णः, यो मसारः,—मणिविशेषः, तस्य पारी—पात्रविशेषः, ( "पारी पात्रपरागयोः" इति विश्वः ) तत्र परिगृहीताः,—स्थापिताः, कर्कशर्कराः,—श्वेतशर्करा यत्र तादृशे।

(८० शिशिरौषधरसचूर्णावकीर्णस्फटिकशुक्तिखण्डसञ्चये, सञ्चित-प्रचुरप्राचीनामलकमातुलुङ्गद्राक्षादाडिमादिफले, (८१) प्रति-ग्राहितविप्रविप्रकीर्य्यमाणशान्त्युदकविप्रुषि, प्रेष्यापेष्यमाण-ललाटलेपोपदिग्धदृषदि धवलगृहे स्थितं, (८२) परलोक-विजयाय नीराज्यमानमिव ज्वरज्वलनेन, अनवरतपरिवर्त्तनैः तरङ्गिणि शयनीये शेषमिव विषोष्मणा क्षीरोदन्वति विचेष्टमानं,

---

(८०) शिशिरेति ।—शिशिरौषधानां—शैत्यकारकाणाम् औषधानां, रसे,—द्रवे, चूर्णे —चोदे च अवकीर्णा.—व्याकीर्णा, परिपूर्णा इत्यर्थ, स्फटिकानां—स्फटिकमयपात्राणां, शुक्तीनां—मुक्तास्फोटानां, खण्डानां—शकलानाञ्च, सञ्चया,—समूहाः यस्मिन् तथोक्ते, सर्वेषां शैत्यगुणाधायकत्वात् इति भाव । सञ्चितेति ।—सञ्चितानि—सङ्गृहीतानि, औषधार्थमिति भाव, प्रचुराणि—प्रभूतानि, प्राचीनानां—पुरातनानाम्, आमलकानां—धात्रीफलानां, प्राचीनामलकानां—पानीयामलक इति ख्यातानाम् आमलकविशेषाणां वा मातुलुङ्गानां—बीजपूराणां, जम्बीरविशेषाणामित्यर्थः, द्राक्षाणां—मृद्वीकानां, दाडिमादीनाञ्च फलानि यत्र तादृशे ।

(८१) प्रतिग्राहितेति ।—प्रतिग्राहिता,—प्रतिग्रहं ग्राहिता, दत्तदक्षिणा इति यावत् ये विप्रा,—ब्राह्मणा, तैः विप्रकीर्य्यमाणा,—समन्तात् विक्षिप्यमाणा, शान्त्युदकानां—शान्तिजलानां, विप्रुष,—बिन्दव यस्मिन् तथोक्ते, सर्वविधशान्त्युदकानां प्रक्षेपेण त्वरितफलाकाङ्क्षे इति भाव, ("पृषन्तिबिन्दुपृषता पुमांसो विप्रुष स्त्रियः" इत्यमर )। प्रेष्येति ।—प्रेष्याभि,—दासीभि, पेष्यमाणेन—चूर्ण्यमानेन, ललाटलेपेन—भाललेपनद्रव्येण, उपदिग्धा,—प्रलिप्ता, दृषद,—शिला यस्मिन् तथोक्ते, धवलगृहे—स्फटिकशिलानिर्म्मिते सुधाक्लिप्ते वा भवने ।

(८२) परलोकेति ।—परलोकस्य—स्वर्गस्य, विजयाय—आत्मसात्करणाय, लाभायेत्यर्थ, ज्वरज्वलनेन—ज्वराग्निना, नीराज्यमानमिव—निर्मञ्छ्यमानमिव, क्रियमाणाऽऽरात्रिककर्म्माणमिवेत्यर्थ, इत्युत्प्रेक्षा, विजयाय प्रस्थितस्य जिगीषो नीराजना क्रियते इति प्रसिद्धि । अनवरतपरिवर्त्तनै,—शय्यायां निरन्तरलुण्ठनै, तरङ्गिणि—भङ्गीमति, सङ्कोचशालिनि इत्यर्थ, शयनीये—शय्यायां, क्षीरोदन्वति—क्षीरसागरे, विषोष्मणा—विषोत्तापेन, विचेष्टमानं—लुठन्त, शेषमिव—अनन्तनागमिव । अत्र श्लेष्म-सहकृतधर्म्मसाम्यमूलोपमाऽलङ्कारः ।

(८३) मुक्ताफलवालुकाधूलिधवलितं जलधिमिव क्षयकाले शुष्यन्तं, (८४) कालेन कैलासमिव दशाननेन उद्ध्रियमाणम्, अविरतचन्दनचर्चापराणां परिचारिकाणाम् अङ्गस्थावयवस्पर्शभस्मीभूतोदरैः इव धवलैः करैः स्पृश्यमानं, लोकान्तरप्रस्थितं स्थाणुना स्वयमेव चन्दनानुलेपनच्छलेन आपृच्छ्यमानम्, (८५) अविच्छिन्नदीयमानकमलकुमुदेन्दीवरदलं कालकटाक्षपतनशबलमिव शरीरम् उद्वहन्तं,

---

(८३) मुक्तेति।—मुक्ताफलानां—मौक्तिकानां, वालुका इव—सिकता इव, धूलयः—चूर्णानि, ताभिः धवलितम्—शुभ्रीकृतम्, तापशान्त्यै सभायमौक्तिकचूर्णलेपनादिति भावः, अथवा—मुक्ताफलान्येव वालुकाधूलयः—सिकता इति यावत्, ताभिः धवलितः तम्, जलधिपक्षे शुभ्रीकृतम् इति भावः, क्षयकाले—प्रलये शुष्यन्तं—शोषं गच्छन्तम्, प्रलयकालोदितस्य द्वादशात्मनो दिवाकरस्य प्रखरकिरणसम्पर्कात् इति भावः।

(८४) कालेनेति।—कालेन—यमेन, कृष्णवर्णेन च, दशाननेन—रावणेन, उद्ध्रियमाणम्—उत्क्षिप्यमाणम्, समानता चैतयोरस्तीति भावः। अविरतेति।—अविरतम्—अविच्छिन्नं यथा तथा, चन्दनचर्चायाम्—चन्दनस्य लेपने, शुष्कस्थितचन्दनप्रदेशे इत्यर्थः, पराणाम्—निपुणानामित्यर्थः, परिचारिकाणाम्—दासीनाम्, अङ्गेति।—अङ्गस्थानाम्—अङ्गस्थितानाम्, अवयवानाम्—अङ्गानां, स्पर्शेन—सम्पर्केण, भस्मीभूतानि—दग्धानि, उदराणि—मध्यदेशा इव, तलदेशा इति यावत् येषां तथाभूतैरिव, धवलैः—श्वेतैः, चन्दनलिप्तत्वादिति भावः, करैः—हस्तैः, स्पृश्यमानम्—स्पृश्यमानम्, लोकान्तरं प्रस्थितम्—लोकान्तरप्रस्थानाय उद्यतमित्यर्थः, अत एव स्थाणुना—शिवेनैव, [“स्थाणुर्हर वपुः” (३।३।११८ प०) इति नृपमत्के च] स्वयमेव—निजरूपेणैव, आपृच्छ्यमानम्—आमन्त्र्यमाणम्, शास्त्रितानाम् अपि प्रस्थानादौ प्रश्नादिलोकाचारत्वात् इति भावः।

(८५) अविच्छिन्नेति।—अविच्छिन्नम्—अनवरतं दीयमानानि—निधीयमानानि, कमलानां—पद्मानां, कुमुदानां—कैरवाणाम्, इन्दीवराणां—नीलोत्पलानाञ्च, दलानि—पत्राणि यस्मिन् तत् तथोक्तम्, अत एव कालस्य—यमस्य, कटाक्षाणाम्—अपाङ्गवीक्षणानाम्, रक्तश्वेतकृष्णवर्णघटितत्वात् कमलादिपत्राणामपाङ्गदर्शनानामिति भावः, पतनेन—निपातेन, शबलमिव—चित्रमिव, विविधवर्णविचित्रमित्यर्थः, शरीरं—कलेवरम्।

(८६) निविड़दुकूलपट्टनिपीडितकेशान्तकथ्यमानकष्टवेदनाऽनुबन्धं मूर्द्धानं धारयन्तं, (८७) दुर्द्धरवेदनोद्वमनीलशिराजालककरालेन च कालकराङ्गुलिलिख्यमानलेखाख्यातमरणावधिदिवससङ्ख्यानेन इव ललाटफलकेन भयमुपजनयन्तम्, (८८) आसन्नयमदर्शनोद्वेगादिव च किञ्चिदन्तःप्रविष्टतारकं, धुन्धद्दशनपङ्क्तिप्रसृतधूसरदीधितितरङ्गिणी मृगतृष्णिकामिव उष्णां निश्वासपरम्पराम् उद्वहन्तम्, (८९) अत्युष्णनिश्वासदग्धया इव क्षामायमानया रसनया निवेद्यमान-

---

(८६) निविडेति।—निविडेन—दृढेन, दुकूलपट्टेन—क्षौमवस्त्रखण्डेन, निपीडित—दृढनिबद्ध इत्यर्थ च केशान्त,—केशप्रान्तभाग, ललाटादेरध इत्यर्थ, तेन कथ्यमान,—आवेद्यमान, कष्ट,—कृच्छ्र, वेदनाऽनुबन्ध,—व्यथानैरन्तर्य्यं यस्य तथाभूत मूर्द्धान—मस्तक, ('मूर्द्धा ना मस्तकोऽस्त्रियाम्' इत्यमर)।

(८७) दुर्द्धरेति।—दुर्द्धरया—दुःसहया, वेदनया—पीडया, शिरस इति भाव, उद्वमत—उद्गच्छत यत् नील—कृष्ण शिराणा—नाडीना, जालक—समूह तेन कराल—दन्तुर भयङ्कर वा तेन, कालेति।—कालस्य—यमस्य कराङ्गुलिभि,—हस्ताङ्गुलिभि [ 'कालकराङ्गुलिभि' इत्यत्र 'कालाङ्गुलिभि' इति पाठे,—कालस्य—यमस्य अङ्गुलिभि करस्य इति भाव ] लिख्यमानया—अङ्क्यमानया, लेखया—रेखया आख्यात—प्रकाशित, मरणस्य—मृत्यो, अवधिदिवसाना—मर्य्यादादिनाना सङ्ख्यान—गणना यस्मिन तेनेव।

(८८) आसन्नेति।—आसन्नस्—आगतप्राय, यमस्य—कृतान्तस्य दर्शनम्—अवलोकन तेन उद्वेग—भीति तस्मादिव किञ्चित्—ईषत्, अन्तरिति।—अन्त प्रविष्टा—कोटर गता, तारका—कनीनिका यस्य तम्। धुन्धदिति।—धुन्धन्त्या,—शब्द गच्छन्त्या दशनाना—दन्ताना, पङ्क्तौ,—श्रेण्या, प्रसृता,—निःसृता च धूसरा,—ईषत् पाण्डुवर्णा, दीधितय—मयूखा तासा तरङ्गा,—समूह सन्ति यस्यामिति तथोक्ता मृगतृष्णिकामिव—मरीचिकामिव, उष्णा—तप्ता, निश्वासपरम्परा—निश्वाससन्ततिम्।

(८९) अत्युष्णेति।—अत्युष्णै,—अतितप्तै, निश्वासै—नासावायुभि, दग्धा—भस्मीभूता तया इव, दग्धाना वैवर्ण्यमस्ति इति भाव, क्षामायमानया—

दारुणसन्निपातारम्भम्, (८०) उरःस्थलस्थापितमणिमौक्तिकहारचन्दनचन्द्रकान्तं क्षतान्तदूतदर्शनयोग्यमिव आत्मानं कुर्वाणम्, (८१) अङ्गभङ्गवलनोल्लिसभुजयुगलं पर्यस्तहस्तनखमयूखैः धारागृहमिव तापशान्तये रचयन्तं, (८२) नैदिष्ठसलिलमणिकुट्टिमादर्शोदरेषु नियतद्भिः प्रतिबिम्बैरपि सन्तापाति-

ग्रामताप्रतिपद्यमानया, [ "षोडशादि—" (१।१।१२ पा०) इत्यादिना सम्बन्धम् ] रसनया—जिह्वया, घोरसन्निपातविकारे रसना कृष्णा भवति इति वैद्यकम्, निवेद्यमानेति।—निवेद्यमान,—कथ्यमान, विज्ञाप्यमान इत्यर्थः, दारुणस्य,—भीषणस्य, सन्निपातस्य—दोषत्रयप्रभूतस्य ज्वरस्य, आरम्भ,—उपक्रमः यस्य तथोक्तम्।

(८०) उर स्थलेति।—उरःस्थले—वक्षसि, स्थापिता,—निहिता, तापशान्त्यै इति भावः, मणीनां—रत्नानां, मौक्तिकानां च—मुक्ताफलानां च, हारा,—एकावल्यः, चन्दनानि—श्रीखण्डानि, चन्द्रकान्ताश्च—तदाख्यमणिभेदाश्च यस्य तम्, अत एव क्षतान्तेति।—क्षतान्त,—यमकः, तस्य इति भावः, तस्य दूतेन—वार्तावहेन, दर्शनं—साक्षात्कार, तस्य योग्य,—अनुरूप इव, क्षतान्तदूतानां सन्निधौ स्वस्य ऐश्वर्याधिक्यप्रदर्शनाय रत्नादि भूषणैर्भूषित इति भावः, क्षतान्तदूतानां दर्शनयोग्य वा, जीवनाशप्रतिभाससारावहनग्रन्थाभिरामत्वाददर्शनात् इत्याशय। [ पूर्वपदस्य उत्तरपदसंयुक्तत्वात् काव्यलिङ्गम्, अविवेकसम्पादकानां मौक्तिकहारादीनां च विभाविनासम्मुखे दाहज्वरेण प्रकटनात् यमदूतदर्शनयोग्यत्वनामकम् सम्भावनाद्युत्प्रेक्षा चेत्यनयो सङ्कर ]।

(८१) अङ्गेति।—अङ्गानाम्—अवयवानां, भङ्गः,—मोटनं, "मालोडा" इति भाषा तस्मै वलन—सञ्चालन तेन उल्लसितम्—उद्गमितं, भुजयुगलं—बाहुद्वयं येन तथोक्तम्, अत एव पर्यस्ता,—समन्तात् प्रसृता, हस्तयोः,—करयोः नखानां मयूखा,—किरणा यैः, धारागृह—"फोवारा" इति भाषा जलयन्त्रागारं, दाहार्दितस्य तादृगृहे अवस्थानस्य विधानात् इति भावः, रचयन्त—कल्पयन्तम्, उत्तोलितकरयोः अधोमुखीभूतेभ्यः नखेभ्यः प्रसृतानां शुभ्रकिरणानां जलधारारूपेण प्रतीयमानत्वादिति भावः।

(८२) नैदिष्ठेति।—नैदिष्ठेषु—अतिशयनिकटेषु, (अन्तिकशब्दात् "अतिशायने—" (५।३।५५ पा०) इत्यनेन इष्ठनि "स्थूलदूर-यूव—" (६।४।१५६ पा०)

ध्ययमिव कथयन्तं, स्पृशन्तीं प्रणयिनीमिव विश्वासभूमिं मूर्च्छां बहु मन्यमानम्, (८३) अन्तकाह्वानाक्षरैः इव सभयभिषग्दृष्टैः अरिष्टैः आविष्टं, महाप्रस्थानकाले स्वसन्तापसन्तानम् आप्तहृदयेषु सञ्चारयन्तम्, अरतिपरिगृहीतम् ईर्ष्यया इव

---

इत्यादिना वेदादेश ] सलिलेषु—जलेषु, मणिकुट्टिमानां—मणिमयबद्धतलानाम्, आदर्शानां—दर्पणानाञ्च, गृहस्थितानामिति भाव, उदरेषु—अभ्यन्तरेषु निपतद्भिः,—प्रतिफलद्भिः, प्रतिबिम्बैरपि—प्रतिकृतिभिरपि, आतुरस्य राज्ञ इति शेषः; प्रतिबिम्बानामपि एतादृश सन्ताप यत् तच्छमनाय तैरपि सलिलादिषु प्रविश्यते वा यथा राज्ञः सन्तापस्य इति भाव । प्रणयिनीमिव—प्रेयसीमिव, स्पृशन्तीं—शरीरं परामृशन्तीं, आयमानाञ्च, आश्रयन्तीमित्यर्थः, विश्वासभूमिम्—अतिविश्वस्ता, वि—विशिष्टानाम्, आयतानामिति भाव, श्वासानां—निश्वासानां, महाश्वासानामित्यर्थं, भूमिं,—स्थानमानिति च, ईदृग्भूतामिति भाव, मुमूर्षो सकाशेऽपि निश्वासानाम आयातत्व प्रसिद्धम्, तदवस्थाया सन्तापानुभवाभावात मूर्च्छाया यानन्दप्रदत्वेन विश्वासभूमित्वमिति वा, अत एव बहु मन्यमानम् —अतिमात्र आद्रियमाणं, सुखविश्रामलाभादिति भाव, यद्वा,—विश्वासभूमिं प्रणयिनीमिव, विश्वासस्थानत्वं सततमेव, अतिविश्वस्तामिति तु तदर्थ ।

(८३) अन्तकेति ।—अन्तकस्य—यमस्य आह्वानम्—आकारणा, तस्य अक्षराणि —वर्णा तैरिव "आयस्व राजन ! मदाश्रयम्" इत्येवरूपे इति भाव, तेषां निरतमृत्युज्ञापकत्वात्, सभयेति ।—सभयैः,—विभ्यद्भिः इत्यर्थ, भिषग्भिः,—चिकित्सकैः, दृष्टानि—अवलोकितानि तैः, अरिष्टैः,—मरणचिह्नैः, निरतमृत्युबोधकलक्षणैरिति भाव, "नियतमरणाख्यापक लिङ्गमरिष्टम्" इत्युक्ते, आविष्टं—युक्तम् । महेति ।—महत् प्रस्थानम्—अन्तकसदनगमनमित्यर्थं, "षष्ठे तैल तथा मासे" इत्यादिवचने यात्राशब्दवत् प्रस्थानशब्दस्यापि महोपपदस्य प्रोक्तार्थबोधकत्वदर्शनात्, तस्य कालः,—समय तस्मिन् । स्वसन्तापानां—निजव्यथानां, सन्तान,—समूहः तम्, आप्तहृदयेषु—स्वजनमनःसु सञ्चारयन्तं—सङ्क्रामयन्तं, स्वजनान् नितरा सन्तापयन्तमिति यावत्, पुनरागमनकामस्याप्तेष्वपि स्वचिन्तास्थापनविधिरिष्यतेऽस्य, किं पुनरपुनरागमनके इत्याशय । अरतिपरिगृहीतम्—अरतिः,—एकत्र अनवस्थितिः, अस्थिरता इत्यर्थ, वस्तुवैराग्यं वा, काचित् नारीति ध्वनिः, [ अत एव लिङ्गात् समासोक्त्यलङ्कार ] तया परिगृहीतं,—आश्लिष्टं तम्, अत एव ईर्ष्ययेव—

छायया सूच्यमानम्, (८४) उद्योगमिव उपद्रवाणां, सर्वस्वमोषमिव क्षामतायाः, हस्तीकृतं विहस्ततया, विपर्ययीकृतं वैषम्येण, चेटीकृतं क्षयेण, गोचरीकृतं ग्लान्या, दष्टं दुःखासिकया, आत्मीकृतम् अस्वास्थ्येन, विधेयीकृतं व्याधिना, क्रोडीकृतं कालेन, लक्ष्यीकृतं दक्षिणाशया, पीतमिव पीडाभिः, अन्धमिव जागरेण,

---

वर्णेनेव, छायया—कान्त्या, अपरया कान्त्येति ध्वनिः, सूच्यमानं—परिज्ञायमानं, उपद्रोषुस्वभविदेशाक्रान्ततयेति भावः, दुःखवेदनया अतीव निष्प्रभत्वेति तात्पर्यम्।

(८४) उद्योगमिव—उपक्रममिव, स्वपराक्रमप्रदर्शनाय विविधचेष्टाया आरम्भमित्यर्थः, उपद्रवातिशययुक्तमिति भावः उपद्रवाणां—रोगारम्भकदोषप्रकोपजन्यानामन्यविकाराणां, हिक्कामूर्च्छाऽतीसारादीनामिति यावत्। सर्वस्वमोषमिव—सर्वेषाम् स्वानाम्—आयुषाम्, मोषः,—निःशेषं हरणम्, क्षामतायाः,—क्षीणतायाः, क्षीणतया सर्वथा आक्रान्तमिति भावः। विहस्ततया—व्याकुलीभावेन, ("विहस्तव्याकुलौ समौ" इत्यमरः) हस्तीकृतम्—आयत्तीकृतमित्यर्थः, [इति प्रतीयमानोत्प्रेक्षा] अत्याकुलमिति भावः। वैषम्येण—विषमावस्थया, दारुणावस्थयेत्यर्थः, विपर्ययीकृत—समीपीकृत, आयत्तीकृतमित्यर्थः, विषमावस्थापन्नमिति भावः। क्षयेण—नाशेन, अन्ततया इति यावत्, आतुरमिति भावः, चेटीकृत—दासीकृतम्, आधारीकृतमित्यर्थः, क्षीणधातुकमिति भावः। गोचरीकृत—विषयीकृतं, कवलितमित्यर्थः, ग्लान्या—वेदनाविशेषजनितेन हर्षाभावेनेव, अतीव म्लानमिति यावत्। दष्ट—ग्रस्त, दुःखासिकया—कष्टावस्थानेन, शय्याऽऽसनादिष्वपि असुखभूतत्वमिति यावत्, यद्वा,—दुःखासिकया—क्लेशखड्गेन, दष्ट—हतम्। आत्मीकृतम्—आयत्ततां नीतम्, अस्वास्थ्येन—रोगजनितेन क्लेशेन, आत्मीयमिति मत्वा अङ्गाश्लेषाश्रित, सततमपि मातृभूतस्वास्थ्यमिति भावः। विधेयीकृत—वशीकृतम्, आयत्तीकृतमित्यर्थः, ("विधेयो विनयग्राही वचनेस्थित आश्रवः" इत्यमरः) अविचारेण प्रतिपालितव्याध्यादेशमिति भावः। क्रोडीकृतम्—उत्सङ्गे नीतमित्यर्थः, कालेन—कृतान्तेन, अचिरमेव कालभवनगमनोन्मुखमिति भावः। लक्ष्यीकृत,—दृष्ट, दक्षिणाशया—दक्षिणया दिशा, यमपालितयेति भावः। पीतमिव—दग्धमिव, कृशत्वसम्भवात् शोषत्वादिति भावः। अन्धमिव—अचितमिव, जागरेण—अनिद्रया, व्याधिजन्येन

निगीर्णमिव वैवर्ण्येन, (८५) ग्रासीकृतं गात्रभङ्गेन, क्रियमाणमिव विपद्भिः, वण्ट्यमानम् इव वेदनाभिः,लुण्ठ्यमानमिव दुःखैः, आदिलितं दैवेन, निरूपितं नियत्या, प्रातम् अनित्यत्वेन, अभिभूयमानम् अभावेन, परिकलितं परासुतया, दत्तावकाशं क्लेशस्य, निवासं वैमनस्यस्य, समीपे कालस्य, अन्तिकेऽन्त्योच्छ्वासस्य, मुखे

---

,निद्राऽभावादिति भावः। निगीर्णमिव—कवलितमिव, वैवर्ण्येन—मालिन्येन, रोगजनितेन कालिम्न्यात अतीव विवर्णमिति भावः।

(८५) गात्रभङ्गेन—"गा भाङा" इति वङ्गभाषया प्रसिद्धेन देहमोटनेन ग्रासीकृतं—कवलीकृतम्, [ अत्र "इव" पदाप्रयोगात् प्रतीयमानोत्प्रेक्षाऽलङ्कारः ] दीयमानत्वात निरन्तरकृतगात्रभङ्गमिति भावः। क्रियमाणमिव—पीड्यमानमिव, नीयमानमित्यर्थः, विपद्भिः,—आपद्भिः, विपदाक्रान्तमित्यर्थः। वण्ट्यमानमिव—विभज्यमानमिव, मुखे मक्षिकायाश्च ग्रासेन, चक्षुषि कोटरप्रविष्टत्वेन, कर्णे बाधिर्येण, एवम् एकैकस्मिन् अङ्गे पवैकया वेदनया विभज्य गृह्यमाणमित्यर्थः। लुण्ठ्यमानमिव—स्वातन्त्र्यात् यथाशक्त्येकाशत्वेन बलपूर्वकं नीयमानमिव, अतीव दुःखमनुभवन्तमित्यर्थः। आदिलितं—पदीतुमिष्टम्, [ आददाते सनि "सनि—" (७।४।५४ पा०) इत्यादिना अत इसि "निष्ठा" (३।२।१०२ पा०) इति कर्मणि क्तः ] दैवेन—प्राक्तनेन कर्मणा, देवानां समूह दैव तेन, देवसमूहेन इत्यर्थो वा। निरूपितं—निर्धारितं, दृष्टमिति भावः, नियत्या—भाग्येन, ("भाग्यं स्त्री नियतिर्विधिः" इत्यमरः)। प्रातमिव—सृष्टमिव, अनित्यत्वेन—अस्थायित्वेन अचिरमेव मृत्युमागमनात् इति भावः। अभिभूयमानम्—आक्रम्यमाणम्, अभावेन—अविद्यमानतया। परिकलितं—कवलितं, परासुतया—प्राणपञ्चत्वतया, गतप्राणतया इत्यर्थः,मृतधर्म्मेणेति यावत्, ("परासुप्राप्तपञ्चत्वपरेतप्रेतसंस्थिताः। मृत-प्रमीतौ त्रिष्वेते" इत्यमरः)। दत्त,—अर्पितः, अवकाशः,—स्थानं येन सः, क्लेशेन यदृच्छया निरन्तरं क्लिश्यमानमिति भावः। निवासम्—आश्रयं, वैमनस्यस्य—विकृतमनस्कतायाः, विविधोधितान् अवश्यकरणीयान् अभिलषितानसम्पाद्य असमयपरलोकगमनाशङ्कया मुहुर्मुहुः विमनायमानमिति भावः। "समीपे"इत्यस्य वर्त्तमानमिति उभयत्रैवान्वयः। कालस्य—यमस्य, प्रायेण निधनं गतमिति भावः। अन्तिके—सन्निधौ, अन्त्योच्छ्वासस्य—चरमनिश्वासस्य, प्राणापानवायोः वियोगस्यसमयस्येत्यर्थः। मुखे—वदने, कवले इति

महाप्रयासस्य, द्वारि दीर्घनिद्रायाः, जिह्वाग्रे जीवितेशस्य वर्त्तमानं, विरलं वाचि, चलितं चेतसि, विह्वलं वपुषि, क्षीणमायुषि, प्रचुरं प्रलापे, सन्ततं श्वसिते, जितं जृम्भिकाभिः, पराधीनम् आधिभिः, (८६) अनुबद्धम् अनुबन्धिकाभिः, पार्श्वोपविष्टया अनवरतरोदनोच्छूननयनया गृहीतचामरिकयाऽपि निश्वसितैः एव वीजयन्त्या विविधौषधिधूलिधूसरितशरीरया मुहुर्मुहुः,—"आर्यपुत्र ! स्वपिषि ?" इति व्याहरन्त्या

---

भावः, महाप्रयासस्य—महतः क्लेशस्य। द्वारि—द्वारसमीपे दीर्घनिद्रायाः,—चिरनिद्रायाः, मृत्योरित्यर्थः। जिह्वाग्रे—रसनाग्रे, जीवितेशस्य—यमस्य, ("जीवितेशो यमे पुंसि प्रियु प्राणाधीश्वरे" इति मेदिनी)। विरलम्—अल्पं वाचि—वाक्यकथने, वाक्यं कथञ्चित् समुच्चारितमिति भावः। चलितं—भ्रष्टं, चेतसि—चित्ते अत्यन्तक्लेशेन विगतचित्तमित्यर्थः, नष्टचेतनमिति भावः। विह्वलं—विवशं, वपुषि—देहे, अवशशरीरमित्यर्थः। क्षीणं—पर्यवसन्नम्, आयुषि—जीवितकाले। प्रचुरं—प्रभूतं, प्रलापे—असम्बद्धभाषणे, अर्थरहितवचने इत्यर्थः, ("प्रलापोऽनर्थकं वचः" इत्यमरः) अनवरतं प्रलपन्तमिति भावः। सन्ततं—निरन्तरं, श्वसिते—श्वासनिःसरणे, पुनः पुनः अतिशयेन निश्वसन्तमित्यर्थः। जृम्भिकाभिः,—जृम्भणैः, वदनव्यादानपूर्वकवायुबहिर्नयनरूपाभिः आलस्यप्रकटनक्रियाभिरित्यर्थः जितम्—अभिभूतं, मुहुर्मुहुः जृम्भावेगेन अवशमित्यर्थः। आधिभिः,—मनःपीडाभिः, एतान् प्रियजनान् परित्यज्य सहसा एव चिराय प्रतिष्ठे इति चिन्ताभिः इत्याशयः, पराधीनम्—आयत्तीकृतं प्रियपुत्रकलत्रादीनामवियोगसम्भावनया पीड्यमानमिति निष्कर्षः।

(८६) अनुबन्धिकाभिः,—वातसन्निपीडाभिः, यद्वा—मुख्यानुयायिनीभिः, प्रधानरोगानुवर्त्तिनीभिः मूर्च्छापिपासादिभिः पीडाभिरिति यावत्, ("अनुबन्ध त्रिषी दोषोत्पादे मुख्यानुयायिनि" इति मेदिनी) अनुबद्धम्—अविच्छिन्नम्, अनुगतमित्यर्थः। पार्श्वोपविष्टया—पार्श्वे आसीनया, अनवरतेति।—अनवरतेन—अविरतम्, रोदनेन—क्रन्दनेन, उच्छूने—स्फीते, नयने—लोचने यस्याः, तथाभूतया गृहीतचामरिकया—धृतबालव्यजनया, चामरेण वीजयन्त्येति यावत्, निश्वसितैः,—मुहुर्मुहुः पतद्भिः दीर्घनिश्वासैरिति यावत्। विविधेति।—विविधानां—नानाप्रकाराणाम्, औषधीनां—रोगोपशमकद्रव्यलतादीनां, धूलिभिः,—चूर्णैः, धूसरितम्—ईषत्पाण्डुरं शरीरं—गात्रं यस्याः, तथाभूतया। व्याहरन्त्या—भणन्त्या, शोकसिन्धुपारादर्शनेन विकलाय-

देव्या यशोवत्या शिरसि वक्षसि च स्पृश्यमानं पितरम् अद्राक्षीत्।

दृष्ट्वा च (९०) प्रथमदुःखसम्पातमथ्यमानमतिः आशङ्कित इव भागधेयेभ्यः समभवत्। अन्तकपुरवर्त्तिनमिव च पितरम् अमन्यत। निराकृत इव च अन्तःकरणेन क्षणम् आसीत्। अवधूतश्च धैर्य्येण, दीनीकृतः क्षोभेण, रिक्तीकृतो रत्या, विपर्य्यीकृतो विषादेन, पावकमयमिव हृदयम् उद्वहन्, विषमविषदूषितानीव मुह्यन्ति इन्द्रियाणि बिभ्राणः, तमसा रसातलमपि विशेषयन्, शून्यत्वेन आकाशमपि अतिशयानो न

---

मानयीति भावः। अत्र महाराजः आलम्बनविभावः, तस्य मरणाशङ्कानिश्चितिप्रभृतयः उद्दीपनविभावाः, क्रन्दितभूपातादयः अनुभावाः, मोहविषादादयश्च व्यभिचारिणः, एतैः व्यक्तीकृतः शोकः करुणरसरूपतामापन्न इत्यवधेयम्।

(९०) प्रथमेति।—प्रथमेन—आद्येन, इतः पूर्वं कदाऽप्यननुभूतत्वात् इति भावः। दुःखानां—मनःपीडानां, सम्पातेन—समागमेन, मथ्यमाना—विलोड्यमाना, मतिः—बुद्धिः यस्य तथाभूतः भागधेयेभ्यः—दुर्भाग्येभ्यः, आसन्नपितृविनाशहेतुभ्य इति भावः। आशङ्कित इव—जाताशङ्क इव, समभवत्—समजायत, पितृविनाशं शङ्कितवानित्यर्थः। अन्तकपुरवर्त्तिनम्—यमपुरगतमिव। अन्तःकरणेन—अन्तरिन्द्रियेण, मनसा इत्यर्थः, निराकृत इव—परित्यक्त इव, पितृमहाशोकप्रदर्शनात् विमोहक्षोभेण नष्टसंज्ञ इवेत्यर्थः। अवधूतः—विचलितः, धैर्य्यविहीन इत्यर्थः, कठोराघाते तथाभावात् इति भावः। दीनीकृतः—विवर्णीकृतः, क्षोभेण—दुःखेन दुःखाभिभूत इत्यर्थः। रिक्तीकृतः—विरहितः, रत्या—सन्तोषेण, अपरितुष्ट इत्यर्थः। विपर्य्यीकृतः—वैपरीत्यीकृतः, विषादेन—अवसादेन, अवसन्नतर इत्यर्थः, विषण्ण इति यावत्। पावकमयमिव—अग्निमयमिव, महातापाग्नेः ज्वालावृतमिव इत्यर्थः अतीव सन्तप्यमानमानस इति भावः। विषमेति।—विषमेण—दारुणेन, विषेण—हलाहलेन, दूषितानीव—विकृतानीव, अत एव मुह्यन्ति—मोहं गच्छन्ति, विमूढानीव इत्यर्थः स्वव्यापाररहितानीति भावः, इन्द्रियाणि—चक्षुरादीनि। तमसा—अन्धकारेण, शोकेन च, शोकजमोहेन इत्यर्थः, ("तमो ध्वान्ते गुणे शोके क्लीवं ना ना विधुन्तुदे" इति मेदिनी) रसातलम्—पातालमपि, विशेषयन्—अतिशयानः, अन्धतमसबहुलात् पातालादपि

अविन्दत कर्त्तव्यम्। पस्पर्श च हृदयेन भियम् उत्तमाङ्गेन च गाम्।

(९८) अवनिपतिस्तु दूरादेव दृष्ट्वा अतिदयितं तनयं तद्वयस्योऽपि निर्भरस्नेहावर्जितः प्रधावमानो मनसा प्रसार्य भुजौ "एहि एहि" इति आह्वयन् शरीरार्द्धेन शयनात् उदगात्। ससम्भ्रमम् उपसृतश्च एनं विनयावनम्रम् उन्नमय्य बलात् उरसि निवेश्य, विशन्निव प्रेम्णा निशाकरमण्डलमध्यं, मज्जन् इव अमृतमये महासरसि, (९९) स्नान् इव महति हरि-चन्दनरसप्रस्रवणे, अभिषिच्यमान इव तुषाराद्रिद्रवेण, पीडयन्

तमसाऽभिभूत इत्यर्थः। शून्यत्वेन—विरहितत्वेन, शोकपराक्रान्तमिव सर्वद्रव्यसम्बन्धोऽत्यसौ पितृवियोगसम्भावनया सर्वैरेव विरहितमिव आत्मानम् अमन्यत इति भाव, आकाशमपि—गगनमपि, अतिशयान,—अभिभवन्, कर्त्तव्य—तात्कालिककार्य्यं, न अविन्दत—न अबुबुधे। भिय—भीति, ("भीतिर्भीः साध्वसं भयम्" इत्यमर) साध्वसहृदय अभवदिति भाव, उत्तमाङ्गेन—शिरसा, गा—भूमि, पस्पर्श स्पृष्टवान्, भूमिपतित पितुः प्रणनामेत्यर्थः। अत्र प्रस्तुतयो. हृदयोत्तमाङ्गयो स्पर्शरूपैकक्रियाऽभिसम्बन्धात् तुल्ययोगिताऽलङ्कार इति ज्ञेयम्।

(९८) अवनिपति,—भूपाल, प्रभाकरवर्द्धन इति यावत्। अतिदयितम्—अतिप्रियम्। तद्वयस्योऽपि—तथा अवयस्योऽपीत्यर्थं। निर्भरेति।—निर्भरेण—निरतिशयेन स्नेहेन—प्रेम्णा, आवर्जित,—वशीभूत, आकृष्ट इति यावत, मनसा—चित्तेन, न तु शरीरेण उत्थानसामर्थ्याभावादिति भाव। शरीरार्द्धेन—पूर्वकायेन, कटिदेशात् शिर.पर्यन्तेनेत्यर्थं। उदगात—उत्तस्थौ। ससम्भ्रम—सत्वरम्, उपसृतम्—उपगतम। प्रेम्णा—स्नेहेन। निशाकरमण्डलमध्य—चन्द्रमण्डलाभ्यन्तर, तनया स्नेहस्य सन्तापनिवारकत्वेनातीव प्रीतिजननत्वात् चन्द्रमण्डलमध्यप्रवेशवदानन्दानुभव इति बोद्धव्य चन्द्रमण्डलस्यापि हृदयाह्लादकपीयूषपुञ्जैकमयत्वेन तथाविधत्वादिति भाव, एवमन्यत्रापि मध्यादिषूपमार्थ उन्नेयम्। अमृतमये महासरसि—अमृतपूर्णहृदे।

(९९) स्नान् इव—स्नान कुर्व्वन्निव, [स्नाधातो 'लट—' (३।२।१२४ पा०) इत्यादिना अप्रथमान्तेन सामानाधिकरण्ये शतृ शानचौ विधानात कथमत्र चवर्गागम ? इति चेदुच्यते,—"वर्त्तमाने पुल्लिङ्गत्वम् अधिकविधा-

अङ्गैः अङ्गानि, कपोलेन कपोलम् अवघट्टयन्, निमीलयन् पक्ष्माग्रग्रथिताजस्रास्रविस्राविणी विलोचने, विस्मृतज्वरसञ्ज्वर सुचिरम् आलिलिङ्ग। (१००) कथञ्चिदपि चिरात् विमुक्ताम् उपसृत्य कृतनमस्कारः प्रणतजननीकम् उपागतम् आसीनञ्च शयनान्तिके पिबन् इव विगतनिमेषनिश्चलेन चक्षुषा व्यलोकयत्। पस्पर्श च पुनः पुनः वेपथुमता पाणितलेन। शयनान-

---

न्यर्थं तेन प्रथमा सामानाधिकरण्येऽपि क्वचित्" इति प्रत्ययः। हरिचन्दनेति। —हरिचन्दनस्य—हरेः—शक्रस्य इन्द्रस्येत्यर्थः ("हरिश्चन्द्रार्कवाताश्व । यमः शीतांशुः पुमान् ॥" इति मेदिनी) प्रियं चन्दनम्—इन्द्रतरुविशेष इत्यर्थः गोशीर्षाख्य मलयैकदेशज चन्दनभेदो वा ("हरिचन्दनमस्त्री स्यात् देवतास्तर महीरुहे। ... गोशीर्षे ज्योत्स्नाकुङ्कुमयोरपि ॥" इति मेदिनी) हरः—शिवः प्रियं चन्दनं श्वेतचन्दन मिश्रयं वा तथापि शैत्यगुणवत्तया दाहनाशकत्वात् तस्य रसः—द्रव एव प्रस्रवणः—निर्झरः तेनेव। तुषाराद्रिद्रवः—हिमाचलसलिलम् अङ्गैः स्वीयशरीरावयवैः इति भावः अङ्गानि कुमारस्येति भावः पीडयन्—वक्षसाहितत्वात् निबिडमालिङ्ग्य स्थितः। अवघट्टयन्—सङ्घट्टयन्। निमीलयन्—मुद्रयन् आनन्दजाश्रुजलसम्भरणात् अपूर्वानन्दोदयात् इति भावः। पक्ष्मेति।—पक्ष्मणाम्—नेत्रलोम्नाम् अग्रेषु—प्रान्तेषु, ग्रथितानि—सङ्गतानि अनवरतानि—अनवच्छिन्नानि अस्राणि—बाष्पाणि विस्रवत—विगलत् इति तथोक्ते विलोचने—नेत्रे। विस्मृतेति।—विस्मृतः—अननुभूत इत्यर्थः, ज्वरस्य—दाहज्वरस्य इति भावः सञ्ज्वरः—सन्तापः येन तथाभूतः ("सन्तापः सञ्ज्वरः समौ" इत्यमरः)।

(१००) कथञ्चिदपि—यावदिच्छम् आलिङ्गनापेक्षया पुनरपि आलिङ्गनेच्छावती तथा इति भावः। विमुक्ताम्—त्यक्ताम्। कृतनमस्कारः—कृतप्रणामः पित्रे एव इति भावः। उपसृत्य—समीपं गत्वा मातुरिति भावः प्रणतेति।—प्रणता—वन्दिता जननी—माता येन तथाभूतम्। उपागतम्—उप—समीपे आगतम्—प्रत्यावृत्तम्, मातृप्रणामानन्तरमिति भावः। आसीनम्—उपविष्टम्। शयनान्तिके—शय्यासन्निधौ। विगतेति।—विगतः—परिहृतः निमेषः—निमीलनं यस्मिन् तथाभूतेन अत एव निश्चलेन—स्थिरतरेण। वेपथुमता—कम्पमानेन [वेपधातोः "ट्वितोऽथुच्" (३।३।८९ पा०) इत्यथुच् ततः "तदस्य— (५।२।९४ पा०) इत्यादिना

[illegible] कृच्छ्रात् इव अवादीत्,—"वत्स! कृशोऽसि" इति। भण्डिस्तु अकथयत्,—"देव! तृतीयमहः कृताहारस्य अस्य अद्य' इति।

(१०१) तत् श्रुत्वा बाष्पवेगमुद्गच्छमानमाहत्य कथञ्चिदपि आत्मानं निगृह्य उवाच,—'वत्स! जानामि त्वां पितृप्रियम् अतिमृदुहृदयम्। ईदृशेषु विधुरयति धीमन्तमपि वियत्। अति दुर्वहो बान्धवस्नेहः सर्वप्रमाथी, अतो न अर्हसि आत्मानं शुचे दातुम्। (१०२) उद्दामदाहज्वरदग्धोऽपि दह्ये खलु अहम् अभिक्षतरेण अनेन आयुषसाधिना। निशितमिव शल्यं तक्ष्णोति मां त्वदीया तनिमा। सुखञ्च राज्यञ्च वयञ्च प्राणाश्च

त्वयि मे स्थिता। यथा मम, तथा सर्वासां प्रजानाम्। त्वद्विधाना पीडा पीडयन्ति सकलमेव भुवनतलम्। न हि अल्पपुण्यभाजा वयम् अनुकुर्वन्ति भवादृशा। (१०३) फलमसि अनेकजन्मान्तरोपार्जितस्य अकलुषस्य कर्मण। करतलगतमिव कथयन्ति चतुर्णाम् अपि अर्णवानाम् आधिपत्यं ते लक्षणानि। त्वज्जन्मनैव कृतार्थोऽस्मि, निरभिलाषोऽस्मि जीवितव्ये। भिषगनुरोधः पाययति माम् औषधम्। (१०४) अपि च सर्वप्रजापुण्यै सकलभुवनतलपरिपालनार्थम् उत्पद्यमानाना भवादृशा जन्मग्रहणोपाय, पितरौ। प्रजाभिस्तु बन्धु-

---

तम्बोति—निकृन्तति कृशीकरोति वा। तनिमा—तनो —क्षीणस्य भाव तनुत्वमित्यर्थ। सुखादयः।—त्वयि बद्धे कुर्वाणिनि सति मम सुखादिकं सर्वमेव आवकलं स्यादिति इति भाव।

(१०३) अनेकेति।—अनेकेषु—बहुषु जन्मान्तरेषु—पूर्वपूर्वजन्मसु उपार्जितस्य—अनुष्ठितस्य अकलुषस्य—अनवद्यस्य कर्मण —कार्यस्य, सुकृतरूपस्य इत्यर्थ फलं—परिणामभूत असि—भवसि त्वम् इति शेष मदीयपूर्वपूर्वजन्मार्जितसुकृतपरिणामभूत पुत्ररत्नरूपं विशदफलगुणसम्पन्नत्वम् समवाप्तोऽसि इति भाव। करतलगतमिव—हस्तन्यस्तमिव, चतुर्णामपि, न त्रिकस्य इत्याख्यानां वा इत्यधिकारार्थे। अर्णवाना—सागराणाम्, आधिपत्यं—प्रभुत्वम्। लक्षणानि—शुभचिह्नानि। त्वज्जन्मनैव—तव उत्पत्तिमात्रेण आत्मनेऽपि, वंशायामपि विच्छेदाभावादेव। कृतार्थ,—चरिताय कृतकृत्य इत्यर्थ। निरभिलाष —निःस्पृह जीवितव्ये—प्राणधारणे विषयभूते। सर्वगुणयुक्त तव जन्मनैव ऐहिकामुष्मिकी मुक्तिसम्भवात् प्राप्तव्य प्राप्तम् अतोऽन्यफलाकाङ्क्षाभावात् कृतकृत्योऽस्मि इदानीं मम भाव। यदि त्व नोऽस्मि वीतस्पृह तत कथमौषध सेवसे इत्यत आह, भिषगिति।—भिषज —चिकित्सकानाम् अनुरोध —निर्बन्ध, आग्रहातिशय इति यावत माम् औषधं पाययति, न तु जीविताभिलाषा इति भाव।

(१०४) प्रजानुरक्तत्वाह, अपि चेत्यादिना। सर्वेति।—सर्वासा प्रजाना—जनाना पुण्यै,—सुकृतै, न केवल मदीयैरिति भाव। सकलभुवनतलपरिपालनाय—समस्तभूमण्डलरक्षणाय, उत्पद्यमानाना—जनिष्यमाणाना, ["लट"— (३।३।१४

मत्तो राजानः, न ज्ञातिभिः। तत् उत्तिष्ठ, कुरु पुनरेव सर्वाः क्रियाः। कृताहारे च त्वयि अहमपि स्वयम् उपयोक्ष्ये पथ्यम्" इत्येवम् (१०५) अभिहितस्य च अस्य वज्रमिव हृदयमनितरां शोकानलः सन्दुधुक्षे। क्षणमात्रं स्थित्वा पिता पुनः आहारार्थम् आदिश्यमानो धवलगृहात् अवततार; चकार च चेतसि,—"अकाण्डे खलु अयं समुपस्थितो महाप्रलयो व्यभ्र इव वज्रपातः। सामान्योऽपि तावत् शोकः सोच्छ्वासं मरणम्,

---

पा०) इत्यादिना अन्वयः] मयाहत्या—मदविधानां, जन्मग्रहणोपाय,—जन्मग्रहणस्य —उत्पत्तिलाभस्य, उपाय,—साधन, निमित्तभूतौ इत्यर्थः, [ उद्देश्यविधेयभावस्थले लिङ्गवचनैकत्वं नास्ति तन्त्रता इति वचनविपर्यासः ]। पितरौ—माता च पिता च तौ, उक्तञ्च वसिष्ठेन,—"प्रजामीप्सितवत्पुत्रो मातापितृनिमित्तकः" इति, मया-दृशा महात्मना शरीरपरिग्रहणाय्यमेव पित्रो जीवनधारणस्य प्रयोजनीयता, तच जन्मना तत्सिद्धे इदानीं मज्जीवनस्य तथा नास्ति कोऽप्युपयोगिता इति भावः। प्रजाभिः,—भूतलवासिभिर्जनै, बन्धुमन्त—स्वजनवन्त, राजान,—नृपा, न ज्ञातिभिः,—पित्रादिभि सगोत्रैः, बन्धुमन्त इति शेष, प्रजा एव राज्ञा बन्धव, न ज्ञातय, परस्परपोषणादिभि अन्वयव्यतिरेकात् इत्याशय अत मदभावे न त्वं निर्बान्धवो भविष्यसि, न च त्वया मदर्थं जीवितव्यं, यथा प्रजानां हितं भवति, तथा क्रियतामिति निष्कर्षः। सर्वाः क्रिया,—स्नानाहारादिका इत्यर्थः, त्वयि जीवति प्रजा सनाथा भविष्यन्ति, तेन प्राणजीवनधारणेनैव त्वया रक्षितव्यम्, अतः स्नानाहारादिषु नोपेक्षा कर्तव्या इति भावः। उपयोक्ष्ये—खादिष्यामि।

(१०५) अभिहितस्य—उक्तस्य, पित्रा इति शेष। अस्य—हर्षस्य। वज्रमिव —भङ्क्ष्यन्निव। अनितराम्—अतिमात्रेण। सन्दुधुक्षे—सन्दिदीपे, पितृजीवननैराश्यात् इति भाव। आदिश्यमान,—आज्ञाप्यमान, अनुरुध्यमान इति यावत्। अकाण्डे—सहसा। महाप्रलय,—कल्पान्तकल्प महात्यय, जन्मभागानधिकरणीभूतकाल इत्यर्थ। व्यभ्र,—निरभ्र, निर्मेघ इत्यर्थ। सामान्य,—अल्प, शोक, —प्रियजनविच्छेदज दु खविशेष, सोच्छ्वास—सनिश्वास, मरण—मृत्यु, मरणे निश्वासापगम स्यात्, शोकरूपे मरणे तु तत्सद्भाव इति भाव। श्वासवत्त्वात् यत्नसाध्यत्वेन मरणादतिरिच्यते शोक इति व्यतिरेकध्वनिः।

(१०६) अनुपदिष्टौषधो महाव्याधिः, अभस्मीकरणोऽग्निप्रवेशः, अनुपरतस्य एव नरकवासः, निर्ज्योतिः अङ्गारवर्षम्, अशकलीकरणं क्रकचदारणम्, (१०७) अव्रणो वज्रसूचीपातः; किमुत विशेषाश्रितः ? किमत्र करवाणि ?" इति।

(१०८) राजपुरुषेण अधिष्ठितस्य गत्वा स्वधाम (१०९) धूममयान् इव स्रुताश्रुपातान्, अग्निमयान् इव जनितहृदय-

---

(१०६) अनुपदिष्टेति।—न उपदिष्टः—न कथितम्, औषधः—भेषजं यस्य तथाभूतः, शास्त्रोक्तभेषजरहित इत्यर्थः, ["अनुपदिष्टौषध" इत्यत्र "अनुपदिष्टौषधो" इति पाठान्तरम्] महाव्याधिः—महान् रोगः महती व्याधिः शास्त्रीयौषधेन प्रतीकारः स्यात्, शोकस्य तु न तथेति भावः। अभस्मीकरणः,—अदहन इत्यर्थः, अग्निप्रवेशेऽङ्गदाहः स्यात् शोके तु न तथा, किन्तु केवलं ज्वलनमिति भावः। अनुपरतस्य—अमृतस्य जीवत इत्यर्थः, नरकवासः—नरके—निरवच्छिन्नदुःखनिलये स्थानविशेषे वासः—अवस्थानं मृतस्यैव पापातिरेकात् नरकेऽवस्थानं, शोकार्त्तस्य तु तदभावेऽपि वासः भावः। निर्ज्योतिः,—निष्प्रभम्, अङ्गारवर्षं—ज्वलदग्निस्फुलिङ्गवृष्टिः, तादृशाङ्गारवर्षणे उद्द्योतो दृश्यते, शोकरूपे तु अन्तर्दंदह्यमाने निष्प्रभता एव भवतीति भावः। अशकलीकरणम्—अखण्डीकरणं, क्रकचदारणं—करपत्र-विपाटनं करपत्रच्छेदने वस्तुनः द्वेधा त्रेधा वा विपाटनं भवति शोके तु न तथा, परं तादृशं क्लेशं ददातीति भावः।

(१०७) अव्रणः,—अक्षतकरणः, वज्रसूचीपातः,—कुलिशशलाकापतनं, वज्रसूचीपाते शरीरे व्रणः स्यात्, शोकपाते तु न तथा किन्तु तत्पतनक्लेशः इति भावः, यद्वा—हीरकसूच्यग्रवेधः, हीरकस्य अतीव काठिन्यात् तेन निखननस्य अतितीव्रक्लेशदायकत्वात्। किमुत—किं पुनः, विशेषाश्रितः?—विशेषम् आश्रितः? असाधारण इत्यर्थः, पितृवियोगज इति भावः, सामान्येऽपि शोके यदा एवं क्लेशः सञ्जायते तदा पितुर्वियोगजशोकस्य दारुणत्वे किं पुनर्वक्तव्यम्? इति निष्कर्षः।

(१०८) "राजपुरुषेण" इत्यस्य "कक्ष्यान् अपश्यत्" इत्युत्तरेणान्वयः। राजपुरुषेण—राजलोकेन, ["षष्ठी" (२।२।८ पा०) इति समासः] अधिष्ठितः,—अनुसृतः। स्वधाम—स्वमावासम्।

(१०९) कक्ष्यान् निर्दिशति, धूमेति।—स्रुतः,—विहितः, अश्रूणां—बाष्पाणां, पातः,—पतनं यैः तान्, अत एव धूममयानिव—धूमात्मकानिव, धूमाच्छन्नानिव वा,

दाहान्, विषमयान् इव दत्तमूर्च्छावेगान्, महापातकमयान् इव उत्पादितघृणान्, क्षारमयान् इव आनीतवेदनान् कतिचित् कवलान् अग्रहीत्। (११०) आचमय्य चामरग्राहिणम् आदिदेश,—"विज्ञाय आगच्छ, कथम् आस्ते तातः" इति। गत्वा च प्रतिनिवृत्य च,—"देव। तथैव" इति विज्ञापितः तेन अगृहीतताम्बूल एव उत्ताम्यता मनसा अस्ताभिलाषिणि सवितरि सर्वान् आहूय उपह्वरे,—"वैद्याः? किमस्मिन्नेवंविधे

---

धूमेन यथा दृष्टिविघातकरम् अश्रु आविर्भवति, तथा तत्कवलग्रहणकाले उच्छलित शोकाश्रुणा दृष्टेरवरोधादिति भाव। जनितेति।—जनित,—उत्पादित, हृदयस्य—अन्तःकरणस्य, दाह,—ज्वलन यै तान, अत एव अग्निमयानिव—अनलसन्निभानिति यावत्। दत्तेति।—दत्त —जनित इत्यर्थ, मूर्च्छाया,—मोहस्य, वेग,—जव, प्रसर इति यावत यै तान, अत एव विषमयानिव—विषमिश्रितानिवेत्यर्थ, विषस्य मोहजनकत्वादिति भाव। उत्पादितेति।—उत्पादिता—जनिता, घृणा—जुगुप्सा, पितुरनिष्टाशङ्कया स्वजीवने निस्पृहत्वादिति भाव यै तान, अत एव महापातकमयानिव— 'ब्रह्महत्या सुरापान स्तेय गुर्वङ्गनागम। महान्ति पातकान्याहु स्तत्संसर्गश्च पञ्चम॥' इत्युक्तानि पञ्चविधानि महान्ति—घोराणि, पातकानि—पातित्यजनकानि तन्मयान—तत्प्रचुरान इव, पापानि यथा लोके जुगुप्सन्ते, तथा तदानीम अस्य कवलेषु घृणा आसीदिति भाव। आनीतवेदनान—जनितक्लेशान, अत एव क्षारमयान इव—लवणमयान इव, यथा समधिकलवणाक्तान्नादिभक्षणे क्लेश स्यात तथा तत्कवलग्रहणेऽस्य जात इति भाव, यद्वा—क्षारमयानिव—सुक्ष्मादिभस्मकृतसुतीक्ष्णरसविशेषात्मकानिवेत्यर्थ, देहस्य कुत्रचित क्षतांशे लिप्त क्षारो यथा अतीव सन्तापकारी भवति, तथा तदन्नभक्षणेऽपि सन्तापोऽस्य महाशोकक्षतहृदयस्य जात इति भाव, ("क्षारो रसान्तरे धूर्ते लवणे काचभस्मनी" इति मेदिनी)। कतिचित—स्वल्पान इत्यर्थ, द्वित्रानिति यावत, पितुरनिष्टशङ्कावशात् इति भाव, कवलान्—ग्रासान्।

(११०) आचमय्य—आचमनं कृत्वेत्यर्थ। चामरग्राहिणम्—वीजनकारिणमिति यावत। कथम्—कीदृक्। तथैव—यथा प्रागासीत, अधुनापि तत्सदृश एव इत्यर्थ। अगृहीतताम्बूल,—अस्वीकृतपर्ण। उत्ताम्यता—क्लाम्यता। अस्ताभिलाषिणि—

विधेयमधुना ?" इति विषण्णहृदयः पप्रच्छ। ते तु व्यज्ञापयन्,—"देव ! धैर्यमवलम्बस्व, कतिपयैः एव वासरैः पुनः स्वां प्रकृतिमापन्नं स्वस्थं द्रक्ष्यसि पितरम्" इति।

तेषान्तु भिषजां मध्ये (१११) पौनर्वसवो युवा, अष्टादशवर्षदेशीयः, तस्मिन्नेव राजकुले कुलक्रमागतः, (११२) गतः पारम् अष्टाङ्गस्य आयुर्वेदस्य, भूभुजा सुतनिर्विशेषं लालितः,

---

ज्ञातावन्त मनुमभिलषति, सर्वान्, वैद्यानिति शेषः, उपह्वरे—रहसि, विजने इत्यर्थः, ("रहोऽन्तिकमुपह्वरे" इत्यमरः)। देव ! इति सम्बोधनम्। अस्मिन्नेवविधे—ईदृशि रोगे अस्माभिरस्माभिर्वा (?) किं विधेयं—कर्त्तव्यम्। ते—वैद्याः, व्यज्ञापयन्—न्यवेदयन्। कतिपयैः—स्वल्पैः, वासरैः,—दिवसैः, [अपवर्गे तृतीया] स्वां प्रकृतिं—निजस्वभावं स्वाभाविकीमवस्थामित्यर्थः, आपन्नं—प्राप्तं, स्वस्थं—प्रकृतिस्थं रोगमुक्तमिति यावत्। "स्वां प्रकृतिमापन्नं स्वस्थम्" इत्यनेन प्रकृतिम्—अव्यक्तरूपत्वम्, अव्यक्तस्वभावमित्यर्थः, क्षित्यादिमहाभूतपञ्चकरूपमिति भावः, "मरणं प्रकृतिः शरीरिणाम्" इत्युक्तेः, आपन्नं—प्राप्तं पाञ्चभौतिकरूपेण परिणतमित्यर्थः, पार्थिवादिदेहस्य लये तत्तद्भूते तत्र तत्र परिणमनादिति भावः, स्वस्थम्—अविकृतं, "विकारं नौ विलमुच्यते बुधैः" इति स्मरणात् मृतमिति भावः, स्वर्गस्थमित्यर्थः वा, इत्यपि ध्वन्यते, "जातस्य हि ध्रुवो मृत्युः, ध्रुवं जन्म मृतस्य च। तस्मादपरिहार्य्येऽर्थे न त्वं शोचितुमर्हसि ?" इति शास्त्रात्।

(१११) पौनर्वसव—पुनर्वसुनक्षत्रे जातः पुनर्वसुः तस्य अपत्यं पुमान् पौनर्वसवः इति वा, यद्वा—पुनर्वसुना मुनिना प्रोक्तम् आयुर्वेदं वेत्ति अधीते वेति पौनर्वसवः, अष्टादशवर्षदेशीयः,—प्रायेण अष्टादशवर्षवयस्कः, ["ईषदसमाप्तौ—" (५।३।६७ पा०) इत्यादिना देशीयर्प्रत्ययः]। कुलक्रमागतः,—वंशपरम्परया चिकित्सक-पदाधिष्ठित इत्यर्थः।

(११२) अष्टाङ्गस्येति।—अष्टौ अङ्गानि यस्य तदीयस्य तथा चोक्तं,—'काय-बालग्रहोर्द्धाङ्ग शल्यदंष्ट्राजरावृषान्। अष्टावङ्गानि तस्याहुश्चिकित्सा तेषु संश्रिता ॥" इति। "ततोऽल्पायुष्ट्वम् अल्पमेधस्त्वञ्चावलोक्य नराणां भूयोऽष्टधा प्रणीतवान्, शल्यं, शालाक्यं कायचिकित्सा, भूतविद्या, कौमारभृत्यम्, अगदतन्त्रं, रसायनतन्त्रं, वाजी-करणतन्त्रञ्च" इति सुश्रुतसंहिता। आयुर्वेदस्य—आयुर्विद्यते—लभ्यते येन सः, आयुरनेन विन्दति—लभते इति वा, आयुरस्मिन् विद्यते—वर्त्तते इति वा, आयुर्वेत्ति—

प्रकृत्यैव अतिपटीयसा प्रज्ञया यथावत् विज्ञाता व्याधिस्वरूपाणां रसायनो नाम वैद्यकुमारकः सास्रः तूष्णीम् अधोमुखोऽभूत्। पृष्टश्च राजसूनुना,—"सखे! रसायन! कथय तथ्यं, यदि असाधु इव पश्यसि?" इति। सोऽब्रवीत्,—"देव! श्वः प्रभाते यथाऽवस्थितम् आवेदयिताऽस्मि" इति।

अत्रैव च (११२) अन्तरे भवनकमलिनीपालः कोकम् आश्वासयन् अपरवक्त्रमुच्चैः अपठत्,—

"विहग! कुरु दृढं मनः स्वयं त्यज शुचमाश्रय विवेकवर्त्मनि।
सह कमलसरोजिनीश्रिया स्वयति सुमेरुगिरौ विरोचनः" ॥ ४ ॥

---

जानाति अनेनेति वा आयुर्वेदः,—वैद्यकशास्त्रमित्यर्थः तस्य, पारं गतः,—पारदृश्वा, अष्टाङ्गायुर्वेदेऽभिज्ञो इत्यर्थः। भूभुजा—राज्ञा। प्रकृत्यैव—स्वभावेन एव, अतिपटीयसा—अतिचतुरया, अतितीक्ष्णयेत्यर्थः, प्रज्ञया—बुद्ध्या, यथावत—यथायथं, व्याधिस्वरूपाणां—रोगप्रकृतीनां, विज्ञाता—वेत्ता। सास्रः—अश्रुपूर्णलोचनः राज्ञः अतिप्रियत्वात्। तूष्णीं—मौनम्। राजसूनुना—हर्षेण। तथ्यं—प्रकृतवृत्तान्तम्। असाधु—अशुभम्, दुर्लक्षणमित्यर्थः, अवाङ्मुखाविष्टु गोपन निष्प्रयोजनम् इत्याशयः। श्वः,—अनागतेऽह्नि, परदिने इत्यर्थः, आगामिनि दिवे इति यावत्, ("अनागतेऽह्नि श्वः" इत्यमरः) यथा अवस्थितम्—प्रकृतावस्थामित्यर्थः, आवेदयितास्मि—कथयितास्मि। [ लुटि रूपम् ]।

(११२) अन्तरे—अवसरे। भवनेति।—भवनकमलिनीपालः,—कमलं—जलम् अस्यामस्तीति कमलिनी—पुष्करिणी ("सलिलं कमलं जलम्" इत्यमरः) भवने—गृहे, या कमलिनी—पुष्करिणी, तां पालयति—रक्षति इति, गृहसरसीरक्षक इत्यर्थः, कोकं—चक्रवाकं, भाविविच्छेदविधुरमिति भावः, ("कोकश्चक्रश्चक्रवाकः" इत्यमरः) आश्वासयन्—प्रबोधयन् सान्त्वयन् वा, अपरवक्त्रं—छन्दोविशेषम् "अयुजि न-न र-ला गुरुः समे तदपरवक्त्रमिदं न-जौ ज-रौ" इत्युक्तलक्षणं, तद्विधश्लोकमिति यावत्।

कोकमुद्दिश्य यदृच्छया पठितमानेन श्लोकेन राज्ञः आयुर्विनाशं सूचयन्नाह, विहगेति।—विहग!—हे पक्षिन्। चक्रवाक! इति यावत्, त्वं स्वयम्—आत्मना, मनः,—चित्तं दृढं—स्थिरं, धीरमिति यावत्, कुरु—विधेहि, शुचं—शोकं, भाविप्रियावियोगजमिति भावः, त्यज—मुञ्च, विवेकवर्त्मनि—ज्ञानमार्गे, संसारसुखस्य क्षणभङ्गुरत्वमदृष्टमिति इति भावः, आश्रय—तिष्ठ, विचारयेत्यर्थः, विरोचनः,—सूर्यः, ("सूर-

(११४) तच्च आकर्ण्य वाङ्गिमित्रः पितरि सुतरां जीविताशां शिथिलीचकार। गतेषु च भिषक्षु चलधृतिः चपामुखे क्षितिपालसमीपम् एव पुनः आरुरोह धवलं गृहम्। (११५) तत्र च,—"दाहो महान्, आहर हारान् हरिणि!, मणिदर्पणान् मे देहि देवि वैदेहि!, हिमलवैर्लिम्प ललाटं लीलावति!, चन्-

---

द्युमणिरादित्य · । चित्रभानुर्विरोचन ॥" इत्यमरः ) कमलसरोजिनीश्रिया— कमलयुक्ता सरोजिनी—पद्मपुष्पसमन्विता पद्मिनी, पद्मलतेत्यर्थ, तस्या श्री,—शोभा तया, सह—सार्द्धं, सुमेरो,—कनकाचलस्य, शिर,—शृङ्ग, श्रयति—अव-लम्बते, अस्तमितीति भाव, विधातुर्नियोगोऽयं यत, प्रतिदिनं सूर्यस्य उदयास्तमने स्याताम, उदये युष्माकं सम्मेलनात् सुखम्, अस्तमने च वियोगदु:ख तदत्र नियते अपरिहार्ये च विषये वृथा शोकं परित्यज्य धैर्यमवलम्ब्यतामिति निष्कर्ष । तत्रास्तमना-मपि पतनं नियतमेव इति सम्भवदस्तुन बिम्बानुबिम्बत्वेन बोधनात् निदर्शनाऽल-ङ्कृति , अपि च राज्ञ प्रभाकरवर्द्धनस्य सूर्यतुल्यस्य राजमहिष्या सह सुमेरुशिरोरूप-स्वर्गप्राप्ति अचिरभाविनी इति अवश्यम्भाविनि विषये कुमारेण त्वया धैर्यावलम्बनं [illegible] कर्त्तव्यमिति प्रस्तुतस्य, अप्रस्तुतेन विहगसमाश्वासनरूपेण वस्तुना प्रतीते अप्रस्तुत-प्रशंसाऽलङ्कार, समासोक्त्या सम्बन्धभेदादेव भेदेन अभेदाध्यवसायरूपातिशयोक्ति-मूलकसङ्कीर्णालङ्कारस्य श्लेषेणाङ्गाङ्गिभावेन सङ्करे सङ्कर.। अपरवक्त्रं छन्द ॥५॥

(११४) तत—पठितश्लोकम्। वाङ्गिमित्रः,—वाच ,—वाक्यस्य, निमित्त—शुभाशुभलक्षणं जानातीति तथोक्त। सुतरा—अतीव वाङ्गिमित्रस्य अत एवेत्यर्थं, कथितवाक्यस्य लोकपावाश्लोकानुसूचकत्वादिति भाव। शिथिलीचकार—मन्दी-चकार। भिषक्षु—वैद्येषु। चलधृति,—विचलितधैर्य, आसन्नशोका वियोगाशङ्कया तदागमनस्य नियतत्वात् इति भाव। चपामुखे—रजनीमुखे। क्षितिपालसमीप—राजान्तिकम्। [ "आरुरोह धवल गृहम्" इत्यत्र "आरुरोह" इत्येतावन्मात्र एव पाठ पुस्तकान्तरे ]।

(११५) "तत्र च" इत्यस्य "जागदेव निशामनैषीत्" इत्युत्तरेणान्वय। तत्र—क्षितिपालसमीपे धवलगृहे। आहर—आनय, अङ्गेषु अर्पय इत्यर्थः। हरिणि।—तदाख्याया परिचारिकाया सम्बोधनम्, एवमुत्तरत्र। हिमलवैः,—तुषारलेशै, "बरफ" इति वङ्गभाषया प्रसिद्धै घनीभूततुषारखण्डैरित्यर्थं, चन्दन-बिन्दुभिरिति वा, ("हिमं तुषारमलयोद्भवयो. स्यान्नपुंसकम्" इति मेदिनी)। लिम्प

दह्यता। (१२४) किं वा अस्य आकल्पम् अवस्थितस्य स्थेयसो यशोमयस्य दह्यते? (१२५) पतितः स केवलं दहने, दग्धास्तु वयम्। धन्यः खलु असौ अग्रणीः पुण्यभाजाम्। अपुण्यभाक् तु इदमेव राजकुलं, कुलपुत्रेण यत् तादृशा वियुक्तम्। अपि च ममापि कः खलु एतेषां प्राणानां (१२६) कार्यातिभारः कृत्यशेषो वा? का वा व्यापृतता, येन न अद्यापि निष्ठुराः प्राणाः प्रतिष्ठन्ते? को वा अन्तरायो हृदयस्य, येन सहस्रधा न दलति?" इति। दुःखार्त्तश्च न जगाम राजसद्म। समुत्ससर्ज च सर्व्वकार्य्याणि। (१२७) शयनीये निपत्य उत्तरीयवाससा सोत्तमाङ्गम् आत्मानम् अवगुण्ठ्य अतिष्ठत्।

---

अतिस्थिरतमौन्नत्यस्य। यशोमयस्य—पूर्णयशसः, यशोरूपस्य देहस्य वा, किं दह्यते?—किं भस्मीक्रियते? भगवतैवोक्तं हि "चलचित्तं चलवित्तं चलजीवनयौवनम्। चलाचलमिदं सर्व्वं कीर्त्तिर्यस्य स जीवति॥" इति अरवात्, दग्धीभूतनश्वरदेहोऽपि सुकृतलब्धेनाविनश्वरेण यशःशरीरेण आकल्पजीवी वर्त्तत इति भावः। इहापि तस्य मृत्युना विनिमयात् चमत्कारातिशयानवद्यत्वात् परिवृत्तिरलङ्कारः।

(१२५) स—रत्नायनः, दहने—अग्नौ, केवलं पतितः,—प्रविष्ट एव, न तु दग्धः, अविनाशियशोलाभादिति भावः, वयन्तु दग्धाः,—वयमेव भस्मीभूताः, तद्वियोगेन, तद्वियोगशोकेन दग्धा इति भावः। असौ—रत्नायनः। अग्रणीः,—अग्रगण्यः, पितृतुल्यस्य राज्ञः शोकशोचनासहत्वाभावात्, प्रभो जीवनरक्षणे असामर्थ्ये तथा अकिञ्चित्करत्वबोधेन राजभक्त्या स्वजीवनपरित्यागादिति भावः। तादृशा—तथाविधेन, कुलपुत्रेण—सत्कुलजातेन, वियुक्तं—विरहितम्।

(१२६) कार्यातिभारः,—कार्यगौरवम्। कृत्यशेषः,—अवशेषकृत्यम्, अस्ति इति शेषः। व्यापृतता—कार्यनियोगः, कार्यासक्तता इति यावत्। प्रतिष्ठन्ते—अपगच्छन्ति, प्रस्थानं कुर्वन्तीत्यर्थः, यद्वा—प्रातिष्ठन्ते—अग्रेसरा भवन्ति, ("पुरोगाग्रेसरप्रष्ठाग्रतःसरपुरःसराः" इत्यमरः) प्रतिष्ठां कुर्वन्ति वा इत्यर्थः, तदा विधानाचरणं तदलाभात् इति भावः। अन्तरायः—विघ्नः। सहस्रधा—परिशतधा निष्क्रान्त्वादिति भावः।

(१२७) शयनीये—शय्यायाम्, ("शय्यायां शयनीयवत्" इत्यमरः)। उत्त

(१२८) इत्थम्भूते च देवे हर्षे, राजनि च तदवस्थे, सर्वस्य लोकस्य कपोलेषु कीलिता इव कराः, लोचनेषु (१२९) लेप्यमय्य इव अश्रुसृतयः, नासाग्रेषु ग्रथिता इव दृष्टयः, कर्णेषु (१३०) उत्कीर्णा इव रुदितध्वनयः, जिह्वासु (१३१) सहजानि इव हा! कष्टानि, लपनेषु पल्लवितानि इव श्वसितानि, अधरेषु (१३२) लिखितानि इव परिदेवितपदानि, हृदयेषु निधानीकृतानि इव दुःखानि अभवन्। (१३३) उष्णास्रुदाह-

---

दीर्घवाससा—उत्तरीयवसनेन   सोत्तमाङ्गम्—समस्तकमित्यर्थः,   आत्मानम्—शरीरम्, ("आत्मा यत्ने स्वभावे च प्रयत्न मनसोरपि। धृतावपि मनीषायां शरीरब्रह्मणोरपि॥" इति मेदिनी)   अवगुण्ठ्य—आच्छाद्य।

(१२८) इत्थम्भूते—ईदृगवस्थे,   राजनि—प्रभाकरवर्द्धने।   तदवस्थे—मर्यादितजीवने इत्यर्थः। कपोलेषु—गण्डदेशेषु, कराः—हस्ताः, कीलिता इव—कीलप्रोथिता इव, सर्वे लोकाः कपोलनिहितकराः सतत चिन्तामग्ना जाता इति भावः।

(१२९) लेप्यमय्य इव—लेपाद्—लेपनकर्मणि हित, लेप्य, तन्मय्य इव, स्थिरा इवेत्यर्थः, अविच्छिन्ना इति भावः, अश्रुसृतयः—अश्रुपाताः, सदैव सर्वे रुदन्तः इति भावः। ग्रथिता इव—निबद्धा इव, दृष्टयः—नयनानि, इतः परं किं भविष्यति इत्यादिध्यानपरायणा बभूवुः इति भावः।

(१३०) उत्कीर्णा इव—उल्लिखिता इव, सततसन्निहिता इति भावः,   रुदितध्वनयः—रोदननिनादाः अनवरत रोदनध्वनिरश्रूयत इति भावः।

(१३१) सहजानि इव—स्वाभाविकानि इव, हा! कष्टानि—हा कष्ट, किमेतत ? इत्येववचनानीत्यर्थः, सर्वे शोकार्त्ता अनवरतमेव हा! कष्टम् इति जगुः इति भावः। लपनेषु—मुखेषु, ("लपन मुखम्" इत्यमरः) पल्लवितानीव—सञ्जातपल्लवानीव, विस्तारं गतानीत्यर्थः, श्वसितानि—निश्वासाः, सदैव प्रबलशोकावेगेन दीर्घनिश्वासं तत्यजुरित्यर्थः।

(१३२) लिखितानि इव—चित्रितानि इव, परिदेवितपदानि—विलापाक्षराणि, ("विलापः परिदेवनम्" इत्यमरः) लिखितपदानि यथा कदाऽपि न विलुप्तीभवन्ति, तथा विलापाक्षराण्यपि सदैव प्रावर्त्तन्त इत्यर्थः। निधानीकृतानि इव—विहितानि इव, आम्रेडीकृतानीवेत्यर्थः, सर्वे दुःखमथितहृदया जाता इति भावः।

(१३३) उष्णेति।—उष्णे,—तप्ते, अस्रुणि,—नेत्रजले, दाहात्—भस्मी-

भीता इव न अभजत नेत्रोदराणि निद्रा। (१३४) निश्वासवातविधूता इव व्यलीयन्त हासाः। (१३५) निरवग्रहदग्धा इव च सन्तापेन न प्रावर्त्तन्त वाणी। कथासु अपि न अश्रूयन्त परिहासाः। क्व अगमन्निति न अज्ञायन्त गीतगोष्ठ्यः। (१३६) जन्मान्तरानीतानि इव न अस्मर्यन्त लास्यानि। स्वप्नेऽपि न अदृश्यन्त (१३७) प्रसाधनानि। वार्त्तापि न अलभ्यत उपभोगानाम्। नामापि न अकीर्त्यत आहारस्य। (१३८) खपुष्पप्रतिमानि आसन् आपानमण्डलानि। लोका-

भवनात्, भीता इव—त्रस्ता इव, नेत्रोदराणि—नयनाभ्यन्तराणि, न अभजत—न सिषेवे, सर्वैवाश्रुजलाक्रान्तत्वात्, रात्रावपि निद्रा न समुत्पन्ना इति भाव।

(१३४) निश्वासेति।—निश्वासवातेन—नासामुखजनितवातेन प्रायणवायुना, विधूता इव—सञ्चालिता इव, निरस्ता इवेत्यर्थः, व्यलीयन्त—विलयं गता इत्यर्थः, केऽपि न जहसुः इति भाव।

(१३५) निरवग्रहदग्धा इव—निर्बन्धमबीकृता इव, प्रावर्त्तन्त—उदचरदित्यर्थः, वाणी—वाक् सदैव सर्वे मौनिन अतिष्ठन् इति भाव। परिहासाः,—नर्मच्छविताद्व्यवहाराः ते दूरे तिष्ठन्तु, परिहास इति पदमपि केऽपि न उच्चरितवन्त इति भाव। क्व—कुत्र। अज्ञायन्त—अबुध्यन्त। गीतगोष्ठ्यः—सङ्गीतसभाः, सङ्गीतालापा वा, सर्वैः व्यथितान्तःकरणत्वात् तानि परित्यक्तानीति भाव।

(१३६) जन्मान्तरानीतानि इव—जन्मान्तरप्राप्तानि इव, [ "जन्मान्तरानीतानि" इत्यत्र "जन्मान्तरातीतानि" इति पाठे,—जन्मान्तराय—पुनर्जन्मने, अतीतानि—गतानि, अतीतानीत्यर्थः ] लास्यानि—नर्त्तनानि, राजभवने नवीन प्राक् कदाऽपि नर्त्तनादिकमभवत् इत्यस्यापि संस्कारस्य विलोपात् केऽपि न अनुमानकुर्वन् सततं इति भाव।

(१३७) प्रसाधनानि—अलङ्काराः। वार्त्ताऽपि—प्रवृत्तिरपि, कथाऽपीत्यर्थः, उपभोगानां—सम्भोगानां, चन्दनचर्चितविलासादीनामिति यावत्। अकीर्त्यत—अकथ्यत, अश्रूयतेति यावत् किमुत आहार इति भाव।

(१३८) खपुष्पप्रतिमानि—आकाशकुसुमनिभानि, अलीकानि इत्यर्थः। आपानमण्डलानि—पानगोष्ठीसमूहाः, ("आपानं पानगोष्ठिका" इत्यमरः) वयस्यप्रियस्यादिभिः सह मद्यपानार्थं समवेतनागरिकाणां समाजाः सपदि अन्तर्हिता इव

न्तरम् इव अनीयन्त वन्दिवाचः। युगान्तर इव अवर्त्तन्त निर्वृतयः। (१३९) पुनरिव अदह्यत शोकाग्निना मकरकेतुः। दिवाऽपि न अमुच्यन्त शयनानि। (१४०) शनैः शनैश्च महापुरुषविनिपातपिशुनाः समं समन्तात् समुदभवन् भुवने भूयांसो भूपतेः अभावाय भयम् उत्पादयन्तो (१४१) भूतानां महोत्पाताः।

---

भाव। लोकान्तरमिव—परलोकमिव, राजपुरे तदुच्चारणाभावादिति भाव, अनीयन्त—प्राप्यन्त, महाराजमसुखयता दुर्दैवेनेति भाव। वन्दिवाच,—वैतालिकसुतय। युगान्तर इव—युगावसान इव, कल्पान्त इवेति यावत, अवर्त्तन्त—अतिष्ठन, निर्वृतय,—सुखानि, प्राप्तस्य इत्यर्थ, निवृत्ता इति यावत् प्रलयावसाने जीवाभावात् यथा सर्वत्र निस्तब्धैव महाशान्ति विराजते, तथा सर्वथा मूकीभावात् तत्रापीति भाव, ("निर्वृति खिन्नतावस्थ गमने च सुखेऽस्त्रियाम्" इति मेदिनी)।

(१३९) मकरकेतु—काम पुनरिव—भूय इव, हरकोपाग्निना प्राक् दग्धोऽपीति भाव, अदह्यत—दग्धोऽभूत, सर्व्वैरेव तत्प्रसङ्गराहित्यादिति भाव। अमुच्यन्त—त्यक्तानि, दुश्चिन्ताऽवसादादाविष्टत्वादिति भाव, शयनानि—शय्या।

(१४०) शनै शनै,—मन्द मन्दम् अल्पश इत्यर्थ, महापुरुषेति।—महापुरुषस्य—महाराजस्य, विनिपात—विध्वंसन, तस्य पिशुना,—सूचका, ("पिशुनौ खल सूचकौ" इत्यमर) समं—युगपत, समन्तात—चतुर्दिक्षु, समुदभवन्—प्रादुर्भूता। भूयास—बहव, अभावाय—विनाशाय, तं ज्ञापयितुमित्यर्थ, ["क्रियार्थोपपदस्य—" (२।३।१४ पा०) इत्यादिना चतुर्थी]। उत्पादयन्त,—जनयन्त।

(१४१) भूताना—प्राणिना, महोत्पाता,—महान्त,—प्रबला, उत्पाता,—प्रकृतिविपर्य्यासरूपा भूकम्पादय, तदुक्त नारदसंहितायाम,—"उत्पाता विविधा लोके दिव्यभौमान्तरीक्षजा। देवतौघा प्रनृत्यन्ति पतन्ति प्रज्वलन्ति च॥ मुहुर्नादन्ति रोदन्ति प्रस्विद्यन्ति हसन्ति वा। वमन्त्यग्नि तथा धूम स्नेह रक्त पयो जलम॥ अधोमुखा प्रतिष्ठन्ति स्थानात् स्थान व्रजन्ति वा। एवमाद्याश्च दृश्यन्ते विकारा प्रतिमादिषु॥ गन्धर्व्वनगरञ्चैव दिवा नक्षत्रदर्शनम्। महोल्कापातन काष्ठ तृणा रक्तप्रवर्षणम॥ गान्धर्व्वदाहो दिग्दाहो भूमिकम्पो दिवानिशि। अनग्नौ च स्फुलिङ्गा स्फुर्ज्वलनञ्च विनेन्धनम्॥ निशीन्द्रचापमण्डूकशिखर श्वेतवायसम्। प्रतिसूर्य्याश्चलयश्च स्युर्दिक्षु द्युमपद्रव॥ जम्बुकी ग्रामसंदेश केतूनाञ्च प्रदर्शनम्। काकानामाकुल रात्रौ कपोताना दिवा यदि॥" इति।

तथा हि (१४२) दोलायमानसकलकुलाचलचक्रवाला पत्या सार्द्धं गन्तुकामा इव प्रथमम् अचलत् धरित्री। (१४३) धान्वन्तरे इव अन्तरे तस्मिन् सरन्तः परस्परास्फालनवाचालवीचयो विजुघूर्णिरेऽर्णवाः। (१४४) भूभृदभावभीताना विततशिखाकलापविकटकुटिलाः केशपाशा इव ऊर्द्ध्वीबभूवुः

---

(१४२) दोलायमानेति।—दोलायमान—कम्पमान, सकलानां—सर्वेषां, कुलाचलानां—"महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः। विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः॥" इत्युक्तानां, चक्रवालं—मण्डलं यस्यां तादृशी, ('चक्रवालन्तु मण्डलम्' इत्यमरः) धरित्री—पृथिवी, पत्या—प्रभाकरवर्द्धनेन राज्ञेति भावः, सार्द्धं—सह, अचलत्—अकम्पत पतिव्रतायाः पत्याः पतिसहगमनस्य शास्त्रानुमोदितत्वेन तदाचारप्रतिपालनार्थमिति भावः प्रथमतः उत्पातरूपो भूमिकम्पः प्रादुरासीदिति हृदयम्।

(१४३) धान्वन्तरे—धन्वन्तरेरिव धान्वन्तरि—प्रसिद्धः सुवैद्यविशेषः तस्य [कस्यापि मते] धन्वन्तरिनिमित्तं, ["धान्वन्तरे" इत्यत्र "धन्वन्तरे" इति पाठोऽपि दृश्यते] अन्तरे,—यदि इदानीं धन्वन्तरिरप्यत्रागमिष्यति, तदा राजानमरोगिणं करिष्यतीति चिन्तयन्त इति यावत्, तस्मिन् अन्तरे—अवसरे सरन्तः इति।—परस्परस्य—अन्योऽन्यस्य आस्फालनेन—उत्क्षालनेन ताडनेनेत्यर्थः वाचालाः—शब्दायमानाः इति भावः, वाचाला,—शब्दस्य इत्यर्थः [कुत्सित अर्थ आलच् इत्यर्थे "वाचआटचौ बहुभाषिणि" (५।२।१२५ पा०) "कुत्सित इति वक्तव्यम् (वा०) इत्यालच्] वीचयः—तरङ्गा येषां ते, अर्णवाः—समुद्राः विजुघूर्णिरे—चुक्षुभुः अतीव समुद्रा अपि भूपालनिधनोत्पातसहायार्थेन क्षुभिता बभूवुः इति भावः। पुरा धन्वन्तरिः समुद्रगर्भस्थित आसीत् तदुत्पत्तिश्च पुराणेषु प्रसिद्धा तथा च—'अथोदधेर्मथ्यमानात् काश्यपैरमृतार्थिभिः। उदतिष्ठन्महाराज पुरुषः परमाद्भुतः॥ अमृतापूर्णकलशं बिभ्रद्वलयभूषितः। धन्वन्तरिरिति ख्यात आयुर्वेददृगिज्यभाक्॥" इति।

(१४४) भूभृदिति।—भूभृत्,—राजा, अभावात्—आविर्विनाशात् भीता,—शङ्किता तासां, राजा दिक्पालांशसम्भूतत्वात् पतिवियोगात्तानामिति भावः, ककुभां—दिशां, केशपाशा इव—केशनिचया इव, विततेति।—विततेन—विस्तृतेन, शिखाकलापेन—ज्वालानिचयेन ["विततशिखाकलाप—" इत्यत्र 'विततशिखाकलाप—" इति पाठे,—विततेन—विस्तृतेन, शिखिकलापेन—अग्निसमूहेन, अनङ्

धूमकेतवः ककुभाम्। (१४५) धूमकेतुकरालितदिङ्मुखं दिक्पालारब्धायुष्कामहोमधूमधूम्रमिव अभवत् भुवनम्। (१४६) भ्रष्टभासि तप्तकालायसकुम्भबभ्रुणि भानुमण्डले भयङ्करकबन्धकायव्याजेन कोऽपि पार्थिवप्राणितार्थी पुरुषोपहारमिव उपजहार। (१४७) ज्वलितपरिवेषमण्डलाभोग-

---

शिखावन्तश्चाभिचर्हिभेत्यर्थः, अन्यत्र—शिखिन,—मयूरस्य, कलापा—बर्हा, ("शिखी वह्नौ बलीवर्दे। मयूरे कुक्कुटे॥" "कलापः संहतौ बर्हे..." इति च मेदिनी) विकटा,—उत्कटा कुटिला—भङ्गिभूता इत्यर्थ, धूमकेतवः—उत्पातसूचका ग्रहविशेषा अग्नयश्च ऊर्द्धीभूता,—उत्पन्ना, उक्तञ्च कालिदासेन, —"उपप्लवाय लोकाना धूमकेतुरिवोत्थित" इति, भीतानां केशपाशाश्च ऊर्द्धीभवन्ति, अपरदपि ऊर्द्ध्वज्वलन प्राप्तञ्च।

(१४५) धूमकलितेति।—धूमकेतुभि,—उत्पातविशेषै, अग्निभिश्च ("स्याद्धूमकेतुरुत्पातभेदे वैश्वानरे पुमान्" इति मेदिनी) करालितानि—भीषणीकृतानि, व्याप्तानि च, दिशा—ककुभा मुखानि यस्य तथोक्तम् अत एव दिक्पालानाम्—दिक्पालै,—इन्द्रादिभि लोकपालै, आरब्धस्य—उत्पातशान्त्यै प्रकान्तस्य, आयुष्कामस्य—राज्ञ आयुर्वर्द्धनाय अभिलाषवत, होमस्य—देवयज्ञस्य, धूमे धूम्रमिव—धूमवर्णमिव कृष्णलोहितमिवेति यावत। उत्पातधूमसङ्कुलत्वात् तथोत्प्रेक्षा।

(१४६) भ्रष्टेति।—भ्रष्टा —च्युता, भास,—दीप्तय यस्य तथोक्ते, निष्प्रभे इत्यर्थ अस्मिन्नेवोपन्ते तदानीं भूलोकव्यापोदयोत्पन्न तीव्रशोकोदयात् वैवर्ण्यप्राप्त्या भाव, इत्याशय, तप्तेति।—तप्तम्—अत्यन्तातपेन उष्ण, यत् कालायसम्—कृष्णवर्णलौहविशेष, तस्य कुम्भ —ताम्रमितकलस इत्यर्थ तद्वत बभ्रु—पिङ्गल तस्मिन्, भानुमण्डले—सूर्यबिम्बे, [अधिकरणे सप्तमी] भयङ्करेति।—भयङ्कर —भयजनक, कबन्धकाय —क्रियायुक्तमपमूर्द्धकलेवर, सक्रिय छिन्नशिर शरीरमित्यर्थ, ("कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्धकलेवरम्" इत्यमर) तस्य व्याजेन—मिषेण, कोऽपि, जन इति शेष, पार्थिवेति।—पार्थिवस्य—राज्ञ, प्राणित—जीवित, तस्य अर्थी—तत्काम इत्यर्थ पुरुषोपहारमिव—नरबलिमिव, उपजहार—उपहृतवान, पुरुषोपहारेण सूर्यदेवम् आराधितवान् इव इत्युत्प्रेक्षा, सूर्यमण्डल निष्प्रभ जात, तथा तत्र कबन्धाकारेण समदृश्यत इति भाव।

(१४७) ज्वलितेति।—ज्वलितस्य—प्रदीप्तस्य, परिवेषमण्डलस्य—परिधिमण्ड-

भास्वरो जिह्वयाजृम्भमाणस्वर्भानुभयात् उपरचिताग्निप्राकार इव प्रत्यदृश्यत श्वेतभानुः। (१४८) अवनिपतिप्रतापप्रसाधिताः प्रथमतरकृतपावकप्रवेशा इव अदृश्यन्त अनुरक्ता दिशः। (१४९) स्रुतशोणितशीकरासाराञ्चिततनुः अनुमरणाय प्रावृतपाटलांशुकपटेव अदृश्यत वसुधावधू। (१५०) नराधिपविनाश-

---

यस्य, आभोगेन—वेष्टनेन, भास्वर,—दीप्यमान, जिह्वयेति।—जिह्वया—गृहीतुमिच्छया, ग्रहीतुमिच्छयेति यावत, जृम्भमाण,—मुखं व्याददत् य स्वर्भानु,—राहु, ("तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः" इत्यमरः) तस्मात् भयं—त्रास तस्मात्, उपरचितेति।—उपरचित,—मण्डलाकारेण कल्पित, राहुभयप्रतिकारायमिति भाव, अग्निप्राकार,—अग्निमयो वरण येन तथाविध इव, ("प्राकारो वरणः सालः" इत्यमरः) श्वेतभानु,—सितांशु चन्द्र इत्यर्थः, प्रत्यदृश्यत—अलक्ष्यत, सुधांशो रक्तवर्णपरिवेष्टस्य ... ... सत्त्वात् इति भाव।

(१४८) अवनीति।—अवनिपतेः—राज्ञः प्रभाकरवर्द्धनस्य प्रतापेन—प्रभावेण, कोषदण्डजेन तेजसेति यावत, ("स प्रतापः प्रभावश्च यत्तेजः कोषदण्डजम्" इत्यमरः) प्रसाधिता —अलङ्कृता, अग्निप्रवेशा प्रथमेति।—प्रथमतरम—अतिपूर्व्वमित्यर्थं, महाराजस्वर्गारोहणात पूर्व्वमेवेति भाव, कृत—अनुष्ठित, पावक—अग्नौ, प्रवेशः याभि तथाभूता इव, अदृश्यन्त—दृष्टा अभवन, अनुरक्ता —वशीभूता, लोहित-वर्णा वा, अनुरागिण्य कामिन्यश, अनुरागिण्य कामिन्य यथा पत्युर्मरणं निश्चित विभाव्य तन्मरणात पूर्व्वमेव अग्नौ प्रविशन्ति तथा दिशोऽपीति भाव, दिग्दाहोऽभूदिति फलितम। एतेन दिग्वधूना स्वीयात्वमुक्तेचित, "पतिव्रता स्वीया" इत्यादिलक्षणसमन्वयात् इत्याशय।

(१४९) स्रुतेति।—स्रुताना—क्षरितानामित्यर्थं, शोणितानां—रक्तानां, शीकरासारेण—बिन्दुधारया, अञ्चिता—रञ्जिता, रक्तीकृता च, तनु,—कलेवरं यस्या तथाभूता, वसुधावधू,—वसुधा—पृथ्वी एव, वधू,—राजपत्नीति भाव, अनुमरणाय—पत्युर्मरणात पर मरणाय सहमरणाय वा, प्रावृतेति।—प्रावृत,—आच्छादित, परिहित इति यावत, पाटल,—रक्त इति भाव, अंशुकपट,—वस्त्ररूपमावरण यया तथाभूता इव, अनुमरणे तादृशवस्त्रपरिधानस्याचारत्वात् इति भाव। भुवनमयङ्करी रक्तवृष्टिरभूदिति फलितम्।

(१५०) नराधिपेति।—नराधिपस्य—राज्ञ, विनाशेन—मरणेन, भाविना

सम्भ्रमभीतैः लोकपालैः इव कालायसकवाटपुटैः अकालकाल-मेघपटलैः अरुध्यन्त दिग्द्वाराणि। (१५१) प्रेतपतिप्रयाणप्रहताः पटवः पटहा इव आरटन्तो हृदयस्फोटना पस्फायिरे निर्घातानां घोरा निर्घोषाः। (१५२) निकटीभवद्यममहिषखुरपुटोद्धूता इव द्युमणिधाम धूसरीचक्रुः क्रमेलककचकपिलाः पांशुवृष्टयः।

---

इति भावः, यः सम्भ्रमः—आवेगः तस्मात् भीताः,—त्रस्ताः तैः, तस्य लोकपालत्व-त्वादिति भावः, लोकपालैः,—इन्द्रादिभिः, कालेति।—कालायसं—कृष्णवर्ण-लौहविशेषः तस्य कवाटानां पुटानि—आवरणानि तैरिव, कृष्णलौहनिर्मितकवाटपर-म्पराभिरिवेति यावत्, अकालेति।—अकाले—असमये, प्रावृड्व्यतिरिक्ते इत्यर्थः, ये कालमेघाः—नीलनीरदाः तेषां पटलानि—वृन्दानि तैः, दिग्द्वाराणि—दिशां द्वार-देशाः अरुध्यन्त—आच्छाद्यन्त राज्ञः प्रतापेन लोकपालाः निष्कण्टकं स्वं स्वमधिकारं पालयन्ति स्म इदानीं तन्निधनेन असुराणां प्रादुर्भावात् पुनः स्वाधिकारेषु उपद्रवो भविता इति आशङ्कया कवाटावरणेन तन्निरोधयाञ्चक्रुः इति भावः, अकालमेघो-दयरूपा उत्पाताः प्रादुरासन् इति निष्कर्षः।

(१५१) प्रेतेति।—प्रेतपतेः—अन्तकस्य, प्रयाणे—यात्रायां, प्रहताः,—ताडिताः, पटवः,—गम्भीररवाः इत्यर्थः पटहा इव—वादित्रभेदा इव, आरटन्तः—नदन्तः, हृदयस्फोटनाः,—हृदयविदारिणः इत्यर्थः, निर्घातानां—"यदन्तरीक्षे पवनः मारुतो मरुताहतः। पतत्यधः स निर्घातो जायते वायु-सम्भवः॥" इत्युक्तलक्षणानां परस्परप्रहतवायुविशेषाणां घोराः—दारुणाः निर्घोषाः,—शब्दाः, पस्फायिरे—वर्द्धिरे, उद्भवन् इत्यर्थः, हृदयकम्पनोत्पन्नत्वान्निर्घातस्य जगज्जीवदाहवत् उत्तापकत्वात् इति भावः।

(१५२) निकटीभवदिति।—निकटीभवन्—समीपमागच्छन्, यमस्य—कृता-न्तस्य राज्ञः प्राणानामादानुरिति भावः यो महिषः,—वाहनमित्यर्थः तस्य खुराणां —शफानां पुटैः,—युगलैः उद्धूता इव—उत्क्षिप्ता इव, [ "खुरपुटोद्धूता" इत्यत्र "खुरपुटोद्भूता" इति पाठे—खुरपुटेभ्यः उद्भूताः—सञ्जाताः, उद्गता इत्यर्थः ] क्रमेलकेति।—क्रमेलकस्य—उष्ट्रस्य, ("उष्ट्रे क्रमेलक मय-महाङ्गाः" इत्यमरः) कचा इव—केशा इव लोमानि इव इति यावत् ("कचः केशः शिरोरुहः" इत्यमरः) कपिलाः,—धूसराः पांशुवृष्टयः,—रजोवर्षणानि, द्युमणेः,—सूर्यस्य ("सूरसूर्यार्य-मादित्य…। द्युमणिस्तरणिर्मित्र" इत्यमरः) धाम—स्थानम्, अन्तरीक्षमित्यर्थं,

(१५३) विरसविराविणीनाम् उन्मुखीनां शिखिनो ज्वालाः प्रतीच्छन्त्य इव पतन्तीः उल्का नभसो ववाशिरे शिवानां राजयः। (१५४) राजधामनि धूमायमानकबरीविभागविभावितविकाराः प्रकीर्णकेशपाशप्रकाशितशोका इव प्राक्रन्दन्त प्रतिमाः कुलदेवतानाम्। (१५५) उपसिंहासनमाकुलं कालरात्रिविधूयमानवृजिन-

---

धूसरीचक्रुः,—धूम्रवर्णीकृतवन्तः, छादयामासुः इति भावः, महापुरुषनिपातकमघोरविप्लवादिसूचकं पांशुवर्षोत्पातं प्रादुरभवदिति निष्कर्षः।

(१५३) विरसेति।—विरस—कठोरं, ["विरस—" इत्यत्र "विसर—" इति पाठे,—विसर—विस्तरं यथा तथा, उभयेरित्यर्थः] विराविणि—शब्दकारीणि, तथोक्तानां, कर्कशनिनादिनीनाम् इत्यर्थः, उन्मुखीनाम्—ऊर्ध्वमुखीनां, शिवानां राजयः,—शृगालवृन्दानि, शिखिनः,—वह्नेः, ज्वालाः,—शिखाः, प्रतीच्छन्त्य इव—गृह्णत्य इव, जिघृक्षव इव इति यावत्, तन्निष्ठाया विवृतमुखीनां तासां मुखान्तर्ज्वलदग्निवत् परिदृश्यमानत्वादिति भावः, नभसः,—आकाशात् पतन्तीः,—अधःस्यन्दिनीः, उल्काः,—ज्वलन्महत्प्रभावदङ्गारराशिसदृशतेजोविशेषान्, "तडिच्छिखा च सूक्ष्मा स्यात्तारकाकृतिरुल्कका। पौरुषी च प्रमाणेन उल्का नानाविधा स्मृता॥" इत्युक्तलक्षणा इत्यर्थः, ववाशिरे—शब्दायन्ते स्म, तदानीं उल्कामुखाः वदनेभ्यः अग्निशिखाः उद्गीर्य कठोरं नदन्त उल्कापातायाभवन् इति वाक्यार्थः।

(१५४) राजधामनि—राजमन्दिरे, धूमेति।—धूमायमानेन—धूम्रमुद्गिरतीति धूमायमानं तेन केशाभ्यङ्गाभावात् रुक्षेत्यर्थः, कबरीविभागेन—केशनिचयेन इत्यर्थः, विभावितः,—प्रकटितः, विकारः,—विकृतिभावः यासां ताः, अत एव प्रकीर्णेति।—प्रकीर्णेन—विक्षिप्तेन, समन्तादाकुलायितेन इति यावत्, केशपाशेन—कुन्तलकलापेन, प्रकाशितः,—प्रकटितः, शोकः,—शुक् याभिः ता इव, प्राक्रन्दन्त—अरुदन्, शोकार्ता इव अलक्ष्यन्त इति भावः, गृहदेवप्रतिमानां स्वयमर्चाप्रसाधनशृङ्गारविमर्दस्य देवतापकरत्वख्यापनात् इति बोध्यम्।

(१५५) उपसिंहासनं—सिंहासनस्य समीपे, कुलदेवताया राज्ञो वा इति भावः, ["अव्यय—" (२।१।६ पा०) इत्यादिना सामीप्यार्थेऽव्ययीभावः] आकुलं—विचलं, कालेति।—कालरात्रिः,—सत्वानुमरणोपलक्षिताया, कल्पान्तरात्रे,

गतिवश विशीर्य्यमाणालङ्कार झाङ्कारिणी विजयघोषणेव विषादस्य, (१५९) आकुलचरणचलत्तुलाकोटिक्वणितवाचालिताभिः उद्ग्रीवाभिः किम्? किम्? इति पृच्छ्यमानेव दूरादेव भवनहंसीभिः, (१६०) स्खलितविशालश्रोणिशिञ्जानरशनानुराविणीभिश्च वाष्पान्धा समुपदिश्यमानमार्गेव गृहसारसीभिः, (१६१) अट्टकवाटपट्टसङ्घट्टस्फुटितललाटपट्टरुधिरपटलेन पटान्तेन इव रक्तांशुकस्य मुखम् आच्छाद्य प्ररुदती,

राजान्तःपुरादित्यर्थः, यथा विविनक्ति, द्रुतेति।—द्रुतमात्रगमन—शीघ्रगमनवेगेन, विशीर्य्यमाणे —पतन्ति, अलङ्कारे —भूषणे, झाङ्कारिणी—झाङ्कारशब्दवती, अत एव विषादस्य,—दुःखस्य, विजयघोषणा इव—विजयख्यापनी इव वीर्यरटना इव इत्यर्थः, विषादेन तद्विजयघोषणाप्रकारस्य स्वाभाविकत्वात् इति भावः।

(१५९) आकुलेति।—आकुलयोः,—चञ्चलयोः, दृष्टाविषमस्थानानवधानेन विक्षिप्तयोरिति भावः, चरणयोः,—पादयोः, चलन्त्यौ —चञ्चले तुलाकोटी,—नूपुरयोः, ("पादाङ्गदं तुलाकोटी मञ्जीरौ नूपुरोऽस्त्रियाम्" इत्यमरः) क्वणितेन —रणितेन, वाचालिता —मुखरीकृता ताभिः मञ्जीररवविशेषेण हंसीनां नूपुरारवश्रवणेन तदनुकरणमौनत्यागादिति भावः, उद्ग्रीवाभिः —उन्नमितकन्धराभिः, भवनहंसीभिः —गृहपालितहंसीभिः पृच्छ्यमाना—अनुयुज्यमाना अतिव्यग्रतया किमर्थं क्रियते? इति प्रश्नः कृत इव इति भावः।

(१६०) वाष्पान्धा—अश्रुपूरेण दृष्टिशक्तिहीना इव यावत्, रोदनशीलादिति भावः, अत एव स्खलितेति।—स्खलिता—स्खलन्ती भ्रष्टा शिथिलीभूतामित्यर्थः, श्रोण्या—नितम्बे, शिञ्जाना—क्वणन्ती रशना—काञ्चीम् अनुरवन्ति—अनुनदन्तीति तथोक्ताभिः, गृहसारसीभिः —भवनस्थसारसयोषिद्भिः, समिति।—समुपदिश्यमान,—प्रदर्श्यमानः मार्गः,—पन्था यस्याः यस्यै वा तथोक्ता, दृष्टिशून्यत्वे पथप्रदर्शनस्य सुतमामावश्यकत्वात् इति भावः। सारसयोषित् रशनारवसदृश रुवन्ति इति प्रसिद्धिः।

(१६१) अट्टेति।—अट्टस्य—अट्टालिकायाः, महाक्षोभात् अन्धतया वाष्पान्धतया चेति भावः, कवाटपट्टस्य—कवाटफलकस्य, सङ्घट्टेन—सङ्घर्षेण, स्फुटितात्—भग्नात्, विदीर्णात् इत्यर्थः, ललाटपट्टात्—भालफलकात्, निःसृतमिति शेषः यत् रुधिरपटलम्—रक्तनिचयः तेन, रक्तांशुकस्य—रक्तवस्त्रस्य, पटान्तेन इव—अञ्चलेन इव, मुखम् आच्छाद्य—अवगुण्ठ्य।

(१६२) सन्तापवलविलीनकनकवलयरसधारामिव वेत्रलताम् उत्सृजन्ती, (१६३) मुखमरुत्तरङ्गितामुत्तरीयांशुकपटीं स्फुरन्तीं फणिनी इव निर्मोकमञ्जरीम् आकर्षन्ती, नखांससंसिना अनिलविलोलेन नीलतमेन तमालचौरचीवरेणेव शोकोचितेन धम्मिल्लरचनारहितेन शिरोरुहसञ्चयेन चञ्चता प्राकृतकुचा, (१६४) कुचताडनपीडया समुच्छूनाताम्रश्यामतलं मुहुर्मुहुः अत्युष्णाश्रुप्रमार्जनप्रदग्धम् इव करकिसलयं धुनाना,

---

(१६२) सन्तापेति।—सन्तापस्य—शोकजोत्तापस्य, बलेन—वेगेन, विलीनस्य—द्रवितस्य, कनकवलयस्य—स्वर्णकटकस्य, रसधारामिव—द्रवपरम्परामिव, वेत्रलताम्—प्रतीहारत्वेन स्वेन ध्रियमाणां वेत्रयष्टिम्, उत्सृजन्ती—पातयन्ती।

(१६३) मुखेति।—मुखमरुता—मुखवायुना, मुखनिःसृतेन शोकोद्भवदीर्घनिःश्वासेन इति भावः, तरङ्गिताम्—सञ्जाततरङ्गां ताम्, कुञ्चितामिति चञ्चलामिति वा भावः, ['तदस्य—' (५।२।३६ पा०) इत्यादिना इतच्] स्फुरन्तीम्—प्रेङ्खन्तीम्, उत्तरीयांशुकपटीम्—उत्तरासङ्गवसनम्, फणिनी—भुजङ्गी, निर्मोकमञ्जरीमिव—कञ्चुकवल्लरीमिव, आकर्षन्ती—निःसारयन्ती इत्यर्थः, शोकस्थेऽपि स्त्रीजनस्वभावसिद्धाचारात् इति भावः। नखांससंसिना—नखे—चामरे, अंसे—स्कन्धदेशे, स्रंसते—लम्बते इति तथोक्तेन, अनिलविलोलेन—मरुच्चलेन, नीलतमेन—अतिनीलेन, तमालेति।—तमालस्य—कालस्कन्धाख्यवृक्षस्य चौरचीवरेणेव—लुण्ठितवल्कलेनेव, शोककाले वल्कलवसनस्याचारात् इत्याशयः, शोकोचितेन—शोकसमययोग्येन, धम्मिल्लरचनारहितेन—असंयतेन, बन्धनरहितेनेत्यर्थः, ("धम्मिल्लः संयताः कचाः" इत्यमरः) चञ्चता—स्फुरता, शिरोरुहसञ्चयेन—केशनिचयेन, प्राकृतकुचा—आच्छादितस्तनी।

(१६४) कुचेति।—कुचयोः—स्तनयोः, ताडनम्—आघातः, तेन या पीडा—व्यथा तया, समुच्छूनेति।—समुच्छूनम्—सम्यक् स्फीतम्, आताम्रम्—ईषद्रक्तं, श्यामञ्च—कृष्णञ्च, तलं यस्य तथाभूतम्, अत्युष्णेति।—अत्युष्णानाम्—अतितप्तानाम्, अतिशोकोद्रेकात् इति भावः, अश्रूणाम्—नेत्रजलानां, प्रमार्जनेन—प्रोञ्छनेन, प्रदग्धम्—प्रकर्षेण दग्धमिव, करकिसलयम्—हस्तपल्लवं, धुनाना—कम्पयन्ती, उद्धूलयन्ती इत्यर्थः, शोकावेगेन वक्षसि कराघातम् अश्रुप्रमार्जनं तथा पुनःपुनः हस्तकम्पनञ्च कुर्वतीति भावः।

(१६५) चक्षुर्निर्झरे शोष्यति स्नपयन्ती इव शोकाग्निप्रवेशाय स्वकपोलतलप्रतिबिम्बितम् आसन्नलोकं, (१६६) लोललोचनप्रवृत्तैः तरलैः तारकांशुभिः श्यामायमानम् आक्रन्दखेदेन दिवसमपि दहन्ती इव "क्व कुमारः? क्व कुमारः?" इति पुरुषं पृच्छन्ती, वेलेति नाम्ना यशोवत्याः प्रतीहारी आजगाम। (१६७) विपक्षलोकलोचनप्रत्युद्गता च उपसृत्य कुट्टिमन्यस्तहस्तयुगला गलन्तीभिः सिञ्चन्ती इव शुष्यन्तं दशनदीधितिधाराभिः आधूसरम् अधरम् अधोमुखी विज्ञापितवती,—"देव।

(१६५) शोष्यति—मज्जति प्रवक्ष्यतीत्यर्थं, चक्षुर्निर्झरे—नेत्रवारिप्रवाहे, ("उत्सः प्रस्रवणो वारिप्रवाहो निर्झरो झरः" इत्यमरः) स्वेति।—स्वस्य—आत्मनः कपोलतले—गण्डदेशे, अविरलनयनजलेन प्रक्षालनादतिस्वच्छे इति भावः, प्रतिबिम्बितं—प्रतिफलितम्, आसन्नलोकं—पार्श्ववर्तिनं जनसमूहं, स्नपयन्ती इव—स्नानं कारयन्तीव, कृतस्नानस्यैवात्मघातप्रवृत्तस्य अग्निप्रवेशाधिकारात् इत्याशयः।

(१६६) लोलेति।—लोलाभ्याम्—चञ्चलाभ्याम् लोचनाभ्याम्—नयनाभ्यां प्रवृत्तैः,—निःसृतैः तैः, तरलैः—स्फुरद्भिरित्यर्थः तारकांशुभिः,—तारकायाः,—कनीनिकायाः, ("तारकाऽक्ष्णः कनीनिका" इत्यमरः) अंशुभिः,—मयूखैः, श्यामायमानम्—मलिनायमानम्। आक्रन्दखेदेन—शोकशोकसन्तापेन इत्यर्थः, दहन्तीव—भस्मीकुर्वन्तीव, दग्धश्च श्यामो भवतीति भावः, एतेन तदा अपराह्णः समभूत् इति सूचितम्। पुरुषम्—अनियतं जनं यं कञ्चित् पृच्छति, तमेवेति भावः। प्रतीहारी—द्वाररक्षिणी।

(१६७) विपक्षेति।—विपक्षाणां—विषादयुक्तानां ["रदाभ्या—" (८।२।४२ पा०) इत्यादिना निष्ठायां, धातोर्दकारस्य च नत्वम्] लोकानां—जनानां लोचनैः,—नयनैः, प्रत्युद्गता—प्रत्युत्थिता, ईर्ष्या प्रतीहारीत्वात् सम्मानप्रदर्शनार्थमिति भावः। कुट्टिमन्यस्तहस्तयुगला—कुट्टिमे—रत्नबद्धभूतले, न्यस्तं—निहितं हस्तयुगलं—करद्वयं यया तथाभूता, भूतलस्पृष्टकरेति यावत्, शोकभारतया स्थातुमसामर्थ्यात् अवलम्बनार्थं, प्रभुसमीपे तादृशाचारप्रदर्शनस्य अनुजीविनाम् अवश्यकर्तव्यत्वाद्वा इति भावः, गलन्तीभिः,—स्रवन्तीभिः, दशनदीधितिधाराभिः,—दन्तकिरणपरम्पराभिः, विमलवारिधारावत् प्रक्षालनाभिरिति भावः, शुष्यन्तं—शोषमापद्यमानं, शोकसन्तापादिति भावः, अध

परित्रायस्व परित्रायस्व, जीवत्येव भर्त्तरि किमपि अध्यवसितं देव्या" इति।

ततस्तत् (१९८) अपरम् आकर्ण्य च्युत इव सत्त्वेन, द्रुत इव दुःखेन, आचान्त इव चिन्तया, तुलित इव तापेन, अङ्गीकृत इव आतङ्केन अप्रतिपत्तिः आसीत्; आसीच्च अस्य चेतसि (१९९) प्रतिपन्नसन्त्रस्य,—"बहुशोऽपि हृदये दुःखाभिषङ्गो निपतन् अश्मनीव लोहप्रहारः कठिने हुतभुजम् उत्थापयति, न तु भस्मसात्करोति मे निरनुक्रोशस्य कायम्" इति। उत्थाय च

---

एव आपूरम्—आपातुम्, अधरम्—अधोरदनच्छदं, सिञ्चन्तीव—आर्द्रीकुर्वतीव, अधोमुखी—अवनतवदना। लोकेऽपि सर्वे अवस्त्रद्रव्यविघनकाले, अधोमुखा भवन्तीति दृश्यते। भर्त्तरि—स्वामिनि, राज्ञि प्रभाकरवर्द्धने इति यावत्। किमपि—अनिर्वचनीयम् अतिशोच्यतया अश्रुमश्वस्त्रमिति भावः। अध्यवसितम्—उद्युक्तं, देव्या—यशोमत्या।

(१९८) अपरम्—अन्यत्, अशुभमित्यर्थः, शोककारणमिति भावः। च्युत इव—भ्रष्ट इव सत्त्वेन—बलेन, अतिदुर्बल इत्यर्थः। द्रुत इव—गलित इव, दुःखाम्बुविनिमग्न इत्यर्थः, अतिकारुण्यरसोद्रेकात् इति भावः। आचान्त इव—निपीत इव, चिन्तामग्न इत्यर्थः। तुलित इव—लघुता नीत इव, तापेन—उष्मणा, शोकाग्निनेत्यर्थः, शोकावसन्न इति यावत्। अङ्गीकृत इव—क्रोडनिहित इवेत्यर्थः, आतङ्केन—भयेन, भयाक्रान्त इत्यर्थः। अप्रतिपत्तिः,—इतिकर्त्तव्यताविमूढः, मूर्च्छित इवेत्यर्थः, [अत्र च्युतत्वद्रुतत्वादीनां सर्व्वासामेव क्रियाणाम् उत्कटैककोटिकसम्भवोदयादुत्प्रेक्षाऽलङ्कारः।

(१९९) प्रतिपन्नत्रस्य—सञ्चैतन्यस्य। बहुशः—बहुवारान्, पुनः पुनरपीत्यर्थः, कठिने—दृढे, अश्मनि—प्रस्तरे, लोहप्रहारः,—लोहाघात इव, निरनुक्रोशस्य—निर्दयस्य, निष्ठुरस्येति यावत्, मे—मम, कठिने हृदये—अन्तःकरणे, निपतन्—आविशन्नित्यर्थः, दुःखाभिषङ्गः,—दुःखाभिघातः, हुतभुजम्—अग्निम्, उत्थापयति—जनयति, न तु भस्मसात् करोति—न दहत्येव, अतिकठोरहृदयत्वादिति भावः, यथा लोहाहताद्धि कठिनप्रस्तरात् अग्निरुत्तिष्ठते, न तु स प्रस्तरः तदुद्भूतेन तेन दग्धीक्रियते, तथा पाषाणकठोरे मम हृदयेऽपि पुनः पुनरापतन् दुःखातिशयः शोकाग्निं प्रवर्द्धयत्येव, न तु तेनाग्निना मां निःशेषं दहति, अहो। कष्टम् इति निष्कर्षः।

त्वरमाणोऽन्तःपुरम् अगात्। (१००) तत्र च मर्त्तुमुद्यतानां राजमहिषीणाम् अशृणोत् दूरादेव,—"तात! चूत! चिन्तय आत्मानं, प्रवसति ते जननी। वत्स! आतोगुच्छ! गच्छामि, आपृच्छस्व माम्। मया विना अद्य अनाथा भवसि भगिनि! भवनदाडिमलते!। रक्ताशोक! मर्षणीयाः पादप्रहाराः कर्णपूरपल्लवभङ्गापराधाश्च। (१०१) पुत्रक! अन्तःपुरबालबकुलक! वारुणीगण्डूषमहणदुर्ललित! दृष्टोऽसि। वत्से! प्रियङ्गुलतिके! गाढम् आलिङ्ग मां, दुर्लभा भवामि ते। भद्र! भवन-

(१००) "तत्र" इत्यस्य "राजमहिषीणामशृणोत् ··" इत्येवम्प्रायाणामालापान् इत्युत्तरेण सम्बन्धः। तात!—वत्स! चूत!—चाम्र! आत्मानं—स्वं, चिन्तय—स्वयं योगक्षेम स्वयमेव सम्पादयेति यावत्। जननी—उत्पादिका, प्रवसति—दूरं गच्छति। या त्वामुत्पादितवती दृष्ट्वा चाषि पालितवती च, सा इदानीं धात्रिजीवननैराश्यात् परलोकं गच्छतीति भावः। आतोगुच्छ!—आतोद्यवक! मा—दृ जननीं, पालयित्रीमिति यावत् आपृच्छस्व—सम्भाषस्व, पुनः समागमाभावात् इति भावः, ["आङि नुप्रच्छ्योः" (वा०) इत्यात्मनेपदम्]। अनाथा—निराश्रया, दोहदीभिः पोषिकाऽभावादिति भावः। भवनदाडिमलते!—गृहमात्रपरिपोषित-दाडिमवल्लि! इति यावत्। रक्ताशोक!—रक्तपुष्पाशोकवृक्ष! पादप्रहाराः,—चरणताडनानि, "पादाहतः प्रमदया विकसत्यशोकः" "पादाघातादशोको विकसति" इति च कविसमयसिद्धेः कर्णेति।—कर्णपूराय,—कर्णभूषणाय, पल्लवानां—किसलयानां भङ्गाः—छेदाः एव, अपराधाः,—दोषाः, मर्षणीयाः,—सोढव्याः, क्षन्तव्याः इत्यर्थः।

(१०१) पुत्रक!—वत्स! कृत्रिमपुत्र! इति वा, अन्तःपुरबालबकुलक!—अवरोधस्थ-बालकेसरक! वारुणीति।—वारुणी—मदिराविशेषः, तस्याः गण्डूषः,—मुखपूरणं मुखपूरणमदिरारस इत्यर्थः, तस्य ग्रहणेन—लाभेन, स्वप्रसूनविकासकदोहदव्यापारं प्रसक्तत्वादिति भावः, दुर्ललित!—दुर्विनीत! मदोन्मादयोगात् अन्यस्मादपि बह्वाहृत इति भावः, "सीधुं च हाति बकुलो मुखसीधुसिक्तः" "बकुलः सीधुगण्डूष-मात्रमद्यैः" इति च कविसमयसिद्धेः दृष्टोऽसि—एतावत्कालम् अवलोकितोऽसि, अतःपरं न द्रक्ष्यसे शरीरपरित्यागात् इति भावः। गाढं—निर्भरम्। ते—तव, दुर्लभा—

द्वारमण्डपकारक। दातव्यो निवापतोयाञ्जलिः, अपत्यमसि। भ्रातः। (१७२) पञ्जरशुक। यथा न विस्मरसि मां, किं व्याहरसि? दूरीभूताऽस्मि ते। शारिके। स्वप्ने न समागमः पुनर्भूयात्। तात। मार्गलग्नं कस्य समर्पयामि गृहमयूरकम्? (१७३) अम्ब। सुतवल्लालनीयमिदं हंसमिथुनं, मन्दपुण्यया मया न सम्पादितोऽस्य चक्रवाकयुगलस्य विवाहोत्सवः। (१७४) मातृवत्सले। निवर्त्तस्व गृहहरिणिके।। ममुपनय सोविदल्ल!

---

दुष्प्रापा भवद्भगिनीति यावत् [ ननु न लोकाव्यय— (२।३।६९ पा०) इत्यादिना षष्ठीप्रतिषेधात् कथमत्र खलर्थप्रत्ययान्तस्य कर्त्तरि तृतीयेतरा कथं षष्ठी? इति चेत्, अत्रोच्यते— सर्वाणि कारकाणि प्रतिषेधे सति षष्ठीं न श्रयन्ते" इति दीक्षितवचनात् सम्बन्धमात्र एव षष्ठी इति वक्तव्या कर्मपदान्तरसन्नीधानमध्यस्थाने नाप्रवृत्तीकरणेऽपि मति विवेक ]। भवन.ारम्भकारक —त्वदनार रोपितात्मसुराभिषवतरो निवापतोयाञ्जलिः —निवापः —पितृलोकमुद्दिश्य दानं ("पितृदानं निवापः स्यात्" इत्यमरः ) तत्कर्मभूतं यत् तोयं—जलं, तत्पूर्णः अञ्जलिः —युक्तकरगृहीतसलिलमित्यर्थः दातव्यः — देयः त्वया इति शेषः अपत्यमसि—पुत्रोऽसि अपत्यत्वाच्च निवापादिकर्मणां सम्पादकत्वतया विधानात् इति भावः।

(१७२) पञ्जरशुक —पिञ्जरस्थकीर यथा मां न विस्मरसि तथा कार्यमिति शेषः। व्याहरसि?—ब्रवीषि? यद्वा—न विस्मरसि मामिति किं व्याहरसि?—किमेवं ब्रवीषि? अहमपि त्वां न विस्मरामि इति भावः। ते—तव, त्वत्समीपादित्यर्थः। मार्गलग्नं—मार्गे—पथि लग्नं —सक्तं तं मार्गेऽनुसरन्तमित्यर्थः मयि स्नेहानुरागात् इति भावः गृहमयूरकं—गृहपालितमयूरशावकम्।

(१७३) अम्ब।—मातः हंसमिथुनं—हंसदम्पती सुतवत्—पुत्रवत् लालनीयं—यत्नेन पालनीयम्। मन्दपुण्यया—अपुण्यवत्या, अधन्ययेति यावत्। सम्पादित,—सम्पादितः। चक्रवाकयुगलस्य—कोकद्वन्द्वस्य।

(१७४) मातृवत्सले —मातृभक्ते गृहहरिणिके।—गृहपालितक्षुद्रहरिणि। निवर्त्तस्व—प्रतिनिवृत्ता भव अतःपरं मया सह मा गच्छ इति भावः।

वल्लभवल्लकीं, परिष्वजे तावत् एनाम्। चन्द्रसेने। (१७५) सुदृष्टः क्रियतामयं जनः। विन्दुमति! इयं ते अन्त्या वन्दना। चेटि! मुञ्च चरणौ। आर्य्ये! कात्यायनिके! किं रोदिषि? नीताऽस्मि दैवेन। तात! कञ्चुकिन्! किं माम् अलक्षणां प्रदक्षिणीकरोषि? धात्रेयि! धारय आत्मानं, किं पादयोः पतसि? भगिनि। गृहाण माम् अपश्चिमां कण्ठे। कष्टम्! न दृष्टा प्रियसखी मलयवती। कुरङ्गवति! अयम् (१७६) आमन्त्रणाञ्जलिः। सानुमति! अयमन्त्यः प्रणामः। कुवलयवति। एष ते अवसान-परिष्वङ्गः। सख्यः! अन्तव्याः प्रणयकलहाः" इत्येवप्रायान् आलापान्।

(१७७) दह्यमानश्रवणस्य तैः प्रविशन्तीव निर्य्यान्तीं, दत्तसर्व्व-

---

सौविदल्ल।—कञ्चुकिन्, ("सौविदल्लाः कञ्चुकिनः" इत्यमरः) वल्लभवल्लकीं—प्रियवीणां, समुपनय—समुपस्थापय। एनां—वल्लकीमित्यर्थः, परिष्वजे—आलिङ्गामि।

(१७५) सुदृष्टः,—प्रीत्या अवलोकितः। अन्त्या—चरमा। मुञ्च—त्यज। दैवेन—विधिना, दौर्भाग्येण इत्यर्थः। अलक्षणां—दुर्लक्षणाम्। धात्रेयि।—उपमातः तनये। आत्मानं धारय—धैर्य्यमवलम्बस्व इत्यर्थः। अपश्चिमाम्—अपुनः आगामिनीमित्यर्थः। कष्टम्—खेदे, दुःखकरमेतदित्यर्थः।

(१७६) आमन्त्रणाञ्जलिः,—प्रार्थनाऽञ्जलिः, प्रस्थानकालिक क्षमाप्रार्थनार्थं करद्वयसंयोग इत्यर्थः। अन्त्य—चरम। अवसानपरिष्वङ्ग,—शेषालिङ्गनम्। अन्तव्या,—मर्षयितव्या, प्रणयकलहा,—प्रेमविवादा, तेषां जीवनावधिकत्वात् इति भावः। एवप्रायान्—एतद्रूपभूयिष्ठानित्यर्थः।

(१७७) "दह्यमानश्रवण" इत्यस्य "मातरं ददर्श" इत्यग्रेण सम्बन्धः। तैः,—आलापैः, प्रागुक्तैरिति यावत्, दह्यमान—अत्यन्तमापद्यमानम्, अतिसन्तापकत्वात् इति भावः, श्रवण—श्रोत्रेन्द्रियं यस्य तथाभूतः। मातरं विशिनष्टि, निर्य्यान्तीमित्यादि।—निर्य्यान्तीं—निर्गच्छन्तीम्, अन्तःपुरादिति शेषः। दत्तेति।—दत्तानि—वितरितानि, स्वयमाकृतानीत्यर्थः, सर्व्वाणि—समग्राणि, स्वहस्ती हितानि

स्वापतेयां, (१०८) गृहीतमरणप्रसाधनां, जानकीमिव जातवेदसं पत्युः पुरः प्रवेक्ष्यन्तीं, प्रत्यग्रस्नानार्द्रदेहतया श्रियमिव भगवतीं सद्यः समुद्रात् उत्थितां, (१०९) कुसुम्भबभ्रुणी वाससी दिवमिव तेजसी साम्ध्ये दधानां,

---

स्वापतेयानि—धनानि, स्वाधिकृतानि यौतुकादिद्रव्याणि इत्यर्थः यया तां, ["पथ्यतिथि—" (४।४।१०४ पा०) इत्यादिना ढञ्। "द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु" इत्यमरः] महाराजमन्त्रबाधम् अर्पितात्मकृतास्वसम्बधनामित्यर्थः।

(१०८) गृहीतेति।—गृहीतानि—स्वीकृतानि मरणाय मरणस्य वा प्रसाधनानि—अलङ्काराः, सहमरणोचितरक्तवसनादय इत्यर्थः यया तथोक्ताम्। जानकीमिव—जनकदुहितरं सीतामिव, इत्युपमा, वैदेही यथा पुरा लङ्कापुरे स्वपक्षार्थे पत्युः समक्षमेव वह्नौ आत्मानं विसृष्टवती तथेत्यर्थः, तथा हि अन्वारोहणधर्मे मृतस्य पत्युः प्रज्वलचितायामेव सतीनां प्रवेशो दृश्यते, अत्र तु सदसत्त्वात् जीवत एव पत्युः पुरतः ज्वलनं प्रविशन्त्या सीतया साम्यं प्रदर्शितम्, एवम्भूतनिदर्शनमतीव दुर्लभमेव अत्र तु एतावानेव विशेषः यत् तत्र स्वशुद्धिप्रदर्शनार्थम् इह तु जीवत्यपि पत्यौ भावितद्विरहजशोकसंकुलमज्जुवत्तया प्रागेव चितायामारोहणमिति, एवञ्च उपमागतसादृश्याद्विनिबन्धनदोषो न शङ्कनीय इति। जातवेदसम्—अग्निम्, ("अग्निर्वैश्वानरो वह्निः। जातवेदास्तनूनपात्॥" इत्यमरः) पुरः,—अग्रतः, प्रवेक्ष्यन्तीं—प्रवेष्टुमेषिष्यन्तीम् अग्नेरन्तरेष्यन्तीम् इत्यर्थः। प्रत्यग्रेति।—प्रत्यग्रेण—नवेन, अचिरकृतेन इति यावत् स्नानेन—आप्लावेन आर्द्रः,—सिक्तः, देहः,—अवयवः यस्याः तस्या भावः तत्ता तया हेतुना, ज्वलने प्रवेष्टुकामेन अग्निप्रवेशात् पूर्वं कृतस्नानेन पुरुषेण तथा स्त्रियाऽपि भूयते इति प्रसिद्धिः, श्रियमिव—लक्ष्मीमिव, मथ्यमाननीरनिधेराविर्भावात्तत्र उत्थितिकालिकसादृश्यसत्त्वात् इति भावः।

(१०९) कुसुम्भेति।—कुसुम्भवत्—महारजनेत्यपराख्यस्वनामख्यातपुष्पवत्, बभ्रुणी—पिङ्गले, ("बभ्रुर्ना पिङ्गले विभुः" इत्यमरः) वाससी—वसने, परिधेयमुत्तरीयञ्च इति भावः, दिवमिव—आकाशमिव, साम्ध्ये—सन्ध्याकालीने, तेजसी—सूर्य-चन्द्रमसौ इत्यर्थः। इहोभयोरुपमानोपमेययोः अवैधर्म्यासाध्यत्वादुपमा। यदि साय युगपत् द्वयोः तेजस्विनोः उदयास्तमयनकालसत्तायां विरोधः कश्चित् आपद्यते, तदा तेजःपदस्य तेजस्स्वार्थकता परित्यज्य दीप्त्यर्थकता अङ्गीकरणीया, तथा च साम्ध्यरागौ च लोहितायमाने वाससी यथाभासिते इत्यर्थः।

( १८० ) ताम्बूलदिग्धरागान्धकाराधरप्रभापटलपाटलं पट्टांशुकमिव विधवाभरणचिह्नम् अङ्गलग्नम् उद्वहन्तीं, ( १८१ ) रक्तकण्ठसूत्रेण कुचान्तरावलम्बिना स्फुटितहृदयविगलितरुधिरधाराशङ्कां कुर्वतीं, ( १८२ ) तिर्यक्कुटिलकुण्डलकोटिकण्टकाक्रान्ततनुना हारेण वलितेन सितांशुकपाशेन इव कण्ठम् उत्पीडयन्ती, ( १८३ ) सरसकुङ्कुमाङ्गराग-

---

( १८० ) ताम्बूलेति।—ताम्बूलानां—पर्णानां, पुनः पुनः चर्व्यमाणानामिति भावः, दिग्धः,—लिप्तः, घनीभूत इति भावः रागः,—लौहित्यम्, अन्धकार इव—तम इव, स्वाभाविकदीप्तेरावरकत्वात् आवरणभूत इत्यर्थः यस्मिन् तादृशः, [ तदानीन्तनमात्र ] योऽधरः,—अधोदन्तच्छदः, तस्य प्रभापटलेन—द्युतिपुञ्जेन, पाटलम्—श्वेतरक्तम्, पट्टांशुकमिव—रक्तपट्टवसनमिव, विधवेति।—विधवानां—पतिहीनानां, पत्युपरलोकगमनादृष्टमरणप्रवृत्तानामिति भावः, भरणचिह्नम्—मरणमनलक्षणम्, रक्तपरिच्छदादिकमिति यावत्, अङ्गलग्नम्—अङ्गासक्तम्। ["ताम्बूल पटलपाटलम्" इत्यत्र ताम्बूलदिग्धरागान्धकारप्रभापटल पाटलम्" इति पाठः समीचीनतया प्रतिभाति, तत्र ताम्बूलदिग्धरागान्धकाराधरस्य प्रभायाः,—द्युतेः, पटलम्—समूहः यत्र तादृशम् अत एव पाटलम्—रक्तवर्णं, पट्टांशुकमिव इति योजना, तथात्वे पाटलमित्यस्य पट्टांशुकविशेषणत्वेन अर्थंतरोऽयमिति भावः ]।

( १८१ ) रक्तेति।—रक्त—रक्तवर्णं, कण्ठसूत्रं—गलदेशनिहितसूत्रं तेन, कुचान्तरावलम्बिना—स्तनान्तरविलम्बमानेन स्फुटितेति।—स्फुटितात्—विदीर्णात्, मन्युशोकेन इति भावः, हृदयात्—वक्षसः, विगलितानि—स्रुतानि, यानि रुधिराणि—शोणितानि, तेषां धाराशङ्का—प्रवाहभ्रमम्, कुर्वतीं—जनयन्तीं, लोकानां द्रष्टॄणामिति भावः।

( १८२ ) तिर्यगिति।—तिर्यक्—वक्रं यथा तथा, कुटिलेन—भङ्गिमता, कुण्डलकोटिकण्टकेन—कर्णभूषणाग्रमुखेन, आक्रान्तः,—आक्रान्तः, तनुः,—सूत्रं यस्य तेन, वलितेन—वेष्टनकारिणा, हारेण—एकावल्या, सितांशुकपाशेनेव—श्वेतवसनरूपरज्ज्वा इवेत्यर्थः, उत्पीडयन्तीम्—उद्बध्नतीम् [illegible] लक्ष्यमाणां, महाशोकाकुलत्वात् इत्याशयः।

( १८३ ) सरसेति।—सरसै,—आर्द्रैः, कुङ्कुमैः,—वाह्लीकैः, अङ्गरागः,—

तया कवलितामिव दिधक्षता चिताऽर्चिष्मता, चितानलार्चनाकुसुमैः इव धवलधवलैः अश्रुबिन्दुभिः अंशुकोत्सङ्गम् आपूरयन्तीं, (१८४) गृहदेवताऽऽमन्त्रणबलिमिव वलयैर्विगलद्भिः पदे पदे विकिरन्तीम्, आप्रपदीनां कण्ठे गुणकुसुममालां यमदोलाम् इव आरूढाम्, (१८५) अन्तर्गुञ्जन्मधुकरमुखरेण आमन्त्र्यमाणलोचनोत्पलामिव कर्णोत्पलेन, (१८६) प्रदक्षिणीक्रियमाणामिव मणिनूपुरबन्धुभिर्मण्डल भ्रमद्भिर्भवनहंसैः, सन्निहितप्राणसमं मर-

---

अङ्गीपनं यस्याः तस्या भावः तत्ता तया हेतुना, कवलितामिव—ग्रस्तामिव, इत्युत्प्रेक्षा, दिधक्षता—दग्धुमिच्छता, चिताऽर्चिष्मता—चितानलेन। चितेति।—चितानलस्य—शवदाहनाग्नेः, अर्चनाकुसुमानि—पूजार्थपुष्पाणि तैरिव, इत्यनेन धर्म्यसाम्यावगमादुपमाऽलङ्कारः धवलधवलैः,—अतिस्वच्छैः, अश्रुबिन्दुभिः,—बिन्दुबिन्दुरूपेण अविरलधारया पतितैः नयनजलैः, अंशुकोत्सङ्ग—वसनमध्यभागम्, आपूरयन्ती—परिपूर्णं कुर्वती स्त्रियो हि पूजार्थकुसुमानि अविरतं वसनाञ्चले स्थापयन्ति इति दृश्यते लोके नयनजलधारया सिक्तवसनामिति भावः।

(१८४) पदे पदे—प्रतिपादक्षेपं, विगलद्भिः—भ्रश्यद्भिः, शोकक्षामाभ्यां हस्ताभ्याम् इति भावः, वलयैः—कङ्कणैः, गृहदेवतानां—भवने प्रतिष्ठितकुलदेवतानाम् आमन्त्रणाय—सम्भाषणाय, बलिमिव—उपहारमिव विकिरन्तीं—विक्षिपन्तीम्, अर्पयन्तीमिति यावत्। आप्रपदीनां—प्रपद—पादस्याग्र ("पादाग्रं प्रपदम्" इत्यमरः) तन्मर्यादीकृत्य आप्रपदं तत्प्राप्नोति इति आप्रपदीना ताम्, ["आप्रपदं प्राप्नोति" (५।२।८ पा०) इति खञ्] गुणकुसुममालां—तन्तुगुम्फितपुष्पस्रजं, यमदोलामिव—समादरेण प्राणिविशेषानयनार्थं यमस्य दोलायन्त्रमिव आरूढाम्—अधिष्ठिताम्।

(१८५) अन्तः,—अभ्यन्तरे, गुञ्जद्भिः,—ध्वनद्भिः, मधुकरैः,—भृङ्गैः, मुखरं—वाचालितं तेन, कर्णोत्पलेन—कर्णावतंसीकृतेन इन्दीवरेणेति यावत्, आमन्त्र्यमाणेति।—आमन्त्र्यमाणं—सम्भाष्यमाणं, लोचनं—नयनम्, उत्पलमिव—इन्दीवरमिवेत्यर्थः, यस्याः तामिव सजातीयत्वात् कृताभाषणनीलनीरजनयनामिवेति भावः।

(१८६) प्रदक्षिणीक्रियमाणामिव—अप्रदक्षिणा प्रदक्षिणा क्रियमाणा प्रदक्षिणी-

धाय चित्तमिव चित्रफलकमविचलं धारयन्तीम्, (१८७) अर्चाबद्धोद्धूयमानधवलपुष्पदामकां पतिव्रतापताकामिव पतिप्राणयष्टिमिष्टामुपगूहमाना, बन्धोरिव निजचारित्रधवलस्य नृपातपत्रस्य पुरो नेत्रोदकमुत्सृजन्ती, (१८८) पत्युः पादपतनसमुद्गमदभ्यधिकबाष्पाम्बुप्रवाहप्रतिरुद्धदृशः कथमपि प्रतिपन्नादेशान् सचिवान् सन्दिशन्तीम्, (१८९) अनुनयनिवर्त्तितविधुर-

---

क्रियमाणा—विन्यस्यमाना तामिव, मणिनूपुरयोः,—रत्नमञ्जीरयोः, बन्धुभिः,—सुहृद्भिः, मणिनूपुरसदृशबन्धुभिरिति भावः, बद्धमण्डल—विरचितचक्राकारवेष्टनमिव च। सन्निहितेति।—सन्निहित,—सम्यक्तया स्थापित, चित्रित इति यावत्, प्राणसम,—जीवनसदृश, पतिरिति भावः यस्य तादृशम्, अविचल—निश्चलम्, एकाग्रम्, चित्रफलकम्—आलेख्यपट, धारयन्तीम्—दधानाम्, तीव्रशोकावेगेन ज्ञातमरणनिश्चयामिति भावः।

(१८७) अर्चेति।—अर्चा—पूजा, तस्यै बद्ध—संयमितम्, उद्धूयमानं—वातेन चाल्यमानं, धवल—श्वेत, पुष्पदाम—कुसुममाल्यं यत्र तथोक्ताम्, पतिव्रतापताकामिव—पातिव्रत्यसूचनीं वैजयन्तीमिव, पत्युः,—भर्त्तुः, प्राणयष्टि—कुन्ताख्यास्त्रविशेषम्, इष्टा—प्रियां, भर्त्तुरिति शेषः, यद्वा,—भर्त्तुः प्रियत्वात् आत्मनः प्रियाम्, प्रियप्रियेषु प्रियवदुपचारवत्त्वात् इति भावः, उपगूहमानाम्—आश्लिष्यन्तीम्। बन्धोरिव—सुहृद इव, निज—स्वीय, चारित्र—विशुद्ध चरितमिव, धवल—शुभ्र तस्य, नृपातपत्रस्य—राजच्छत्रस्य, पुरः,—अग्रत, नेत्रोदक—बाष्पम्, उत्सृजन्ती—मुञ्चन्ती, स्वजनाग्रत शोकस्य शतधाद्वारेण प्रकाश स्वभावसिद्ध इति भावः, "स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते" इत्यादि महाकविप्रयोगदर्शनात्।

(१८८) पत्युः,—स्वामिन, पादपतने—चरणाभिपातकाले, समुद्गमता—समुच्छलताम्, अभ्यधिकानाम्—अधिकाधिकानां बाष्पाम्बुनाम्—अश्रुजलानां, प्रवाहस्य—स्रोतसः, प्रतिरुद्धा,—आहता, दृशः,—नेत्राणि यस्याः तां, प्रतिपन्नादेशान्—आज्ञाकारिण इत्यर्थः, सचिवान्—अमात्यान्, कथमपि—अतिकष्टेन, शोकावेगेन वक्तुमशक्यत्वात् इति भावः, सन्दिशन्तीम्—एतत्परमेवमेव युष्माभिः वर्तितव्यमित्यादिमन्वतीम्।

(१८९) अनुनयेति।—अनुनयेन—सान्त्वनेन, परलोकेऽपि परिचर्यार्थं पति-परायणाना पुरोगमनस्य प्रवीणपस्थितसम्भवत्वात् मद्वियोगदुःखं मा कुरुत, इत्येवरूपेण

वृद्धबन्धुवर्गवर्द्धमानध्वनिभिः गृहाक्रन्दैः आक्रम्यमाणश्रवणां, (१९०) भर्त्तृभाषितनिभैः पञ्जरसिंहबृंहितैर्द्दीर्यमाणहृदयां, धात्र्या भर्त्तृभक्त्या च निजया प्रसाधिता, जरत्या मूर्च्छया च संस्तुतया धार्य्यमाणां, सख्या पीडया च व्यसनसङ्गतया समालिङ्गिता, परिजनेन सन्तापेन च (१९१) गृहीतसर्वा-

---

प्रबोधवाक्येन इति भावः, निर्वासिताना—स्थिरीकृताना, विधुराणां—वियोगार्त्तानां, वृद्धाना—स्थविराणां, बन्धुवर्गाणां—सुहृज्जनाना, वर्द्धमाना —हृदि मध्यम उच्चै रोदनादिति भावः ध्वनयः,—विलापाक्षराणीत्यर्थः येषु तादृशैः, गृहाक्रन्दैः,—सद्मगृहमध्ये रुदितरवैः, आक्रम्यमाणे—बलपूर्वकं नीयमानमित्यर्थं, कदाचीत्कारैः बधिरीक्रियमाणमिति भावः श्रवणं—श्रोत्रेन्द्रियं यस्याः ताम्।

(१९०) भर्त्तृभाषितेति।—भर्त्तुः,—स्वामिनः भाषित—वचनं, तन्निभानि—तत्सदृशानि तैः गम्भीरनिर्घोषबृंहितैरिति भावः, पञ्जरसिंहबृंहितैः —पञ्जराबद्धसिंहगर्जनैः, दीर्यमाणहृदयाम्—आक्रम्यमाणचित्तां, भर्त्तुरपालम्भसादृश्यात्तेषां हृदयदारित्वात् इति भावः। धात्र्या—उपमात्रा भर्त्तृभक्त्या च पतिभक्त्या च, प्रसाधिता—प्रकर्षेण निवर्त्तनाय चेष्टिताम्, अलङ्कृताञ्च। जरत्या—वृद्धया, कदाचिदपि प्रवृत्त्यैव मूर्च्छया च—मोहेन च, संस्तुतया—परिचितया, एकदा,—आविर्भावं सदाभ्यासात्, अन्यदा,—भर्त्तुरनिष्टाशङ्कया पुनःपुनरागमनात् इति भावः, धार्य्यमाणाम्—अवलम्ब्यमानां, गृह्यमाणाञ्च। सख्या—वयस्यया, पीडया—आसन्नभर्तृवियोगज दुःखेनेत्यर्थः व्यसनसङ्गतया—व्यसने—विपदि, सङ्गतया—सम्मिलितया सहायभूतयेत्यर्थः, व्यसनात्—विपदः हेतोः समुपस्थितया च, समालिङ्गिता—समालिङ्गिताम्, आक्रान्ताञ्च।

(१९१) गृहीतेति।—गृहीता,—अवलम्बिता, आक्रान्ताञ्च, सर्वे—सकला, अवयवा,—अङ्गानि यस्य तथोक्तेन। परीता—वेष्टिता, युक्ताञ्च, [परिजनसन्तापादीनां प्रस्तुतानाम् एकक्रियाऽभिसम्बन्धात् तुल्ययोगिताऽलङ्कृति]। कुलपुत्रेति।—कुलपुत्राणां—सत्कुलजातानाम्, उच्छ्वसिते —दीर्घतरश्वासे, महत्तरे,—महामहिमशालिभिः पुरुषैश्च, ["कुलपुत्रोच्छ्वसिते" इत्यत्र "कुलपुत्रैरुच्छ्वसितैश्च" इति पाठः—कुलपुत्रा,—कुलीनतनया तैः, उच्छ्वसिता,—ऊर्द्ध्वश्वासाः तैः, महत्तरैः,—मानप्रवरैश्च] अधिष्ठिता—परिवृताम्, आत्मभूतामित्यर्थश्च॥

वयवैन परीतां, कुलपुत्त्रोच्छ्वसितैश्च महत्तरैः अधिष्ठितां, (१८२) कञ्चुकिभिः दुःखेन अतिवृद्धैः अनुगतां, भूपालवल्लभान् कौलेयकान् अपि सास्रमालोकयन्तीं, सपत्नीनामपि पादयोः पतन्तीं, (१८३) चित्रपुत्रिका अपि आमन्त्रयमाणां, गृहपतत्रिणामपि अञ्जलिं पुरस्तात् उपरचयन्तीं, पशूनपि आपृच्छमानां, भवनपादपानपि परिष्वजमानां मातरं ददर्श।

दूरादेव च (१८४) बाष्पायमाणदृष्टिः अभ्यधात्,—"अम्ब! त्वमपि मां मन्दपुण्यं त्यजसि? प्रसीद, निवर्त्तस्व" इत्यभिदधान एव न सखेदमिव (१८५) नूपुरमणिमरीचिभिः चुम्ब्यमान-

---

(१८२) कञ्चुकिभिः,—मातृकञ्चुकिभिः पुरुषविशेषैः, अतिवृद्धैः—अतिस्थविरैः, महद्भिः, अनुगताम्—अनुसृताम्, अभिभूयाय। भूपालवल्लभान्—राजप्रियान्, कौलेयकान्—सारमेयान् कुक्कुरान् इत्यर्थः, स्वकुलजातान् जनान् वा, ("कौलेयकः सारमेये कुलीने" इति मेदिनी) सास्रम्—सबाष्पम्, त्वत्प्रियप्रभुः अचिरेणैव परलोकं प्रस्थास्यति, त्वं निराश्रयः कुत्र गमिष्यसि? इति भावयन्त्या इति भावः। सपत्नीनामपि—समानपतिकानामपि, पादयोः पतन्तीम्—एतावन्तं कालं मया युष्मासु सपत्नीबुद्ध्या यत्किञ्चिदपराद्धं, तत्क्षम्यतां वैराणीति इति मत्वा इदानीम् आत्मनः तत्कृते क्षम्यतामित्युक्त्वा चरणौ गृह्णतीम् इति भावः।

(१८३) चित्रपुत्रिकाः,—आलेख्यस्थाः पुत्तलिकाः, आमन्त्रयमाणाम्—सम्भाषमाणाम्। गृहपतत्रिणः—गृहपालितपक्षिणाम्। उपरचयन्तीम्—कुर्वतीम्। पशून्—गवादीन्, आपृच्छमानाम्—सम्भाषमाणाम्, ["आङि नुप्रच्छ्योः" (वा०) इत्यात्मनेपदम्, शत्र शानच्] भवनपादपान्—गृहप्राङ्गणरोपिततरुवरान् परिष्वजमानाम्—आलिङ्गन्तीम्।

(१८४) बाष्पायमाणदृष्टिः,—बाष्पायमाणा—बाष्पमुद्वमन्ती दृष्टिः,—नेत्रं यस्य तथोक्तः, अश्रुपूर्णनयन इत्यर्थः। अम्ब!—मातः। मन्दपुण्यम्—क्षीणसुकृतम्, मामनभिलष्य, दुर्भाग्यमिति यावत्। निवर्तस्व—विरता भव, मरणाध्यवसायादिति भावः।

(१८५) नूपुरेति।—नूपुरयोः,—मञ्जीरयोः, मातुरिति भावः, ("मञ्जीरो नूपुरोऽस्त्रियाम्" इत्यमरः) ये मणयः,—रत्नानि, तेषां मरीचिभिः,—किरणैः,

चूडः चरणयोः न्यपतत्। (१९६) देवी तु यशोवती तथा तिष्ठति पादनिहितशिरसि विमनसि कनीयसि प्रेयसि तनये गुरुणा गिरिणा इव उद्वेगवेगेन अवष्टभ्यमाना, मूर्च्छाऽन्धतमसं रसातलमिव प्रविशन्ती, (१९७) बाष्पप्रवाहेण इव चिरनिरोधसम्पिण्डितेन स्नेहसम्भारेण निर्भराविर्भूतेन अभिभूयमाना, कृतप्रयत्नाऽपि निवारयितुं न शशाक बाष्पोत्पतनम्। (१९८) उत्कटकुचोत्कम्पप्रकटितासह्यशोकाकूता च, गद्गदिकाऽवष्टभ्यमानगलविक्लवा, निःसामान्यमन्युतरलीक्रियमाणाधरोष्ठा,

---

क्षुभ्यमाणचूडः,—क्षुभ्यमाणा—क्षुब्धमाना, चूडा—शिखा यस्य तथाभूतः चरणार्पितोत्तमाङ्ग इति भावः।

(१९६) "देवी तु" इत्यस्य "निवारयितुं न शशाक बाष्पोत्पतनम्" इत्यनेनान्वयः। तथा—तेन प्रकारेण तदवस्थायामित्यर्थः, तिष्ठति—वर्त्तमाने। पादनिहितशिरसि—चरणन्यस्तमूर्द्धनि। विमनसि—दुर्मनसि, पितुर्जीवननैराश्येन मातुर्दाहाध्यवसायदर्शनेन च चिन्ताविक्लवचेतसि इत्यर्थः। कनीयसि—कनिष्ठे। [अल्पशब्दात् "द्विवचन—" (५।३।५७ पा०) इत्यादिना ईयसुनि "युवाल्पयोः—" (५।३।६४ पा०) इत्यादिनाऽल्पस्य कनादेशः] प्रेयसि—अतिप्रियतमे। गुरुणा—महता, गिरिणा इव—पर्वतेन इव, उद्वेगवेगेन—दुःखातिरेकेण, अवष्टभ्यमाना—आक्रम्यमाणा। मूर्च्छेति।—मूर्च्छा—मोह एव, अन्धतमसम्—गाढान्धकारम्।

(१९७) बाष्पप्रवाहेण—अश्रुस्रोतसा। चिरनिरोधसम्पिण्डितेन—चिरं—बहुकालं व्याप्य निरोधः,—अवरोधः तेन सम्पिण्डितः—पुञ्जीभूतः, एकत्र समवेतः इत्यर्थः तेन स्नेहसम्भारेण—स्नेहातिशयेन निर्भराविर्भूतेन—समधिकमुदयमानेन, नितरामुच्छलितेन इत्यर्थः अभिभूयमाना—बाध्यमाना, कृतप्रयत्ना—विहितोद्यमा इत्यर्थः। बाष्पोत्पतनम्—अश्रुप्रवाहं, सवेगं प्रवहतः प्रवाहस्य दुर्वारत्वात् इति भावः।

(१९८) उत्कटेति।—उत्कटेन—उद्दामेन, अत्यन्तेन इत्यर्थः कुचयोः,—स्तनयोः, उत्कम्पेन—उद्वेपनेन, प्रकटितम्—प्रकाशितम्, असह्यम्—दुःसहं शोकाकूतम्—शोकाभिप्रायः यया तथाभूता। गद्गदिकेति।—गद्गदिकया—गद्गदस्वरेण, अवष्टभ्यमानः,—अवरुध्यमान इत्यर्थः, यः गलः,—कण्ठः, तेन विक्लवा—विह्वला, मन्ना,

(१९९) पुनरुक्तस्फुरणनिपीडितनासापुटा, निमील्य नयने नयनाम्भःसेकप्लवेन प्लावयन्ती विमलौ कपोलौ, (२००) सञ्छाद्य करनखमयूखमालाखचितदशान्तेन तनुना तन्वन्तर निर्गच्छदच्छास्रस्रोतसा इव अंशुकपटान्तेन किञ्चित् उत्तानित वदनेन्दुं दूयमानमानसा, (२०१) स्मरन्ती प्रस्नुतस्तनी प्रसवदिवसात् आरभ्य सकलम् अङ्कशायिनः शैशवम् वत्स,

---

त्रिवलीभङ्गुरत्वात् समुद्गत भावमाना इत्यर्थः । निःसामान्येति ।—निःसामान्येन—असाधारणेन, मन्युना—शोकेन, तरलीक्रियमाण,—स्फुर्यमाण, वेपमान इत्यर्थः, अधरोद्देश,—अधरभाग यस्या तथाभूता ।

(१९९) पुनरिति ।—पुनरुक्तेन—पुन पुन प्रवृत्तेन, उत्तरोत्तर वर्द्धमानेनेत्यर्थः, स्फुरणेन—स्पन्दनेन, निपीडित—विचलित, ["निपीडित—" इत्यत्र "निबिडित—" इति पाठे,—निबिडित—घनीभूत, सङ्कुचितमित्यर्थः] नासापुट—नासिकायुगल यस्याः तथोक्ता । निमील्य—मुद्रयित्वा । नयनाम्भःसेकप्लवेन—बाष्पजलाभिषेकप्रसरेण, प्लावयन्ती—आपूरयन्ती, मज्जयन्ती, सिञ्चन्ती चेत्यर्थः ।

(२००) सञ्छाद्य—आवृत्य । करेति ।—करनखाना—हस्तनखराणा, मयूखमालाभि,—किरणराजिभि, खचित,—व्याप्त, दशान्त,—वस्त्रप्रान्त, अञ्चलप्रान्त इत्यर्थ यस्य तथोक्तेन, तनुना—सूक्ष्मेण, ["करनख तनुना" इत्यत्र "करनखमयूखमालाखचिततनुना" इति पाठे,—करनखमयूखमालाभि खचितत् तथा तनुश्च तेन, खचित तनु,—अवयव यस्य तथोक्तेन इति वा अर्थ]। तन्वन्तरेति ।—तन्वन्तरात्—अवयवमध्यात्, निर्गच्छत्—निःसरत्, अच्छ—निर्मलम्, अस्रस्रोत —अश्रुप्रवाह यस्य तथाभूतेन इव, अंशुकपटान्तेन—वसनाञ्चलेन । उत्तानितम्—उन्नमित, वदनेन्दु—मुखचन्द्रम् । दूयमानमानसा—सन्तप्यमानचित्ता, पितामहं शोकविह्वलम् अनुशोचन्त्या इतीव भाव ।

(२०१) स्मरन्ती—ध्यायन्ती । प्रस्नुतस्तनी—क्षरितपयोधरा, निःसृतस्तन्या इति यावत्, वात्सल्याविर्भावादिति भाव । प्रसवदिवसात्—गर्भमोचनवासरात्, इहलोकोत्पत्तिदिवसादित्यर्थ, [अत्र आरभ्यार्थकप्रभृत्यादिशब्दयोगे एव पञ्चमी अनुशिष्टा, न तु आरभ्येति क्रियायोगे, क्रियायोगात्तया "प्रसवदिवसात्" इत्यत्र द्वितीया प्रसङ्गात् तथा च ल्यब्लोपे पञ्चमीं विधाय कथञ्चित् समाधातव्यम्, आरभ्य

(२०२) ज्ञातिगृहगतहृदया, "अम्ब! तात! न पश्यते पापा परलोकप्रस्थिता माम् एवम् अतिदुःखिताम्" इति मुहुर्मुहु आक्रन्दन्तौ पितरौ, "हा वत्स! (२०३) विश्रान्त-भागधेयया न दृष्टोऽसि" इति प्रेष्ठ ज्येष्ठ तनयम् असन्निहित क्रोशन्ती, "अनाथा जाता" इति श्वशुरकुलवर्त्तिनी दुहितरम् अनुशोचन्ती, "निष्करुण! किम् अपराद्धं तव अमुना जनेन?" इति दैवम् उपालभमाना, "नास्ति मत्समा सीमन्तिनी दुःखभागिनी" इति निन्दन्ती बहुविधम् आत्मानं, (२०४) "मुषिताऽस्मि नृशंस! त्वया" इति अकाण्डे कृतान्त

वैरापदस्य कन्यान्तरशोचनीयमिति यावत् ]। पदमायिन —छदनवातन। वस्य—इयस्य।

(२०२) ज्ञातीति।—ज्ञातिगृह—पितृभवनमित्यर्थ गत—प्रस्थित हृदयं—चित्त यस्या तथोक्ता स्त्रीस्वभावसाधारण्यात् स्मृतापत्यत्वादिति भाव। अम्ब।—मात ["अम्बार्थ— (७।३।१०७ पा०) इत्यादिना ह्रस्व "एङ् ह्रस्वात् सम्बुद्धे" (६।१।६९ पा०) इति सम्बुद्धिलोप ]. तात —पित पापा दुष्कृतकारिणी, निस्तारिणीति यावत्। परलोकप्रस्थिता—लोकान्तर प्रस्थातुमुद्यताम्। आक्रन्दन्ती—रुदती सविलापस्वरमाह्वयन्ती वा। पितरौ—मातर पितरञ्च।

(२०३) विश्रान्तभागधेयया—निरुद्धभाग्यया अभाग्यया इत्यर्थं जीवदव स्थ भर्त्तुर्कालान्तरमनवलम्बनादिति भाव। प्रेष्ठम—प्रियतम ज्येष्ठ—अग्रज तम तनय—पुत्र राज्यवर्द्धनमित्यर्थ असन्निहित—दूरस्थ मति यावत् क्रोशन्ती—तमुद्दिश्य रुदती महातारस्वरमाह्वयन्ती वा इत्यर्थ। अनाथा—अभर्तृका इत्यर्थ, ईदृश पश्चाद्वियोगेन कदाचिदापदि तथाभूत दुःखप्रत्याख्यानासम्भवादिति भाव। श्वशुर—कन्या राज्यश्रियम् इति यावत् अनुशोचन्ती—सशोक स्मरन्ती। निष्करुण—निर्दय किमपराद्धम?—कोऽपराध कृत? अमुना जनेन—मया इत्यर्थ। दैव—नियतिम् उपालभमाना—तिरस्कुर्वती। सीमन्तिनी—नारी, ("नारी सीमन्तिनी वधू" इत्यमर)।

(२०४) मुषिता—विप्रलब्धा, जीवनेश्वरहरणोद्योगेन हृतसर्वस्वा इति यावत्। नृशंस।—निष्ठुर। अकाण्डे—सहसा। कृतान्तम्—यमकम्।

भृङ्गारकास्यसमुद्गीर्णेन पयसा प्रक्षाल्य मुखकमलं, (२१४) कल-मूकलोककरविधृते धौतवासःशकले शुचिनि समुन्मृज्य पाणी, (२१५) सुतवदनविनिहितनिभृतनयनयुगला चिरं स्थित्वा पुनः पुनः आयतं निश्वस्य अवादीत्,—"वत्स। नासि (२१६) न प्रियो निर्गुणो वा परित्यागार्हो वा। स्तन्येन एव सह त्वया पीतं मे हृदयम्। अस्मिंश्च समये प्रभूतप्रभुप्रसादान्तरिता त्वां न पश्यति दृष्टिः। अपि च

कुब्जिका—चतुरस्रपरिचारिकाविशेषः, तया आवर्जितस्य—आनीतस्य, मुखीकृतस्येत्यर्थः वा राजतस्य—रौप्यमयस्य, राजहंसास्यभृङ्गारकस्य—राजहंसमुखाकाररचितस्य "गाडु" इति ख्यातस्य जलाधारविशेषस्य इत्यर्थः, आस्य—मुखं तस्मात् समुद्गीर्णेन—निर्गतेन, ["भृङ्गारक समुद्गीर्णेन" इत्यत्र "मणाभुकपटान्ततनुतावलीवालाच्छिन्नतावक्ष कुब्जिकावर्जितराजतराजहंसास्यसमुद्गीर्णेन" इति पाठे,—मणः,—आच्छन्न, इत्ये वीति भावः, अभुकपटान्तस्य तनुना तावल्लक्ष्माभि आच्छिन्न वाक्ष्य यस्य तथाभूतस्य, तया कुब्जिकया—"वांधि" इति ख्यातेन मञ्जूषापुटकभेदेनेत्यर्थः, आवर्जित, —आयत्तीकृत, उद्घाटित इत्यर्थः, राजत,—रौप्यनिर्मित, य राजहंस,—राजहंसाकृतिजलाधारविशेषः, तस्य आस्यसमुद्गीर्णेन इत्यर्थं] पयसा—सलिलेन।

(२१४) कलेति।—कलमूकः,—अन्धमूकः, लोकः,—जनः, तस्य करेण—पाणिना, विधृत—गृहीत तावत्, ["कलमूकलोककरविधृते" इत्यत्र "कलमूक लोकविधृते" इति पाठान्तरम्] धौतवासःशकले—प्रक्षालितवसनखण्डे [पुस्तकान्तरे "धौत" इति पाठो न दृश्यते]। शुचिनि—धवले पवित्रे वा, पाणी—हस्तौ, समुन्मृज्य—शोधयित्वा निर्जलीकृत्येत्यर्थः।

(२१५) सुतेति।—सुतस्य—हर्षस्य, वदने—मुखे, विनिहितम्—अर्पितं, निभृत—निश्चल निर्निमेषमित्यर्थः, नयनयुगलं—नेत्रद्वयं यया तथाभूता, अविचली दयात् निमेषाल्पमप्यपकृष्टिरिति भावः। आयतं—दीर्घम्।

(२१६) नप्रिय,—अप्रिय, द्वेष्य इत्यर्थः, [इह नञ्शब्देन "सह सुपा" (२।१।४ पा०) इति समासः, समासे च कृत्ति परत नञ अकारभावस्य वैकल्पिकत्वात् भव तदभावपक्ष एवाहत]। स्तन्येन—स्तनदुग्धेन। प्रभूतेति। —प्रभूतेन—समधिकेन, प्रभुप्रसादेन—स्वामिकृपया, अन्तरिता—व्यवहिता,

पुत्रक। (२१७) पुरुषान्तरविलोकनव्यसनिनी राज्योपकरणाकरुणा वा न अस्मि लक्ष्मीः क्षमा वा। (२१८) कुलकलत्रम् अस्मि चारित्रधना धर्मधवले कुले जाता। (२१९) किं विस्मृतोऽसि मां समरशतशौण्डस्य पुरुषप्रकाण्डस्य केशरिण इव केशरिणीं गृहिणीम्? वीरजा वीरजाया वीरजननी च मादृशी पराक्रमक्रीता कथमन्यथा कुर्य्यात्? एवंविधेन पित्रा ते भरत-भगीरथ-नाभागनिभेन नरेन्द्रवृन्दारकेण गृहीतः पाणिः।

---

यद्वा,—निरतिशयस्वाम्यनुरागेण तिरस्कृता, अथाच तेन परित्यक्ततया तद्गुणचिन्ताभरस्थितेत्यर्थः।

(२१७) पुरुषान्तरेति।—पुरुषान्तरस्य—अपरपुरुषस्य, भर्तृव्यतिरिक्तस्य इत्यर्थः, विलोकने—दर्शने, व्यसनिनी—अत्यासक्ता, राज्योपकरणेति।—राज्यस्य—शासनस्य, उपकरणे—उपकाराकरणायाम्, अकरुणा—निर्दया। ["राज्योपकरणाकरुणा" इत्यत्र "राज्योपकरणमकरुणा" इति पाठे,—राज्योपकरणं—राज्यस्य अङ्गीभूता इत्यर्थः ग्रामादिकमित्यर्थ इति भाव, "लक्ष्मी क्षमा वा" इत्यन्वय ] क्षमा—पृथिवी, लक्ष्मी क्षमा च यथा नित्य अन्या—पुंश्चली इव बहुपुरुषासक्ता, राज्ञी जीवनरक्षणरूपोपकारकरणे च निर्दया, तथाभूता अहं नास्मि इति भाव।

(२१८) कुलकलत्रं—कुलाङ्गना, सत्कुलप्रसूता इति भाव। चारित्रधना—विशुद्धपतिपरायणसदाचारस्यैव पातिव्रत्यमेव धनवत् सतत रक्षणीयमिति अनिशं विभावयन्ती इत्यर्थ, तस्य ऐहिक पारलौकिकाभ्युदयसाधनत्वादित्याशय। धर्मधवले—अमलकृतधर्मोज्ज्वल इति भाव।

(२१९) किं विस्मृत? कस्य पुत्री, कस्य पत्नी, कस्य जननी इति विचारणमापन्न किम्? समरशतशौण्डस्य—शतशतसङ्ग्राममत्तस्य, अनेकसङ्ग्रामयुद्धविजयिन इत्यर्थ, पुरुषप्रकाण्डस्य—पुरुषश्रेष्ठस्य, केशरिण,—सिंहस्य, केशरिणी—सिंहीम्। वीरजा—वीरप्रसूता, वीरकन्या इत्यर्थ। वीरजाया—वीरपत्नी। वीरजननी—वीरपुत्रा। पराक्रमक्रीता—वीर्य्यशुल्का। अन्यथा—अन्यप्रकार, लोकविधनारीवगर्हिताचरणमित्यर्थ भर्तुरभावेऽपि जीवनधारणरूपमिति भाव। एवंविधेन—समरशतशौण्डेन पुरुषप्रकाण्डेन इत्यर्थ। भरत भगीरथ-नाभागनिभेन—भरतादिसदृशेन, लोकपालदुर्धर्षप्रभावशालिना चक्रवर्त्तिना इति भाव, नरेन्द्रवृन्दारकेण—

(२२८) प्रत्ययदृष्टदारुणदुःखदग्धायाश्च मे किं धक्ष्यति धूमध्वजः ? मरणाच्च मे जीवितम् एव अस्मिन् समये साहसम्। (२२९) अतिशीतलः पतिविरहशोकानलात् अक्षयस्नेहेन्धनात् अस्मात् अनलः। (२३०) कैलासकल्पे प्रवसति जीवितेश्वरे जरत्तृणकणिकालघीयसि जीविते लोभ इति क्व घटते ? अपि

---

यायिनी यथा कस्यापि आगमनं ज्ञापयति, तथा अहं तव पितुर्वीरस्य आगमनम् अयत तासां निवेद्य महत् सम्मानं ताभ्यः लब्धो इति भावः।

(२२८) प्रत्ययेति।—प्रत्ययम्—अभिनवम् अननुभूतपूर्वमिति यावत्, दृष्टम्—इदानीमनुभूतम्, अत एव दारुणम्—भीषणम्, दुःखम्—क्लेशः, भर्तृपीडाजनितः शोक इति यावत्, तेन दग्धायाः,—भस्मीभूतायाः, ["प्रत्ययदृष्ट—" इत्यत्र "प्रत्यक्षदृष्ट—" इति पाठे,—प्रत्यक्षम्—साक्षात्, दृष्टम्—अवलोकितम्, इत्यर्थः इति शेषः] धक्ष्यति ?—भस्मीकरिष्यति ? धूमध्वजः,—वह्निः। साहसं—सहसा—बलेन कृतम्, मरणस्य तापनिवृत्तिफलत्वेन उपकारकत्वात्, जीवनस्य तु महाव्यथाप्रदत्वेन निरतिशय-क्लेशहेतुत्वात् जीवितुमिच्छा नास्तीति भावः।

(२२९) पतिविरहशोकानलात्—भर्तृवियोगशोकाग्नेः, ["पतिविरहशोकानलात्" इत्यत्र "पतिशोकानलात्" इति पाठान्तरम्] अक्षयेति।—अक्षयम्—अविनाशि स्नेहः,—प्रेम एव, इन्धनम्—काष्ठं यस्य तथाभूतात्, अस्मात्—अनुभूयमानादित्यर्थः अनलः—लौकिकः अग्निरित्यर्थः, अतिशीतलः—अत्यन्तं शीतस्पर्शः, क्षणेनैव दग्धीकरणात् अनतिशीतलत्वाच्चेति भावः। अत्र विरहशोकानलात् लौकिकानलस्यातिशैत्यकथनात् तदुत्कर्षप्रतीतेः व्यतिरेकालङ्कारो व्यज्यते।

(२३०) कैलासकल्पे—कैलासपर्वततुल्ये, महासारत्वादतिनिश्चलत्वादेः इति ध्वनिः, जीवितेश्वरे—प्राणनाथे ["जीवितेश्वरे" इत्यत्र "जीवेश्वरे" इति पाठान्तरम्] प्रवसति—परलोकं गमिष्यति इत्यर्थः, ["धातुसम्बन्धे प्रत्ययाः" (३।४।१ पा०) इति भविष्यति वर्त्तमानप्रयोगबोध्यम्] जरदिति।—जरन्ती—जीर्णा शुष्का इत्यर्थः, या तृणकणिका—तृणलेशः, तद्वत् लघीयसि—अतितुच्छे जीविते—जीवने, लोभः,—स्पृहेत्यर्थः इति क्व—कुत्र घटते ?—युज्यते ? न कुत्रापीत्यर्थः, जीवितेश्वरापगमे जीवितस्य स्थितिः न कथमपि सङ्गच्छते, आश्रयनाशे आश्रितनाशस्यान्वयव्यतिरेक-सिद्धत्वात् इति भावः।

च जीवन्तीम् अपि मा (२३१) नरपतिमरणावधीरणमहा- पातकिनो न स्पृशन्ति पुत्र! पुत्रराज्यसुखानि। दुःख-दग्धानाञ्च हृदि भूति अमङ्गला च अप्रशस्ता च निरुपयोगा च भवति। वत्स! (२३२) विश्वस्ताना स्थासुना यशसा स्थातुम् इच्छामि लोके, न वपुषा। तत् अहमेव त्वा तावत् तात! (२३३) प्रसादयामि, न पुनः मनोरथप्रातिकूल्येन कदर्थनीया अस्मि" इत्युक्त्वा पादयोः अपतत्।

---

(२३१) नरपतीति।—नरपतेः—राज्ञः मरणम्—मृत्युः तस्य अवधीरणम्—अवज्ञानं स्वजीवनरक्षणकामनया उपेक्षणमिति भावः, तेन यत् महत् पातकम्—पापं तत् विद्यतेऽस्या इति तथाभूता स्वामिमरणेऽपि जिजीविषुमिति भावः न स्पृशन्ति—न आश्रयिष्यन्ति इत्यर्थः महापातकिस्पर्शनिषेधादिति भावः पुत्रेति। —पुत्रस्य—तनयस्य राज्यम्—राजत्वं पुत्रराज्यमनाधिकृत्य इत्यर्थः यानि सुखानि—आनन्दाः तानि स्वामिविरहे राजमाता भूत्वाऽपि नाहं सुखिनी भवेयम् अनाथत्वात् इति भावः। भूति—भस्मेत्यर्थः, यद्वा—भूतिः—ऐश्वर्यं भस्म च अमङ्गला—अशिवा, मङ्गलानुष्ठानादौ योगदानानर्हत्वादिति भावः अप्रशस्ता—प्रशंसाऽनर्हा हीनत्वज्ञापिका इत्यर्थः शोकजन्यत्वादिति भावः। निरुपयोगा—निष्प्रयोजना कस्यापि उपकाराद्यकरणसामर्थ्यादिति भावः। भस्मापि अमङ्गलम् अप्रशस्तम् अप्रयोजनीयञ्च इति बोद्धव्यम्।

(२३२) विश्वस्ताना—विधवाना ("विश्वस्ता विधवे समे" इत्यमरः) स्थासुना—स्थिरतरेण [ स्थाजिष्णुश्च स्नुः (३।२।१३९ पा०) इति स्नुप्रत्ययः। "स्थासुना" इति पाठस्तु पुस्तकान्तरे नास्ति ] यशसा—कीर्त्या अत्र पतिगमनजनितेन इति भावः स्थातुम्—अस्तित्वम् भावनाश्रयतया निरवच्छिन्नत्वात् इति भावः। वपुषा—देहेन "कीर्तिर्यस्य स जीवति" इति स्मरणात् अचिरस्थायिनाऽनेन जीवितुमिच्छामि न नश्वरदेहेन इति भावः।

(२३३) प्रसादयामि—प्रसन्नं कारयामि मरणानुमोदनरूपा प्रसन्नता प्रार्थये इत्यर्थः। मनोरथप्रातिकूल्येन—अभीष्टव्याहत्या कदर्थनीया—कष्टनीया। पादयोरपतदिति।—पुत्रस्य पदतले पतनं नीतिविगर्हितं तथा निषिद्धमपि तदानीं विरहवैकल्यात् कृत्याकृत्यविवेकविरहितया सा तदनुष्ठितवती इति भावः। अथवा जीवनाद् मरणस्य श्रेष्ठत्वातिशयद्योतनार्थं तथा स्वाभिप्रायसिद्धौ प्रतिबन्धकाचरणाशङ्कया अनुनयनार्थञ्च मन्तव्यम्।

(२२४) स तु ससम्भ्रमम् अपनीय चरणयुगलम् अवनमिततनुः उभयकरविधृतवपुषम् (२२५) अवनिगतशिरसम् उदनमयत् मातरम्। (२२६) दुर्निवारताञ्च शुचः समवधार्य, कुलयोषिदुचिताञ्च तामेव श्रेयसीं मन्यमानः क्रियां, कृतनिश्चयाञ्च तां ज्ञात्वा तूष्णीम् अधोमुखोऽभवत्।

(२२७) अभिनन्दति हि खेदकातरापि कुलीनता देशकालानुरूपम्। देवी अपि यशोवती परिष्वज्य समाघ्राय च तं शिरसि, निर्गत्य चरणाभ्यामेव च अन्तःपुरात् (२२८) पौराक्रन्दनिर्भराभिः उपरुध्यमाना इव दिग्भिः सरस्वतीतीरं ययौ। तत्र च स्त्रीस्वभावकातरैः दृष्टिपातैः

---

(२२४) स,—हर्षः। ससम्भ्रमं—सत्वरं, सव्यग्रमिति यावत्, अपनीय—अपसार्य। अवनमिततनुः,—प्रणमितकायः, उभयेति।—उभयाभ्यां—द्वाभ्यां, कराभ्यां—हस्ताभ्यां, विधृतं—गृहीतं, वपुः,—शरीरं यस्याः तथोक्ताम्।

(२२५) अवनिगतशिरसं—भूतलपतितमस्तकाम्। उदनमयत्—उत्थापयामास।

(२२६) दुर्निवारतां—दुःसहताम्। शुचः,—शोकस्य। कुलयोषिदुचितां—कुलाङ्गनासदृशीं तां क्रियाम्—अग्निप्रवेशरूपाम् इत्यर्थः, श्रेयसीं—प्रशस्ताम्। कृतनिश्चयां—दृढतरव्यवसितामित्यर्थः, तां—मातरमित्यर्थः, ज्ञात्वा—विभाव्य, "क ईप्सितार्थस्थिरनिश्चयं मनः पयश्च निम्नाभिमुखं प्रतीपयेत्" इत्यादि महाकविवाक्यात् इति भावः।

(२२७) अभिनन्दति—प्रशंसति, आद्रियते इत्यर्थः, खण्डितु न शक्नोतीति भावः। खेदकातरा—खेदव्याकुला, मातृवियोगशङ्कया विधुरापीति भावः, कुलीनता—सत्कुलजातता, देशकालानुरूपं—तत्तद्देशकालोचितम्, आचारम् इति शेषः, तत्काले तद्देशे च सत्कुलजातानां नारीणां पत्यनुगमनस्य सदाचारत्वेनावश्यानुष्ठेयतया अनिच्छन्नपि हर्षो मातुरग्निप्रवेशं प्रतिरोद्धुं न शशाक इति भावः। तं—हर्षम्। [पुस्तकान्तरे "तम्" इति पाठो न दृश्यते]।

(२२८) पौरेति।—पौराणां—पुरवासिनाम् आक्रन्देन—रोदनेन, निर्भराः—आपूरिताः इत्यर्थः, ताभिः, उपरुध्यमाना इव—निरुध्यमाना इव, स्त्रीस्वभा-

(२३९) प्रविकसितरक्तपङ्कजपुञ्ज इव अर्चयित्वा भगवन्तं भानुमन्तमिव मूर्त्तिः ऐन्द्री चित्रभानुं प्राविशत्। (२४०) इतरोऽपि मातृमरणविह्वलो बन्धुवर्गपरिवृतः पितुः पार्श्वं प्रायात्, अपश्यच्च स्वल्पावशेषप्राणवृत्तिं परिवर्त्तमानतारकं तारकराजमिव अस्तम् अभिलषन्तं जनयितारम्। (२४१) असह्यशोकोद्रेकाभिद्रुतश्च त्याजितः पितृस्नेहेन धैर्यम्। (२४२) आश्लिष्य अस्य सकलदुर्मदद्वीपालमौलिमालालालितौ पादपद्मौ,

---

स्वभावादिति भावः। अत्र पौरजनानामाक्रन्दस्य दिगङ्गनासु आरोपात् कथम् अन्य धर्मस्यान्यत्राधानमिति बिम्बप्रतिबिम्बभावतया समाधानात् निदर्शनाऽलङ्कारः इति सङ्क्षेपः।

(२३९) प्रविकसितेति।—प्रकर्षेण विकसितानां—सम्पूर्णप्रस्फुटितानां रक्तपङ्कजानां—रक्तपद्मानां पुञ्ज—राशिः इव, अविच्छिन्नशरीरदानेन अर्चयित्वा रक्तवर्णतया रक्तपङ्कजपुञ्जौपम्यं बोद्धव्यम्। भानुमन्तमिव—सूर्यमिव, [ अत्र भानुमता सह चित्रभानोर्वैधर्म्यसाम्यादनुक्तोपमाऽलङ्कारः ] भानुमन्तं—दीप्तिमन्तं च। ऐन्द्री—इन्दु,—चन्द्रं तत्सम्बन्धिनी अमावस्यायाम् ऐन्द्री कला सूर्यं प्रविशतीति प्रवादः। चित्रभानुम्—अग्निम् ("वह्निर्वैश्वानरो वह्नि । चित्रभानुर्विभावसुः॥" इत्यमरः)।

(२४०) इतर—हर्षः। स्वल्पेति।—स्वल्प,—ईषत् अवशेषो यस्याः तथाभूता प्राणवृत्तिः,—जीवनव्यापारः, निश्वासप्रश्वासवृत्तिर्वा यस्य तथोक्तम्, परिवर्त्तमानतारकम्—परिवर्त्तमाने—ऊर्ध्वं नीयमाने विकृतिं नीयमाने इत्यर्थः, तारके—कनीनिके यस्य तथाभूतम्, परिवर्त्तमानाः—रूपान्तरं नीयमानाः प्रभाविहीना इत्यर्थः, तारकाः—नक्षत्राणि यस्य तथाभूतम् तारकराजमिव—चन्द्रमिव, अस्तम्—नाशम् अस्ताचलं च। जनयितारं—पितरम्।

(२४१) असह्येति।—"असह्य" इत्यादि "चिर रुरोद" इति वक्ष्यमाणेनान्वयः। असह्यस्य—दुःसहस्य, शोकस्य—मन्योः, उद्रेकेण—आवेगेन, अभिद्रुतः—अभिभूत इत्यर्थः पितृस्नेहेन—पितृप्रेम्णा अवधारितपितृमृत्युना इति यावत्, [ क्वचित् "पितृस्नेहेन" इत्यत्र "स्नेहेन" इति पाठान्तरम् ] धैर्यं—धीरत्वं, त्याजितः,—मोचितः त्यक्तधैर्यश्च इत्यर्थः।

(२४२) अस्य—पितुः, पादपद्मौ—चरणकमले, [ "वा पुंसि पद्मं नलिनम्"

रुदितशब्दापूरितश्रवणः प्रत्यभिज्ञाय शनैः शनैः अवादीत्,—"पुत्र! न अर्हसि (२४७) एवं भवितुम्। भवद्विधा न हि अमहासत्त्वाः। महासत्त्वता हि प्रथमम् अवलम्बनं लोकस्य, पश्चात् राजबीजिता। सत्त्ववताञ्च अग्रणीः सर्वातिशयाश्रितः क्व भवान्? क्व वैक्लव्यम्? (२४८) 'कुलप्रदीपोऽसि' इति दिवसकरसदृशतेजसस्ते लघूकरणमिव। 'पुरुषसिंहोऽसि' इति

---

दृष्टि —दर्शनशक्तिः, नेत्रं वा ज्ञानं वा यस्य तथाभूतः, ("दृशिर्ज्ञाने,ऽपि दर्शने" इत्यमरः) जीवमात्रजीवनशक्तिमान् इति भावः। [क्वचित् "अपि" इत्यनेन हीनः पाठः दृश्यते तत्र नार्थलोऽपम् अप्रकाशकारकीयमवगाहनाधाभावात्]। अविरतेति। —अविरतम्—अविच्छिन्नं रुदितशब्दः—रोदनध्वनिः आपूरित—सृष्टः, श्रुतमित्यर्थः, श्रवणं—कर्णं यस्य तथाभूतः प्रत्यभिज्ञाय—पुत्रोऽयं रोदितीति इति श्रुत्वा विज्ञाय इत्यर्थः चिरपरिचितकण्ठस्वरश्रवणादिति भावः।

(२४७) एवम्—अधीर इति भावः। अमहासत्त्वाः,—अमहानुभावाः न हि—नैव, महानुभावसम्पन्ना एवेत्यर्थः महासत्त्वगुणसमन्विता दृढचित्ता वा इति भावः। महासत्त्वता—महानुभावत्वं महासत्त्वगुणसमन्वितत्वं मनस्विता वा इत्यर्थः, प्रथमं—मुख्यम् आद्यं वा अवलम्बनम्—आश्रयः, उदारचेतसां वसुधाकुटुम्बकत्वादिति भावः। राजबीजिता—राजा बीजी—बीजपुरुषः यस्य तस्य भावः राजपुत्रत्वमित्यर्थः, पश्चात्—द्वितीयमवलम्बनमित्यर्थः, ऋद्धिसाधनत्वात् इति भावः केवलेन राजपुत्रत्वेन लोकस्थितिं कर्तुं न शक्यते, तेन तु महानुभावेन सता शक्यते एव इत्याशयः। सत्त्ववतां—सत्त्वगुणसम्पन्नानां मनस्विनां वा ["यतश्च—" (२।३।४१ पा०) इत्यादिना निर्द्धारणे षष्ठी] अग्रणीः,—अग्रगण्यः सर्वेति।—सर्वम् अतिशयः,—अतिरिक्तो गुणगणोऽस्तीत्यर्थः तम् आश्रितः, भवान् क्व? वैक्लव्यम्—व्याकुलत्वञ्च क्व? महासत्त्वेषु भवादृशेषु नैतद्धि सङ्गतिं युज्यते इति भावः। अत्र विरूपघटनारूपः विषमालङ्कारः कदर्थेन महतोऽन्तरस्य सूचनात्।

(२४८) कुलप्रदीपः,—वंशोज्ज्वलकर इत्यर्थः, इति, कथनमिति शेषः, एव-मुक्तरूपं, दिवसकरसदृशतेजसः,—सूर्यसमप्रभावस्य, ते—तव, लघूकरणमिव—तुच्छीकरणमिव दिवसकरसदृशतेजस्त्वात् कुलप्रदीपोऽसि इति उक्तौ तव लाघवं प्रतिभाति, तदर्थे तेषां निष्प्रभत्वं प्रतीयमानत्वात् इति भावः।

(२४९) शौर्यपटुप्रज्ञोपबृंहितपराक्रमस्य निन्देव। 'चितिः इयं तव' इति (२५०) लक्षणाख्यातचक्रवर्तिपदस्य पुनरुक्तम् इव। 'गृह्यतां श्रीः' इति स्वयमेव (२५१) श्रिया गृहीतस्य विपरीतमिव। (२५२) 'अध्यास्यताम् अयं लोकः' इति उभयलोकविजिगीषोः अपुष्कलमिव। (२५३) 'स्वीक्रियतां कोषः' इति अधिकरनिकरनिर्मलयशःसञ्चयैकाभिनिवेशिनो निरुपयोगमिव।

---

(२४९) शौर्येति।—शौर्येण—शूरत्वेन, पराक्रमप्रदर्शनेनेत्यर्थः, पट्वी—निपुणा या प्रज्ञा—बुद्धिः, शौर्यातिशयशालिनी मतिः इत्यर्थः, तया उपबृंहितः—वर्धितः पराक्रमः, विक्रमः, सामर्थ्यं वा यस्य तथाभूतस्य, ते इति शेषः, निन्दा इव—निन्दाकरणमिव, तस्य निर्विवेकपरमार्थत्वात् एतोऽपि अधिकोक्तिः त्वयि सम्भवति इति भावः।

(२५०) लक्षणेति।—लक्षणेन—ध्वजादिचिह्नेन आख्यातं—कथितं, चक्रवर्तिपदं—साम्राज्यं यस्य तथाभूतस्य, ते इति शेषः पुनरुक्तम् इव—लक्षणैरेव प्रागुक्तत्वात् आवर्तितमिव विधात्रैव चक्रवर्तित्वे अभिषिक्तस्य तव तादृशवचनम् अनुवादमात्रत्वात् निरर्थकमिवेति भावः।

(२५१) श्रिया—लक्ष्म्या गृहीतस्य—स्वीकृतस्य, पतित्वेनेति भावः, विपरीतमिव—असङ्गतमिव इत्यर्थः, तया प्राक् स्वयमेव स्वीकृतत्वेन तथावचनम् प्रमत्तविधेयवत् इति भावः।

(२५२) अध्यास्यताम्—अधिष्ठीयताम्, अयं लोकः,—मर्त्यलोकः, राज्यसिंहासनमिति भावः, ["अधिशीङ्—" (१।४।४६ पा०) इत्यादिना आधारस्य कर्मत्वम् उक्तत्वात्] उभयलोकविजिगीषोः,—स्वर्गमर्त्ययोः जयाभिलाषिणः, अपुष्कलमिव—अपूर्णमिव स्वर्गस्यापि सिंहासनोचितस्य केवलमर्त्यसिंहासनारोहणोपदेशस्य सामान्यत्वेनानुचितत्वादिति भावः।

(२५३) स्वीक्रियतां—गृह्यतां, कोषः,—धनागारम्। अधीति।—अधिकः,—प्रचुरः, करनिकरः—मयूखनिवहः, तद्वत् निर्मलानां—स्वच्छानां, धवलानामित्यर्थः, यशसां—कीर्तीनां, सञ्चये—राशौ एकः,—केवलः अभिनिवेशः,—आग्रहः मनोयोगः विद्यते यस्य तथाभूतस्य, ते इति शेषः, निरुपयोगमिव—निष्प्रयोजनमिव, यशस्विनां कोषसञ्चयतया स्वत एव धनागमात्, कीर्तिकामत्वेन धनसङ्ग्रहाद्विरतत्वात् इति भावः।

(२५४) 'आलोकियतां राजकम्' इति गुणगणालोकित-जगतो *गतार्थमिव*। (२५५) 'उह्यतां राज्यभारः' इति भुवनत्रयभारोचितस्य अनुचितनियोग इव। 'प्रजाः परिरक्ष्यन्ताम्' इति (२५६) दीर्घदोर्दण्डार्गलितदिङ्मुखस्य अनुवाद इव। 'परिजनः परिपाल्यताम्' इति लोकपालोदयस्य (२५७) आनुपदिकमिव। 'शस्त्राभ्यासः कार्यः' इति (२५८) धनुर्गुणकिणकलङ्ककालीकृतप्रकोष्ठस्य किम् आदिश्यते? (२५९) 'निगृह्यतां चापलम्' इति नूतनतरवयसि

---

(२५४) आलोकियताम्—अवलोक्यताम्, राजकम्—राजसमूहः, अकारणे [illegible] भाव। गुणेति।—गुणानां—दयादाक्षिण्यादीनां, गणे,—समूहे, आलोकितम्—अवलोकितम्, जगत्—लोक [illegible] तथाभूतस्य तस्य इति शेषः, गतार्थमिव—व्यर्थमिव, राजकालोकनाय [illegible]इति भाव।

(२५५) उह्यताम्—[illegible], [illegible]। भुवनत्रयभारोचितस्य—त्रिभुवनभारवहन[illegible], अनुचितनियोग इव,—अयुक्तादेश इव, महाभारवहना-चितस्य अल्पभारवहनादेशे न्यूनत्वप्रतिपादनादिति भाव।

(२५६) दीर्घेति।—दीर्घेण—आयतेन दोर्दण्डेन—भुजदण्डेन, अर्गलितम्—निरुद्धमिति यावत्, दिङ्मुखम्—दिगन्तरालं येन तथोक्तस्य, तस्य इति शेषः, अनुवाद इव—भाषानुकरणमिव, [illegible] व्यक्ते-र्भावादिति भाव।

(२५७) आनुपदिकमिव—अनुपदादागतमिव, ["उगवादिभ्यो" (४।४।७५ पा०) इति ठञ्] [illegible] उपदेश इव [illegible] [illegible] सिद्धत्वादिति भाव।

(२५८) धनुर्गुणेति।—धनुषः—चापस्य, गुणाः,—मौर्व्यः, ते, तदाकर्षण-[illegible] किणः,—चर्मादिग्रन्थिः स एव कलङ्कः,—चिह्नं,तेन कालीकृतः,—श्यामीकृतः, प्रकोष्ठः—कफोणिमणिबन्धयोः अन्तरभागः यस्य तथाभूतस्य, आदिश्यते—आज्ञायते निष्प्रयोजनादेश इत्यर्थः, [illegible] एव तत्कार्यकरणेन तदुपदेशस्य वैयर्थ्यापातादिति भाव।

(२५९) निगृह्यताम्—निवार्यताम्, परित्यज्यतामित्यर्थः, चापलम्—चाञ्चल्यम्।

निरुद्धेतेन्द्रियस्य निरवकाशा इव मे वाणी। (२६०) 'निरवग्रहतां यान्तो नेयाः' इति सहजस्य तेजस एव इयं चिन्ता" इत्येवं वदन्नेव (२६१) अपुनरुन्मीलनाय निमिमील राजकुलसिंहो लोचने।

अस्मिन्नेवान्तरे (२६२) पूषा अपि आयुषा इव तेजसा व्ययुज्यत। ततश्च लज्जमान इव (२६३) नरपतिजीवितापहरणजनितात् आत्मापराधात् अधोमुखः समभवत्।

नूतनतरवयसि—नूतनतरम्—अतिशयेन नूतनं, वयः,—बाल्याद्यवस्थाविशेषः यस्य तादृशि, नवयौवने इत्यर्थः, निरुद्धेतेन्द्रियस्य—संयतेन्द्रियस्य, निरवकाशा इव—अनवसरा इव, नवयौवने स्वधर्मानुपदिष्ट एव इन्द्रियनिग्रहकरणादिति भावः।

(२६०) निरवग्रहता—निर्बन्धताम्, [अत्र नयतेः द्विकर्मकत्वात् कर्मणि निरवग्रहतायाः अप्रधानत्वात् तत्र द्वितीया, अन्यत्र मुख्यत्वात् प्रथमा, इह प्रभुषु निरवग्रहता न नीयते, परन्तु निरवग्रहतायामेव प्रभवः नीयन्ते इति वक्तुरभिप्रायः, तेनैतेषां मुख्यत्वं ज्ञेयम्] नेयाः,—प्रापणीयाः। सहजस्य—स्वाभाविकस्य, तेजसः,—प्रतापादिगुणस्य चिन्ता—भावना, तेजस्विनां स्वातन्त्र्याभिलाषस्य प्रकृतिसिद्धत्वात् तदुपदेशः निरर्थक इति भावः।

(२६१) अपुनरुन्मीलनाय—पुनरुन्मीलननिवृत्त्यै चिराय इत्यर्थः, निमिमील—निमीलितवान् मुद्रिते अकार्षीदित्यर्थः। राजकुलसिंहः—नृपश्रेष्ठ इत्यर्थः, प्रभाकरवर्धन इति यावत्, ["राजकुलसिंह" इत्यत्र "राजसिंह" इति पाठान्तरम्]।

(२६२) पूषा अपि—सूर्यः अपि अत्रोपलक्षितप्रभाकरवर्धनवत् अस्तं गतः, सूर्योऽपीत्यर्थः, [अत्र अपिशब्दः समुच्चयार्थकः] आयुषेव—राज्ञः प्राणधारणकालेनेव, तेजसा—स्वप्रभावसमूहेन किरणकलापेनापि आयुःस्वरूपेणेति भावः। व्ययुज्यत—अहीयत एकत्र अपराह्णभावात् अन्यत्र च जीवनपरित्यागात् निस्तेजा अभूदिति भावः।

(२६३) नरपतिरिति।—नरपतेः,—राज्ञः, जीवितस्य जीवनस्य अपहरणं—मोषणं, तेन जनितः—उत्पन्नः तस्मात् आत्मापराधात्—निजकृतात् दोषात्, स्वनाम्नैव यतोऽनेन तत्कृतत्वात् निजापराधतुल्यत्वं मन्तव्यम् "आत्मा वै जायते पुत्र" इति श्रुतेः, यद्वा,—स्वाधिकारसमये एतदपहरणात् स्वयं रक्षितुमशक्ततया अन्यकृतमपि स्वकृतमेव मत्वा स्वापराधं स्वीकृत्य इति विभाव्यम्, अधोमुखः,—अवनतवदनः, पश्चाद्गमनोन्मुख इत्यर्थः।

(२६४) भूपालाभावशोकशिखिना इव अन्तस्ताप्यमानः ताम्रतां प्रपेदे। मन्दं मन्दम् (२६५) अप्रियप्रश्नोत्तरपरिहारार्थमिव स्थितिमनुवर्त्तमानो लौकिकीम् अवातरदिव। (२६६) दित्सुरिव जनेशाय जलाञ्जलिम् अपरजलनिधिसमीपमुपससर्प। (२६७) सद्योदत्तजलाञ्जलिः दुःखदहनदग्धमिव क्षारसलिलम् आलोहितम् अधत्त।

(२६४) भूपालेति।—भूपालस्य—राज्ञ, स्तुतिश्रोतुरभावात् सान्ध्यसेवकस्य च इति भाव, अभावेन—निधनेन, य शोक —मन्यु, स एव शिखी—वह्नि तेन, अन्त,—अभ्यन्तरे, ताप्यमान,—दाह्यमान ताम्रतां—रक्तवर्णतां प्रपेदे—लेभे।

(२६५) अप्रियेति।—अप्रियप्रश्नस्य—राजविनाशकथाया अप्रीतिकरजिज्ञासाया इत्यर्थ, उत्तरपरिहारार्थमिव—कथं राजा मृत ? केन रोगेण वा ? इत्या दिजिज्ञासाया उत्तरपरिजिहीर्षया इव, स्वदोषापाकरणाय किमितस्य कारणमिति तु प्राक् तत्त्वत विहित्वा पुङ्खानुपुङ्ख दक्षगणसमीपे उत्तरदानायमिव इति वा, ["अप्रियप्रश्नोत्तरपरिहारार्थमिव" इत्यत्र "अप्रियप्रश्नार्थमिव" इति पाठे,—अप्रीतिकरजिज्ञासानिमित्तमिव कथं राजा मृत ? इति ज्ञातुमिच्छयैवेति भाव। एतदुपेक्षयं तु पूर्व्वतन मार्गमेव परिकल्पयेत् अन्यथावलोकिना साधियाम् अन्यतो जिज्ञासाऽनुपपत्त इति ध्येयम्] लौकिकी—लोकसम्बन्धिनीं स्थिति—मर्य्यादां, व्यवहारमिति यावत्, अनुवर्त्तमान,—अनुसरन्, यथा आत्मपरिजनेन आत्मना वा निहत कमपि दृष्ट्वा कश्चित् जनसमीपे तद्विशेषविवरणगोपनेच्छया तस्मात् अपसरन्, तथा सूर्य्योऽपीति भाव, ["अप्रियप्रश्नार्थमिव" इति पक्षे तु —यथा आत्मीयलोका कस्यापि विनाशमुपश्रुत्य तद्बन्धुसमीपे तद्विशेषप्रश्नायमायच्छन्ति, तद्वदिति भाव] इव,—अन्तरीक्षात्, पश्चात्तापात इति भवति, लोकलोचनसमीपादिति भाव, अवातरत्—अवारोहत्।

(२६६) जनेशाय—नरपतये प्रभाकरवर्द्धनाय, जलाञ्जलि—तर्पणजलपूर्णमञ्जलि, दित्सु,—दातुमिच्छु, ["सनाशंसभिक्ष उ" (३।२।१६८ पा०) इति सन्नन्तात् उ प्रत्यय] अपरजलनिधिसमीपं—पश्चिमसागरान्तिकम्, उपससर्प—उपजगाम। राज्यवर्द्धनहर्षयो आत्मात्मसम्भूतत्वेन तद्बन्धुत्वापेक्षितजलाञ्जलियोगवत्त्वान्वितत्वम् इव अतिरश्नम्।

(२६७) सद्य इति।—सद्य,—तत्क्षणं, दत्त,—अर्पित, जलाञ्जलि,—युक्त-

(२६८) एवञ्च महानराधिपनिधननिधीयमानविपुलवैराग्ये इव शान्तवपुषि विशति गिरिगुहागह्वरं गभस्तिमालिनि, (२६९) समुपोह्यमानमहाजनाश्रुदुर्दिनार्द्रीकृते इव निर्वाति आतपे, (२७०) रोदनताम्रसकललोकलोचनरुचा इव लोहितायति जगति, (२७१) उष्णायमानानेकनरनिश्वाससन्तापपुष्टे इव च नीलायमाने दिवसे, (२७२) नृपानुगमनप्रचलितया

---

कर्पूरजलम् इत्यर्थः. तेन तथाभूत, करसहस्र—कराणां—किरणानां, सहस्राणां, सहस्र—दशशतसङ्ख्यक, बहुसङ्ख्यकं वा, आलोहितम्—आरक्तम्, अधरत—दधार, धारयामास इत्यर्थः ।

(२६८) "एवञ्च" इत्यस्य "नरेन्द्र पुत्रागमसन्निवेश्यया यम प्रियतामनीयत" इत्युत्तरेणान्वयः । महेति ।—महानराधिपस्य—महाराजस्य, निधनेन—मरणेन, निधीयमान—जन्यमान, विपुल—महत्, वैराग्य—संसारेषु वीतस्पृहत्वमित्यर्थः यस्य तथाभूते इव, शान्तवपुषि—सौम्यकलेवरे, निस्तेजसोऽपि भाव, गभस्तिमालिनि—अंशुमालिनि, सूर्य इत्यर्थ, गिरिगुहागह्वर—गिरेः—पर्वतस्य, गुहा—विवरम् एव, गह्वर—विवरम्, एतेन सौरवाराणसी सूच्यते ।

(२६९) समुपोह्यमानेति ।—समुपोह्यमाने,—सङ्कुच्यमाने, शरीरेषु पतनात् धार्यमाणैरिति भाव, वर्धमानैरित्यर्थो वा, महाजनाना—साधुजनानाम्, अश्रुदुर्दिने,—अविरलधारानेत्रवारिवर्षणे, आर्द्रीकृते ▆—आर्द्रता गौते इव, आतपे—सूर्यालोके, निर्वाति—निर्वाणं गच्छति ।

(२७०) रोदनेति ।—रोदनेन—क्रन्दनेन ताम्राणि—आरक्तानि, सकलाना—सर्वेषां, लोकाना—जनानां, यानि लोचनानि—नेत्राणि, तेषां रुक्—प्रभा तया इव, लोहितायति—अलोहित लोहितं भवति, ["लोहितादिडाज्भ्यः क्यष्" (३।१।१३ पा०) इति क्यषि "वा क्यष" (१।३।९० पा०) इति पाक्षिकपरस्मैपदित्वात् शतृप्रत्ययः ] ।

(२७१) उष्णेति ।—उष्णायमाने,—उष्णा इव आचरद्भि, अनेकेषां—बहूनां, नराणां—जनानां, निश्वासैः,—नासानिलैः, य सन्ताप,—सम्यक् तपन, तेन पुष्टे इव—दग्धे इव, नीलायमाने—कृष्णायमाने, नैशान्धकारागमनादिति भाव ।

(२७२) नृपेति ।—नृपस्य—राज्ञ, अनुगमन—पश्चात् प्रयाणं, सहगमनमिति

इव लक्ष्म्या मुच्यमानासु कमलिनीषु, (२७३) पतिमृत्या इव परिहृतच्छायायां श्यामायमानायां भुवि, कुलपुत्रेषु इव परित्यक्तनिजकलत्रेषु कृतकरुणप्रलापेषु वनान्तान् आश्रयत्सु दुःखितेषु चक्रवाकेषु, (२७४) छत्रभङ्गभीतेषु इव निगूढकोषेषु कुशेशयेषु, स्फुटितदिग्वधूहृदयरुधिरप्लवे इव गलिते रक्तातपे,

---

भाव तस्यै प्रचालता—प्र स्थता तया इव लक्ष्म्या—श्रिया, राजमरणात भाव, मुच्यमानासु—विहीयमानासु कम लनीषु—पद्मिनीषु मुदितकमलिनीषु इति भाव ।

(२७३) पतिमृत्या इव—भर्तृमरणशोकेन इव, परिहृतच्छायायाम्—परिहृता—विपरीता, छाया—आतपप्रतपच्छायात कान्तिश्च यस्याः तथाभूतायां श्यामाय मानायाम्—श्यामा—त्रियामा रात्रिरिति यावत अप्रभूताङ्गना च कान्तिरहिता इति भाव तद्वदाचरन्त्यां म्लानतामापद्यमानायामित्यर्थ ("श्यामी वटे प्रयागस्थ । स्त्री शारिवौषधौ । अप्रसूताङ्गनायाञ्च प्रियङ्गावपि वागुजौ । यमुनायां त्रियामायाम्" इति मेदिनी) भुवि—पृथिव्याम् । [इदमावश्यकङ्गागतत्वात अन्ध सुमापन्ना उपमाया अङ्गम ]। कुलपुत्रेषु इव—सत्कुलजातेषु इव परित्यक्तेति । —परित्यक्तानि—विसृष्टानि राजमरणदुःखात विधानयोगात इति भाव निज कलत्राणि—निजाम्बरा ये तथोक्तेषु ["परित्यक्तनिजकलत्रेषु" इत्यत्र "परित्यक्त कलत्रेषु" इति पाठ पुस्तकान्तरसम्मत ]। कृतकरुणप्रलापेषु—करुण विलपत्सु इत्यर्थ, वनान्तान—अरण्यान्तराणि, आश्रयत्सु ("वन प्रस्रवणे नीरे निवासा लयकानने" इति मादनी) रात्रौ तैषां वियुक्तभावेन जलाशयतीरे अवस्थानस्य प्रकार्तितत्वादिति भाव ।

(२७४) छत्रेति ।—छत्रभङ्ग—राजविनाश, राजविनाशज उपद्रव इति यावत ("छत्रभङ्गोऽपि वैधव्ये स्वातन्त्र्ये नृपनाशयो" इति मादनी) छत्राकारपत्र सङ्कोचश्च तस्मात भीतेषु—त्रस्तेषु इव निगूढेति ।—निगूढ—गोपित सम्पुटितश्च, कोष —धनसञ्चय कर्णिका च बीजकोष इत्यर्थ ये तथोक्तेषु कुशेशयेषु—कमलेषु ["शयवास—" (६।३।१८ पा०) इत्यादिना सप्तम्या अलुक । "सहस्रपत्र कमल शतपत्र कुशेशयम्" इत्यमर ]। स्फुटितेति ।—स्फुटितानि—पतिशोकात विदीर्णानि, दिशो वध्व इव तासां यानि हृदयानि—वक्षांसि तेषां रुधिरप्लवे इव—रक्तप्रवाहे इव, गलिते—निःसृते, रक्तातपे—अस्तकालिकारक्तसौराधाले ।

क्रमेण च (२७५) लोकान्तरम् उपगतवति अनुरागमयेऽपि जाते तेजसाम् अधीशे, गगनतलवितन्यमानबहलरागपाटलायां प्रेतपताकायाम् इव प्रवृत्तायां सन्ध्यायां, (२७६) शव-शिविकाऽलङ्कारकृष्णचामरमालासु इव स्फुरन्तीषु दर्शनप्रति-कूलासु तिमिरलेखासु, (२७७) असितागुरुकालकाष्ठाया कैनापि चितायाम् इव रचितायां रजन्यां, (२७८) दन्तामल-पत्रप्रसाधितकर्णिकासु केशरमालाकलितमुण्डमालिकासु

---

(२७५) लोकान्तरम्—अस्ताचलं, परलोकञ्च, उपगतवति—प्राप्तवति, अनुरागमये—रक्तवर्णमात्राविशिष्टे, लोकानुरागमात्रावशिष्टे च, जाते—भूते, तेजसाम् अधीशे—सूर्ये, राज्ञि च। गगनेति। गगनतलम्—आकाशमण्डलं, वितन्यमानेन—, विस्तीर्यमाणेन, बहलेन—प्रभूतेन, रागेण—लौहित्येन पाटला—श्वेतरक्ता तथा, प्रेतपताकायाम् इव—मृतदेहसम्बन्धिरक्तध्वजे इव, प्रेतस्य दाहार्थं श्मशानभूमिनयनसमये तदानीं पताकादिभिः शोभाऽऽस्याः आकाशेऽनुमीयते, तेन तद्गुणलक्षणा पताका दृश्यते इति विभाव्यम्, यद्वा,—प्रेतस्य पत राज्ञो लोकान् अन्ते एव निष्पतिता सद्यो लोकान्तरगतस्य शोकप्रकाशनाय इति बोद्धव्यम्। प्रवृत्तायाम्—उपस्थितायाम्।

(२७६) शवेति।—शवस्य—मृतस्य, शिविका—यानविशेषः तस्याः अलङ्कार,—आभरणभूताः कृष्णा,—कृष्णवर्णा, चामरमाला,—वालव्यजनपङ्क्तयः तासु इव, स्फुरन्तीषु—दीप्यमानासु। दर्शनप्रतिकूलासु—दृष्टिरोधकासु, अन्धकार,—भीतिप्रदासु, तिमिरलेखासु—अन्धकारश्रेणिषु।

(२७७) असितेति।—असितानि—कृष्णानि, अगुरूणि—सुगन्धिकाष्ठविशेषा इव, कालानि—कृष्णवर्णानि, काष्ठानि—दारूणि, इन्धनानि इत्यर्थः, काला—कृष्णवर्णा, अन्धकारमयीति भावः, काष्ठा,—दिक्च दशा यस्याः सा तथा भूतायाः, ("काष्ठा दारुहरिद्रायां। दिशि च स्त्री दारुणि स्यान्नपुंसकम्" इति मेदिनी) चितायां—शवदाहार्थकाष्ठपुञ्जस्येव, पारदृश्यमानायामिति शेषः।

(२७८) दन्तेति।—दन्तस्य—गजदन्तस्य इव अमल—शुभ्र, पत्र—दलम्, अथवा—दन्तस्य—गजदन्तस्य, अमलं पत्र—गजदन्तनिर्मितस्वच्छपत्रमित्यर्थः, तेन प्रसाधिता,—अलङ्कृता, शोभिता इति यावत् कर्णिका,—बीजकोषा, कर्णभूषणानि च यासां तासु। ("कर्णिका करिहस्ताग्रे। पद्मवराटे कर्णभूषणे"

पूर्वस्यां दिशि हृष्यसाने चन्द्रमसि, नरेन्द्रः स्वयं समर्पितस्कन्धैः गृहीत्वा शवशिबिकां शिबिसमः सामन्तैः पौरैश्च पुरोहितपुरःसरे सरितं सरस्वतीं नीत्वा नरपतिसमुचितायां चितायां हुताशनसत्क्रियया यशःशेषताम् अनीयत।

देवोऽपि हर्षः (२८२) पुञ्जीभूतेन सकलेनैव जीवलोकेन लोकेन राजकुलमङ्गलेनाशेषेण शोकमूकेन परिजनेन च परिहृत, अन्तर्वर्तिनाऽपि पितृशोकानलतप्तेन स्वेदद्रवेण बहिरिव सिच्यमानः, निर्व्यञ्जनायां धरण्याम् उपविष्ट एव तां निशी

मस्ती] नरेन्द्र—प्रभाकरवर्द्धनः [छन्नं कथंचित् प्रवसत्] स्वयं समर्पितस्कन्धैः, —राज्ञि भृत्यभावात् स्वस्कन्धे दत्तस्कन्धैः। शवशिबिका—शवयानीमर्थं। शिबिसम—शिबिनामनृपतिविशेष सदृश अर्थिसार्थप्रार्थितार्थपूरणलक्षयोगात् इति भावः। सामन्तैः—अधीश्वरैः। पुरोहितपुरःसरे—पुरोहित—पुरोधा, पुरःसर—अग्रगामी औडदैहिककृत्यसम्पादनाय इति भावः यैषां तैः। सरितं सरस्वतीं—सरस्वतीनदीतीरमित्यर्थः। नरपतिसमुचितायां—राजयोग्यायां चन्दनकाष्ठादिचितायामिति भावः। हुताशनसत्क्रियया—अग्निसंस्कारेण, ['हुताशन सत्क्रियया' इत्यत्र "हुताशसत्क्रियया" इति पाठोऽपि स एवार्थः] यशःशेषता—कीर्तिमात्रावशेषतां भस्मीभूततामिति भावः [नयतेः द्विकर्मकत्वेन कर्मणि गौणत्वादत्र द्वितीया ज्ञेया] अनीयत—प्रापित इत्यर्थः, दग्धदेहः कृत इति भावः।

(२८२) पुञ्जीभूतेन—एकत्र समवेतेन सकलेन—अखिलेन जीवलोकेनेव—भुवनवासिप्राणिनेव, लोकेन—प्रजाजनेनेति यावत्, राजकुलमङ्गलेन—राजवंश मङ्गलेन अशेषेण—समस्तेन शोकमूकेन—शोकाभिभवेन स्तब्धं, परिजनेन—परिवारवर्गेण [क्वचित् "परिजनेन च" इति पाठो न दृश्यते। तत्र "लोकेन" इत्य विशेषणमस्य, राजकुलमङ्गलेन परिजनेन इति भावः] अन्तर्वर्तिना—अन्तःस्थितेन। ["पितृशोकानलतप्तेन" इत्यत्र "शोकानलतप्तेन" इति पितृपदाभावयुक्त पाठः पुस्तकान्तरे विद्यते] स्वेदद्रवेण—स्वेदरसेन, पितृभक्त्या इति भावः, सिच्यमानः—आर्द्रीक्रियमाणः, पितृशोकेन अतीवाकुलः इति भावः उत्प्रेक्ष्यते यथा अन्तस्तापः स्वभावतः स्वेद सन् प्रवहतीति आधारधर्ममतिदृश्य तद्बहिरवयवानपि सिक्तीकरोति, तथा सोऽपि महाराजस्यापत्यश्लिष्टया अन्तर्वर्तिना अपि पितृ-

थिनीं भीमरथीभीमाम् अखिलां सराजकां जजागार; अजनि च अस्य चेतसि,—"तातें (२८३) दूरीभूते अनाथीभूतः सम्प्रति एतावान् खलु जीवलोकः। तथा हि लोकस्य भग्नाः प्रस्थानः, मनोरथानां खिलीभूतानि भूरिस्थानानि, स्थगितानि आनन्दस्य द्वाराणि, सुप्ता सत्यवादिता, लुप्ता लोकयात्रा, (२८४) विलीना बाहुशालिता, प्रलीना प्रियालापिता,

---

भक्ता उच्छ्वसिततया बहि प्रकटितया अतीव विगलितहृदय अभवदित्याशय। निर्व्यंवधानाया—निरासभायामिति यावत। निशीथिनी—रजनीम् [अत्र व्याप्त्यर्थे द्वितीया]। भीमरथीभीमा—भीमरथी—नरकनदी कालरात्रि वा, तद्वत भीमा—भयङ्करी ताम, केचित्तु—"सप्तसप्ततिमे वर्षे सप्तमे मासि सप्तमी। रात्रिर्भीमरथी नाम नराणामतिदुस्तरा॥" इत्युक्ता सप्तसप्तत्यां वर्षेषु सप्तसप्ततिमासेषु दिनेषु च षट्सु गतेषु एका सप्तमी रात्रिर्भवति सप्तसप्ततितमे वर्षे सप्तमे मासि सप्तमी रजनी एव सा वेदितव्या सा भीमरथीत्युच्यते तामतिक्रान्तो वर्षशतजीवी नरो भवति इति कथ्यते। अखिला—सर्वाम। सराजक,—राजसमूहै परिवृत।

(२८३) दूरीभूत—परलोक गते सति, सम्प्रति—अधुना, एतावान खलु—एतत्पर्यन्त एव सुनिश्चित इत्यर्थ, जीवलोक,—संसार, अनाथीभूत,—प्रभुशून्य, ["अनाथीभूत" इति पाठ पुस्तकान्तरे न दृश्यते] इत एव संसारसुखस्य अपगमा-द्लोकानामिति भाव। ["तथा हि" इति पाठ पुस्तकान्तरे नास्ति]। लोकस्य—जगत, भुवनस्येति यावत, ("लोकस्तु भुवने जने" इत्यमर) प्रस्थान,—स्थिति-मार्गा, मर्यादा इत्यर्थ, भग्ना —विपर्यस्ता। मनोरथानाम्—अभिलाषाणा, भूरि-स्थानानि—प्रभूता विषया ["भूरिस्थानानि" इत्यत्र "भूतस्थानानि" इति पाठ—सर्वादिविषया, उच्चाभिलाषा इत्यर्थ] खिलीभूतानि—शुष्कीभूतानि शून्यीभूतानि इति यावत् प्रार्थनाभावपूरकाभावात शून्यानि इति भाव ("खिलस्तमप्रहत क्षेत्र मार्गाद्यन्तर वेधसो" इति मेदिनी)। आनन्दस्य—प्रमोदस्य, द्वाराणि—कपाटानि इति यावत, स्थगितानि—निरुद्धानि इति यावत। सत्यवादिता—सत्यभाषणशीलता सुप्ता—निद्रिता। लोकयात्रा—संसारयापन, मुक्ति संसारस्थिति इति यावत लुप्ता—विनष्टा।

(२८४) बाहुशालिता—बाहुवीर्यवत्ता इति भाव, विलीना—विलय गता। प्रियालापिता—मधुरभाषित्व, प्रलीना—विनष्टा।

(२८५) प्रोषिताः पुरुषकारविहारविकाराः, समाप्ता समरशौण्डता, (२८६) ध्वस्ता परगुणप्रीतिः, विश्रान्ता विश्वासभूमयः, अपदानि अवदानानि, निरुपयोगानि शास्त्राणि, (२८७) निरवलम्बना विक्रमैकरसता, कथाऽवशेषा विशेषज्ञता, (२८८) ददातु जनो जलाञ्जलिम् और्जित्याय, प्रतिपद्यतां प्रव्रज्या प्रजापालता, (२८९) बध्नातु वैधव्यवेणीं वरमनुष्यता, समाश्रयतु राजश्रीः आश्रमपदं,

---

(२८५) पुरुषेति।—पुरुषकारस्य—पौरुषस्य, विहारः—विलसितं, तस्य विकाराः,—विविधरूपता इत्यर्थः, प्रोषिताः,—दूरं गता इति भावः। समरशौण्डता—रणमत्तता, आहवदक्षता वा, सङ्ग्रामे वीरत्वप्रकटनमित्यर्थः, समाप्ता—समाप्तिं गता।

(२८६) परगुणप्रीतिः,—अन्योत्कर्षाभिनन्दनमिति यावत्, ध्वस्ता—नाशं गता। विश्वासभूमयः,—प्रत्ययस्थानानि, विश्रान्ताः,—विश्रान्तिं गताः। अवदानानि—इतकर्माणि अनुष्ठितानि यशस्कराणि कर्माणि इत्यर्थः, [ "अवदानं कर्म वृत्तम्" इत्यमरः। "अवदानानि" इत्यत्र "अपदानानि" इति पाठेऽपि स एवार्थः। [illegible] अवदानानामप्यक्रमत्वाच्चलन इत्यनुप्रास इति ज्ञेयम् ] अपदानि—निराश्रयाणि। शास्त्राणि—आगमाः, हितानुशासनग्रन्था इति यावत्, [ शास्तीति 'सर्वधातुभ्य ष्ट्रन्' ( उ० ४ पा० १५८ सू० ) इति ष्ट्रनि रूपम् ] निरुपयोगानि—निष्प्रयोजनानि नैतमसेतुपालकाभावेन शास्त्रविहितकर्माकरणादिति भावः।

(२८७) विक्रमेति।—विक्रमे—शौर्यप्रदर्शने एव, एकः,—मुख्यः, रसः,—रागो येषां तेषां भावः तत्ता, यद्वा—विक्रमः,—शौर्यमेव, एकः रसः तस्य भावः तत्ता, निरवलम्बना—निराश्रया। विशेषज्ञता—विशिष्टं ज्ञानं, कथाऽवशेषा—कथामात्रशेषा, विनष्टा इत्यर्थः। इह "भग्ना प्रथाना" इत्यारभ्य एतदवधि असम्बन्धं सम्बन्धरूपातिशयोक्तिः, मार्गविपर्यासादीनाम् असम्बन्धाना सम्बन्धप्रतिपादनात् इति दिक्।

(२८८) जन,—लोकः, और्जित्याय—ऊर्जितस्य—बलान्वितस्य भावः और्जित्यं तस्मै तेजस्वितार्थं इत्यर्थः [ ऊर्जयते चौरादिकस्य निष्ठायां भाव ष्यञि रूपम् ] जलाञ्जलिं—तर्पणाञ्जलिम्, ददातु, और्जित्यं दत्तमिति भावः। प्रजापालता—प्रजापालनक्षमा, प्रव्रज्या—उत्क्रान्तधर्मं, प्रतिपद्यताम्—आश्रयतु, स्वाश्रयाभावादिति भावः।

(२८९) वरमनुष्यता—मनुष्यश्रेष्ठता, वैधव्यवेणीं—विधवाधार्यं वर्णोदस्

(२८०) परिधत्तां धवले वाससी वसुमती, वहतु वल्कले विलासिता, तपस्यतु तपोवनेषु तेजस्विता, (२८१) प्राव्रणोतु चीवरे वीरता, (२८२) क्व गम्यतां पुनस्तस्य कृते कृतज्ञतया? क्व पुनः प्राप्स्यति तादृशान् महापुरुषनिर्माणपरमाणून् परमेष्ठी? शून्याः संवृत्ता दश दिशो गुणानां, जगत् जातम् अन्धकारं धर्मस्य, निष्फलम् अधुना जन्म शस्त्रोपजीविनाम्। तातेन विना (२८३) कुतस्त्या दिवसम् अममसमर-

मित्यर्थं, व्रजतु—गच्छतु। राजश्री,—राजलक्ष्मी, आश्रमपदं—तपोवनमित्यर्थ, समाश्रयतु—गच्छतु।

(२८०) वसुमती—पृथ्वी धवले—शुभ्रे, न तु रक्ते इति भाव, वाससी—वसने, परिधत्ता—धारयतु, वैधव्यादिति भाव। विलासिता—विलसनशीलता, वल्कले—तरुत्वची, वहतु—धारयतु, तपस्या करोतु इति भाव। तेजस्विता—प्रतापशालित्व, तपोवनेषु—आश्रमेषु तपस्यतु—तपश्चरतु।

(२८१) वीरता—वीरधर्म, चीवरे—वस्त्रखण्डे, कौपीन तदुचितमुत्तरीयञ्च इति भाव, प्राव्रणोतु—आच्छादयतु परिदधातु इत्यर्थ।

(२८२) कृतज्ञतया—कृतोपकारवेदितया, तस्य—देवस्य, पितुरिति भाव, कृते—निमित्त, तन्मरणादेव कारणादित्यर्थं, पुन क्व गम्यताम्?—न कुत्रापि इति भाव, जगति स एक एव कृतज्ञ आसीत भवस्यदर्शाने कृतज्ञता निराश्रया जाता इति तात्पर्य्यम्। परमेष्ठी—विधाता तादृशान्—तथाभूतान् मद्धेति।—महापुरुषनिर्माणस्य—नरश्रेष्ठरचनाया, परमाणून्—कारणभूताना क्षित्यादीना चतुर्णाम् आरम्भकान् अतिमात्रसूक्ष्मान् भूताद्यविशेषान इत्यर्थ, क्व—कुत्र, पुन प्राप्स्यति?—न कुत्रापि इति भाव, तादृशमहापुरुष पुनर्नोत्पत्स्यते इति निष्कर्ष। गुणाना—दयादाक्षिण्यादीना, दश दिश शून्या—रिक्ता, संवृत्ता,—जाता। धर्मस्य—सुकृतस्य, जगत्—लोक, अन्धकार—तमोमयमिति यावत, जात—भूतम्। अधुना शस्त्रोपजीविना—शस्त्रव्यवसायिना, जन्म—उत्पत्ति, निष्फल—निरर्थक, तत्रिकष-रूपस्य सज्जनस्य अभावत्वेन तद्गुणपरीक्षाया अयोग्यत्वादिति भाव।

(२८३) कुतस्त्याः—कुत आगता, न कुतोऽपि आगमिष्यन्तीति यावत, न पुन भविष्यन्तीति भावः। ["अव्ययात्त्यप्" (४।२।१०४ पा०) इत्यत्र "अमेहक्व-

रससमारब्धकलहकथाकण्टकितसुभटकपोलभित्तयो वीरगोष्ठ्यः? अपि नाम स्वप्नेऽपि दृश्येत दीर्घरक्तनयनं पुनः तन्मुखसरोजम्? जन्मान्तरेऽपि पुनः (२८४) परिष्वज्येत तल्लोहस्तम्भाभ्यधिकगरिमगर्भं भुजयुगलम्? लोकान्तरेऽपि (२८५) पुत्र! पुत्र! इति आलपतः श्रूयेत सा सुधारसमुद्गिरन्ती मथ्यमानक्षीरसागरोद्गारगम्भीरा भारती?" इति। एतानि च अन्यानि च चिन्तयत एव अस्य कथमपि सा चयम् इयाय यामिनी।

---

तदिवसेष्वेव" (पा०) इत्यन्वयेन तदर्थोऽवगन्तव्यः] दिवस—समस्त दिन भर पहेल ["कालाध्वनोरत्यन्तसंयोगे" (२।३।५ पा०) इति सूत्रेण द्वितीया] असमेति।—असमेन—अतुल्येन अनुपमेनेत्यर्थः, समररसेन—युद्धानुरागेण, समारब्धा—उपक्रान्ता, या कलहकथा—विग्रहवार्त्ता, युद्धविषयवार्त्तालाप इति भावः, तया कण्टकिता,—हर्षितलोमानः, सुभटानां—योद्धृणां, कपोलभित्तयः,—गण्डतटाः यासु ताः, वीरगोष्ठ्यः,—वीरसभाः। इह सम्प्रति कथं ता अवलोकयिष्यामि इत्यनुभावः। अपि—प्रश्ने। नाम—सम्भावनायाम्। दीर्घेति।—दीर्घे—आयते, रक्ते—रक्तवर्णे, नयने—लोचने यत्र तादृशम्।

(२८४) परिष्वज्येत—आलिङ्ग्येत। तदिति।—तस्य—पितुः, लौहस्तम्भात्—आयसस्थूणात्, अभ्यधिकः,—अतिरिक्तः, गरिमा—गौरवं, गर्भे—अभ्यन्तरे यस्य तथाभूतं, भुजयुगलं—बाहुद्वयम्।

(२८५) ["पुत्र! पुत्र!" इत्यत्र "पुत्र!" इति पाठः पुस्तकान्तरे दृश्यते, तदानन्वितस्यातिरिक्ततार्थत्वाभावान्न तथाऽर्थसौष्ठवम् इति ध्येयम्] आलपतः,—आभाषमाणस्य, सुधारसम्—अमृतद्रवम्, उद्गिरन्ती—वर्षन्ती, मथ्यमानेति।—मथ्यमानस्य—विलोड्यमानस्य, क्षीरसागरस्य—क्षीरोदस्य, उद्गारवत्—निनादवत् इति यावत् [इहोद्गारशब्दस्य गौणार्थावलम्बनेन जुगुप्साव्यञ्जकत्वाभावात् अश्लीलत्वदोषस्य शङ्का न कार्येति] गम्भीरा—गभीरा, भारती—वाणी। अस्य—हर्षस्य, [अनादरे षष्ठी] हर्षमनादृत्येत्यर्थः, चयम्—अवमिलयं, इयाय—जगाम, अहो महाशोकेन चिन्ताकुलतया निद्रोचिता निमेषार्द्धमपि न निददौ इत्याशयः।

(२८६) ततः शुचेव मुक्तकण्ठम् आरटत्सु कृकवाकुकुलेषु, गृहगिरितरुशिखरेभ्यः पातयत्सु आत्मानं मन्दिरमयूरेषु, परित्यक्तनिजनिवासेषु च वनाय प्रस्थितेषु पत्ररथकुलेषु, सद्यस्तनूभूते ताम्यति तमसि, (२८७) मन्दीभूतात्मस्नेहेषु प्रभावम् अभिलपत्सु प्रदीपेषु, (२८८) स्फुरदरुणवल्कलप्रावृतवपुषि प्रव्रज्यामिव प्रतिपन्ने नभसि, (२८९) प्रभातसमयेन समुच्चीयमानासु

---

(२८६) "ततः" इत्यस्य "चचाल देवो हर्षः" इत्यग्रेणान्वयः। शुचा इव—शोकेनेव, यदनेतत् कृकवाकुप्रभृतिष्वपि समुच्चयबलात् योजनीयम्, वक्ष्यमाणसमुच्चयार्थकस्य च शब्देन योगात् सकृत्प्रयोगस्य सकलसमुच्चायकत्वेन सर्वैवान्वयः यथायुक्तिम्, तथाऽपि समुच्चयस्य तु पदैकसमासे सम्बन्धं विना चारितार्थ्याभावात् इति बोध्यम्, मुक्तकण्ठम्—स्फुटगलम् उच्चैरित्यर्थः, आरटत्सु—नदत्सु। कृकवाकुकुलेषु—ताम्रचूडवृन्देषु, ('कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः' इत्यमरः)। गृहेति।—गृह गिरि तरवः—भवन पर्वत वृक्षाः, शिखराणि—अग्रभागाः तेभ्यः, आत्मानम्—स्वं, पातयत्सु—निक्षिपत्सु, अवरोहत्स्विति भावः। मन्दिरमयूरेषु—गृहमयूरेषु। परित्यक्तनिजनिवासेषु—उत्सृष्टनीडेषु, ["परित्यक्तनिजनिवासेषु" इत्यत्र "परित्यक्तनिवासेषु" इति पाठान्तरम्] वनाय—अरण्याय, अरण्यमित्यर्थः, ["क्रियार्थोपपदस्य—" (२।३।१४ पा०) इत्यादिना अप्रयुज्यमानस्य तुमुनः कर्मणि चतुर्थी] प्रस्थितेषु—चलितेषु, पत्ररथकुलेषु—पक्षिवृन्देषु, ["पत्ररथकुलेषु" इत्यत्र "पत्ररथेषु" इति पाठान्तरम्]। सद्यः—तत्क्षणम्, तनूभूते—विरलीभूते, ताम्यति—अवसादं गच्छतीत्यर्थः, तमसि—अन्धकारे।

(२८७) मन्दीभूतेति।—मन्दीभूतः—ह्रासं गतः, आत्मनः—स्वस्य, स्नेहः—तैलम्, आत्मनि—स्वस्मिन्, स्नेहः—प्रेम च, ममता इत्यर्थः येषां तेषु, प्रभावम्—प्रकाशम्, अभिलपत्सु—काङ्क्षत्सु, तैलाभावात् प्रकाशनैरन्तर्याच्च निर्वाणोन्मुखेषु इति भावः।

(२८८) स्फुरदिति।—स्फुरन्—उद्गच्छन्, अरुणः—सूर्यसारथिः, वल्कलमिव—वृक्षत्वगिव, स्फुरत्—दीप्यमानम्, अरुणः—रक्तवर्णः वल्कलमिति च, तेन प्रावृतम्—आच्छादितं वपुः,—शरीरं यस्य तथाभूते, प्रव्रज्यामिव—सन्न्यासधर्ममिव, प्रतिपन्ने—प्राप्ते, नभसि—आकाशे, अरुणोदयवेलायामिति भावः।

(२८९) प्रभातसमयेन—प्रातःकालेन, समुच्चीयमानासु—एकैकशः गृहीतासु

पाच्यमाने शशिनि क्रमेण (२०३) नृपचितानलधूमविसरधूसरीकृततेजसि इव नरपतिशोकपावकदाहकिणकलङ्ककालीकृतवर्चसि इव (२०४) प्रोषितसमस्तान्तःपुरपुरन्ध्रिमुखचन्द्रद्वन्द्वोद्वेगविद्राणवपुषि इव (२०५) प्रथमास्तमितरोहिणीरणरणकविमनसि इव च अस्तमुपगते रजनिकरे, राजतीव देवे दिवम् आरूढे सवितरि परिवृत्ते राज्ये इव रजनीप्रबन्धे, (२०६) प्रबुद्धराजहंसमण्डलप्रबोध्यमाने पङ्कजाकर इव

---

तने पाच्यमाने—छिद्यमाने दीयमाने च शशिनि—चन्द्रमसि अस्तोन्मुखे च चन्द्रमसि इति भावः

(२०३) नृपेति ।—नृपस्य—राज्ञः चितानलस्य—शवदाहनवह्नेः धूमविसरेण—धूमनिचयेन धूसरीकृतम्—ईषत्पाण्डूकृतं तेजः—प्रभा यस्य तथाभूते इव नरपतीति ।—नरपतेः—राज्ञः शोकः—मन्युः पावकः इव—अग्निरिव तस्य दाहेन—सन्तापेन यः किणकलङ्कः—व्रणप्रभवचिह्नं तेन कालीकृतम्—मालिनीकृतं वर्चः—हृदयम् अन्तरदेशः इति भावः यस्य तथाभूते इव ।

(२०४) प्रोषितेति ।—प्रोषितानाम्—पतिशोकात् परलोकं प्रस्थितानां समस्तानाम्—समग्राणाम् अन्तःपुरपुरन्ध्रीणाम् अन्तःपुरमहिलानां मुखानि आननानि चन्द्रद्वन्द्वानि इव—शशधरसमूहा इव तेभ्यः उद्वेगः—त्रासः तेन विद्राणम्—पलायमानं [विद्राणम् निद्रायां "संयोगादेरातो—(८२४३ पा०) इत्यादिना निष्ठातस्य नत्वे "अट्कुप्वाङ्—(८४२ पा०) इत्यादिना णत्वम्] वपुः—शरीरं यस्य तथाभूते ।

(२०५) प्रथमेति ।—प्रथमम्—प्राक् अस्तमिता—अस्तं गता या रोहिणी—नक्षत्रविशेषः स्वपत्नी च यावत् तस्याः रणरणकेन—उत्कण्ठया उन्मनः वा विमनाः—विकृतमनो यस्य तथाभूते इव रजनिकरे—चन्द्रे राजतीव—विराजमाने इव देव—अमरे राजनि प्रभाकरवर्द्धने च दिवि—अम्बरे स्वर्गे च ("द्यौ स्त्री स्वर्गे च गगने दिव क्लीब तयोः स्मृतम्" इति मेदिनी) सवितरि—सूर्ये जनके च। परिवृत्ते—परिवृत्ते—विनिमये तस्मात् विपर्यस्ते इत्यर्थः रजनीप्रबन्धे—निशागमे।

(२०६) प्रबुद्धेति ।—प्रबुद्धानां—जागरितानां प्राणिति शेषः राज्ञां—नृपाणां हंसानामिव—श्वेतच्छदानामिव मण्डलानि—समूहाः तैः अन्यत्र—प्रबुद्धानां राजहंसानां—"राजहंसास्तु ते चञ्चुचरणैः लोहितैः सिताः" इत्युक्तलक्षणानां

चचाल देवो हर्षः। (२०७) ततश्च नूपुररवविराममूकमन्द-मन्दिरहंसेषु, शोकाकुलकतिपयकञ्चुकिमात्रावशेषेषु शुद्धान्तेषु, (२०८) पतितयूथपे इव वनगजचये कक्ष्यान्तरवर्त्तिनि पितृ-परिजने विषादिनि, उपरिरुदन्निषादिनि च स्तम्भनिपक्षे

---

कमलिनीव्याप्ता, मकरन्दैः,—मेघौघैः, प्रबोध्यमानः,—उन्मील्यमानः ; चचाल,—आगन्तुं भावः, पद्माकर इव—कासार इव, चचाल—उत्तस्थौ, धराग्रहात् इति शेषः। इह तथाविधु पक्षचारोपनिबद्धं रूपकं, श्लिष्टपदनिबन्धनपदश्लेषसाधनम्।

(२०७) "ततश्च" इत्यस्य "वर्धमानद्युतिः निर्जगाम राजकुलात्" इत्युत्तरेण सम्बन्धः। नूपुरेति।—नूपुराणां—मञ्जीराणां, रवस्य—शब्दस्य, विरामेण—अपगमेन, हर्षवियोग-शोकेन पुराङ्गनाभिः भूषणादिपरित्यागादिति भावः, मूकाः,—निःशब्दाः, हंसानां नूपुरध्वनानुकरणस्य कविसमयसिद्धत्वात् प्रसिद्धेरिति भावः, अत्र तदभावात् मूकत्वं बोद्धव्यम्, मन्दाः,—अपटवः मन्दिरहंसाः,—गृहमराला येषु तथोक्तेषु। शोकेति।—शोकेन—दुःखेन, आकुलाभिः—विह्वलानि, कतिपयानि—अल्पानि कञ्चुकि-मात्राणि—सौविदल्ला एव, ("मात्रा कर्णविभूषायां वित्ते माने परिच्छदे। अक्षरावयवे स्वल्पे क्लीबं कात्स्न्येऽवधारणे।" इति मेदिनी) अवशिष्यन्ते इति अवशेषा येषु तथाविधेषु, राजमहिष्याः सर्वासां चितारोहणात् परिजनानां परिचारिकाणामन्यासाम् एवैव सह यानाय गमनादिति भावः, केवलमत्र पुररक्षणार्थमेव तेषां तत्र स्थापनादिति सु फलितम्, शुद्धान्तेषु—अन्तःपुरेषु।

(२०८) पतितेति।—पतितः,—विनष्टः इत्यर्थः, यूथपः,—यूथपतिः यस्य तादृशे इव, वनगजचये—आरण्यगजवृन्दे, ["वनगजचये" इत्यत्र "वनगजयूथ" इति पाठोऽपि स एवार्थः] अत्र वनगजेत्युक्तिः परिजनानां प्रभुत्वद्योतनार्थं भर्तरि एकान्तानुरक्तिप्रकटनार्थञ्च बोद्धव्या, कक्ष्यान्तरवर्त्तिनि—प्रकोष्ठान्तरस्थिते, पितृ-परिजने—पितृ परिचारकवर्गे, विषादिनि—विषादं गते। उपरीति।—उपरि—पृष्ठभागे, रुदन्—क्रन्दन्, निषादी—हस्तिपकः, हस्तिपालः इत्यर्थः यस्य तथोक्ते, ("आधोरणा हस्तिपका हस्त्यारोहा निषादिनः" इत्यमरः) स्तम्भनिपक्षे—आलान-स्तम्भमाश्रित्य स्थिते इत्यर्थः, ["सदिप्रते" (८।३।६६ पा०) इति षत्वेन निषीदतेः निष्ठायां "रदाभ्यां—" (८।२।४२ पा०) इत्यादिना नत्वं, पूर्वदकारस्यापि नत्वं, ततः प्रथमस्य "रषाभ्यां—" (८।४।१ पा०) इत्यादिना द्वितीयस्य च "ष्टुना ष्टुः"

निष्पन्दमन्दे राजकुञ्जरे, (२०९) मन्दुरापालकाक्रन्दव्यथिते च अजिरभाजि राजवाजिनि, (२१०) विश्रान्तजयशब्दकलकले च शून्ये च महास्थानमण्डपे दह्यमानदृष्टिः निर्जगाम राजकुलात्; अगाच्च सरस्वतीतीरं, (२११) तस्यां स्नात्वा पित्रे ददौ उदकम्। (२१२) अपस्नातश्च अनिष्पीडितमौलिरेव परिधाय उद्गमनीयदुकूलवाससी, निश्वासपरः,

(पा४।४१ पा०) इति बलम्] निष्पन्दमन्दे—निस्पन्दे इति यावत्, राजकुञ्जरे—राजहस्तिनि।

(२०९) मन्दुरेति।—मन्दुरा—अश्वशाला, ("वाजिशाला तु मन्दुरा" इत्यमर) तां पालयन्तीति ते मन्दुरापालकाः,—अश्वपालाः इति यावत्, तेषाम् आक्रन्देन—रोदननिनादेन, व्यथिते—सन्तप्ते, ["मन्दुरापालकाक्रन्दव्यथिते" इत्यत्र "मन्दुरापालकाक्रन्दवाथिते" इति पाठे,—मन्दुरापालकैः,—अश्वरक्षकैः, आक्रन्दः,—रोदनध्वनिः, वाथितः,—व्यक्तीकृत यत्र तस्मिन्नित्यर्थः] अजिरभाजि—अङ्गनवर्त्तिनि, ("अङ्गनं चत्वराजिरे" इत्यमरः) राजवाजिनि—राजघोटके।

(२१०) विश्रान्तेति।—विश्रान्तः,—विरतः, [विश्राम्यते स्म कर्त्तरि क्तप्रत्ययः] जयशब्दः,—जयध्वनिरेव, कलकलः,—कोलाहलः यस्मिन् तथोक्ते, शून्ये—निर्जने इत्यर्थः, महास्थानमण्डपे—प्रशस्तसभामण्डपे, ("सभासमितिसंसदः। आस्थानी क्लीबमास्थानम्" इत्यमरः) दह्यमानदृष्टिः,—भस्मीभूयमानेव, नित्यं जनकोलाहलमुखरितस्य पित्रा अधिष्ठितस्य सभागृहस्य एतस्मात् इदानीमभावेन जनविरहिततया निःशब्दत्वेन शून्यसिंहासनदर्शनेन च पितृशोकानलोद्दीपनादिति भावः। राजकुलात्—राजभवनात्, ("कुलं जनपदे गोत्रे सजातीयगणेऽपि च। भवने च ·· ·॥" इति मेदिनी)।

(२११) तस्याः—सरस्वत्याम्। उदकम्—तर्पणसलिलाञ्जलिं, ददौ—अर्पयामास।

(२१२) "अपस्नातः" इत्यस्य "भवनमाजगाम" इत्युत्तरेण सम्बन्धः। अपस्नातः,—प्रेतकार्य्यमुद्दिश्य कृतस्नानः, अनिष्पीडितमौलिः,—न निष्पीडितः,—निर्जलीकृत, अमोक्षित इत्यर्थः, मौलिः,—केशचयः येन तथोक्तः, ("चूडा किरीटं केशाश्च संयता मौलयस्त्रयः" इत्यमरः) उद्गमनीये—धौते, ("तत् स्यादुद्गमनीयं यद्

निश्चामरः, निरातपत्रः, निरुत्सारणः, समुपनीतेऽपि सप्तौ चरणाभ्यामेव (३१३) नासाऽग्रासक्तेन रक्ततामरसताम्रेण चक्षुषा हृदयावशेषस्य अपि पितुर्दाहशङ्कया शोकाग्निमिव उद्गिरन्, अताम्बूलस्यापि सुचिरप्रक्षालितस्य कल्पतरुकिसलयस्य इव स्वभावपाटलस्य अधरस्य अधरपल्लवस्य प्रभया मांसरुधिरकवलान् इव हृदयाभिघातात् उद्वमन् उष्णनिश्वासस्तोमैः भवनम् आजगाम ।

---

धौतयोर्वस्त्रयोर्युगम्" इत्यमरः ) दुकूले—सिताम्बके एव, ("दुकूलं सूक्ष्मवस्त्रे स्यात् दुकूलं क्षौमे सिताम्बके" इति शब्दार्णवः ) धावली—वस्त्रे परिधाय—परिहिते कृत्वा, निश्वसन्,—पुनःपुनरायतं निश्वसन् इत्यर्थः, शोकक्षोभात् इति भावः । निश्चामरः,—चामरव्यजनरहितः, ["निश्चामरः" इति पाठः अस्माभिः न दृश्यते, तथा-पुस्तकेषु अनुपलभ्यत्वात् वक्ष्यमाणनिरातपत्रतयैव निश्चामरार्थप्रतीतेः इत्यवधेयम्]। निरातपत्रः,—छत्रवर्जितः, पित्रादिगुरुजनवियोगे छत्रचामरादिधारणनिषेधादिति भावः । निरुत्सारणः,—उत्सारणा—लोकानामपसारणं, तद्रहितः इत्यर्थः, राज्ञः गमनकाले रक्षिभिः पुरःस्थलोका अपसार्यन्ते इति नियमः, तदा तु सर्वेषामेव शोकविह्वलतया बान्धवदुःखा मैत्र्यानाभावात् तदापि तदभावात् तत्र कृतमिति भावः । समुपनीते—समुपस्थापिते, सप्तौ—अश्वे, ("… …सुरङ्गाश्वतुरङ्गमाः । · ·हयसैन्धवसप्तयः ॥" इत्यमरः ) चरणाभ्यामेव—पादचारेणैव मातापितृवियोगे ब्रह्मचर्यनियमपालनाय पादचारेण गमनस्य प्राशस्त्यादिति भावः ।

(३१३) नासाऽग्रासक्तेन—नासिकाऽग्रलग्नेन, रक्ततामरसताम्रेण—रक्तकमललोहितेन । हृदयावशेषस्य—हृदयमात्रावशिष्टस्य, न तु बहिरङ्गस्य इति भावः । अताम्बूलस्य—वर्जितताम्बूलस्य, सुचिरप्रक्षालितस्य—बहुधाधौतस्य, कल्पतरुकिसलयस्य इव—कल्पद्रुमपल्लवस्य इव, स्वभावपाटलस्य—सहजरक्तस्य अधरपल्लवस्य—अधरः,—हीनः, पराभूत इत्यर्थः, पल्लवः—किसलयं यस्मात् तथोक्तस्य, अधरस्य—निम्नोष्ठस्य, यद्वा,—अधरस्य—निम्नावस्थितस्य, अधरपल्लवस्य—अधरः पल्लव इव तस्य, मांसरुधिरकवलान् इव—पिशितरक्तग्रासान् इव, सरक्तमांसपिण्डानित्यर्थः, हृदयाभिघातात्—हृदये—चेतसि, अभिघातात्—आघातात्, शोकवज्रप्रहारजनित-

(३१७) दारुणदुःखदहनदह्यमानहृदया गृहीतवाचः तुषार-
शिखरिणं शरणं ययुः, केचित् (३१८) विन्ध्योपत्य-
कासु वनकरिकुलकरशीकरासारसिच्यमानतनवः पल्लव-
शयनशायिनः सन्तापम् अशमयन्, केचित् (३१९) सन्नि-
हितान् अपि विषयान् उत्सृज्य सेवाविमुखाः परिच्छिन्नैः
पिण्डकैः अटवीभुवः मूका जगृहुः, केचित् पवनाशना धर्म-
धना धमनिमयो मुनयो बभूवुः, केचित् गृहीतकाषायाः

---

(३१७) दारुणेति।—दारुणेन—उत्कटेन, दुःखदहनेन—शोकाग्निना, दह्यमानम्—सन्तप्यमानम्, हृदयम्—चित्तं येषां तथाभूताः, गृहीतवाचः,—गृहीता—निगृहीता, संयमिता इत्यर्थः वाग् यैस्ते, मौनव्रतधारिण इत्यर्थः, ["स्त्रिया—" (६।३।३४ पा०) इत्यादिना पुंवद्भावे "शेषाद्विभाषा" (५।४।१५४ पा०) इति पाक्षिककबभावः] तुषारशिखरिणम्—हिमाद्रिम्, शरणम्—आश्रयम्, ययुः,—गतवन्तः, आश्रितवन्त इत्यर्थः, यतयो जाता इति भावः। दग्धा अपि दाहज्वाला-प्रशमनार्थं शीतलस्थानमाश्रयन्ति।

(३१८) विन्ध्येति।—विन्ध्यस्य—तदाख्यगिरेः, उपत्यकासु—आसन्नभूमिषु, ("उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका" इत्यमरः)। वनेति।—वनकरिकुलानाम्—वन्यगजवृन्दानाम्, कराः—शुण्डाः, तथा शीकरासारैः,—अम्बुकणधाराभिः, सिच्यमानाः,—आर्द्रीक्रियमाणाः, तनवः,—शरीराणि येषां तथाभूताः, पल्लवशयनशायिनः—किसलयशय्याशायिनः, सन्तापम्—चित्तदाहं शोकजमिति भावः, अशमयन्—निर्वापयामासुः, वानप्रस्थाश्रमं गृहीतवन्त इति भावः।

(३१९) सन्निहितान्—करस्थितानिति भावः, विषयान्—भोग्यवस्तूनि, उत्सृज्य—त्यक्त्वा, सेवाविमुखाः,—सेवापराङ्मुखाः, परिच्छिन्नैः,—परिमितैः, पिण्डकैः,—भक्तग्रासैः तदुपलक्षिता इत्यर्थः, यद्वा—परिच्छिन्नैः,—परिमितैः, स्वल्पैरित्यर्थः, कर्मभिरिति भावः, पिण्डकैः,—शरीरैः, तदुपलक्षिता इत्यर्थः, मूकाः—वाग्विरताः, अटवीभुवः,—वनभूमीः जगृहुः—आश्रिताः। पवनाशनाः,—वायु-भोजिनः, धर्मधनाः,—धर्मसाधनकामा इत्यर्थः, धमनिमयः—धमन्यः,—काश्यात् तामसन्य, स्फुरन्त्य इत्यर्थः, धमन्यः,—शिराजालानि येषां तथाभूताः, अनेन व्रतकार्श्यम् उच्यते। गृहीतकाषायाः,—गृहीतम्—अवलम्बितम्, काषायम्—कषायेण रक्तं वस्त्रं

कापिलं मतम् अधिजगिरे गिरिषु, केचित् ( ३२० ) आचोटितचूडामणिषु शिरःसु शरणीकृतधूर्जटयो जटा जघटिरे, अपरे ( ३२१ ) परिपाटलप्रलम्बचीवराम्बरसंवीताः स्वाम्यनुरागम् उज्ज्वलं चक्रुः, अन्ये ( ३२२ ) तपोवनहरिणजिह्वाऽञ्चलोल्लिह्यमानमूर्त्तयो जरां ययुः, अपरे पुनः ( ३२३ ) पाणिपल्लवप्रमृष्टैः आताम्ररागैः नयनपुटैः कमण्डलुभिश्च वारि वहन्तो गृहीतव्रता मुण्डा विचेरुः ।

---

ये तथाभूताः, कापिलं—कपिलसम्बन्धि साङ्ख्यशास्त्रम्, अधिजगिरे—अधीतवन्तः, साङ्ख्यशास्त्रमधीत्य प्रकृतिपुरुषतत्त्वावगमात् योगिनः बभूवुरिति भावः ।

( ३२० ) आचोटितेति ।—आचोटिताः,—छेदिताः, [ आङ्पूर्वकस्य चोटतेः णिचि निष्ठाया रूपम् ] अपसारिताः इति भावः, चूडामणयः,—चूडारत्नानि येषां तथाभूतेषु, त्यक्तचूडारत्नालङ्कारेषु इति यावत्, शिरःसु—मूर्द्धसु, शरणीकृतधूर्जटयः,—शरणीकृतः,—आश्रितः इत्यर्थः, धूर्जटिः,—हरः यैः तथाभूताः, गृहीतपाशुपतव्रताः इत्यर्थः । जघटिरे—बबन्धुः ।

( ३२१ ) परिपाटलेति ।—परिपाटलेन—परितो रक्तेन, प्रलम्बेन—आयतेन इत्यर्थः, चीवराम्बरेण—वसनखण्डेन, संवीताः,—प्रावृताः, आच्छादितदेहाः इत्यर्थः, धृतमुनिवेशाः इति भावः, स्वाम्यनुरागम्—प्रभुभक्तिम्, उज्ज्वलं—भास्वरं, प्रशस्तमिति यावत् ।

( ३२२ ) तपोवनेति ।—तपोवनहरिणानाम्—आश्रममृगाणां, जिह्वाऽञ्चलैः,—रसनाप्रान्तैः, उल्लिह्यमानाः,—आस्वाद्यमानाः इत्यर्थः, मूर्त्तयः,—शरीराणि येषां तथाभूताः, तापसाः सन्त इत्यर्थः, जरां—वार्द्धकम् ।

( ३२३ ) पाणीति ।—पाणिः—करः, पल्लवः—इव—किसलयम् इव, तेन प्रमृष्टैः—प्रमार्जनं नीतैः, गृहीताश्रुभिः, आताम्ररागैः,—आरक्तप्रभैः, शोकावेगजनितरोदनात् महापुरुषलक्षणत्वेन स्वभावसिद्धत्वाच्च इति भावः, नयनपुटैः,—नेत्रगोलकैः, कमण्डलुभिः,—जलपात्रविशेषैः, वारि—अश्रुजलं, तीर्थजलञ्च । गृहीतव्रताः,—व्रतधारिणः, मुण्डाः,—मुण्डितशिरसः, विचेरुः,—भ्रमन्ति स्म । वीतरागा अपि चिराभ्यस्तसंस्कारेण परलोकस्थेऽपि राजनि अत्यन्तानुरागा आसन् इति लोकातिशयशालिनी नरेन्द्रस्य काचिदसाधारणी भक्तिः समर्थ्यते इति वस्तुध्वनिः ।

(३२४) देवमपि हर्षं तदवस्थं पितृशोकविह्वलीकृतं श्रियं शाप इति, महीं महापातकमिति, राज्यं रोग इति, भोगान् भुजङ्गा इति, (३२५) निलयं निरय इति, बन्धुं बन्धनमिति, जीवितम् अयश इति, देहं द्रोह इति, कल्यतां कलङ्क इति, आयुः अपुण्यफलमिति, आहारं विषमिति, विषममृतमिति, चन्दनं दहन इति, कामं क्रकच इति,हृदय-

---

(३२४) "देवमपि हर्षम्" इत्यस्य "कुलपुत्रादय पर्यवारयन्" इति अग्रेण सम्बन्ध। तं विशिनष्टि, तदवस्थमित्यादि।—श्रिय—राजलक्ष्मीं, शाप,—अभिशाप, दुःखाकर इति भाव, भोगलिप्सुहत्वादिति तात्पर्यम्, इति मन्यमानमित्यनेन सम्बन्ध, एवमुत्तरत्र। मही—पृथ्वी, महापातक—महत् पाप, तदधिकारस्य कैवल्यपापबहुलत्वादिति भाव। रोग,—व्याधि, क्लेशबहुलत्वादिति भाव। भोगान्—सुखसाधनानीत्यर्थ, भुजङ्गा—सर्पा, प्राणनाशकत्वादिति भाव।

(३२५) निलय—गृह निरय—नरक, पितृमरणस्य गृहस्थ दुःखकरत्वादिति भाव। बन्धु—स्वजन बन्धन—बन्धनहेतुभूत, तदनुरोधेन गृह त्यक्तुमसामर्थ्यादिति भाव। जीवित—जीवनधारणम्, अयश,—अकीर्तिकारक पदार्थ, पितृशोकेनापि तदवस्थानस्य निष्ठुरत्वबोधकत्वादिति भाव। देह—शरीर, द्रोह,—अनिष्टचिन्तनम् आत्मद्रोहिताकर इति यावत्, कथमद्यापि न नश्यति? तस्मात् अमङ्गलीय [illegible] भविष्यति इति भाव। कल्यता—निरामयत्वम्, आरोग्यमित्यर्थ, ("वार्ता निरामय कल्य" इत्यमर) कलङ्क,—अपवाद [illegible] इति भाव। आयु —जीवितकालम्, अपुण्यफल—दुष्कृतपरिणाम, जीवत दुःखमतभोगस्य [illegible] इति भाव। आहार—भोजन, विष—गरल पितृशोकार्त्युद्दीपकत्वेन विषवत् [illegible] इति भाव। विष—गरलम्. अमृत—सुधा ("पीयूषममृतं सुधा" इत्यमर) अमृत यथा सन्तापनाशन तथा शोकदग्धजीवनस्य प्रशमन सन्तापप्रशमनात् अनिष्टकर विषदमपि वस्तु इष्टकरममृतप्रायमभवत् इति भाव। चन्दन—श्रीखण्ड दहन —अग्नि, पर्यन्तचन्दनलेपनेनापि पितृदाहादहनस्मरणात् विरक्तानाम् उपभोगसाधनेषु महाग्नि दीपितदाहकृन्ध्याकलनाद् इति भाव। क्रकच,—करपत्र, भोगतिमुक्तता करपत्रच्छेदनवत् यन्त्रणाप्रदत्वादिति

(२१८) अस्वतन्त्रीकृतश्च तैः मनसाऽपि न अलभत शोकम् अनुप्रचरितुम्। अनुनीयमानश्च कथङ्कथमपि आहारादिकासु क्रियासु आभिमुख्यम् अभजत। आवेगतहृदयश्च अचिन्तयत्,—"अपि नाम तातस्य मरणं महाप्रलयसदृशम् इदमुपश्रुत्य आर्यो बाष्पजलस्नातो न गृह्णीयात् वल्कले? न आश्रयेद्वा राजर्षिः आश्रमपदम्? न विशेद्वा पुरुषसिंहो गिरिगुहाम्? (२१९) अश्रुसलिलनिर्भरभरितनयननलिनयुगलो वा न

---

आत्मनियमं यैः तथोक्ताः, ब्रह्मविद इत्यर्थः। संस्तुताः,—परिचिताः, ("संस्तवः स्यात् परिचयः" इत्यमरः) मस्करिणः,—भिक्षवः सन्न्यासिन इत्यर्थः, ("भिक्षुः परिव्राट् कर्मन्दी पाराशर्यपि मस्करी" इत्यमरः) अध्यात्मविदः वैराग्यजनकैः अध्यात्मवचनैः शोकापनोदनकारिणः। समेति।—समे—तुल्ये, दुःख-सुखे—विषाद-प्रमोदौ येषां ते, सुखदुःखयोः समभावा इत्यर्थः, मुनयः,—तापसाः। ब्रह्मवादिनः,—वेदाभिज्ञाः। पौराणिकाः,—पुराणपाठकाः, ते तु पुराणोक्तनानाप्रकार-विकारवर्णनेन शोकापनोदयितुमीहन्ते। पथ्यवाक्यम्—पथ्यवचनम्।

(२१८) तैः,—कुलपुत्रादिभिः पौराणिकान्तैः सर्वैरित्यर्थः, अस्वतन्त्रीकृतः,—पराधीनीकृतः, स्वमपि शोकं अनुभवितुमशक्त इत्यर्थः, शोकम्—पितृवियोगजनितं दुःखम्, अनुप्रचरितुम्—अनुवर्तितुम्, अनुभवितुमित्यर्थः, न अलभत—अविन्दत, अवसरं नैव प्राप। आभिमुख्यम्—साम्मुख्यम्, प्रवृत्तिम् इत्यर्थः। आवेगतहृदयः,—शोकापीडितचित्तः, आर्तः सन् एवं कथितवान्। अपि—प्रश्ने। नाम—सम्भावनायाम्। तातस्य—पितुः। आर्यः,—राज्यवर्धनः, बाष्पजलस्नातः,—अश्रुसलिलाप्लुतः, वल्कले—तरुत्वचौ, वनवासिपरिधेये इति भावः, न गृह्णीयात्?—न धारयेत्? न विदध्यात्? इत्यर्थः, पितृवियोगमाकर्ण्य शोकात् वल्कलवसने परिधाय वनं यास्यति इति सम्भावयामीति निष्कर्षः। एवमुत्तरत्रापि अपि नाम इत्यन्वयस्य अर्थः अवगन्तव्यः। राजर्षिः,—राजा ऋषिरिव, तद्वत् जितेन्द्रियत्वादिति भावः, आश्रमपदम्—तपोवनम्। विशेत्—प्रविशेदित्यर्थः, [सर्वत्र "सम्भावनेऽलमिति—" (३।३।१५४ पा०) इति सूत्रेण सम्भावनायां लिङ्]। पुरुषसिंहः—नरश्रेष्ठः।

(२१९) अश्रुेति।—अश्रुसलिलं—बाष्पवारि, निर्भरम्—अतिमात्रं यथा तथा, भरितं—पूरितं, नयननलिनयुगलं—नेत्रपद्मद्वयं यस्य तथाभूतः, ["न

पश्येत् अनाथां पृथिवीम्? (३३०) प्रथमव्यसनविषमविष-विह्वलः न स्मरेत् आत्मानं वा पुरुषोत्तमः? (३३१) अनित्यतया जनितवैराग्यो वा न निराकुर्य्यात् उपसर्पन्तीं राज्यलक्ष्मीम्? (३३२) दारुणदुःखदहनप्रज्वलितदेहो वा न प्रतिपद्येत अभिषेकम्? दूरागतो वा राजभिः (३३३) अभिधीयमानो न पराचीनताम् आचरेत्? (३३४) अतिपिष्ट-पक्षपाती खलु आर्य्यः, सर्व्वदा तातश्लाघया माम् अभिधत्ते,—

पश्येत" इत्यत्र "पश्येत्" इति नञ्रहितपाठे—पश्येत किम्? नैव द्रष्टुं शक्नुयात् इति सम्भावयामीति भाव ]। अनाथां—निराश्रयां पतिवियोगादिति भाव।

(३३०) प्रथमेति।—प्रथमम्—आद्यम्, अपूर्व्वमिति भाव, व्यसन—विपदेव विषम—दारुण, विषं—हलाहल, तेन विह्वल,—अधीर, आत्मान—स्व, वा न स्मरेत? आत्मघाती भवेदिति भाव। ["न स्मरेत" इत्यत्र "स्मरेत" इति नञ्रहितपाठे,—आत्मानं स्मरेत वा? आत्मा अवश्यमेव रक्षणीय इति स्मरेत् किम्? नैव स्मरेत् इति सम्भावयामि, अत आत्मघाती भवेदिति भाव ]। नारायणोऽपि प्रथमाविर्भूतमहागरलघोरप्रतापेन विमूढ आत्मानं विसस्मार इति पौराणिका। अत्र पुरुषोत्तमपदस्वरसात् उपमाध्वनि अप्रस्तुतप्रशंसा च, पुरुषोत्तम इव पुरुषोत्तम इति प्रतीते।

(३३१) अनित्यतया—क्षणिकतया, जनितवैराग्य,—उत्पन्ननिर्वेद। उपसर्पन्तीम्—उपगच्छन्तीम्, आश्रयन्तीमित्यर्थं। निराकुर्य्यात्—त्यजेदित्यर्थं, शोकेन विरागवता विषयादिषु निःस्पृहत्वदर्शनात इत्याशय।

(३३२) दारुणेति।—दारुण—उत्कट, दुःखदहनेन—शोकाग्निना प्रज्वलित,—सन्तप्त, देह,—शरीरं यस्य तथाभूत, अभिषेक—राज्याभिषेकमित्यर्थं, न प्रतिपद्येत वा?—न स्वीकुर्य्याद्वा? ["न प्रतिपद्येत" इत्यत्र "प्रतिपद्येत" इतिमात्रपाठे—स्वीकुर्य्यात किम्? इति काकुलभ्याय, नैव प्रतिपद्येत इति सम्भावयामीति भाव ]।

(३३३) अभिधीयमान,—कथ्यमान, अनुरुध्यमान इति यावत्। पराचीनता—पराङ्मुखता, प्रातिकूल्यं वा इत्यर्थं, राज्याभिषेके इति भाव। ("पराङ्मुखः पराचीन" इत्यमर )।

(३३४) अतिपिष्टपक्षपाती—अतिशयेन पिष्टवत्सल इत्यर्थं। तातश्लाघया—

(२३५) "तात! हर्ष! कस्यचित् अभूत् भविष्यति वा पुनः काञ्चनतालतरुप्रांशु कायप्रमाणम् इदम्? ईदृक् च दिवसकरप्रीत्या दिवसम् उन्मुखविकसितं मुखमहाकमलम्? एतौ च (२३६) वज्रस्तम्भभास्वरौ भुजकाण्डौ? एते च (२३७) हसितमदालसहलधरविभ्रमा विलासाः? कोऽन्यो मानी विक्रान्तो वदान्यो वा?" इति। एतानि चान्यानि च चिन्तयन् दर्शनोत्सुकहृदयो भ्रातुः आगमनम् उदीक्षमाणः कथङ्कथमपि अतिष्ठत् इति।

इति श्रीबाणभट्टकृते हर्षचरिते प्रभाकरवर्द्धनमरणं नाम

पञ्चम उच्छ्वासः ॥ ५ ॥

---

ताते—पितरि, या आस्था—आदरः, तया, बहुधनकन्यादीनां विश्राणनरूपात् इत्यादि? अभिधत्ते—वक्ति।

(२३५) तात!—वत्स!। कस्यचित् अन्यस्य इति शेषः। काञ्चनेति।—काञ्चनतालतरुः—सौवर्णतालवृक्षः, तद्वत् प्रांशु—उन्नतम्, कायप्रमाणम्—देहपरिमाणम्? ईदृक्—एवम्प्रकारम्, कस्यापि अभूदिति भावः, दिवसकरप्रीत्या—सूर्यभक्त्या, सूर्यप्रसादाय च, दिवसम्—वासरं व्याप्य इत्यर्थः, [अत्यन्तसंयोगे द्वितीया] उन्मुखविकसितम्—उन्मुखम्—ऊर्द्ध्वमुखम्, सूर्यप्रीतिकरकार्ये प्रवृत्तमित्यर्थः, सादरञ्च तत् विकसितं—प्रफुल्लमित्यर्थः, भास्वरम् इति यावत्, कमल—उन्मुखम्—ऊर्द्ध्वमुखम्, तत् विकसितम्—प्रस्फुटितम्, मुखमहाकमलम्—मुखमेव महत् पद्मं, मुखं महाकमलमिव वा, [इत्युपमितसमासः]।

(२३६) वज्रेति।—वज्रस्तम्भौ इव—कुलिशनिर्मितस्तम्भौ इव, भास्वरौ—प्रकाशितौ, दृढत्वात् विशालत्वाच्च इति भावः, भुजकाण्डौ—भुजौ—बाहुयुगले, काण्डौ—दण्डौ इव तौ, बाहुदण्डौ इत्यर्थः, ("काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु" इत्यमरः)।

(२३७) हसितेति।—हसितेन—हास्येन मदालसस्य—मदविह्वलस्य, हलधरस्य—बलदेवस्य, विभ्रमा इव विभ्रमाः—विचेष्टितानि येषु तथाविधाः, विलासाः—लीलाविशेषाः? [कथमन्यः अन्यस्य विभ्रमं दधातु इति इह बिम्बप्रतिबिम्बभावात् तन्निदर्शनालङ्कारः], अन्यः, मत्तुल्य इति शेषः, मानी—मानी-वान्, विक्रान्तः—शूरः, वदान्यः—दानशीलः, ["स्युर्वदान्यस्थूललक्ष्यदानशौण्डा

"चक्रमद" इत्यमरः )। दर्शनेति।—दर्शनाय—अवलोकनाय, भ्रातुरिति भावः, उत्सुकम्—उत्कण्ठितं, सापेक्षम् इति यावत्, हृदयं—चित्तं यस्य तथाविधः, उदीक्षमाणः,—प्रतीक्षमाणः ।

इत्यविद्यास्वाटवीसञ्चरणपञ्चाननेन वाक्यकण्ठीरवेण पण्डितकुलपतिना बि, ए,
उपाधिधारिणा श्रीमज्जीवानन्दविद्यासागरभट्टाचार्येण विरचितायां
तदात्मजाभ्यां पण्डितश्रीमदाशुबोधविद्याभूषण पण्डितश्रीमन्नित्यबोध
विद्यारत्नाभ्यां परिवर्द्धितायां प्रतिसंस्कृतायां बालाख्यायां
श्रीहर्षचरितव्याख्यायां पञ्चम उच्छ्वासः ॥ ५ ॥

---

# षष्ठ उच्छ्वासः ।

उच्चित्योच्चित्य भुवि प्रहितनिगूढात्मदूतनीतानाम् ।
विजिगीषुरिव कृतान्तः शूराणां सङ्ग्रहं कुरुते ॥ १॥

कृतान्तवर्णनव्यपदेशेन राज्यवर्द्धनस्य उपाख्यानं सूचयति, उच्चित्येति।—कृतान्तः,—अन्तकः, अन्यत्र,—कृतान्तः,—कृतः अन्तः,—नाशः प्रतिवीराणामिति भावः येन तथाभूतः, शशाङ्कनामा गौडाधिपतिरिति भावः विजिगीषुः इव—विजयार्थी नृप इव, भुवि—पृथिव्याम्, उच्चित्य उच्चित्य—अन्विष्य अन्विष्य, प्रवरं प्रवरं विचित्य इति भावः, प्रहितनिगूढात्मदूतनीतानाम्—प्रहिताः,—प्रेषिताः, निगूढाः—गुप्ताः, अदृश्याः इत्यर्थः, अन्यत्र—कपटचारिणः इति यावत्, आत्मनः,—स्वस्य, दूताः,—किङ्कराः, अन्यत्र,—वार्त्तावहाः, निजचाराः इति यावत् तैः, नीताः,—वशं प्रापिताः, आनीता इत्यर्थः, स्वभवनमिति भावः तेषां, शूराणां—बलवतां, वीराणां मानवानामिति यावत्, अन्यत्र—शूराणां—राज्यवर्द्धनप्रमुखानां प्रधानराजपुत्राणां, सङ्ग्रहम्—आयत्ततां, कुरुते—स्वायत्तं नयति, अन्यत्र,—स्ववशान् करोति इत्यर्थः । एतेन शशाङ्कः निजदूतैः अन्विष्य अन्विष्य शूराणां सङ्ग्रहं कृत्वा दूतमुखेन कन्याप्रदानप्रलोभितं राज्यवर्द्धनं स्वगृहमानीय विश्रब्धं भुञ्जानं छद्मना व्यापादितवानिति षष्ठोच्छ्वासार्थः सूचितः । अत्र विजिगीषुणा सह कृतान्तस्य वर्ण्यसाम्यप्रतीतेरुपमालङ्कारः, कृतान्त इव कृतान्त इत्युपमाध्वनिश्च, एतेन विजिगीषुः कालवत् कठोराशयः इति वस्तु व्यज्यते । आर्या वृत्तम् ॥ १ ॥

निकटोपकरणकलापे, (४) नीतेषु तीर्थस्थानानि सह जनहृदयैः कीकसेषु, (५) कल्पितशोकशल्ये सुधानिचयचिते चिताचैत्यचिह्ने, (६) वनाय विसर्जिते च महार्जिजिति राजगजेन्द्रे, क्रमेण मन्देषु आक्रन्देषु, विरलीभवत्सु च विलापेषु,

पाठे,—धमराणि—चामराणि, राजव्यञ्जनसौवर्णभाजनादीन्यर्थः, "चामरमस्त्र भाजनम्" इत्यमरः ] पत्राणि—वाहनानि, रथाश्वशिबिकादीनि इति यावत् ("पत्रं वाहनपक्षयो" इत्यमरः) मल्लानि—तलवाद्यादीनि, एतानि आदीनि यस्य तथोक्ते, ["शेषाद्विभाषा" (५।४।१५४ पा०) इति समासान्त कविधि कप् ] नृपेति।—नृपस्य—राज्ञ, निकटानि—सततसन्निहितानि उपकरणानि—परिच्छदा, तेषां कलाप,—समूह तस्मिन् द्विजेभ्य,—ब्राह्मणेभ्य, दीयमाने—समर्प्यमाणे।

(४) कीकसेषु—अस्थिषु, ("कीकसं कुल्यमस्थि च" इत्यमरः) जनानां—लोकानां, हृदयैः—चित्तैः, सह—सार्द्धं, तीर्थस्थानानि—गङ्गादीनि, नीतेषु—प्रापितेषु।

(५) कल्पितेति।—कल्पितं—अर्पितं, शोकशल्य—शोक,—मन्युः, शल्य—शङ्कु, शल्यमिव इत्यर्थः, मर्मपीडाकरत्वादिति भाव येन तादृशे, दर्शनमात्रेण शोकोद्दीपके इति यावत्, चिताचैत्यचिह्ने—चितायां—शवदाहार्थकाष्ठपुञ्जां, तदुपलक्षितस्थाने वा, चैत्यस्य—देवालयस्य, आयतनस्य वा ("चैत्यमायतनं तुल्ये" इत्यमरः) चिह्न—लक्ष्म भक्तादिक ज्ञापकरूपमित्यर्थं तस्मिन्, सुधानिचयेन—चूर्णद्रवसमूहेन, चिते—व्याप्ते, लिप्त इत्यर्थ, सुधाविधौते कृते इति भाव, यद्वा,—चिताचैत्यचिह्ने—चितायाः—चितोपरि, शवदाहनस्थाने इत्यर्थं, यत् चैत्य—चिह्नमेव चैत्य, मृतकचैत्यमित्यर्थं, ("चित्य मृतकचैत्ये स्यात्" इति मेदिनी) शवदाहस्थानस्योपरि मृतस्य स्मरणार्थम् आयतनविशेष इति यावत्, तदेव चिह्न—मृतस्य ज्ञापकविशेष तस्मिन्, सुधानिचयचिते—चूर्णलेपेन धवलीकृते इत्यर्थं, यद्वा—चिताचैत्यचिह्ने—आरक्षसमारोपिताश्वत्थवृक्षादिके तस्मिन्, सुधानिचयचिते—तन्मूलदृढमिष्टकया आवेष्ट्य दत्तचूर्णलेपे इत्यर्थः।

(६) महार्जिजिति—उत्कटसङ्ग्रामजेतरि, राजगजेन्द्रे—राज्ञ—प्रभाकरवर्द्धनस्य, गजेन्द्रे—करिश्रेष्ठे, वाहनभूते इति भाव, वनाय—अरण्याय, विसर्जिते—प्रेषिते, बन्धनविमुक्तीकृते इत्यर्थं, शोकजनकत्वेन द्रष्टुमशक्यत्वादिति भाव। ["विसर्जिते च" इत्यत्र पुस्तकान्तरे "विसर्जिते" इति चकारहीन पाठो दृश्यते। "क्रमेण"

(७) विश्राम्यति अश्रुणि, शिथिलीभवत्सु श्वसितेषु, अविस्पष्टेषु हा कष्टाक्षरेषु, (८) उत्सार्यमाणासु च असनशय्यासु, उपदेशश्रवणक्षमेषु श्रोत्रेषु, (९) अनुरोधावधानयोग्येषु हृदयेषु, गणनीयेषु नृपगुणेषु, प्रदेशवर्त्तिताम् आश्रयति शोके, (१०) कृतेषु कविरुदितकेषु, जाते च अश्रावशेषदर्शने

---

इत्यत्र "क्रमेण च" इति चकारयुक्तः पाठान्तरम्] आक्रन्देषु—रोदनेषु, मन्दषु—शिथिलीभवत्सु, विनाशेषु—छिद्यमानेषु, विरलीभवत्सु—ह्रासं गच्छत्सु, कालात्ययेन शोकस्य क्रमाद्ह्रासात् इति भावः।

(७) अश्रुणि—नेत्रवारिणि, विश्राम्यति—विरमति। श्वसितेषु—दीर्घनिश्वासेषु, शिथिलीभवत्सु—मन्दीभवत्सु। हा कष्टाक्षरेषु—हा ! कष्टम् इति वर्णेषु, अविस्पष्टेषु—अस्फुटेषु प्रायेण अश्रुतेषु इत्यर्थः।

(८) अशयनशय्यासु—शयनशय्यासु, यासु राज्ञा सुप्त, यासु वा पुरा राज्ञा शयितं तासु इत्यर्थः, मरणानन्तरमशौचज्ञापिकासु ज्ञनशय्यासु कम्बलास्तरणादिषु इति वा, उत्साह्यमानासु—अपसार्यमाणासु, यद्वा,—असनशय्यासु—असने—विपदि, राज्ञ पीडाकाले इत्यर्थः, या शय्या,—शयनीया, आकालमृत्युदेहतया निरन्तर स्वजनैरध्यासिता शय्या इति यावत् तासु, उत्सार्यमाणासु—अपनीयमानासु, शोकशय्यां विहाय पुनः स्वकर्मणि प्रवृत्तेषु परिजनेषु इति भावः।'. श्रोत्रेषु—श्रवणेन्द्रियेषु, उपदेशश्रवणक्षमेषु—उपदेशश्रवणयोग्येषु इत्यर्थः, अविकलश्रवणक्षमेषु जनेषु इति भावः।

(९) हृदयेषु—चेतस्सु अनुरोधेति।—अनुरोधेन—निर्बन्धेन, आग्रहेणेत्यर्थः, यद्वा,—अनुरोधे—अनुवर्तने, कस्यचित् प्रार्थितेष्टसम्पादनेच्छायाम् इत्यर्थः, ("अनुरोधोऽनुवर्त्तनम्" इत्यमरः) अवधानं—मनोयोगः, तस्य योग्यानि—उचितानि तेषु। नृपगुणेषु—राजगुणेषु, गणनीयेषु—सङ्ख्येयेषु, वर्णनीयेषु इत्यर्थः, मरणानन्तरं विश्लोकावेगेन विह्वले मनसि गुणानामपरिज्ञाता क्रियते, क्रमेण शोकह्रासात् वक्तव्यता इति भावः। शोके—शुचि, प्रदेशवर्त्तिताम्—शयनगृहादेकप्रदेशमात्रनिष्ठताम्, आश्रयति—अवलम्बमाने, क्वचित् किञ्चित् दृष्ट्वा श्रुत्वा वा स्मृतस्य उदयात् सञ्जातशोके लोके इति भावः।

(१०) कविरुदितकेषु—कवि,—काव्यरचयितृ, रुदितानीव रुदितकानि—रोदनानि, रोदनवर्णनानि इति भावः तेषु, कृतेषु, जनैरिति शेषः, कवीनां रुदितं

इव आक्रन्देन कथ्यमानम्, (१७) दूरद्रुतागमनमुषितबाहुल्येन विच्छिन्नच्छत्रधारेण लम्बिताम्बरवाहिना (१८) भ्रष्टभृङ्गार-ग्राहिणा च्युताचमनधारिणा ताम्यत्ताम्बूलिकेन (१९) खञ्जत्-खड्गग्राहिणा कतिपयप्रकाशदासेरकप्रायेण (२०) बहुवासरान्त-रितस्नानभोजनशयनश्यामक्षामवपुषा परिजनेन परिवृतम्,

---

आक्रन्देन—रोदनध्वनिना, कथ्यमानम्—आगतो राज्यवर्द्धन इति निवेद्य-मानम्।

(१७) दूरेति।—दूरात्—दीर्घमार्गादित्यर्थः, द्रुतागमनेन—शीघ्रोपस्थित्या, मुषित—विप्रलब्ध, त्यक्तमिति यावत् बाहुल्य—समग्रता यस्य तेन, अल्पसङ्ख्यकेन इत्यर्थः, विच्छिन्नच्छत्रधारेण—पतितातपत्रधारिपुरुषेण, पश्चात्कृतच्छत्रधारिणे-त्यर्थः, लम्बिताम्बरवाहिना—लम्बित—वेगागमनात् स्खलितमित्यर्थः अम्बर—वसन, वहति—धत्ते इति तथोक्तेन।

(१८) भ्रष्टेति।—भ्रष्ट,—दूरपतित भृङ्गारग्राही—कनकालुकापरपर्याय-कनकजलपात्रविशेषग्राही यस्य तेन, [ "भृङ्गारभङ्गारौ" (उ० १ पा० १६६ सू०) इति भञ्ज आरन्नुम् गुक इस्वे च रूपम्। "भृङ्गार कनकालुका" इत्यमरः] च्युतेति। —च्युत,—स्खलित, पथि स्थित इति यावत्, आचमनधारी—आचमनार्थजल-ग्राही यस्य तेन, ताम्यत्ताम्बूलिकेन—ताम्यन्—वैकल्या क्लिश्यन् ताम्बूलिक,—ताम्बूलदायी ताम्बूलग्राही वा यस्य तेन।

(१९) खञ्जदिति।—खञ्जन—द्रुतगमनेन विकलचरण, खड्गग्राही—असि-ग्राही यस्य तेन, कतिपयेति।—कतिपये—अल्पे प्रकाशा,—अल्पुन्नतत्वात् दृश्य-माना इत्यर्थः, ये दासेरका—उष्ट्रा ["मुनेगादश" (उ०१ पा० ९२ सू०) इति दासत एरक्, तत कन्] यस्य —प्रकाशा,—सुव्यक्ता, पादचारित्वात् सुदृश्या इति भाव ये दासेरका,—दासीपुत्रा ["क्षुद्राभ्यो वा" (४।१।१२१ पा०) इति ढक् तत कन्। "दासेरकस्तु करभे दासीपुत्र च धीवर" इति मेदिनी] तथा प्राय —बाहुल्य यस्मिन तेन।

(२०) बह्विति।—बहूनि—अनेकानि वासराणि—दिवसान व्याप्येत्यर्थः, अन्तरितेन—व्यवहितेन, परित्यक्तेन वा, अवज्ञातेनेत्यर्थ, स्नानेन—आप्लवन भोजनेन—आहारेण, शयनेन—निद्रया च, श्याम—मलिन, क्षाम—क्षीणञ्च, वपु,—शरीरं यस्य तेन, परिजनेन—परिचरेण जनेन, परिवृत—परिवेष्टितम्।

(२१) अविरलमार्गधूलिधूसरितशरीरतया शरणीकृतमिव अशरणया क्षमागतया वसुन्धरया, (२२) क्षणनिर्जयसमरशरव्रणबद्धपट्टकै दीर्घधवलै समासन्नराज्यलक्ष्मीकटाक्षपातै इव अवलोकितकायम्, (२३) अवनिपतिप्राणपरित्राणार्थमिव च शोकहुतभुजि हुतमांसे अतिकृशे अवयवे आवेद्यमानदुःखभारम्, (२४) अपगतचूडामणिनि मलिनाकुलकुन्तले शेखरशून्ये शिरसि शुचम् आरूढां मूर्त्तिमतीम् इव दधानम्,

---

(२१) अविरलेति।—अविरलाभिः—सान्द्राभिः, मार्गधूलिभिः—पथि रजोभिः धूसरितम्—ईषत्पाण्डुभूतं विवर्णीकृतम् शरीरं—देहः यस्य तस्य भावः तत्ता तया हेतुना अशरणया—अनाश्रयया क्षमागतया—क्रमपरम्परागतया वसुन्धरया—पृथ्व्या शरणीकृतमिव—शरणस्य शरणं कृतमिव आश्रितमिवेत्यर्थः ।

(२२) क्षणेति।—क्षणानां—क्षत्रियाणां विजयाय—पराभवाय विजयाय यः समरः—संग्रामः तस्मिन् शरः—शरप्रहारैः कृता ये व्रणाः—क्षतानि तेषु बद्धानि—संबद्धानि पट्टकानि—पट्टी इति बङ्गभाषया प्रसिद्धानि तैः दीर्घधवलैः—आयतश्वेतैः कटाक्षपातैरपि दीर्घधवलैः इव । समासन्नेति।—समासन्ना—समुपस्थिता या राज्यलक्ष्मीः तस्याः कटाक्षपातैः—अपाङ्गवीक्षणैः इव अवलोकितकायं—वीक्षितशरीरम् इव व्रणपट्टकेषु राज्यलक्ष्मीकटाक्षपात सम्भावनया उत्प्रेक्षा तद्गुणो व्यत्ययो इति संक्षेपः

(२३) अवनीति।—अवनिपतेः—राज्ञः पितुरिति भावः प्राणानां—जीवनस्य परित्राणार्थम् इव—परिरक्षणार्थम् इव शोकहुतभुजि—शोकाग्नौ हुतमांसे—हुतानि मांसानि—पिशितानि येषां तैः अत एव अतिकृशे—अतिक्षीणे अवयवे—अङ्गे आवेद्यमानेति।—आवेद्यमानः—ज्ञाप्यमानः दुःखभारः—शोकातिशयः यस्य तम् इति शोकाग्नौ मांसाहुतिदानेन प्राणरक्षणार्थ्यम् ।

(२४) अपगतेति।—अपगतः—अपनीतः चूडामणिः—शिरोरत्नं यस्मात् तथाभूते मलिनाकुलकुन्तले—मलिनाः,—मलदिग्धाः रूक्षाः इति यावत् आकुलाः—विक्षिप्ताः कुन्तलाः—केशाः यत्र तादृशे शेखरशून्ये—उष्णीषरहिते, मुकुटादिमालाकिरीटवर्जिते इति यावत् आपीडवर्जिते वा माल्यादिरहिते इत्यर्थः ("शिखास्वापीडशेखरौ इति माल्यविशेषे अमरः) शुचं—शोकम् आरूढाम्

(२९) पतिविविक्तामात्रावशेषेन्द्रनीलिकांशुश्यामायमानम् अचिर-श्रुतपितृमरणमहाशोकाग्निदग्धमिव श्रवणपाशम् उद्वहन्तम्, (३०) अस्फुटाभिव्यक्तव्यञ्जनेन अपि अधोमुख स्तिमित नयन-नील तारक मयूख माला खचितेन शोकप्ररूढश्मश्रुश्यामलेन इव मुखशशिना लक्ष्यमाणं, (३१) केशरिणम् इव महाभूभृद्विनिपातविह्वलनिरवलम्बन, दिवसमिव तेजःपतिपतनपरि-

---

ताम्बूलरागः,—पत्रभक्षणजनितरक्तिमा इति यावत् यस्मात् तथाभूतेन, पितृ शोकात् त्यक्तताम्बूलत्व विवर्णेन इति भावः ।

(२९) पतिविविक्तेति ।—पतिविविक्तामात्रं—विशुद्धवालात्मम्, उज्ज्वलतामात्र-मित्यर्थं, न तु अलङ्कारात्मकमिति भावः अवशेषं यस्याः तथाभूता, या इन्द्रनीलिका —नीलकान्तमणिविशेषः तस्याः अंशुभिः,—किरणैः, दुःखातिरेकात् कर्णभूषणाना-मपसारणेऽपि इन्द्रनीलमणिमात्रावशेषतया तदंशुभिरिति भावः, श्यामायमानं—श्याममिव आचरन्तम्, अत एव अचिरेति ।—अचिरश्रुतस्य—अल्पदिनमात्रश्रुतस्य, पितृमरणस्य—जनकात्ययस्य, महाशोकाग्निना—प्रबलमनुवह्निना, दग्धमिव—भस्मीभूतमिव, श्रवणपाशं—शोभनकर्णं, ["पाशः केशादिपूर्वः स्यात्समूहे कर्णपूर्वकः । सुकर्णे च ॥" इति मेदिनी । "श्रवणपाशम्" इत्यत्र "श्रवणदामम्" इति पाठान्तरम् ] उद्वहन्तं—दधानम् ।

(३०) अस्फुटेति ।—अस्फुटम्—अस्पष्टम्, ईषदित्यर्थः, अभिव्यक्तं—प्रकाशितं, व्यञ्जनं—लक्षणं, श्मश्रु इति यावत् यत्र तथाभूतेनापि, अधोमुखेति ।—अधोमुखयोः —अवनतयोः स्तिमितयोः,—निश्चलयोः, नयनयोः,—चक्षुषोः, नीलाना—कृष्णाना तारकमयूखानां—तारारश्मीनां, तारकमयूखानामिव तारक मयूखानाम् इति निदर्शना, मालया—परम्परया खचितेन,—व्याप्तेन तेन, अत एव शोकेति ।—शोकेन——दुःखेन, प्ररूढं—सञ्जातं, प्रवृद्धमित्यर्थः, चौरकर्माभावादिति भावः, यत् श्मश्रु—कूर्चं, मुखलोम इति यावत् तेन श्यामलः,—सकलङ्क इति यावत् तेन, मुखशशिना—वदनचन्द्रेण [ करणे तृतीया ] लक्ष्यमाणं—दृश्यमानम् ।

(३१) केशरिणमिव—सिंहमिव, महदिति ।—महान्—पराक्रान्त इत्यर्थः, उन्नतश्च, भूभृत्—राजा, गिरिश्च, तस्य विनिपातेन—विध्वंसेन, एकत्र,—मरणेन,

म्लानमिव श्यामीभूत, नन्दनम् इव भग्नकल्पपादप विच्छाय, दिग्भागमिव प्रोषितदिक्कुञ्जरशून्य, गिरिम् इव गुरुवज्रपातदारितं कम्पमान (३२) क्रीतमिव क्रशिम्ना, किङ्करीकृतमिव कारुण्येन दासीकृतमिव दौर्मनस्येन, शिष्यीकृतमिव शोचितव्येन, (३३) आत्मीकृतमिव आधिना, मूकीकृतमिव मौनेन, पिष्टमिव पीडया, खिन्नमिव सन्तापेन, उच्चितमिव चिन्तया, लुप्तमिव विलापेन, धृतमिव वैराग्येण, प्रत्याख्यातमिव प्रतिसङ्ख्या-

---

अन्धत्व—पतनेन ध्वस्त विह्वल—व्याकुलं निरवलम्बन—निराश्रयञ्च। दिवसमिव वासरमिव तेज इति—तेजःपते—प्रतापशाली राज्ञः सूर्यस्य च पतनेन—मरणेन अस्तगमनेन च परिम्लाना—म्लाना श्रीः—शोभा यस्य तम्, अत एव श्यामीभूत—मलिनकायम् अन्धकारमयीभूतञ्च। नन्दनमिव—इन्द्रोद्यानमिव भग्नकल्पपादप—भग्नः—विनष्टः इत्यर्थः कल्पपादपः—कल्पवृक्षवत् मनोरथपूरकः पिता यस्य तं भग्नकल्पतरुञ्च अत एव विच्छाय विगतप्रभं छायाशून्यञ्च। प्रोषितेति।—प्रोषितः—विनष्टः प्रवासं गतश्च दिक्कुञ्जरः—दिग्गजवत् यशस्वी पिता दिग्गजश्च तेन शून्य—विरहितं तम्। गुर्विति।—गुरुः—पिता वज्र इव—कुलिशमिव अनुदारकत्वादिति भावः तस्य पातेन—नाशेन अन्यत्र—गुरुणा—महता वज्रपातेन—कुलिशपतनेन दारित—पाटितम् अत एव कम्पमान—वेपमानम्। मालोपमालङ्कारः।

(३२) क्रशिम्ना—कार्श्येन क्रीतमिव—वशीभूतकृतमिव अत्यन्तकृशमित्यर्थः। कारुण्येन—शोकेन किङ्करीकृतमिव—दासीकृतम् इव अतिशोकातुरमित्यर्थः। दौर्मनस्येन—दुःखितमनस्कतया दासीकृत—भृत्यीकृत दुःखाक्रान्तमित्यर्थः। शिष्यीकृतमिव—अन्तेवासितां नीतमिव शोचितव्येन—शोकेन अति विह्वलाकारमित्यर्थः।

(३३) आत्मीकृतमिव—स्वकीयीकृतमिव आधिना—मनःसन्तापेन अतीव मनःपीडितमिति निष्कर्षः। मूकीकृतमिव—निर्वचनीकृतमिव मौनेन—तूष्णीम्भावेन निःशब्दाकारमित्यर्थः। पिष्टमिव—पेषणं नीतमिव खिन्नमिव—पक्वमिव शोकविवर्णमित्यर्थः। उच्चितमिव—गृहीतमिव सदा चिन्तापरमित्यर्थः। लुप्तमिव—अदृष्टमिव विलापेन—पारम्भवेन अविरतमनुशोचनमित्यर्थः। धृतमिव—आश्रितमिव, वैराग्येण—निर्वेदेन, अनासक्तमिति भावः। प्रत्याख्यातमिव—

नेन, अवज्ञातमिव प्रज्ञया, (३४) दूरीकृतमिव दुरभिभवत्वेन, (३५) अबोध्येन वृद्धबुद्धीनाम्, असाध्येन साधुभाषितानाम्, अगम्येन गुरुगिराम्, अशक्येन शास्त्रशक्तीनाम्, अपथेन प्रज्ञाप्रयत्नानाम्, अगोचरेण सुहृदनुरोधानाम्, अविषयेण विषयोपभोगानाम्, अभूमिभूतेन कालक्रमोपचयानां शोकेन कवलीकृतं ज्येष्ठं भ्रातरम् अपश्यत्। (३६) आवेगोद्गतद्रुतस्नेहोत्कलिकाकलापोत्क्षिप्यमाणकाय इव च परवशः समुदगात्।

---

निराकृतमिव, प्रतिपक्षज्ञानेन—विवेकिना सता, विवेकविमूढमिति भावः। अवज्ञातमिव—तिरस्कृतमिव, प्रज्ञया—बुद्ध्या, हतधियमित्यर्थः।

(३४) दुरभिभवत्वेन—दुरपनेयत्वेन हेतुना, यद्वा,—दुः—दुर्गेन, अभिभवः,—पराजयः, यस्य भावः तत्त्वम्, दुर्जयत्वेनेत्यर्थः, दूरीकृतमिव—निराकृतमिव, सर्वाभिभवनीयाकारमिति भावः।

(३५) वृद्धबुद्धीनां—स्थविरमतीनां, प्राचीनत्वात् बहुदर्शिनीनामिति भावः, अबोध्येन—प्रबोधयितुमशक्येन इत्यर्थः। साधुभाषितानां—सज्जनवचनानां, सदालापानां वा, सान्त्वनवचनानामित्यर्थः, असाध्येन—अनपनेयेन। गुरुगिरां—गुरुजनवचसाम्, अगम्येन—अविषयेण, अप्राप्येण इति यावत्, गुरुजनप्रबोधवचसाऽपि अपनयनीयेनेति भावः। शास्त्रशक्तीनां—शास्त्रज्ञानानामिति यावत् अशक्येन—असाध्येन, शास्त्रतत्त्वज्ञानसद्भावेऽपि धैर्यावलम्बनं प्रतिपादयतेति भावः। अपथेन—अविषयेण, प्रज्ञाप्रयत्नानां—प्रज्ञाया—बुद्धेः प्रयत्नाः—प्रयासास्तेषाम्, विशिष्टज्ञाने सत्यपि अधैर्यं वर्द्धयता इति भावः। अगोचरेण—अगम्येन, बन्धुजनानुरोधेनापि अनपगच्छता इति भावः। अविषयेण—अगोचरेण, विषयोपभोगानां—स्रक्चन्दनवनिताद्युपभोगानाम्, विषयसम्भोगे अनासक्तिं जनयता इत्यर्थः। कालक्रमेति।—कालक्रमेण—समयानुसारेण, ये उपचयाः,—वृद्धयः तेषाम्, अभूमिभूतेन—अनास्पदेन, कालक्रमेण समुदितः शोकः तादृक् हृदयविदारकः न भवति, यादृक् सद्यः प्रवर्द्धित इति तात्पर्यम्, सद्य एव प्रवर्द्धमानेन, न तु कालक्रमेण उपचयं गच्छता इति वा भावः। कवलीकृतं—ग्रस्तम्।

(३६) आवेगेति।—आवेगेन—सम्भ्रमेण उद्गतः,—उद्गीर्णः, द्रुतः,—समग्रः, स्नेहः,—प्रेमा, तेन यः उत्कलिकाकलापः,—उत्कण्ठातिशयः, तेन उत्क्षिप्यमाणः,—

अथ दूरादेव (३७) दृष्ट्वा देवो राज्यवर्द्धनः चिरकाल-कलितं बाष्पवेगं मुमुक्षुः सुदूरप्रसारितेन सङ्कलयन् इव सर्व्व-दुःखानि दीर्घेण दोर्दण्डद्वयेन गृहीत्वा कण्ठे मुक्तकण्ठं पुनः पतितचौमे चामे वक्षसि, पुनः कण्ठे, पुनः स्कन्धभागे, पुनः कपोलोदरे निधाय तथा तथा रुरोद, यथा सबन्धनानि इव उदपाट्यन्त हृदयानि। (३८) मृतनृपतिना राजवल्लभे-नापि प्रतिशब्दनिभेन निर्भरमिव अरुद्यत। सुचिराच्च कथ-ञ्चिदपि निर्हृष्टनयनजलः पर्जन्य इव शरदि स्वयमेव उप-

कण्ठे गीयमान, उत्ताम्यमान इत्यर्थः, काम,—देह यस्य तथाभूत इव, मरवस,—विह्वल समुत्पात—समुत्तस्थौ, समुन्नमाम वा।

(३७) दृष्ट्वा, दर्शनमिति शेष। चिरकालेति।—चिरकालकलित—चिरधृत, चिरनिरुद्धमिति यावत बाष्पवेगम्—अश्रुभर, मुमुक्षु,—त्यक्तुमिच्छु, [ 'सनाशंसभिक्ष उ" (३।२।१६८ पा०) इति सन्नन्तादुप्रत्यय ] सुदूरात—बहुदूरपदेश, प्रसारितेन—विस्तारितेन, दीर्घेण—महता, आयतेनेत्यर्थ दोर्दण्डद्वयेन—बाहुदण्डयुगलेन, सर्व्वदुःखानि—पितृशोकजनितसन्तापसमूहान, सङ्कलयन्निव—चिन्वन्निव। मुक्त कण्ठम्—उच्चैरित्यर्थ। पतितचौमे—पतित—स्खलित चौम—पट्टोत्तरीय यस्मात् तथाभूते चामे—क्षीणे। निधाय—संस्थाप्य कण्ठमिति शेष, हर्षस्य वक्षःस्थलादौ स्वमुखं संस्थाप्य इति वा। सबन्धनानि इव—सम्बन्धिबन्धनानि इव बन्धिबन्धन सहितानि इत्यर्थ। उदपाट्यन्त—उच्छेदं प्रापितानि इत्यर्थ, स्वजनेषामप्युच्छेदयन्त इति भाव, [ पाट्यते कर्म्मकर्त्तरि रूपम् ]।

(३८) मृतेति।—मृत,—प्राणवियुक्तता नीत, लोकान्तरम् इत्यर्थ नृपति,—राजा, प्रभाकरवर्द्धन इति यावत् येन तथाभूतेन, नृपति मारितेत्यर्थ, राजवल्लभेन—मृतस्य राज्ञ प्रियजनेन का कथा वल्लभजनस्य, सर्व्वैरपि अविशेषेण इत्यपकारार्थं। प्रतिशब्दनिभेन—प्रतिध्वनिसदृशेन, राज्यवर्द्धनरोदनस्येति भाव, निर्भरमिव—अतिमात्रमिव। सुचिराच्च इति चकारेण पूर्व्ववाक्ये सम्बन्धाभावेऽपि इत पुन राज्य-वर्द्धनस्यैव सम्बन्धस्तु स्थाप्यते, निर्हृष्टनयनजल,—निःशेष यथा तथा, हृष्टानि—पातितानीत्यर्थ, नयनजलानि—नयनयो,—नेत्रयो, जलानि—अश्रूणि येन तथाभूत, यद्वा,—निर्हृष्टानि नयनयो जलानि अश्रूणि जलधरजलानीव येन, [ इत्युपमित-

शशाम। उपविश्य (३९) परिजनोपनीतेन तोयेन तत्कर-नखमयूखपुञ्जतया महाजलप्लवजायमानफेनलेखमिव पुनः पुनः प्रमृष्टमपि (४०) पक्ष्माग्रसङ्गलग्नबिन्दुवृन्दसन्दोहोन्मेषमुषित-दर्शनं कथङ्कथम् अपि चक्षुरचालयत्। (४१) ताम्बूलिकोप-स्थापितेन च वाससा चन्द्रातपशकलेनेव उष्णबाष्पदग्धं वदनम् उन्ममार्ज। तूष्णीमेव च चिरं स्थित्वा उत्थाय स्नानभूमिम् अगात्। तस्याञ्च स्थित्वा (४२) विभूषं विवस्त्रश्लथकुन्तलं मौलिम् अनादरात् निष्पीड्य, सावशेषमन्युस्फुरितेन

---

शमास ] पर्जन्य इव—निशितनिर्घातमुमोच इव इन्द्र इव वा, स हि वर्षं कारयति, ("पर्जन्यौ रसदब्देन्द्रौ" इति विश्वप्रकाशः) उपशशाम—शान्तिं लेभे, वर्षणव्यापारान् न्यवर्ततेत्यर्थः।

(३९) परिजनोपनीतेन—परिचारकसमुपस्थापितेन तोयेन—जलेन। तदिति।—तस्य—राज्यवर्द्धनस्य, करनखानां—हस्तनखराणां, मयूखपुञ्जः,—किरणराजिः, स्वच्छ इति भावः यस्मिन् तस्य भावः तत्ता तया हेतुना महत्—महाजले—जलराशौ, नेत्रसलिले इति भावः, प्लवेन—सन्तरणेन, जायमाना—उत्पद्यमाना फेनलेखा—फेनराजिः यस्मिन् तथाभूतमिव प्रमृष्टमपि—प्रमार्जितमपि।

(४०) पक्ष्मेति।—पक्ष्मणां—नेत्रलोम्नाम्, अग्रेषु,—प्रान्तेषु, सङ्गलग्न,—मिलितस्य, बिन्दव—पृषता ("पृषन्ति बिन्दुपृषताः पुमांसः" इत्यमरः) तेषां वृन्दे,—समूहे, सन्दोह,—प्रसर, उन्मेष,—उन्मीलन, तेन मुषित—हृत दर्शनम्—अवलोकनव्यापारः यस्य तत्। अचालयत्—प्राचालयत वेगवता नयनवारिधारा-प्रवाहेन दृष्टम् कथञ्चित् सञ्चालितमिति भावः।

(४१) ताम्बूलिकेन—ताम्बूलवाहिना, उपस्थापितेन—उपनीतेन, वाससा—वस्त्रेण, चन्द्रातपशकलेनेव—चन्द्रमयूखखण्डेनेव, वितानखण्डेनेव वा, शुभ्रेण अत्यन्तशीतलेन इति भावः, उष्णेन—तप्तेन, बाष्पेण—अश्रुणा दग्धम्—व्याप्तम् ["उष्णबाष्पदग्धम्" इत्यत्र "उष्णोष्णबाष्पदग्धम्" इति पाठे—उष्णोष्णेन—अतितप्तेनेत्यर्थः] वदनं—मुखम्, उन्ममार्ज—प्रमृष्टवान्।

(४२) विभूषं—भूषारहितम्। विवस्त्रेति।—विवस्त्रा,—अर्द्धं विना, इत्यर्थ,

जिजीविषता इव (४३) जलधौतसुभगम् आत्मानमपि चुचुम्बिषता इव अधरेण, चालितस्य चक्षुषः (४४) श्वेतिम्ना च शारदशशिकरविकसितविषदकुमुदवनदलावलिबलिविक्षेपैः इव दिग्देवताऽर्चनकर्म्म कुर्व्वाणः, (४५) चतुःशालवितर्द्दिकायां नीचापाश्रयविनिहितैकोपबर्हायां पर्य्यङ्किकायां निपत्य जोषम् अस्थात्।

देवोऽपि हर्षस्तथैव स्नात्वा (४६) धरणितलनिहितकुथा-

---

श्लथाः,—विस्रस्ताः, कुन्तलाः,—केशा यत्र तथोक्तं, मौलिं—शिरःस्थकेशान्, धम्मिल्लकलापम् इत्यर्थः, ("चूडा किरीटं केशाश्च संयता मौलयस्त्रयः" इत्यमरः) अनादरात्—अयत्नात् महागुरोर्निपातादिति भावः, निपीड्य—निष्पीड्य, निर्जलं विधायेत्यर्थः, सपदिपदमन्युस्फुरितेन—सावेगेन—अवस्थितेन मन्युना—शोकेन, स्फुरितः,—स्पन्दित इत्यर्थः तेन, जिजीविषता इव—जीवितुमिच्छता इव, शोकात्मिदा स्वक्लेशादिति भावः।

(४३) जलेति।—जलेन—तोयेन, धौतः,—क्षालितः, अत एव सुभगः,—सुन्दरः तम्, आत्मानम्—स्वम्, उत्तरोष्ठेन अधरोष्ठमिति भावः, चुचुम्बिषता इव—चुम्बितुमिच्छता इव।

(४४) श्वेतिम्ना—धावल्येन, शारदेति।—शारदः,—शरत्कालीयः, शशिकरः,—चन्द्रकरः तद्वत् तेन वा विकसितानि—प्रस्फुटितानि, विषदानि—स्वच्छानि, धवलानि इत्यर्थः, कुमुदानि—उत्पलानि तेषां वनानि—समूहाः, तेषां दलावलयः,—पत्रराजय एव बलिविक्षेपाः,—पूजोपहारप्रक्षेपाः तैः इव दिग्देवताऽर्चनकर्म्म—दिग्देवतानां—दिगधिष्ठात्रीणां देवतानाम्, अर्चनकर्म्म—पूजनम्।

(४५) चतुःशालवितर्द्दिकायां—चतुःशाले—चतुर्दिगवस्थितगृहमण्डल्यां, या वितर्द्दिका—वेदिका तस्यां, ("स्याद्वितर्द्दिस्तु वेदिका" इत्यमरः) नीचेति।—नीचेषु—निम्नेषु, तलभागेष्विति यावत्, अपाश्रयस्य—चन्द्रातपस्य, विनिहितः,—स्थापितः, एकः,—अद्वितीयः, यद्वा,—एकः,—केवलः, न तु आस्तरणादिकं किञ्चिदासीदिति भावः, उपबर्हः,—उपधानं यस्यां तथोक्तायाम्। ("उपधानन्तूपबर्हः" इत्यमरः) जोषं—तूष्णीं, ("तूष्णीमर्थे सुखे जोषम्" इत्यमरः) अस्थात्—स्थितः। इह यथावद्गुरुजनतिरोधाने महापुरुषकर्त्तव्यवर्णनदर्शनात् स्वभावोक्तिरलङ्कृतिः।

(४६) धरणीति।—धरणितले—भूतले, निहितायाः—स्थापितायाः, कुथायाः

प्रसारितमूर्त्तिः अदूरे एव अस्य तूष्णीमेव समवातिष्ठत। दृष्ट्वा दृष्ट्वा दूयमानमानसम् अग्रजन्मानं समस्फुटदिव अस्य सहस्रधा हृदयम्। (४७) औरसदर्शनं हि यौवनं शोकस्य। लोकस्य तु नरपतिमरणदिवसादपि दारुणः स बभूव दिवसः। सर्व्वस्मिन् एव नगरे न केनचित् (४८) अपाचि, न केनचित् अस्नायि, न अभोजि, सर्वत्र सर्वेण अरोदि। केवलम् अनेन क्रमेण अतिचक्राम दिवसः। (४९) स च प्रत्यग्रत्वष्टृटङ्कतष्टतनुः इव वहद्बहलरुधिररसमांसच्छविः अपर-

---

—वर्णकम्बली, चित्रितकम्बलविशेषे इत्यर्थः, ("कुथे स्त्रीपुंसयोर्वर्णकम्बली पुंसि वर्णिके" इति मेदिनी) प्रसारिता—विस्तारिता, मूर्त्तिः,—तनुः येन तथाभूतः। अदूरे—निकटे। दूयमानमानसम्—क्लिश्यमानचित्तम्। अग्रजन्मानं—ज्येष्ठम्। समस्फुटदिव—अदीर्यदिव, विदीर्णमभवदिवेत्यर्थः।

(४७) औरसदर्शनं—सहोदरदर्शनमिति भावः, यौवनम्—प्रत्युद्दीपकमिति भावः, शोकस्य—पितृमरणजन्यस्य मन्योः। दारुणः,—भीषणः, क्लेशकर इत्यर्थः। स दिवसः,—राज्यवर्द्धनागमनदिनम् इत्यर्थः।

(४८) अपाचि—रन्धनं कृतम्। अस्नायि—स्नातम्। अभोजि—भुक्तम्। अरोदि—रुदितम्। क्रमेण—विधानेन, प्रकारेणेत्यर्थः, शोकविलापनेनेति भावः, अतिचक्राम—गतः।

(४९) स च—प्रसिद्ध इत्यर्थः प्रत्यग्रेति।—प्रत्यग्रम्—अभिनवं यथा तथा, त्वष्टा—विश्वकर्म्मा देवशिल्पिना इत्यर्थः, ("देवशिल्पिन्यपि त्वष्टा" इत्यमरः) टङ्केन—पाषाणदारणास्त्रविशेषेण, ("टङ्कः पाषाणदारणः" इत्यमरः) तष्टा—घृष्टा, तनूकृता इत्यर्थः, [तक्षतेः कर्म्मणि निष्ठाया रूपम्। "तष्टं त्वष्टौ तनूकृते" इत्यमरः] तनुः,—शरीरं यस्य तथाभूतः इव निस्तेजा इवेत्यर्थः, पुरा विश्वकर्म्मणः सुता संज्ञा सूर्य्यगृहिणी पत्युस्तेजोऽतिरेकम् असहमाना विसोढुं पितरम् उपेत्य न्यवेदयत। स तु कन्यायाः क्लेशपरिजिहीर्षया सूर्य्यं जामातरं शाणयन्त्रे निधाय चीर्णतेजस्कम् अकरोत् इति पुराणवार्त्ता अत्र अनुसन्धेया, वहदिति।—वहन्—निःसरन् बहलः,—बहुलः, रुधिररसः,—रक्तद्रवः यस्मात् तादृशः, यत् मांसं—पिशितं, तस्येव छविः,—कान्तिर्यस्य तथोक्तः, रक्तवर्णः इति यावत्, अतोच्चकर इति भावः,

धावकाण श्रियः। (५३) प्रकटकलङ्कम् उदयमानं विशङ्कट-विषाणोत्कीर्ण-पङ्क-सङ्कर-शङ्कर-शक्कर-ककुद-कूटसङ्काशम् अकाशत आकाशे शशाङ्कमण्डलम्।

अस्याञ्च (५४) वेलायाम् अनतिक्रमणीयवचनैः उपसृत्य प्रधानसामन्तैः विज्ञाप्यमानः कथङ्कथमपि अभुङ्क्त। (५५) प्रभातायाञ्च शर्वर्यां सर्वेषु प्रविष्टेषु राजसु समीपस्थितं हर्षदेवम् उवाच,—"तात! भूमिरसि गुरुनियोगानाम्। (५६) शैशव एव अग्राहि गुणवत्पताका इव भवता तातस्य

---

श्रियः,—शोभायाः, शोभाया इति भावः, काञ्चिवेति।—काञ्चिकायाः—रशविशेषस्य, काञ्ची—रशना, तस्याः किङ्किणीजाल—क्षुद्रघण्टिकानिचयः, चापकाण्डेव—शरायेव। तदानीं प्रदोषस्यागमात् कुमुदानां विकासेन तस्याः आविर्भावोऽभूत्, तेन हि तस्याः किङ्किणीरणरणमुत्प्रेक्षितमिति बोद्धव्यम्।

(५३) प्रकटकलङ्क—प्रस्फुटलाञ्छनम्, उदयमानम्—उद्गच्छत्, विश-ङ्कटेति।—विशङ्कट—विशाल ("विशङ्कट पृथु बृहत् विशालं पृथुलं महत्" इत्यमरः) विषाण—शृङ्ग, तेन उत्कीर्ण,—उद्धृत, यः पङ्क,—कर्दम, तेन सङ्कर,—सङ्गः यस्य तथाभूत शङ्करस्य—हरस्य, शक्करशङ्करस्य—दान्तवृषभस्य, यत् ककुदकूटम्—स्कन्धशिखराग्रभाग ग्रीवास्थमांसपिण्डमित्यर्थः, "भुँटी" इति बङ्गभाषया प्रसिद्ध, ("प्राधान्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियाम्" इत्यमरः) तत्सङ्काश—तत्सदृश, मध्ये श्यामश्च धवलवृषभककुदमिवेति भाव, शशाङ्कमण्डल—चन्द्रबिम्बम्, आकाशे—गगने, अकाशत—व्यद्योतत।

(५४) वेलायां—समये। अनतिक्रमणीयवचनैः,—अलङ्घ्यवाग्भिः। विज्ञाप्य-मानः,—अनुरुध्यमानः। कथङ्कथमपि—अतिकष्टेन इत्यर्थः, आत्मच्छाया सत्यामपि माननीयस्य पितुः प्रियतमानस्य आसनमनुल्लङ्घ्य इति भावः।

(५५) शर्वर्या—निशायाम् ("अथ शर्वरी। निशा निशीथिनी रात्रि" इत्यमरः) प्रभातायां—भातु प्रवृत्तायाम्, अवसानायामिति भावः। राजसु—मित्रनृपसमूहेषु सामन्तराजवृन्देषु च। उवाच, राज्यवर्द्धन इति शेषः। तात—वत्स! भूमि,—पात्रम्। गुरुनियोगानां—गुरुजनादेशानाम्।

(५६) शैशवे—बाल्ये, अग्राहि—गृहीता, निर्दिष्टेति यावत्, गुणवत्पताका

चित्तवृत्ति। यतो भवन्तमेवविधं (५७) विधेय विधिविधानोपनतनैर्घृण्यम् इद किमपि विभणिषति मे हृदयम्। (५८) न अवलम्बनीया बालभावसुलभा प्रेमविलोमा वामता। (५९) वैधेय इव मा कृथा प्रत्यूहम् इहितेऽस्मिन्। न खलु न जानासि लोकवृत्तम्। (६०) लोकवयवतारि मान्धातरि मृते किं कृतं पुरुकुत्सेन? (६१) भूलतादिष्टाष्टादशद्वीपे दिलीपे वा रघुणा?

---

व्रत—गुणशालिनी वञ्चयन्ती इव तातस्य—पितुः चित्तवृत्तिम्—मनोऽभिप्रायम्, हृदयस्थित वा निरन्तरं तदनुमतावाराधनुवर्तनात् इति भावः।

(५७) विधेय—वचनेस्थित ("विधेयो विनयग्राही वचनेस्थित आश्रव" इत्यमर) विधीति—विधः—दैवस्य विधानेन—विलसनेन उपनतम्—उपास्थितं नैर्घृण्यम्—निष्करुणत्वं वैराग्यमिति भावः यस्य तथाभूतम् इदं मे—मम, हृदयं चित्तं किमपि—यत्किञ्चित् इत्यर्थः विभणिषति—अभिधातुमिच्छति।

(५८) बालभावसुलभा—शैशवसहजा। प्रेमविलोमा—प्रेम्णः—अनुरागस्य विलोमा—विरोधिनी वामता—प्रतिकूलता अवलम्बनीया—न ग्रहणीया।

(५९) वैधेय इव—मूर्ख इव ("मूढवैधेयबालिशा" इत्यमर) अस्मिन्—इहितम्—ईहिते—वाञ्छिते प्रत्यूहं विघ्नं ("विघ्नोऽन्तराय प्रत्यूह स्यात्" इत्यमर)। लोकवृत्तम्—लोकाचारं न जानासि—न जानासि इति न, जानास्येव। द्विनञ्‌प्रयोगात् नकारद्वय वाक्यार्थनिश्चयं सूचयति इति शब्दम्।

(६०) लोकवयवतारि—लोकसेव्यतायामनुगते इति भावः मान्धातरि—तदाख्ये नृपतौ पुरुकुत्सेन—तत्पुत्रेण इत्यर्थः किं कृतम्?—राज्यमेव गृहीतं न तु वनमाश्रितमिति भावः। एवमुत्तरत्रापि बोध्यम्।

(६१) भूलतादिष्टा—भ्रूसंज्ञया—भ्रूभङ्गात् भाव आदिष्टानि—आज्ञप्तानि अष्टादश द्वीपानि येन तथाभूते अष्टादशद्वीपाधिपतौ इति भावः ननु सप्तद्वीपा हि धरणी श्रूयते जम्बुद्वीपादीनि सप्तैव समुद्रे पारसाद्यानि जम्बुप्रभृतीनि भवनानि भवन्तीति सत्यमेव द्वीपानामष्टादशत्वं महाकविप्रयोगे यथा हि—"अष्टादशद्वीपनिखातयूप" इति रघौ कालिदास, दिलीपे—तदाख्ये इक्ष्वाकुवंश्ये राजनि मृते इति शेषः रघुणा—तत्पुत्रेण इत्यर्थः किं कृतम्? इति पूर्ववदन्वयः।

(६२) महासुरसमरमध्याध्यासितविदशरथे दशरथे वा रामेण ? (६३) गोष्पदीकृतचतुरुदन्वदन्ते दुष्मन्ते वा भरतेन ? तिष्ठन्तु तावदेते, (६४) तातेनैव शतसमधिकाध्वरधूमविसरधूसरितवासववयसि (६५) सुगृहीतनाम्नि तत्रभवति परासुतां गते पितरि किं न अकारि राज्यम् ? यत्र किल शोकः (६६) समभिभवति, तं कापुरुषम्

(६२) महासुरेति।—महासुराणां—दैत्यप्रवराणां, समरमध्ये—रणाभ्यन्तरे, अध्यासित,—स्थापित, अधुष्ठित इत्यर्थः, त्रिदशरथ,—देवरथ येन तथाभूते, इन्द्रसाहाय्यार्थम् असुरान् हन्तुम् अध्यासितदेवरथे इति भावः दशरथे, सते इति शेषः, रामेण—तत्सुतेन इत्यर्थः, किं कृतम् ? इति पूर्वेणान्वयः।

(६३) गोष्पदीति।—गोष्पदीकृता,—गो पद, प्रमाणं, गाव पद्यन्ते यस्मिन् देशे इति वा गोष्पद—गो पदजात गर्त इत्यर्थः, ["गोष्पद—" (६।१।१४५ पा०) इत्यादिना प्रमाणसेवितार्थयोरत्र निपातनम्] अगोष्पद गोष्पद कृता गोष्पदीकृता, —गोष्पदवत् तुच्छीकृता इत्यर्थः, अवहेलयैव उल्लङ्घिता इति भावः, चतुर्णाम् उदन्वता —समुद्राणा, अन्ता,—सीमा येन तथाभूते, ससागरधराऽधीश्वरे इत्यर्थः, दुष्मन्ते—चन्द्रवंशीयप्रसिद्धनृपविशेषे, सते सति इति शेषः, भरतेन—तत्पुत्रेण इति यावत्, किं कृतम् ? इति पूर्वेणान्वयः। तिष्ठन्तु—दूरे सन्तु, बहुदीर्घकालिकत्वादेतेषामिति भावः, एते—रामभरतादयः।

(६४) तातेन—पित्रा, प्रभाकरवर्द्धनेन इति भावः, शतेति।—शतात्—शतसङ्ख्येभ्य, समधिका,—अतिरिक्ता, अध्वरा,—यज्ञा, अश्वमेधादय इति यावत्, तेषां धूमविसरे,—धूमावस्तारे, यज्ञाग्निसमुत्थधूमराशिभिरित्यर्थः, धूसरित—मलिनीकृत इत्यर्थः, वासव—इन्द्र एव, वयः,—पक्षी येन तथाभूते ("वय पक्षिणि बाल्यादौ यौवने च नपुंसकम्" इति मेदिनी) धूमोद्गमेन उच्चस्था पक्षिणः धूसरीक्रियन्ते अस्य तु यज्ञानां तथा धूमोद्गतिर्जाता, यथा स्वर्गाधिपतिरपि धूसरताम् अयासीत् इति भावः।

(६५) सुगृहीतनाम्नि—सुष्ठु गृहीत, जनैरिति शेषः, नाम यस्य तथाभूते, प्रातः स्मरणीये इत्यर्थः, तत्रभवति—पूज्ये, पितरि—अस्मत्पितामहे इति भावः, परासुतां—पञ्चत्व, गते—प्राप्ते सति राज्यं किं न अकारि ?—न कृतं किम् ?

(६६) समभिभवति—परिभवति, आयत्तीकरोतीत्यर्थः। कापुरुष—पुरुषा॰

आचक्षते शास्त्रविदः। स्त्रियो हि विषयः शुचाम्। तथाऽपि किं करोमि, स्वभावस्य सेयं कापुरुषता वा, (६७) स्त्रैणं वा, यदेवम् आस्पदं पितृशोकहुतभुजो जातोऽस्मि। मम हि (६८) भूभृति पर्यस्ते निरवशेषतः प्रस्रवणानि इव स्रुतानि अश्रूणि, अस्तमिते (६९) महति तेजसि अन्धकारीभूतदशाशस्य प्रनष्टः प्रज्ञालोकः, प्रज्वलितं हृदयम्, (७०) आत्मदाहभीत इव स्वप्नेऽपि न उपसर्पति विवेकः, बलीयसा सन्तापेन (७१) जातुषमिव विलीनम् अखिलं धैर्यं, (७२) पदे पदे दिग्धशरोपाहता इव हरिणी मुह्यति मतिः, पुरुषद्वेषिणी इव

---

धनम्। विषय —देश, पात्रमित्यर्थः, शुचा—शोकानां स्त्रिय एव शोकविवशा भवितुमर्हन्ति न तु पौरुषभूषिता पुरुषा इति भाव। तथाऽपि—स्त्रीणामेव शोकविषयत्वे सत्यपि। स्वभावस्य—प्रकृते। कापुरुषता—नीचता।

(६७) स्त्रैणं—स्त्रीसम्बन्धितम्। आस्पद—पात्र, पीठमित्यर्थः। पितृशोकहुतभुज —पितृशोकानलस्य।

(६८) भूभृति—राज्ञि, पर्वते च पर्यस्ते—विध्वस्ते, निरवशेषत,—कार्त्स्न्येन, प्रस्रवणानि इव—निर्झरा इव, स्रुतानि—गलितानि।

(६९) महति—प्रभूते, तेजसि—तेजःसम्पन्ने पितरि सूर्ये च। अन्धकारीभूतदशाशस्य—अन्धकारीभूता —ध्वान्तसमाच्छन्ना इव, दश आशा,—दिशो यस्य तादृशस्य, ममेति पूर्वेणान्वय, दशापि दिशोऽन्धकारमयो इव पश्यामि इत्यर्थ। प्रनष्ट,—अदर्शनं गत, विलुप्त इत्यर्थ, प्रज्ञा—बुद्धि एव आलोक,—उद्योत।

(७०) आत्मेति।—आत्मन,—स्वस्य, दाहात्—ज्वलनात्, भीत,—जाताशङ्क, प्रज्वलितहृदये उपस्थिता इति भाव। उपसर्पति—उपगच्छति, आविर्भवतीत्यर्थ, विवेक,—पृथगात्मता, इदं तथ्यमिदमतथ्यम् इत्यादि विचारवती बुद्धिरित्यर्थ।

(७१) जातुषमिव—लाक्षानिर्मितमिव, [जतुनो विकार अण् पुगागम। "लाक्षा राक्षा जतु क्लीबे यावोऽलक्तो द्रुमामय" इत्यमर] विलीन—विलय गतम्।

(७२) पदे पदे—प्रतिपदं, प्रत्येकशब्दोच्चारणे, प्रत्येकपदक्षेपणे च इत्यर्थः, दिग्धेति।—दिग्धेन—विषाक्तेन, शरेण—इषुणा, शरेणेत्यर्थः, ("कलम्बमार्गणशराः

दूरत एव भ्रमन्तो परिहरन्ति स्मृति, अम्बा इव तातेनैव सह गता धृति, (७३) वार्द्धुषिकप्रयुक्तानि इव वित्तानि प्रतिदिवसं वर्द्धन्ते दुःखानि, (७४) शोकानलधूमसम्भारसम्भूताम्भोधरभरितमिव वर्षति नयनवारिधाराविसरं शरीरम्। सर्व्वं (७५) पञ्चजनं पञ्चत्वमुपरतं प्रयाति, वितथमेतद्वदति बालो

पत्री रोप इषुर्द्वयोः" इत्यमरः) यद्यपि चाथ विषाक्ते दिग्धलिप्तकौ" इत्यमर वचनात् दिग्धशब्देनैव विषाक्तो बाणो लभ्यते तथापि पुनः रोपपदग्रहणं तस्य कर्ति-भीषणत्वद्योतनायमिति बोद्धव्यम्। आहतेव—विद्धेव मुह्यति—मोहं गच्छति। पुरुषं (?) खगी इव—पुरुषं दृष्ट्वा पलायनपरा कामिनी इव इत्यर्थः। भ्रमन्तो—चलन्तो पलायमाना इत्यर्थः। परिहरन्ति—परित्यजन्ति मामिति शेषः। अम्बा इव—माता इव। धृति—सन्तोषः।

(७३) वार्द्धुषिकेति।—वृद्धया—कलान्तरेण प्रयुक्तेभ्यः धनेभ्यः लाभरूपया जीवतीति वार्द्धुषिकः—वृद्ध्याजीवः कुसीदजीविवणिक् इत्यर्थः ["प्रयच्छति गर्ह्यम्" (४।४।३० पा०) इति ठक् ठनि "वृद्धेर्वृधुषिभावो वक्तव्यः" (वा०) इति वृधुषि इत्यादि रूपम्। "कुसीदको वार्द्धुषिको वृद्ध्याजीवश्च वार्द्धुषिः" इत्यमरः] तेन प्रयुक्तानि—कालम् यावत् कार्य्ये ऋणादिरूपे नियुक्तानि इव वित्तानि—धनानि। वर्द्धन्ते—वृद्धिं गच्छन्ति।

(७४) शोकेति।—शोकानलस्य—शोकाग्नेः धूमसम्भारेण—धूमनिवहेन, सम्भूतः—सञ्जातः योऽम्भोधरः—मेघः तथा हि मेघदूते—"धूमज्योतिः सलिल-मरुतां सन्निपातः क्व मेघः" इति कालिदासः तेन भरितमिव—आपूरितमिव, शरीरं—देहः अनेन विशेषणेन तात्पर्य्यवशात् गगनमिति च आयातम्, एतेन शरीरस्य उत्साहशक्त्यादिशून्यता व्यज्यते। नयनवारिधाराविसरं—बाष्पधारासन्तानं, वर्षति—मुञ्चति [दृष्टोत्प्रेक्षोत्थापितपूर्व्वपदार्थस्य उत्तरवाक्यगतेन पदार्थेनानुगुण्यादलङ्कारसङ्कीर्णमिति सङ्क्षेपः]।

(७५) पञ्चजनं—पञ्चभूतनिर्मितो मानवः ("स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नराः" इत्यमरः) उपरतं—मृतं सन् पञ्चत्वं—पञ्चानां क्षित्यादीनां भावः तस्य पञ्चसु पृथिव्यादिषु विलयकारितामित्यर्थः ("पञ्चत्वं पञ्चतां भावे प्राणानामत्यये ऽपि च" इति मेदिनी) प्रयाति—गच्छति। वितथम्—असत्यम्। बालः,—मूढः अज्ञः इति यावत् ("मूर्खेऽर्भकेऽपि बालः स्यात्" इत्यमरः)।

लोकः; (७६) तातो हुताशनतामेव केवलमापन्न', येनैवं दहति माम्। इदमसाम्परायिकमिव हृदयमवष्टभ्य स्थितः शोको दुर्निवार वाडव इव वारिराशिं, पविरिव पर्व्वतं, क्षय इव चपाकरं, राहुरिव रविं, दहति दारयति तनूकरोति कवलयति। न शक्नोति मे हृदयं तादृशस्य सुमेरुकल्पस्य महापुरुषस्य विनिपातम् अश्रुभिरेव केवलैः अतिवाहयितुम्। राज्ये (७७) विषे इव चकोरस्य मे विरक्तं चक्षुः।

---

(७६) कथं वितथं वदति? इत्यत आह तात इति।—तातः,—पिता, [केचित् "तात" इत्यत्र "तत" इति पठित्वा "पञ्चसु पृथिव्यादिषु लयात् पुरुष सादृश्यं प्रतिपद्यते इत्युक्तेः ततः, ततः,—इत्याद्यखिलभूतव्याप्तकाशादस्यमादित्यर्थ" इति व्याचक्षु] हुताशनताम्—अग्नित्वमेव, न तु पृथिव्यादित्वमित्येवकारार्थ आपन्नः,—प्राप्तः केवलं हुताशने एव लयं गत इत्यर्थः, येन—हुताशनभावेन इत्यर्थः। इदं तादृशस्य साधनस्यापकृतत्वाभावात् अनुमितमत्र इति प्रतीयमानोत्प्रेक्षाऽत्र चमत्कारातिशयाय। असाम्परायिकमिव—अयुद्धमिव असाक्षिकं वा, यथा,—असाम्परायिकं—साम्परायिकं—युद्धं ("युद्धमायोधनं। समीकं साम्परायिकम्" इत्यमरः) तेनाऽर्हति इति असाम्परायिकं युद्धानर्हं अभयमित्यर्थः, इव हृदयं—चित्तम्, अवष्टभ्य—आक्रम्य स्थितः,—विशेषेण स्थितः, शोकः—मन्युः दुर्निवारः,—दुर्निवार्य्यः, यो हि भीतः, स कथं स्थितं निवारयितुमर्हत्? इति भावः, वाडव इव—वडवानल इव वारिराशिं—समुद्रं पविरिव—वज्रमिव, ("ह्रादिनी वज्रमस्त्री स्यात् कुलिशं भिदुरं पविः" इत्यमरः) क्षय इव—राजयक्ष्मा इव चपाकरं—चन्द्रं दहति—ज्वलयति दारयति—भिनत्ति, द्विधा करोति इत्यर्थः विदारयति वा तनूकरोति—कृशीकरोति कवलयति—ग्रसति, सर्व्वत्र मामिति शेषः। "वाडव" इत्यादिवाक्येषु "दहति" इत्यादिक्रियाणां क्रमेणान्वयः। सुमेरुकल्पस्य—सुमेरुपर्व्वतनिभस्य, सत्त्वगुरुत्वात्, आश्रिताभीष्टपूरकत्वाच्चेति भावः। अतिवाहयितुं—यापयितुं क्षपयितुमित्यर्थः, व्यवधानयितुमिति वा, शोकप्रवाहे न महागिरीन्द्रा परिवाहनार्हा इत्याशयः।

(७७) विषे इव—गरले इव, ["इवेन समासो विभक्त्यलोपश्च" (वा०) इति एकपदीभावः, सन्धिरेव केवलं पाठान्तरे दृश्यते इति] चकोरस्य—पक्षिविशेषस्य,

( ७८ ) वहुमृतपटावगुण्ठना रक्तितरङ्गा जनङ्गमानामिव वग वाद्याम् अनार्या श्रिय त्यक्तुमभिलषति मे मन । क्षणमपि ( ७९ ) दग्धगृहे शकुनिरिव न पारयामि स्थातुम । सोऽह मिच्छामि, मनसि (८०) वाससीव सुलग्न खेदमलमिदम अमले निखरिशिखरप्रस्रवणस्वच्छस्रोतोऽम्बुभि क्षालयितुम आश्रमपदे।

---

विये हृष्टे च शरीरस्य अचिरेणैव विरज्यते इति मतिरिति । विरक्तम्—अनासक्त रक्तिम-विरहितमन्यच ।

( ७८ ) बाहृति ।—बहव —अनेके मृतानां—शवानाम्, एतत्र—युद्धे हताना प्रतिपक्षवीराणाम् अन्यत्र—कारणान्तरेण गतजीवाना जनतामाश्चाण्डालानाम भाव पटा,—वस्त्राणि अवगुण्ठनानि—मलशाच्छादनानि शिरोवेष्टनानि च यस्या ता रक्तितरङ्गा—रञ्जित —शोणितीकृत रङ्ग —रणभूमि यया ता, ( "काम्बयेऽपि च रङ्गो ना राग नृत्य रणावनौ इति मेदिनी, अन्यत्र—रञ्जित —अनुरक्तीकृत रङ्ग —नृत्यसमाज यया तथोक्ता जनङ्गमाना—चाण्डालाना [ "गमश्च ( ३।२।४७ पा० ) इति खाच "अरुर्द्विषत —" ( ६ ३ ६७ पा० ) इत्यादिना मुम् । "चण्डालप्लवमातङ्गदिवाकीर्तिजनङ्गमा " इत्यमर ] वग्वाद्यामिव—वशानु क्रमण बहुभोग्यामवलुम्पका चाण्डालीमिवेत्यर्थ कौलीन्यराहुत्याश्च यद्वा — वग्यन—वंशदण्डेन वाद्या—ताड्या वंशाग्निश्रितद्रव्यमपनीयेतामित्यर्थ अनार्याम् —अनार्यां नीचप्रकृतिमित्यर्थ अन्यत्र बहुजनपरिभोग्यत्वात्, अन्यत्र —नीचाश्रयत्वात् श्रियं—सम्पदं राजलक्ष्मीमित्यर्थ आभाति ।

( ७९ ) दग्धगृहे भस्मीभूतावासे निष्परित्यक्तत्वात् विगतश्रीके इति भाव शकुनारिव—गृहपतितपक्षीव गृहचटकेनेव इत्यर्थ [ "शकुनारिव" इत्यत्र "शकुन्तरिव" इति पाठोऽपि स एवार्थ "गृहसारिका" इति केचित ]।

( ८० ) वाससि इव—वसने इव सुलग्न—ससक्तम इद खेदमल खेद —ससारेषु अनुराग मलमिव—पुरीषमिव स्वदेशप्रासादसञ्चयमिव [illegible] अन्यत्र — स्वेदस—तैलादि वहनग्रस्तेति भाव मल—का लुष्यम्, अमले निर्मले शिखरीति ।—शिखरिण —पर्वतस्य शिखरेषु—शृङ्गेषु यानि प्रस्रवणानि— निर्झरा तेषा स्वच्छानि—विशुद्धानि स्रोतांसि—प्रवाहा तेषाम् अम्बूनि— जलानि तै, क्षालयितु—शोधयितुम्, आश्रमपदे—तपोवने, यथा निर्मलपयोभि

(८१) अतस्त्वम् अन्तरितयौवनसुखाम् अनभिमतामपि जरामिव पुरुः आज्ञया गुरोर्गृहाण मे राज्यचिन्ताम्। (८२) त्यक्तसकलबालक्रीडेन हरिणा इव दीयताम् उरो लक्ष्म्यै। परित्यक्तं मया शस्त्रम्" इत्येवमभिधाय खड्गग्राहिणी हस्तात् आदाय निजं निस्त्रिंशम् उत्ससर्ज धरण्याम्।

---

मत्तानसं वास शुष्यति, तथा निष्कामाराधनमेव मे वनमनःशोधकं भवि-ष्यतीत्याशय ।

(८१) अत,—आश्रमगमनाभिलाषात् ["अत" इत्यत्र "यत" इति पाठे,—यस्मा इच्छाया, यस्मादभिलाषादित्यर्थ ]। अन्तरितेति ।—अन्तरित—व्यवहितं, दूरीकृतमित्यर्थं, यौवनसुख—तारुण्योचितविषयोपभोगानन्द यस्या तथाविधा, वर्जितयौवनोचितविषयसम्भोगसुखामित्यर्थं, एकत्र,—प्रजानां हितचिन्तायां राज्य-रक्षणचिन्तायाञ्च सदा अवधानतोचित्यात्, अन्यत्र—यौवनाबाधानुकतया उपभोग-सामर्थ्याभावादिति भाव अत एव अनभिमताम—अनभिलषिताम्, अप्रिया-मित्यर्थ, जरामिव—वलिपलितादिना कायशैथिल्यापादकदशाविशेषमिव वार्द्धक-मितीति यावत्, पुरु,—ययातिनृपते कनीयान् सुत, स इव, गुरो,—ज्येष्ठस्य भ्रातु, पितुश्च। राज्यचिन्ता—राज्यभारम्। पुरा ययाति शुक्राचार्यसुतां देव-यानीम् अवमत्य, तस्या दासीभूता वृषपर्वणोऽसुरराजस्य कन्यां शर्मिष्ठां निभृत कामयमानो दुहितृनिर्वेदिना शुक्रेण, "जरा प्राप्स्यसि" इति शप्त विषयभोगातृप्त ज्येष्ठान् सुतान् यदुप्रभृतीन् 'मदीया जरा गृह्णीत' इत्यादिश्य तैः अवमत कनीयसे पुत्राय पुरवे जरां दत्तवान्, स तु पुरु पितुराज्ञया तां जरां प्रतिपेदे इति भारती वार्ता।

(८२) त्यक्तेति ।—त्यक्ता—उत्सृष्टा सकला—समग्रा, बालक्रीडा—शैशवो-चितकेलि येन तथाभूतेन बालभाव परित्यजता इत्यर्थं। हरिणेव—विष्णुनेव, हरिरपि द्वापरे कृष्णजन्मनि कंसवधानन्तर तद्राज्य उग्रसेन संस्थाप्य शासनलोकस्याध तत्रैव स्थित्वा सर्वां वृन्दावनक्रीडां बाल्योचितां परिजहार, अत्र,—कमलसुता रुक्मिणीञ्च उरसि अस्थापयत्, लक्ष्म्यै—राजश्रियै, कमलायै च, उर,—वक्षःस्थल, दीयताम्—समर्प्यताम्। निस्त्रिंशम्—असिं, ["संख्याया अतच्छब्दस्य वाच्य" वा०) इति निर्गत त्रिंशतोऽङ्गुलिभ्य इति विग्रहे डच् प्रत्यय। "खड्गे तु निस्त्रिंशचन्द्र-हासासिरिष्टय" इत्यमर ] उत्ससर्ज—परित्याज।

अथ तच्छ्रुत्वा (८३) निशितशिखेन शूलेन इव आहतः प्रविदीर्णहृदयो देवो हर्षः समचिन्तयत्,—"किं नु खलु माम् अन्तरेण आर्य्यः केनचित् असहिष्णुना किञ्चिद्ग्राहितः कुपितः स्यात्? उत अनया दिशा परीक्षितुकामो माम्? उत (८४) शोकजन्मा चेतसः समाक्षेपोऽयमस्य? आहोस्वित् आर्य्य एव अयं न भवति? किं वा आर्य्येण अन्यदेवाभिहितम् अन्यदेव अश्रावि मया (८५) शोकशून्येन श्रवणेन्द्रियेण? आर्य्यस्य वा अन्यदेव विवक्षितम् अन्यदेव आपतितं मुखेन? अथवा सकलवंशविनाशाय विनिपातनोपायोऽयं विधेः? मम वा (८६) निखिलपुण्यपरिचयोपक्षेपः? कर्म्मणाम्

(८३) निशितशिखेन—तीक्ष्णाग्रेण। माम् अन्तरेण—विना, मयि असन्निहिते इत्यर्थः। असहिष्णुना—भावतां सौभ्रात्रं सोढुमसमर्थेन इत्यर्थः। ग्राहितः,—अवबोधितः, किञ्चित् अनुचितवार्त्तामिति भावः। उत—अथवा, अनया दिशा—अनेन मार्गेण इत्यर्थः, परीक्षितुकामः,—परीक्षार्थी आत्मानं प्रति मदीयाभिप्रायज्ञानेच्छुरित्यर्थः।

(८४) शोकजन्मा—मन्युप्रभवः। समाक्षेपः,—समाकर्षणं, समाकुलता वा, विभ्रान्तिरिति यावत्। आहोस्वित्—अथवा।

(८५) शोकशून्येन—शोकेन—दुःखेन, शून्येन—स्वव्यापारहीनेनेत्यर्थः, विभ्रान्ततया सम्यगर्थग्रहणसामर्थ्यविरहितमिति भावः तेन। विवक्षितम्—वक्तुम् इष्टम्। आपतितम्—उपस्थितं निर्गतं वा। सकलेति।—सकलस्य—कृत्स्नस्य, वंशस्य—कुलस्य, अस्माकमिति भावः, विनाशाय—ध्वंसाय, अस्मान् निर्व्वंशीकर्त्तुम् इत्यर्थः, आर्य्ये वनं गते अहमप्यवश्यमेव तमनुगमिष्यामि, मय्यपि गते वंशोऽयं कर्णधारविहीना नौरिव विपर्य्यासं प्राप्स्यति, ततश्च अस्य लोपः अवश्यम्भावीति भावः। विनिपातनोपायः,—ध्वंसप्रबन्धः, ["विनिपातनोपायः" इत्यत्र "निपातनोपायः" इति पाठोऽपि सु एवार्थः] विधेः,—नियतेः, प्रतिकूलस्य दैवस्य इति भावः परमेष्ठिनो वा, विधातुर्वा इत्यर्थः, ("विधिर्ना नियतौ काले विधाने परमेष्ठिनि" इति मेदिनी)।

(८६) निखिलेति।—निखिलानां—समस्तानां पुण्यानां—श्रेयसां, परिचयः,—प्रवाहः, तस्य उपक्षेपः,—प्रसङ्गः।

(८७) अननुकूलसमग्रग्रहचक्रवालविलसितं वा ? अथवा (८८) तातविनाशनिःशङ्ककलिकालक्रीडितम् ? येन अयं यः कश्चित् इव अकिञ्चनकारिणं माम् अपुण्यभूतिवंशसम्भूतमिव, अतातनयमिव, (८९) अनात्मानुजमिव, अभक्तमिव, दृष्टदोषमिव,

---

(८७) अननुकूलेति।—अननुकूला,—प्रतिकूला, समग्रा,—सर्व, ग्रहा,—रव्यादय इति यावत, तेषां चक्रवालस्य—समूहस्य, विलसित—विजृम्भित, विचेष्टितमिति यावत् प्रतिकूले ग्रहमण्डले कथमेव घटेत ? इत्याशय।

(८८) तातेति।—तातस्य—पितु, विनाशेन—उपरमेण, निःशङ्क,—निर्भय य कलिकाल—चतुर्थयुग तस्य क्रीडित—विलसितं, जीवति ताते अवन्तीनाथे शासितरि तच्छासनात् कलियुग उज्ज्वला धर्मविगर्हितकर्मणि प्रसितः सन् स्वप्रभाव विस्तारयितु न प्राभवत्, इदानीं तदुपरमात निर्भयस्य निर्भरकलिकालस्य स्वप्रभावविस्तारफलमिदं भवेत् ? इति भाव, येन—कलिक्रीडितेन हेतुना इत्यर्थ, कलिप्रभावेण इति यावत् अयम्—भ्राता य कश्चिदिव—साधारणजन इव, अकिञ्चनकारिणम्—यथेच्छकारिणम् सर्वाविनयजनप्रासनमिविदर्थं, य गुरुजनादेशमतिक्रम्य यथेष्टमाचरति ■ एव ईदृशकठोरवाक्यताडन प्राप्नुमर्हति, न भक्ति गुरुजनादरत इति भाव, यद्वा—अकिञ्चनकारिणम्—अकिञ्चनम्, अल्पबुद्धिसामर्थ्यादकमिति यावत, व्याख्यासुलभक्रीडनाधमुख्यम्, अत एव वाक्यप्रासनादिदुःखस्याधारानर्हत्वात् अयोग्यमिति भाव। अपुण्यभूतिवंशसम्भूतमिव—पुण्यभूति,—तन्नामा आदिराज, तस्य वंशे—अन्ववाये असम्भूतमिव—अनुत्पन्नमिव य तादृशस्य सुनयस्य पुण्यभूते वंशे समुत्पन्न स कथमीदृशमनयमाचरित मकुर्यादिति भाव। अतातनयमिव—अतातस्य—तातभिन्नस्य अन्यस्य तनयमिव—पुत्रमिव, ["वक्षिमलितामिव कथम्" (उ० ९ पा० ९९ सू०) इति तन्ते कथन] प्रख्यात धार्मिकस्य पितु पुत्रो भूत्वा ईदृशो धर्मविगर्हिते कर्मणि प्रवृत्त इति मे कदाऽपि न सम्भवेदिति भाव।

(८९) अनात्मानुजमिव—अनात्मन,—आत्मभिन्नस्य, अनुजमिव—कनिष्ठभ्रातरमिव एव निःस्पृहस्य मम भ्रातुर्मे ईदृशी दुराकाङ्क्षा असम्भवा एवेति भाव। अभक्तमिव—अननुरक्तमिव, अननुरक्ते एवंविधम् अप्रियमवचन वक्तु युज्यते, न सर्वथाऽनुरक्ते मयि इति भाव। दृष्टदोषमिव—कृतापराधमिवेत्यर्थं, अपराधिन्यपि तु एवं निष्ठुरं वाक्यं कदाचित् युज्यते, न निर्दोषस्य ममेति भाव।

(८०) श्रोत्रियमिव सुरापाने, सद्भृत्यमिव स्वामिद्रोहे, सज्जनमिव नीचोपसर्पणे, सुकलत्रमिव व्यभिचारे, अतिदुष्करे कर्म्मणि समादिष्टवान्? (८१) तदेतत् तावत् अनुरूपं यत्, शौर्य्योन्माद मदिरोन्मत्त समस्त सामन्त मण्डल समुद्र मथन मन्दरे तादृशि पितरि मृते तपोवनं वा गम्यते? वल्कलानि वा गृह्यन्ते? तपांसि वा सेव्यन्ते? या तु मयि (८२) राज्याज्ञा, सा दग्धे-

---

(८०) सुरापाने—मद्यपाने, श्रोत्रियमिव—छान्दसमिव, वेदपारगमित्यर्थः, ("श्रोत्रियच्छान्दसौ समौ" इत्यमरः) केनचित सुरां पातुमादिष्टेन श्रोत्रियेण यथा तत् कर्म्म अतिदुष्करं भवति, तथेति भावः। स्वामिद्रोहे—प्रभोरनिष्टाचरणे, सद्भृत्यमिव—उत्तमं किङ्करमिव, प्रभोरनिष्टाचरणे केनचित नियुक्तेन प्रभुभक्तदासेन यथा तत् कर्म्म न सुकरं भवति, तथेति भावः। नीचोपसर्पणे—हीनानुगमने, प्राकृतजनसेवायामित्यर्थः, सज्जनमिव—साधुजनमिव, केनचित् बलात् नीचसेवायां प्रवर्त्तितेन उत्तमप्रकृतिकेन यथा तत् कर्म्म न सुकरं भवति तथेति भावः। व्यभिचारे—परपुरुषसङ्गे, सुकलत्रमिव—सतीं स्त्रियम् इव केनचित बलात् व्यभिचारे नियोजितया पतिव्रतया यथा तत् कर्म्म जीवनसंशयेऽप्यनाचरणीयं भवति, तथेति भावः। अतिदुष्करे—अतिदुर्घटे, दुःखेनापि कर्त्तुमशक्ये इत्यर्थः, ज्येष्ठक्रमोल्लङ्घनरूपे इति भावः, कर्म्मणि—राजपद-ग्रहणरूपकार्य्ये, कनिष्ठानर्हराज्यचिन्तायामिति भावः। इह सन्दर्भे मद्यासूयाऽधैर्य-वितर्कदैन्यविनीतादीनां प्रबलता विप्रलम्भविषयकरतिभावस्याङ्गम् इति भाव-शबलोऽलङ्कारः।

(८१) एतत्—वक्ष्यमाणतपोवनगमनादिरूपं कर्म्म इत्यर्थः, अनुरूपं—युक्तम्। शौर्य्येति।—शौर्य्योन्मादेन—पराक्रमजनितौद्धत्येन, मदिरोन्मत्ता इव—सुरापानमत्ता इव ये समस्ताः—सर्वे, सामन्ताः—अधीश्वराः, तेषां मण्डलं—चक्रवालम् एव, समुद्रः—सागरः, तस्य मथने—विलोडने, मन्दरः—मन्दराख्यो गिरिः तस्मिन् तादृशि—प्रख्याते वीरे, समुद्धतराजन्यवर्गविजेतरि इत्यर्थः, अजाभयान्तर्हितसाररत्न-समुच्चयानामुद्धर्त्तरि इत्यपरः। एतेन उन्मत्तोन्मादमन्त्रनपुर सरत्नाविष्कारः, विजिगीषोः परलोकसमूपायस्य लोकोपकारार्थकः, न तु हिंसार्थकः इति व्यज्यते। सेव्यन्ते—चर्य्यन्ते।

(८२) राज्याज्ञा—राजकार्य्यादेशः। दग्धे—सन्तप्ते, पितृशोकेन प्रखरसूर्य्यः

ऽपि दाहकारिणी मयि अवग्रहग्लपिते धन्वनि इव अङ्गारवृष्टिः। तत् असदृशम् इदम् आर्यस्य। यद्यपि च (८३) विभुः अनभिमानः, द्विजातिः अनेषणः, मुनिः अरोषणः, कपिः अचपलः, (८४) पण्डितः अमत्सरः, वणिक् अतस्करः, रम्यजानिः अकुहनः, साधुः अदरिद्रः, (८५) द्रविणवान् अखलः, कीनाशोऽनभिगतः, मृगयुः अहिंस्रः, (८६) पाराशरी

---

चिरयोग्य च इति भावः। अवग्रहग्लपिते—अवग्रहः,—प्रतिबन्धः, निरवग्रहवर्षणविघ्न इत्यर्थः, वृष्टिरोधः, ("अवग्रहो वृष्टिरोधे प्रतिबन्धे गजालिके" इति मेदिनी) तेन ग्लपिते—ग्लानिं नीते, अवग्रहे विग्रहे च इति भावः। धन्वनि इव—मरौ इव, ("समानौ मरुधन्वानौ" इत्यमरः) अङ्गारवृष्टिः,—अग्निस्फुलिङ्गवर्षणम्। असदृशम्—अयुक्तम्, अनुचितमित्यर्थः, दग्धदाहनमनुचितमित्याशयः।

(८३) विभुः—प्रभुः अनभिमानः,—निरहङ्कारः। द्विजातिः—ब्राह्मणः, अनेषणः,—निरभिलाषः अयाचक इत्यर्थः, अभिगतार्थनिरपेक्षो इत्यर्थो वा। मुनिः—तापसः अरोषणः—अक्रोधनः। कपिः,—वानरः, अचपलः,—अचञ्चलः, धीर इत्यर्थः।

(८४) पण्डितः,—विद्वान्, ["पण्डितः" इत्यत्र "कविः" इति पाठोऽपि स प्रमादः] अमत्सरः,—अन्यशुभद्वेषरहितः। वणिक्—व्यवसायी, अतस्करः,—अचौरः। रम्यजानिः—रम्या—मनोहारिणी सुन्दरीत्यर्थः, जाया—भार्या यस्य तथोक्तः सुन्दरभार्य इत्यर्थः, ["रम्यजानिः" इत्यत्र 'प्रियजानिः' इति पाठः—प्रिया—प्रियदर्शना सुन्दरीत्यर्थः] अकुहनः—नास्ति—कुहना—ईर्ष्या अहङ्कारो वा यस्य तथाभूतः, ('कुहना दम्भचर्यायामीर्ष्यालौ' इति मेदिनी) परपुरुषभयवर्जित इत्यर्थः स्त्रिया पुरुषान्तरासेवनशङ्कायाश्च "भार्या रूपवती शत्रुः" इत्यादिशास्त्रात् इति भावः। साधुः,—सुजनः, खलतावर्जित इत्यर्थः, अदरिद्रः,—धनी।

(८५) द्रविणवान्—धनी, अखलः,—अदुर्जनः, सुजन इत्यर्थः। कीनाशः—क्षुद्रः नीचाशय इत्यर्थः कृतान्तो वा, ("कृतान्ते पुंसि कीनाशः क्षुद्रकार्षिकयोस्त्रिषु" इत्यमरः) अनभिगतः,—अद्वेष्यः, प्रिय इति यावत् ("द्वेष्ये त्वभिगतः" इत्यमरः) मृगयुः,—व्याधः, [मृगं याति इत्यर्थे "मृगय्वादयश्च" (उ० १ पा० ३८ सू०) इति कुप्रत्यये निपातनम्] अहिंस्रः,—हिंसावर्जित इत्यर्थः।

(८६) पाराशरी—भिक्षुः, ("भिक्षुः परिव्राट् कर्मन्दी पाराशर्यपि मस्करी"

ब्राह्मणः, सेवकः सुखी, कितवः कृतज्ञः, (९७) परिव्राट् बुभुक्षुः, नृशंसः प्रियवाक्, अमात्यः सत्यवादी, (९८) राजसूनुः अदुर्विनीतश्च जगति दुर्लभः, तथाऽपि मम आर्य एव आचार्यः। को हि नाम (९९) तद्विधे निपतिति राजगन्धकुञ्जरे जनयितरि, (१००) ईदृशे च विफलीकृतविशालशिलास्तम्भोरुभुजे भूभुजि भ्रातरि त्यक्तराज्ये ज्यायसि नववयसि तपोवनं गच्छति, (१०१) सकललोकलोचनजलपातप्लाविते

---

इत्यमरः) ब्राह्मण,—ब्राह्मणोचितानुष्ठानरत। सेवक,—भृत्य। कितव,—धूर्त, द्यूतकृदित्यर्थ, ("धूर्तोऽक्षदेवी कितवोऽक्षधूर्तो द्यूतकृत् समा" इत्यमरः) कृतज्ञ,—कृतोपकारवित्।

(९७) परिव्राट्—यति बुभुक्षु,—भोजनार्थी, प्राय इश्यते ब्रह्मसमाधिमग्नाना भोजनाभिलाष कादाचित्क आश्रितसेवकानुरोधेन, न तु स्वेच्छयेत्याशय। ["परिव्राट् बुभुक्षु" इत्यत्र "परिव्राडबुभुक्षु" इति पाठे,—परितो व्रजति गच्छतीति परिव्राट्—पर्यटक, दूराभ्यविहरणशील इत्यर्थ, अबुभुक्षु,—अभोजनेच्छु, अक्षुधित इत्यर्थं]। नृशस,—निष्ठुर, प्रियवाक—मधुरभाषी। अमात्य—सचिव, राजकार्यभारधारीति यावत्, सत्यवादी—सत्यभाषणशील, प्रायशस्तस्य सर्वत्र सत्यशीलत्वेन न कार्यसिद्धिरित्याशय।

(९८) राजसूनु—राजतनय अदुर्विनीत,—सुशील इत्यर्थं, राजपु० मा दुर्विनीत तथा यद्येतद्वचनात् ममाप्य इति भाव। आचार्य,—गुरु, उपदेष्टा इत्यर्थ, आर्य यथा मास अशिक्षयत्, तथैव मया शिक्षितमिति भाव।

(९९) तद्विधे—तादृशे निरुपमप्रतापशालिनि इति भाव, राजेति।—राजा एव गन्धकुञ्जर,—गन्धद्विप तस्मिन्, जनयितरि—पितरि।

(१००) ईदृशे—एवम्भूते, विफलीकृतेति।—विफलीकृतौ—व्यर्थीकृतौ इति यावत्, विशालौ,—विपुलौ, महाकायौ इत्यर्थ, शिलास्तम्भौ—प्रस्तरस्तम्भे याभ्या तादृशौ, उरु—महान्तौ, भुजौ—बाहू यस्य तथाभूते, भूभुजि—भूपतौ। ज्यायसि—अग्रजे। नववयसि—यौवने।

(१०१) सकलेति।—सकलाना—सर्वेषा, लोकाना—जनाना, लोचनजलस्य—वाष्पवारिण, पातेन—वर्षणेनेत्यर्थं, आप्लाविते—समन्तात् व्याप्ते, पङ्किले इति

मद्वीलके वसुधाऽभिधाने ( १०२ ) धनमदखेलनिखिलखलमुखविकारलक्षणाख्यायमाननीचाचरणां ( १०३ ) सुभटकुटुम्बकर्मकुम्भदासी शौण्डिका चण्डालः कामयेत ? कथमिव सम्भावितम् अत्यन्तम् अनुचितम् इदम् आर्येण ? ( १०४ ) किम् उपलक्षितम् अनवदातम् इह मयि ? किं वा अस्य चेतसः च्युतः सौमित्रि ? विस्मृता वा वृकोदरप्रभृतयः ?

---

यावत्, मद्वीलके—मयीत्यर्थः, अतितुच्छे इति भावः, वसुधाभिधाने—पृथिव्याख्ये।

( १०२ ) धनमदेति।—धनमदेन—ऐश्वर्यगर्वेण, खेला,—क्रीडा येषां तथा भूता, ये निखिलाः,—समग्राः, खलाः,—दुर्जनाः, तेषां मुखविकाराणां—वदनभङ्गीनां, लक्षणेन—चिह्नेन, आख्यायमानं—कथ्यमानं, सूच्यमानमिति यावत्, नीचाचरणं—निकृष्टव्यवहारः यस्याः ताम्, आश्रयभूतानां दुर्जनानां धनिनां नीचता मुखविकृतमुखभङ्ग्यादिदर्शनेन तदाश्रितायाः लक्ष्म्याः अपि नीचाचारत्वमनुमितम् न भार्याश्रयी अभिन्नाश्रयत्वात् इति बोद्धव्यम्।

( १०३ ) सुभटेति।—सुभटानां—सुवीराणां, शूराणामिति यावत्, कुटुम्बस्य—परिवारस्य कर्म—सेवारूपं कार्यं, तत्र कुम्भदासी—जलवाहिनी किङ्करी ताम्, तथा पराक्रमाश्रयत्वात् वीरकुटुम्बानां किङ्करत्वं बोद्धव्यम्, शौण्डिका—लक्ष्मी नामीं कामयेत ?—अभिलषेत ? अपठी तपोवन गते नाह राज्यलक्ष्मीम् अभिलषाम इति समग्रवाक्यार्थः, यद्वा राजलक्ष्मीकामुकः, तदा मां चण्डालाधमं कामेतु क्रीडा इति भावः। [ "सकललोक कामयेत" इत्यत्र "सकललोकलोचनजनघात पात्र मद्वीलके वसुधाऽभिधाने धनमदखेलनिखिलखलमुखविकारलक्षणाख्याय माननीचाचरणां शौण्डिका सुभटकुटुम्बकर्मकुम्भदासीं चण्डालोऽपि कामयेत" इति पाठे—सकललोकलोचनजनघातेन पातित—दूषित मद्वीलके शौण्डिकाम् चण्डालोऽपि कामयेत ? चण्डालोऽपि न कामयेत इत्यर्थः। अस्मिन् पक्ष उभयत्र कर्मत्वम्, पूर्वपदे—"मद्वीलके" इत्यस्य अधिकरणत्वं, मद्वीलके स्थित इति भावः।] सम्भावितम्—आशङ्कितम्। अनुचितम्—अन्याय्यं कापुरुषविगर्हितमित्यर्थः।

( १०४ ) किं—कथम्। उपलक्षितम्—अनुमितम्। अनवदातम्—अशुद्धं, हीनतामदर्य अपमानकारणमिति यावत्। चेतस,—मनसः, च्युतः,—भ्रष्टः,

(१०७) निवासं गिरिगुहां कः पाति पृष्ठतः? प्रतापसहाया हि सत्त्ववन्तः। (१०८) कः चपलां लक्ष्मीं प्रति अनुरोधोऽयम् आर्यस्य,—यत् इयमपि चीरान्तरितकुचा कुशकुसुमसमित्पलाशपूलिकां वहन्ती तत्रैव तपोवने वनमृगी इव न नीयते जराजालिनी? किं वा मम अनेन वृथा बहुधा

---

(१०७) निवासं—वासभूमिम्। पृष्ठतः—पश्चात् स्थितामिति भावः, पाति?—रक्षति? स्वप्रतापपराजितपराक्रान्तप्रतिपक्षभूपतिवर्गे आर्ये तपोवनं गते तन्निवासभूतामिमां राजधानीं को रक्षति? इति ध्वनिः। पदार्थहेतुककाव्यलिङ्गालङ्कृतिः अत्र इति चमत्कारातिशयः। सत्त्ववन्तः,—महानुभावाः, प्रतापसहायाः,—प्रतापः,—कोषदण्डजं तेज एव सहायः,—अनुकूलः येषां तथोक्ताः, सत्त्ववन्तो हि किञ्चिदसहाया अपि स्वप्रभावेणैव सर्वान् वशमानेतुं प्रभवन्ति इत्यर्थः। एतेन किमप्यकुर्वत्यपि त्वयीह भवच्छ्रिया एव राज्यं सुरक्षितं स्थास्यति, अन्यथा एतस्य रक्षणं दुष्करमिति व्यज्यते।

(१०८) चपलाम्—चञ्चलाम्, लक्ष्मीं—राजश्रियं, प्रति आर्यस्य—श्रेष्ठस्येत्यर्थः, अयम्—एषः, अनुरोधः,—पक्षपातः इत्यर्थः, कः?—कीदृशः? यत—यदि, इयम्—लक्ष्मीः, चीरान्तरितकुचा—चीरेण—वल्कलेन जीर्णवसनखण्डेन वा, तेन अन्तरितौ—आवृतौ, कुचौ—स्तनौ यस्याः तथाभूता, ["यत इयमपि चीरान्तरितकुचा" इत्यत्र "यदि इयमपि न चीरान्तरितकुचा" इति पाठान्तरम्] कुशेति।—कुशाः,—दर्भाः, कुसुमानि—पुष्पाणि, समिधः,—काष्ठानि, पलाशाः,—पत्राणि, तेषां पूलिका—समूहः तां, तापसीसुलभामिति भावः, अन्यथापि यत्नेन एतत् सर्वं वहति, वहन्ती—दधाना, तत्रैव तपोवने—आर्याधिष्ठिताश्रमे, न नीयते—न प्राप्यते, स्वयमेव न गम्यते इत्यर्थः, यदि न लक्ष्मीर्नानुसरति इति भावः, यद्वा,—न नीयते—नेतुं न शक्यते, आर्येणेति शेषः, ["न नीयते" इत्यत्र "नीयते" इति पाठान्तरम्] जराजालिनी—जरायाः जालं—केशपक्वतादिकम् अस्याः अस्ति इति तथाभूता, पलितकेशिनी इत्यर्थः, पुरुषपरम्परया आगतत्वेन सनातनी इति भावः, मया दुर्वहा चिरन्तनी इव लक्ष्मीः तपोवने यदि न आर्यमनुसरति, तस्मात् तथा प्रकृतेः अभावात् तदा तस्याः पालने कोऽयम् आग्रहः समभवत? इत्याशयः। यदि सा आर्यं नापेक्षते, तदा आर्येणापि तदपेक्षा निष्प्रयोजना इति निष्कर्षः।

(१०९) विकल्पितेन? तूष्णीमेव आर्य्यम् अनुगमिष्यामि। गुरुवचनातिक्रमकृतञ्च किल्बिषम् एतत् तपोवने तप एव अपास्यति" इति अवधार्य्य मनसा प्रथमतरं गतस्तपोवनम् अधोमुखः तूष्णीम् अवातिष्ठत।

(११०) अत्रान्तरे पूर्व्वादिष्टेन एव वदता वस्त्रकर्मान्तिकेन समुपस्थापितेषु वल्कलेषु, (१११) निर्दयकारतलताडनभिया इव क्वापि गतहृदये रटति राजस्त्रैणे, (११२) तारम् अब्रह्मण्यम् अर्द्धदोष्णि विरुदति विप्रजने,

---

(१०९) विकल्पितेन—पर्य्यालोचितेन, अनुचिन्तनेन इति यावत्। तूष्णीमेव—मौनमास्थाय एव इत्यर्थः, किमप्युत्तरमदत्त्वैवेति यावत्। गुर्व्विति।—गुरोः,—ज्येष्ठस्य, वचनातिक्रमेण—आज्ञालङ्घनेन, राज्यग्रहणरूपादेशानाचरणेनेत्यर्थः, कृत—जनितं, किल्बिषं—पापं, ("पापं किल्बिषकल्मषम्" इत्यमरः) तपः,—चान्द्रायणादिकं व्रतं, ("……तपो लोकान्तरेऽपि च। चान्द्रायणादौ धर्म्मे च पुमान् शिशिरमाघयोः॥" इति मेदिनी) अपास्यति—खण्डयिष्यति, अपनेष्यति इत्यर्थः। अवधार्य्य—निश्चित्य। प्रथमतरं—ज्येष्ठस्य गमनात् अतिपूर्व्वमित्यर्थः। अवातिष्ठत—अवर्त्तत।

(११०) "अत्रान्तरे" इत्यस्य "संवादको नाम सदसि आत्मानमपातयत्" इत्यनेनान्वयः। पूर्व्वादिष्टेन—पूर्व्वमाज्ञप्तेन, वस्त्रकर्म्मान्तिकेन—परिच्छदाधिकारिणा, समुपस्थापितेषु—समीपमानीतेषु, वल्कलेषु—तरुत्वक्‌तापसोचितपरिधेयेषु इति यावत्।

(१११) निर्दयेति।—निर्दयं—निष्करुणम्, उत्कटमित्यर्थः, तत् यथा तथा, करतलेन—पाणितलेन, यत् ताडनम्—आघातः, तस्मात् भीः,—भयं तया इव। गतहृदये—गत—चलितं, हृदयं—चित्तं यस्य तथाभूते, शून्यमनसि इत्यर्थे, अचेतनप्राये इति भावः, ["गतहृदये" इत्यत्र "गते हृदये" इति पाठान्तरम्] रटति—नदति, सार्त्तस्वरं रुदतीत्यर्थः राजस्त्रैणे—राजान्तःपुरिकाजने।

(११२) तारम्—उच्चैः यथा तथा, ऊर्द्धदोष्णि—उत्क्षिप्तबाहौ। अब्रह्मण्यम् —अवध्योक्तिविशेषः तत् ("अब्रह्मण्यम् अवध्योक्तौ" इत्यमरः। समुदीर्य्येत्यध्याहृतक्रियायाः कर्म्मपदं द्वितीयान्तम्) मा अस्मान् परित्यागेन जहीत्येवंरूपं वचनपूर्व्वकमित्यर्थः, विरुदति—विशेषेण क्रन्दति।

(११३) पादप्रणतिपरे फूत्कुर्व्वति पौरवृन्दे, विद्राति विद्रुतचेतसि चिरन्तने परिजने, परिजनावलम्बिते वेपमानवपुषि पर्य्याकुलवाससि शोकगद्गदवचसि गलितनयनपयसि निवारणोद्यतमनसि वर्षीयसि विशति बन्धुवर्गे, (११४) निराशेषु नखलिखितमणिकुट्टिमेषु अवाङ्मुखेषु निश्वसत्सु सामन्तेषु, सबालवृद्धासु तपोवनाय प्रस्थितासु सर्व्वासु प्रजासु, सहसा एव प्रविश्य (११५) शोकविक्लवः प्रचरितनयनसलिलो राज्यश्रियः परिचारकः संवादको नाम प्रज्ञाततमो विमुक्ताक्रन्दः सदसि आत्मानम् अपातयत्।

---

(११३) पादप्रणतिपरे—चरणपतनपरायणे, पौरवृन्दे—पुरवासिवर्गे, फूत्कुर्व्वति—चीत्कारं कुर्वति इत्यर्थः मुक्तकण्ठं रुदतीति यावत्। चिरन्तने—पुरातने, वंशपरम्परागते इत्यर्थः, ["सायंचिर—" (४।३।२३ पा०) इत्यादिना ट्युः तुडागमश्च] परिजने—परिचारकवर्गे विद्रुतचेतसि—विचलितमनसि विद्राति—धावति, परिजनावलम्बिते—परिवारसंगृहीतहस्ते इत्यर्थः, वार्द्धक्यात् स्वयमागन्तुमसामर्थ्यादिति भावः, वेपमानवपुषि—कम्पमानदेहे, पर्य्याकुलवाससि—विस्रस्तवसने, निद्रारणसंवादश्रवणेन सहसैवागमनादिति भावः, शोकेति।—शोकेन—मन्युना, गद्गदम्—अस्पष्टनिर्घोषं बाष्पावरुद्धकण्ठत्वादिति भावः, वचः—वचनं यस्य तथाभूते, गलितनयनपयसि—क्षरितनेत्रवारौ, निवारणेति।—निवारणाय—प्रतिषेधाय, तपोवनगमनादस्य इति भावः, उद्यत—प्रवृत्त, क्रतोद्यमामित्यर्थः, मनः—चित्तं यस्य तथाभूते, वर्षीयसि—अतिस्थविरे, ["प्रशस्यस्य श्रः" "द्विवचन—" (५।३।५७ पा०) इत्यादिना ईयसुनि "प्रियस्थिर—" (६।४।१५७ पा०) इत्यादिना वृद्धस्य वर्षादेशः] बन्धुवर्गे—ज्ञातिसमूहे।

(११४) नखेति।—नखैः—करजैः, लिखितानि—अङ्कितानि, कृतरेखाणीत्यर्थः, मणिकुट्टिमानि—रत्नखचितगृहाभ्यन्तरतलानि यैः तथोक्तेषु, अवाङ्मुखेषु—अधोमुखेषु, निश्वसत्सु—निश्वासं त्यजत्सु आयतमिति शेषः, सामन्तेषु—अधीनमित्रराजेषु, निराशेषु—हताशेषु। प्रस्थितासु—प्रस्थानमुद्यतासु इत्यर्थः।

(११५) शोकविक्लवः—मन्युविह्वलः, प्रचरितेति।—प्रचरितं—प्रकर्षेण स्रुतं, नयनसलिलं—नेत्रजलं यस्य तादृशः। राज्यश्रियः—तदाख्यायाः राज्यवर्द्धन-

अथ (११६) सम्भ्रान्तो भ्राता सह स्वयं देवो राज्यवर्द्धनः तं पर्य्यपृच्छत्,—"भद्र! भण भण, किम् अस्मद्व्यसनव्यवसायवर्द्धनबद्धधृतिः (११७) अवनिपतिमरणमुदितमतिः अधृतिकरम् अपरम् अधिकतरम् इतः समुपनयति विधिः?" इति। स कथञ्चिदपि अकथयत्,—"देव! पिशाचानामिव (११८) नीचात्मना चरितानि छिद्रप्रहारीणि प्रायशो भवन्ति, यतो यस्मिन् अहनि अवनिपतिः उपरत इति अभूत् वार्त्ता, तस्मिन्नेव देवो ग्रहवर्म्मा दुरात्मना मालवराजेन जीवलोकम् आत्मनः सुकृतेन

---

भगिन्या। प्रज्ञाततम,—अतिपरिचित इत्यर्थः, इतः पूर्वे प्रभाकरवर्द्धनस्यैव परिचारकत्वादिति भावः। विमुक्ताक्रन्दः,—उच्चैः रुदन्नित्यर्थः। सदसि—सभायाम्।

(११६) सम्भ्रान्त—सभयोद्वेगः। पर्य्यपृच्छत्—पर्य्यनुयुङ्क्त। अस्मदिति।—अस्माकं व्यसनानि—विपद एव व्यवसायाः,—वाणिज्यानि, तेषां वर्द्धने—अभ्युन्नतिकरणे, बद्धा—निश्चला, धृतिः,—धैर्य्यं सन्तोषः वा येन तथाभूतः, अस्मद्विपद्वर्द्धनैकपर इत्यर्थः।

(११७) अवनीति।—अवनिपतेः,—राज्ञः प्रभाकरवर्द्धनस्य, मरणेन—मृत्युना, मुदिता—प्रहृष्टा मतिः—बुद्धिः यस्य तथाविधः तन्मरणे स्वप्रभावं प्रकटयितुं मत्तम इति भावः, विधिः,—दैवम् इतः—अस्मात्, पितृमृत्युव्यसनादिति भावः, अधृतिकरम्—असन्तोषकरम् अधैर्य्यकरं वा समुपनयति?—समुपस्थापयति? इह प्रतिपक्षगतबलवत्त्वात्मगतदुर्बलत्वयोः समुन्मेषात् प्रत्यनीकालङ्कृतिः।

(११८) नीचात्मना—क्षुद्रचेतसाम्, दुरात्मनामित्यर्थः, चरितानि—व्यापाराः, छिद्रप्रहारीणि—छिद्रेषु—रन्ध्रेषु, प्रमादेषु इति भावः, प्रहरन्ति—आघातयन्तीति तथाविधानि, अन्यदा प्रहारसाहसाभावात् इत्याकूतम्। अवनिपतिः,—राजा, प्रभाकरवर्द्धन इत्यर्थः, उपरतः,—मृतः। वार्त्ता—जनश्रुतिः, ("वार्त्ता वृत्तौ जनश्रुतौ" इत्यमरः)। ग्रहवर्म्मा—प्रभाकरवर्द्धनस्य जामाता। जीवलोकम्—प्राणिपूर्णं जगत् इहलोकमित्यर्थः। आत्मनः,—स्वस्य, मालवराजस्यैवेति यावत्, सुकृतेन—पुण्येन, येन सुकृतेन स एतावन्तं कालं जीवितोऽस्ति, ग्रहवर्म्मविनाशनेन तस्य

सह त्याजितः। (११८) भर्त्तृदारिकाऽपि राज्यश्रीः कालायसनिगडयुगलचुम्बितचरणा चौराङ्गना इव संयता कान्यकुब्जे कारायां निक्षिप्ता। किंवदन्ती च, यथा किल अनायकं साधनं मत्वा जिघृक्षुः सुदुर्मतिः एतामपि भुवम् आजिगमिषति, इति विज्ञापिते प्रभुः प्रभवति" इति।

ततश्च तादृशम् (१२०) अनुपेक्षणीयम् असम्भावितम् आकस्मिकम् अपरं व्यतिकरम् आकर्ण्य, अश्रुतपूर्व्वत्वात् परिभवस्य, परपरिभवासहिष्णुतया च स्वभावस्य, दर्पबहुलतया

ततः सुकृतमपि क्षयं गतं, क्षीणपुण्यस्य तस्य अचिरेणैव भवविविनड्डमावत्वादिति] भावः। त्याजितः,—हापितः, परलोकं प्रापित इत्यर्थः।

(११८) भर्त्तृदारिका—राजसुता, ("राजा भट्टारको देवस्तत्सुता भर्त्तृदारिका" इत्यमरः)। कालेति।—कालायसनिगडयुगलेन—कृष्णलौहनिर्म्मितशृङ्खलाद्वयेन, चुम्बितौ—वेष्टितौ, चरणौ—पादौ यस्याः तथाभूता, चौराङ्गना इव—तस्करनारीव संयता—बद्धा, कान्यकुब्जे—तदाख्यतद्देशीयप्रधाननगरविशेषे, कारायां—बन्धनागारे। किंवदन्ती—जनश्रुतिः। अनायकम्—अराजकं, साधनं—सैन्यं, ("साधनं मृतसंस्कारे सैन्ये सिद्धौषधौ गतौ" इति मेदिनी)। जिघृक्षुः,—आचिक्रमिषुः। एतामपि भुवं—राज्यं, श्रीकण्ठजनपदमित्यर्थः, आजिगमिषति—आगन्तुमिच्छति। विज्ञापिते—निवेदिते, मयेति शेषः। प्रभवति—समर्थो भवति, सोदरप्रियपक्षव्यसनप्रतिशोधने, भर्त्तृदारिकाया उद्धारे राज्यरक्षणे च यत् कर्त्तव्यं, तत् कर्त्तुमर्हतीति इति भावः।

(१२०) अनुपेक्षणीयम्—अनवधीरणीयम्, नावहेलनीयमित्यर्थः, असम्भावितम्—अतर्कितम्, आकस्मिकं—सहसा उपस्थितं व्यतिकरं—व्यसनं, विपदमित्यर्थः, ("अथ व्यतिकरः पुंसि व्यसनव्यतिषङ्गयोः" इति मेदिनी)। परिभवस्य—शत्रुकृतस्य अवमानस्य इत्यर्थः, अश्रुतपूर्व्वत्वात्—पूर्व्वं कदाऽपि अश्रुतत्वादित्यर्थः, ["भूतपूर्व्वे चरट्" (५।३।५३ पा०) इत्यत्र पूर्व्वनिपातनिर्द्देशात् अत्रत्र क्ते पूर्व्वशब्दस्य पूर्व्वनिपातनम् इति ज्ञेयम्]। परेति।—परात—शत्रोः, अन्यस्मात्, वा, परिभवः,—तिरस्क्रिया, अवमाननमित्यर्थः, ("परिभवः पराभवः तिरस्क्रिया" इत्यमरः) तस्य असहिष्णुतया—असहनशीलतया। दर्पबहुलतया—

इव च कम्पमानः पुनरपि समुत्ससर्प भीषणं कृपाणं पाणिः अपरः। (१२५) प्रसभग्रहणमुदितराजलक्ष्मीक्रियमाणदिष्ट‑वृद्धिविधुतसिन्दूरधूलिः इव कपिलः कपोलयोः अदृश्यत रोषरागः। (१२६) समासन्नसकलमहीपालचूडामणिचक्राक्रमणजाताहङ्कार इव च समारुरोह वामम् ऊरुदण्डम् उत्तानितः चरणो दक्षिणः। (१२७) निष्ठुराङ्गुष्ठकषणनिष्ठ्यूत‑

---

आत्माधीनीकरणार्थंच केशाकर्षणं, तस्मै उत्कण्ठा—उद्वेगः इत्यर्थः तयैव, स्त्रियाः केशाकर्षणस्य विगर्हिततया तत् कर्तुमुद्यतस्य कम्पोऽजनीति वेदितव्यम्, यद्वा,—कामिनीकचग्रहणं प्रति उत्कण्ठायाम् कन्दर्पवशस्य स्त्रिया इव कम्पते इति लोके दृश्यते। समुत्ससर्प—उपजगाम, धर्तुम् इति शेषः। कृपाणं—खड्गम्। अपरः,—दक्षिणः। क्रोधस्थायिनः रौद्रस्य तदनुभावस्य स्वेदोद्गमस्य सात्त्विकविकारस्य सम्भावनया शृङ्गारानुकूलतोक्तिः परिपन्थिरसाङ्गपरिग्रहरूपो रसदोषः, "रौद्रस्तु हास्यशृङ्गारभयानकरसैरपि" इत्यालङ्कारिकानुशासनात् इति ध्येयम्।

(१२५) प्रसभेति।—प्रसभस्य—बले इत्यर्थः, प्रायः सबलस्य इति भावः, ["सर्वधातुभ्य इन्" (उ० ४ पा० ११८ सू०) इति इन्] ग्रहणेन—धारणेन, मुदिता—हृष्टा, स्वस्य नायकलाभात् इति भावः, या राजलक्ष्मीः,—राजश्रीः, नेयसी इति भावः तया क्रियमाणा—विधीयमाना, या दिष्टवृद्धिः,—आनन्दोत्सवः, तया विधुता—विक्षिप्ता, सहर्षं न्यस्ता इत्यर्थः, या सिन्दूरधूलिः,—नागसम्भवपरागः, स्वनामप्रसिद्ध सीसकोद्भूतरक्तवर्णचूर्णविशेष इति यावत्, ("सिन्दूरं नागसम्भवम्" इत्यमरः) सा इव, कपिलः,—पाटलः, रोषरागः,—कोपजनितशोणिमा।

(१२६) समासन्नेति।—समासन्नानां—समुपस्थितानां, सकलानां—सर्वेषां, महीपालानां—राज्ञां, चूडामणयः,—शिरोरत्नानि, तेषां चक्रेण—समूहेन, आक्रमणं—स्पर्शः, प्रणिपातावसरे इति भावः, तेन जातः,—उत्पन्नः, यः अहङ्कारः,—गर्वः स इव, मूर्तिमानहङ्कार इत्यर्थः, उत्तानितः,—उत्तोलित इत्यर्थः, दक्षिणः,—अपसव्यः, चरणः,—पादः, वामं—सव्यम्, ऊरुदण्डम्—ऊरुः,—सक्थि, दण्ड इव—यष्टिरिव तं, समारुरोह—आचक्राम, आश्रितवान् इत्यर्थः, वामोरौ दक्षिणं चरणमवस्थाप्य आसाञ्चक्रे राज्यवर्द्धन इति भावः। शत्रुनिर्जये निःसंशयत्वख्यापिका वीरत्वव्यञ्जिका च महासत्त्वपुरुषसाधारणी प्रौढासनमुद्रेयम्।

(१२७) निष्ठुरेति।—निष्ठुरं—दृढं यथा तथा, अङ्गुष्ठस्य—पादाङ्गुष्ठस्य घर्षं,

प्रलयाय। (१३०) इदमेव तावत् वल्कलग्रहणम्, इदमेव तपः, आकाशगमनोपायश्च अयमेव, यत् अत्यन्ताविनीतारिनिग्रहः। (१३१) सोऽयं कुरङ्गकैः कचग्रहः केसरिणः, भेकैः करपातः कालसर्पस्य, वत्सकैः बन्दिग्रहो व्याघ्रस्य, अलगर्दैः गलग्रहो गरुडस्य, दारुभिः दाहादेशो दहनस्य, तिमिरैः तिरस्कारो रवेः, यो मालवैः परिभवः पुष्पभूतिवंशस्य। (१३२) अन्तरितः तापो

---

[illegible] स्थित, [illegible] यथायथ [illegible] भाव। मालवैः—मालवराजानां—मालवाधिपानां, कुरङ्ग—मृग, [illegible] इत्यर्थः।

(१३०) इदमेव—[illegible], वल्कलग्रहणम्—[illegible] इत्यर्थः। तपः—तपश्चरणम्। आकाशगमनोपायः—[illegible]। अत्यन्त—[illegible], अविनीतस्य—दुर्विनीतस्य, [illegible], अरेः—शत्रोः, निग्रहः—[illegible] [illegible] भाव।

(१३१) [illegible] कुरङ्गकैः—मृगशावैः, [illegible] [illegible], कचग्रहः—[illegible] [illegible]। भेकैः—[illegible], करपातः—[illegible] इत्यर्थः, कालसर्पस्य—[illegible] [illegible] इति [illegible]। "[illegible]" इति [illegible]। वत्सकैः—[illegible], व्याघ्रस्य—शार्दूलस्य, बन्दिग्रहः—[illegible] [illegible]। अलगर्दैः—[illegible], [illegible] [illegible] भाव, ("[illegible]" [illegible]) गलग्रहः—[illegible] [illegible]। [illegible] [illegible] भाव, दाहादेशः—दाहस्य [illegible]। तिमिरैः—अन्धकारैः, रवेः—सूर्यस्य, [illegible] तिरस्कारः—[illegible] [illegible]। [illegible] [illegible]। [illegible] [illegible] [illegible] इति [illegible]।

(१३२) अन्तरितः, [illegible] इत्यर्थः, तापः [illegible]

मे महीयसा मन्युना। तिष्ठन्तु सर्व एव राजानः करिणश्च त्वया एव सार्द्धम् अयमेको (१३३) भण्डिः अयुतमात्रेण तुरङ्गमाणाम् अनुयातु माम्" (१३४) इत्यभिधाय च अनन्तरमेव प्रयाणपटहम् आदिदेश।

(१३५) तच्च तथा समादिशन्तम् आकर्ण्य जामिजामातृवृत्तान्तविज्ञानप्रकोपाध्मानदूयमाने मनसि (१३६) निवर्त्तनादेशेन दूरप्ररूढप्रणयपीड इव प्रोवाच देवो हर्षः,—"क्षमिव

---

ज्वलनम्। महीयसा—अतिमहता, मन्युना—क्रोधेन। तिष्ठन्तु, सर्वेति स्पष्टम्। राजानः—अन्यदीयसामन्तनृपाः। करिणः,—गजाः। सार्द्धम्—सह विपक्षे चेन राजधानी आक्रान्ता भवेत् तदा तद्रक्षणायेत्याशयः।

(१३३) भण्डिः,—राज्यवर्द्धनस्य मातुलपुत्रः। अयुतमात्रेण—दशसहस्रसंख्यामात्रेण सहितः सन् तुरङ्गमाणाम्—अश्वानाम्, दशसहस्राश्वारोहिसैन्यसमेतो भूत्वेत्यर्थः। अनुयातु—अनुसरतु, अभिमता परिवृढाना सेनया परिच्छदस्वरूप तदेव नियोग, न साहाय्यायेति निगूढाशयः।

(१३४) इति—इत्थम् अभिधाय—आख्याय अश्वारोहिभ्य विनियोगे परत्र ... इति संक्षेपः। प्रयाणपटहम्—युद्धार्थं यात्रासूचकं वाद्यविशेषम्।

(१३५) तम्—राज्यवर्द्धनम् तथा—पूर्वोक्तप्रकारेण, सदाज्ञपरिवारादिविरह समेतस्य हर्षस्य तत्रैवावस्थानमित्यर्थः समादिशन्तम्—आज्ञापयन्तम्। जामीति।—जामिः—स्वसा भगिनीत्यर्थः ("जामिः स्वसृकुलस्त्रियोः" इत्यमरः) जामाता—तनयां [जायां माति इति विग्रहे "नप्तृनेष्टृ—" (उ० २ पा० ९६ सू०) इत्यादिना तृच्] भगिनीपतिरित्यर्थः तत्र कन्यकापतिसम्बन्धाभावात् तथा, यद्वा—जामिः,—भगिनी तस्याः जामाता—धवः, पतिरित्यर्थः, भगिनीपतिरिति यावत्, ("जामाता त्वर्थदुहितुः पत्यौ सूर्यावर्त्ते धवे पुमान्" इति मेदिनी) तयोः वृत्तान्तस्य—कारावासोपरमरूप वार्तायाः, विज्ञानेन—अवगत्या यः प्रकोपः—प्रबलक्रोधः, तस्य आध्मानेन—आधिक्येन दूयमाने—सन्तप्यमाने तस्मिन् मनसि—चित्ते, चित्तस्य तादृशावस्थायां मित्यर्थः।

(१३६) निवर्त्तनादेशेन—निवर्त्तनम्—अनुगमननिवृत्तिः, तस्य आदेशेन—आज्ञया, दूरेति।—दूरम्—अत्यन्तं यथा तथा, प्ररूढा—जाता, प्रणयपीडा—

दीर्घं पश्यति आर्य्यो मम अनुगमनेन? (१३७) यदि बाल इति,—नितरां तर्हि न त्याज्योऽस्मि। (१३८) रक्षणीय इति,—भुजपञ्जरं रक्षास्थानम्। (१३९) अशक्त इति,—क्व परीक्षितोऽस्मि? संवर्द्धनीय इति,—वियोगः तनूकरोति। (१४०) अक्लेशसह इति,—स्त्रीपक्षे निक्षिप्तोऽस्मि। सुखम् अनुभवतु इति,—त्वया एव सह तत् प्रयाति। महान् अध्वनः

---

प्रादेशमात्र, अभिमानबन्धु स्वामित्वं यस्य तथाभूत, सोदरैकशरणस्य आत्मन स्व इयमीकारान्तादग्राया धातुस्थयाविधोदामोन्तःस्पृशकारीयस्वशात् कथावशिकाभिलाष प्र० इत्यर्थ ।

(१३७) यदि बाल,—शिशु, इति—इति हेतोः इत्यर्थ अनुगमने निवर्त्तयसि आर्य इति शेष, तर्हि—तदा मम बालत्वे सति इति भाव, नितराम्—अतिशयेन, अवश्यमेवेति भाव, न त्याज्योऽस्मि—त्यागयोग्योऽस्मि, भवता इति शेष, बालक मा परित्यज्य पितृसन्नीधेन भवता कुत्रापि न गन्तव्यमिति भाव, सदैव नेतव्योऽहम् इति फलितम्।

(१३८) रक्षणीय,—पालनीय, इति—इति हेतोः चेदिति शेष, तदपि न गन्तव्यमिति भाव, यत भवदिति।—भवत,—तव, भुजपञ्जरं—बाहुपिञ्जर, पञ्जरमध्ये अवस्थितस्य विहङ्गस्यैवेति भाव, रक्षास्थान—शरणास्पद भवद्भुजपञ्जरे एव स्थितिरेव मम श्रेयस्करमिति भाव, त्वयि गते को मा रक्षिष्यति? अत, त्वया सहैव मे गन्तव्यमिति निष्कर्षं ।

(१३९) अशक्त—दुर्बल, इति विधत्से चेत्? तदोत्तर—क्व—कुत्र, विषये इति शेष, परीक्षितोऽस्मि—समर्थो वा असमर्थो वा इति निरूपितोऽस्मि, भवतेति शेष न कुत्रापि विषये अशक्तोऽहमिति परीक्षितवान् आर्य इति भाव। संवर्द्धनीय—पोषणीय देहस्य पुष्टि सम्पादनीया इत्यर्थ इति, विधत्से चेत वियोग,—भवद्विच्छेद इत्यर्थ, तनूकरोति—कृशीकरोति, विरहस्तु कृशीकरोति वा, मामिति शेष, त्वद्वियोगात् जीवनसंशये कुतो वर्द्धनमिति भाव ।

(१४०) अक्लेशसह,—न क्लेशं सोढुं शक्त इति—विधत्से चेत्? तदोत्तरं,—स्त्रीपक्षे नारीस्थाने निक्षिप्तोऽस्मि—पातितोऽस्मि, क्लेशासहतया नारीरूपत्वेनाहं भवता परिगणितोऽस्मीति भाव,। सुखम्—आनन्दम् अनुभवतु—भुङ्क्ताम्, इति

पादरजसि कोऽतिभारः ? (१४३) द्वयोः गमनम् असाम्प्रतमिति,—माम् अनुगृहाण गमनाज्ञया। कातरो भ्रातृस्नेह इति,—सदृशो दोषः। (१४४) का इयम् आत्मम्भरिता भुजस्य ते, यत् एकाकी क्षीरोदफेनपटलपाण्डुरम् अमृतमिव यशः पिपासति ? (१४५) अवञ्चितपूर्व्वोऽस्मि प्रसादेषु।

---

तत्रोत्तर—पादरजसि—चरणधूलौ, तत्सदृशे मयि इति भावः, कोऽतिभारः—गुरुत्वबोध इति यावत्, पादसंसक्तं रजः यथा नातिभारभूतं भवति, तद्वत् अहमपि ज्ञातव्यः त्वयेति भावः।

(१४३) द्वयोः,—उभयोः भ्रात्रोरिति भावः। असाम्प्रतम्—अयुक्तम्, नगरस्य रक्षिअभावादिति भावः। अनुगृहाण—अनुकम्पस्व, मामेव गमनाय अनुमन्यस्व, त्वमिहैव तिष्ठ इति समुदितवाक्यार्थः। उत्तरमिदम् आत्मन एव मायनिकाभिमानगर्वपरिहारमित्यवधातव्यम्। एतेन सिद्धमनादिरघा भवत्प्रतापेन सुसाध्या, तत्र हि विपक्षनिग्रहे ममैवाभ्यासस्तथा इति व्यज्यते। कातरः—भीतः, विपदाशङ्कया व्याकुल इत्यर्थः, विपत्सङ्कुले रणक्षेत्रे त्वां नेतुं बिभेमि इति चेत् इति भावः। सदृशः—तुल्यसम्बन्धवतः सोदरद्वयस्य इत्यर्थः, भावाभावयोः उभयत्र समानसुखदुःखदायकत्वात् इति भावः, यथा,—सदृशः,—तुल्यः दोषः—दूषणम्, अनिष्टशङ्का इत्यर्थः, मयि भ्रातरि स्नेहात् तव यादृशी दोषाशङ्का त्वयि भ्रातर्यपि सहजभक्तिभावात् ममापि तादृशी एव अनिष्टाशङ्का इति भावः।

(१४४) [ "का इयम्" इत्यत्र "का चेयम्" इति पाठान्तरम् ]। आत्मम्भरिता—स्वार्थैकपरतेति भावः। [ "कुक्षिम्भरिरात्मम्भरिश्च" (३।२।२६ पा०) इत्यात्मनी मुमागमः खश् च निपात्यते ] क्षीरोदेति।—क्षीरोदस्य क्षीरसागरस्य फेनपटलम्—फेनराशिः तद्वत् पाण्डुरम्—शुभ्रम् यशः—कीर्त्तिं, अमृतमिव अमृतमाधुर्यात्मकमिति भावः, एकाकी—एक एव, पिपासति ?—पातुमिच्छति ? अनुजीविजनं वञ्चयित्वा एकाकी एवाहं तादृशयशःपीयूषं पास्यामि इति पिपासुता तव भुजस्य अतीव स्वार्थपरता इत्यहो। ईदृशी स्वार्थपरता तु नोचिता इति भावः।

(१४५) भवत्वेकाकिन एव पिपासुता, तत्र को दोषः ? इत्यत्राह, अवञ्चितेति।—प्रसादेषु—अनुग्रहेषु अवञ्चितपूर्व्वः,—अप्रतारितपूर्व्वः, प्राक् त्वया कदाऽपि न प्रतारित इत्यर्थः, इतः पूर्वं सदैव तव प्रसादमुपभुज्य कृतार्थोऽभवम्, इदानीमपि तदधिकारात् मा वञ्चयस्व इति भावः।

(१५१) दुर्निवारायाम् अस्यां विपक्षक्षपणक्षुधि क्षुभितायां क्षम्यताम् अयम् एकाकिनः कोपकवल एकः। तिष्ठतु भवान्" इत्यभिधाय च तस्मिन् एव वासरे तिर्यग्गाम अभ्यमित्रम्।

अथ (१५२) तथा गते भ्रातरि, उपरते च पितरि, प्रोषितजीविते च भगिनीपतौ, मृतायाश्च मातरि, संयतायाश्च स्वसरि, स्वयूथभ्रष्ट इव वन्यः करी देवो हर्षः कथमप्येकाकी कालं तम् अनैषीत्। (१५३) अतिक्रान्तेषु बहुषु वासरेषु कदाचित् तथैव भ्रातृगमनदुःखासिकया दत्तप्रजागरः

---

भोगम् इति राज्यवर्धनस्याशयः। सन्दर्भेऽस्मिन् हरिणादयो सिंहशरभादीनाम् अप्रस्तुतानां समुपन्यासात् प्रस्तुते शत्रुनिग्रहविषये एव कार्ये पर्यवसानात् निमित्तकार्य-व्यपदेशनातिनिबन्धनाऽप्रस्तुतप्रशंसाऽलङ्कृति सान्वातिशयोक्त्युपमया सहाङ्गाङ्गिभावेन सङ्कीर्णत्वम्।

(१५१) दुर्निवारायां—कथमपि निवारयितुमशक्यायां, क्षुभितायाम्—उद्दीप्तायां, विपक्षक्षपणक्षुधि—शत्रुविध्वंसनरूपायां क्षुधायाम्, एकाकिनः—अद्वितीयस्य, मम इति शेषः, एकः—एकमात्रः कोपकवलः—क्रोधग्रासः, क्षम्यताम्—सह्यताम्, एकमात्रं ममैव कोपकवलविषयी मालवकुलपांसनो भवतु, न तव सममहमप्यावयोरेकम् आकलयामि इति भावः। वासरे—दिवसे। अभ्यमित्रम्—अभिशत्रु, शत्रु प्रति इत्यर्थः। ["लक्षणेनाभिप्रती—" (२।१।१४ पा०) इत्यादिना समासः]।

(१५२) तथा—युद्धायमिति यावत्। उपरते—मृते। भगिनीपतौ—ग्रहवर्मणि इत्यर्थः, ["भगिनीपतौ" इत्यत्र "जामातरि" इति पाठेऽपि ■ एवार्थः, व्याख्यानादेव नीयः। दुहितृपत्यर्थे प्रयुक्तस्य जामातृशब्दस्य भगिनीपत्यर्थे प्रयोगस्य यद्यपि न समीचीनता तथाऽपि असाधारणपारम्पर्याश्रयतया लोकव्यवहारदर्शनात् तथाविधः प्रयोगो न दोषाय इति समाधानीयम्, ज्येष्ठभ्रातुः पितृतुल्यत्वात् तथाविधः प्रयोगो वा इति] प्रोषितजीविते—गतासौ इत्यर्थः। स्वसरि—भगिन्यां राज्यश्रीनाम्न्यां, संयतायां—काराबद्धायाम्। स्वयूथभ्रष्टः—निजसङ्घच्युतः, वन्यः करीव—आरण्यगज इव। अनैषीत्—अतिवाहयामास।

(१५३) अतिक्रान्तेषु—अतीतेषु। तथैव—प्रागनुभूतपूर्वेणैव, भ्रातृगमन-पथे यद् दुःखमनुभूतं, तेनैव दुःखेनेत्यर्थः, भ्रातृगमनदुःखासिकया—भ्रातुः—सोदरस्य, गमनम्—प्रयाणं, स्वपरित्यागेन इति भावः, तेन या दुःखासिका—

त्रिभागशेषायां त्रियामायां यामिकेन गीयमानाम् इमाम् आर्यां शुश्राव,—

द्वीपोपगीतगुणमपि समुपार्जितरत्नराशिसारमपि ।
पोतं पवन इव विधिः पुरुषमकाण्डे निपातयति ॥ २ ॥

(१५४) तां च श्रुत्वा सुतराम् अनित्यताभावनया दूयमानः

---

दुःखावस्थाने तेन, दधेति।—दृश,—अक्षिणी इत्यर्थ, जागर,—दीर्घजागरण यस्य तथाभूत, त्रिभागेति।—त्रिभाग,—तृतीय अंश, चरमप्रहर इत्यर्थ, शेष,—अवशिष्ट यस्या तथाभूतायां, त्रियामायां—रात्रौ "त्रियामा रजनीं प्राहुस्त्यक्त्वाऽद्यन्तचतुष्टयम्" इति समयनिर्णयकारा, यामिकेन—प्रहरिणा प्रहरपालकेन इति यावत्। इमां—वक्ष्यमाणामित्यर्थं।

यामिकेन प्रहरान्ते पठितं विधिविलसितवर्णनात्मिकां राजकुलस्य भावि अशुभं सूचयन्नाह, द्वीपेति।—विधि,—दुर्दैवमिति यावत्, पवन,—प्रतिकूलवायुरिति भाव, पोतमिव—नावमिव, अर्णवयानमिव इत्यर्थ, ["वहित्रमिण्—" (उ० ४ पा० ५६ सू०) इति पुनाते पवते इत्यस्य वा रूप] द्वीपेषु—वर्णादेव दिशो यदि परिवेष्टितेषु स्थलेषु, ("द्वीपोऽस्त्रियामन्तरीपं यदन्तर्वारिणस्तटम्" इत्यमरानुशासनात्) अन्तरन्यस्य स्थलभागार्थकतया समन्तात् अम्बुवहितभूभागेषु इत्यर्थं, ["ऋक्पूर—" इत्यप्रत्यये कृते, ततः "द्व्यन्तरुपसर्गेभ्योऽप ईत्" (६।३।९७ पा०) इति सूत्रेण अपस्य ईत्, तथा हि, द्वौ दिशौ गता आपो यस्मिन्निति शेषम्] तथा समस्त अष्टादशसु वा इति भाव, उपगीता —कीर्तिता, गुणा,—शौर्यदाक्षिण्यादय, अथवृत्त-मनोज्ञा इत्यर्थ यस्य तथाभूतमपि समुपार्जितरत्नराशिसारमपि—समुपार्जित —स्वदात जयेन लब्ध, अविज्ञाहितत्वात् स्वकुक्षि अर्जित इत्यर्थ, रत्नराशीना—मणिसमूहाना, सार,—उत्कृष्टांश, उभयत्रापि समान येन तथाविधमपि पुरुष—नरश्रेष्ठमिति यावत्, अकाण्डे—सहसा, निपातयति—विनाशयति। एतेन राज्य-मडनस्य मरणं सूचितम्। इह पोतेन सह पुरुषस्य साम्यबोधनात् उपमा द्वीपोपगीतगुणादिरूपविशेषणस्य श्लिष्टत्वात्तदंशेषसङ्कीर्णा, अकाण्डे इत्यादिना तु इच्छा राज्य-मडनस्याकस्मात् पतनम् आशु भविष्यति इत्यलङ्कारेणाभिहित वस्तु व्यङ्ग्यम् इति सङ्क्षेप। आर्या वृत्तम् ॥ २ ॥

(१५४) ताम्—आर्याम्। सुतराम्—अतिशयेन, अनित्यताभावनया—

हृदयः प्रदोषभूयिष्ठाया क्षपाया क्षणमिव निद्राम् अलभत; स्वप्ने च अभ्रंलिहं लोहस्तम्भं भज्यमानम् अपश्यत्। (१५५) उत्कम्पमानहृदयश्च पुनः प्रत्यबुध्यत, अचिन्तयच्च,—"किं नु खलु माम् एवम् अमी सततम् अनुबध्नन्ति दुःस्वप्नाः? स्फुरति च दिवानिशम् अकल्याणाख्यानविचक्षणम् अदक्षिणम् अक्षि। (१५६) सुदारुणाश्च अक्षुद्रक्षितिपक्षयम् आचक्षाणा क्षणमपि न शाम्यन्ति पुनरुत्पाताः। प्रत्यहं (१५७) राज्ञः अविकल-

---

सम्मारोऽयम् अनित्य, तेन हि अवस्था सर्व नियतमेव जराव्याध्यादिभि पीड्यन्ते, सन्ति च महापुरुषा अकाल कालकवलिता भवन्ति, नास्ति तैर्वाग्नियता, न केचिदपि अत्र स्थिरा इत्यादि चिन्तया, धूयमानहृदय —सन्तप्यमानचेता, प्रदोषभूयिष्ठाया—प्रायेण अय गतायामित्यर्थ अल्पत्वमेवावाशिष्टायामिति भाव, क्षपाया—रात्रौ, क्षणमिव—अल्पकालमिव, [ व्याप्त्यर्थं द्वितीया ] इवशब्दोऽत्र वाक्यालङ्कारे। अभ्रंलिह—गगनचुम्बिनम्, अत्युन्नतमित्यर्थं, मेघमार्गभेदितया गगनस्पृशमिति यावत। [ "वहाभ्रे लिह" (३।२।३२ पा० ) इति खश्प्रत्यय ] भज्यमान—खण्ड्यमान द्विधा क्रियमाणमित्यर्थं, केनापि इति शेष। एतद्धि दुःस्वप्नदर्शन भाव्यनिष्टसूचकमिति बोध्यम्।

(१५५) उत्कम्पमानहृदय —वेपमानवक्षा इत्यर्थ। प्रत्यबुध्यत—अजागः। किं नु—वितर्के। एवम्—अनेन प्रकारेण। अनुबध्नन्ति—अनुसरन्ति। दिवानिशम्—अहोरात्रम्, अकल्याणेति।—अकल्याणम—अशुभम, आख्यान—कथन, तत्र विचक्षण—निपुणम, अशुभसूचकमित्यर्थं, अदक्षिण—वाम, प्रतिकूलञ्च, अक्षि—चक्षु, स्फुरति च—स्पन्दते च।

(१५६) पुन,—पक्षान्तरे, अपि चेत्यर्थक वा सविशेषपर्यालोचनानुभूतत्वात् पितृपरलोकवासात् प्राक् पर्यालोचनाच्च इति ज्ञातव्य सुदारुणा,—अतिभयङ्करा, अक्षुद्रेति।—अक्षुद्रस्य—महत, श्रेष्ठस्य इत्यर्थे, क्षितिपस्य—राज्ञ, क्षय,—नाश तम, आचक्षाणा,—कथयन्त, सूचयन्त इत्यर्थं, उत्पाता,—उत्पतन्ति—अशुभसूचनार्थम् आविर्भवन्तीति तथोक्ता, अशुभनिदानभूता भूकम्पोल्कापातादय इत्यर्थं न शाम्यन्ति—न विरमन्ति।

(१५७) राज्ञ,—सिंहिकासुत, अविकलेति।—न विकल,—विपद्यस्त;

(१६७) जीवितधारणलज्जया इव अवनतमुखं, नासावंशस्य अग्रे ग्रथितदृष्टिं, (१६८) दुःखदूरप्ररूढलोम्ना मूकेनापि मुखेन (१६९) स्वामिव्यसनम् अविच्छिन्नैः अश्रुबिन्दुभिः विज्ञापयन्तं, कुन्तलं नाम हृदयस्थानं राज्यवर्द्धनस्य प्रसादभूमिम् अभिजाततमं ददर्श। दृष्ट्वा च (१७०) जाताशङ्कः चक्षुषि सलिलेन, मुखशशिनि श्वसितेन, हृदये हुताशेन, उत्सङ्गे भुवा, दारुणाप्रियश्रवणसमये सममिव सर्व्वेषु अङ्गेषु अगृह्यत लोकपालैः।

(१६७) जीवितेति।—जीवितस्य—प्राणानां, धारणं—रक्षणमित्यर्थं, तेन या लज्जा—त्रपा तया इव, प्रभोर्जीवितरक्षणासामर्थ्यात् तस्मिन् विपन्नेऽपि स्वजीवनापरित्यागादिति वा भावः। नासावंशस्य अग्रे—नासिकाग्रभुवि इत्यादि, ग्रथितदृष्टिं—निबद्धचक्षुषं, महालज्जया किमप्यन्यदपश्यन्तमिति भावः।

(१६८) दुःखेति।—दुःखेन—क्लेशेन हेतुना, दूरम्—अत्यन्तं, प्ररूढानि—जातानि क्षौरकर्माकरणात् प्रवर्द्धितानि इति भावः, लोमानि—श्मश्रुराजयः यस्मिन् तेन ["दुःखदूरप्ररूढलोम्ना" इत्यत्र "दुःखदूरप्ररूढरोम्णा" इति पाठेऽपि स एवार्थः, रलयोरभेदाद्दाशब्दस्य च्छान्दसादनुप्रासात् ] मूकेनापि—वाग्व्यापाररहितेनापि, किमपि अकथयतापीति भावः।

(१६९) स्वामिव्यसन—स्वामिनः—प्रभोः, राज्यवर्द्धनस्येति यावत्, व्यसनं—विपत्तिं, विनाशमित्यर्थः, ("व्यसनं विपदि भ्रंशे" इत्यमरः)। अविच्छिन्नैः,—अविरलपतद्भिः धाराकारैरित्यर्थः। हृदयस्थानं—महात्मनां प्रतिवेदितविश्वासिकमित्यर्थः, भूतपूर्व्वप्रकृष्टस्य श्रीमन्नदर्शनजनितपरितोषप्राप्ताधिकारमित्याशयः। प्रसादभूमिं—कृपापात्रम्। अभिजाततमं—महाकुलप्रसूततमम्।

(१७०) जाताशङ्कः,—भीतः। सलिलेन—जलाधिपतिना वरुणेन इत्यर्थं, सलिलस्य जडतया कस्यचिद्दुरवगमत्वसम्भवात्, अन्यथा स्वाधीश्वरदिक्पुरवसदायनादिव लक्ष्म्या इति अङ्कीकृता इति सङ्क्षेपः, अविच्छिन्नधाराभिरश्रुभिः रुरोद इति तात्पर्य्यम्। श्वसितेन—निश्वासवायुना। हुताशेन—वह्निना। उत्सङ्गे क्रोडे, देह इति भावः, भुवा—पृथिव्या। दारुणेति।—दारुणस्य—भीषणस्य, कठोरस्येत्यर्थः, अप्रियस्य—अशुभवार्त्तायाः, श्रवणसमये—श्रवणकाले, सममिव—युगपदिव। लोकपालैः,—राजा, इन्द्र इत्यर्थः। ["लोकपालै" इत्यत्र "लोकपाल" इति

(१७१) तस्माच्च हेलानिर्जितमालवानीकमपि गौडाधिपेन मिथ्योपचारोपचितविश्वासं मुक्तशस्त्रम् एकाकिनं विश्रब्धं स्वभवन एव भ्रातरं व्यापादितम् अश्रौषीत्।

श्रुत्वा च महातेजस्वी (१७२) प्रचण्डकोपपावकप्रसर-परिचीयमानशोकावेगः सहसैव प्रजज्वाल। (१७३) ततश्च अमर्षनिर्धुतशिरोविशीर्यमाणशिखामणिशकलाङ्गारितम् इव

---

माद्रि,—शोकपाके,—दृश्यादिभि, [illegible], दृश्वं इति शेष ] [illegible] [illegible] पुनरपि च बाष्पाकुल, मुख दीर्घनिश्वासवाहि, हृदय शोकाभिभूतम् [illegible] भूतलपतित आसीदिति भाव।

(१७१) तस्मात्—कुन्तलाभिधानात् सम्वाहात्, हेलेति।—हेलया—अवज्ञया, निर्जितं—पराभूतं, मालवानीकं—मालवसैन्यं येन तथाभूतम्। गौडाधिपेन—गौडराजेन, [illegible] [illegible] केनचित् [illegible] शाशाङ्ककेन, "शशाङ्कस्य गौडाधिपतेः ... ॥" इत्यादि अभिधानकारोद्धृतवचनेन [illegible] इत्याशय। मिथ्येति।—मिथ्या—अलीकं, उपचार,—सत्कारः,—[illegible], तेन उपचितं,—वर्धितं, वर्धितं इति यावत्, विश्वास,—प्रत्ययः यस्य तथोक्तम् अत एव मुक्तशस्त्रं—त्यक्तायुधं, निरस्त्रमित्यर्थ। विश्रब्धं—विश्वस्तम्। व्यापादितं—निहतम्।

(१७२) प्रचण्डेति।—प्रचण्डस्य—प्रदुरस्य, कोपपावकस्य—क्रोधाग्नेः, प्रसरेण—आविर्भावेण, परिचीयमान,—सङ्कुचमान, वर्धमान इत्यर्थं, शोकावेग,—मन्युप्रसर, यस्य तथोक्त, शोकामर्षाभ्यां समभेव अभिभूयमान इत्यर्थं। प्रजज्वाल—उद्दिदीपे। [illegible] प्रचण्डशोकानलस्य पुन [illegible] कोपज्वालादुद्गमस्मात् नरेन्द्रस्य [illegible] पदार्थहेतुक काव्यलिङ्गम्।

(१७३) "ततश्च" इत्यस्य "यदा [illegible]" इत्युत्तरेणान्वय। अमर्षेति।—अमर्षात्—क्रोधात्, निर्धुतात्—कम्पितात्, शिरस —मस्तकात्, विशीर्यमाण—स्वयमेव भज्यमान, ["शिरोविशीर्यमाण—"इत्यत्र "शिरःशीर्यमाण—" इति पाठेऽपि स एवार्थं ] शिखामणिशकल—चूडामणिखण्ड, तेन अङ्गारित,—अङ्गारवत् ज्वलित, अङ्गारैरिव इति भाव। ["अङ्गारितम्" इत्यत्र "अङ्गारकितम्" इति पाठेऽपि स एवार्थं ]। [illegible] [illegible] [illegible] लोहितवर्णा [illegible] [illegible] किञ्चिदुदयात् वर्धनात् तत्त्वम् [illegible]

( १७४ ) रोषाग्निम् उद्वमन्, अनवरतस्फुरितेन पिबन् इव सर्वतेजस्विनाम् आयूंषि रोषनिर्भुग्नेन दशनच्छदेन, ( १७५ ) लोहितायमानलोचनालोकविक्षेपैः दिग्दाहान् इव दर्शयन्, रोषानलेन अपि ( १७६ ) असह्यसहजशौर्योष्मदहनदह्यमानेन इव वितन्यमानस्वेदसलिलशीकरासारदुर्दिनः, ( १७७ ) स्वावयवैः अपि अदृष्टपूर्वप्रकोपभीतैः इव कम्पमानैः उपेतः, हर इव ( १७८ ) कृतभैरवाकारः, हरिरिव प्रकटितनरसिंहरूपः,

---

द्योतक इति ज्ञेयम्, अन्यथा उत्तमप्रकृतिकधीरोदात्ते क्रोधोऽपि विरोधारोप स्यात् इत्यवधातव्यम्।

( १७४ ) रोषाग्नि—क्रोधानलम्, उद्वमन्—उद्गिरन्। अनवरतस्फुरितेन—अविरतस्पन्दितेन, रोषनिर्भुग्नेन—क्रोधदष्टेन इत्यर्थः क्रोधवक्रीकृतेन वा, दशनच्छदेन—ओष्ठेन, सर्वतेजस्विना—सकलप्रतापवतां, प्रतिपक्षवीरसमूहानामित्यर्थः, आयूंषि—जीवितकालान्।

(१७५) लोहितायमानेति।—लोहितायमानयोः,—रक्ततामापद्यमानयोः,लोचनयोः,—नयनयोः, आलोकविक्षेपैः,—प्रभाविसरणैः। दर्शयन्—प्रकटयन्।

( १७६ ) असह्येति।—असह्यस्य—सोढुमशक्यस्य, सहजस्य—स्वाभाविकस्य, शौर्यस्य—वीर्यस्य उष्मा—सन्तापः, स एव दहनः,—वह्निः, तेन दह्यमान,—प्रज्वल्यमान तेन इव, वितन्यमानेति।—वितन्यमान,—विस्तीर्यमाण, स्वेदसलिलानां—घर्मजलानां, शीकरासारः,—बिन्दुधारासम्पात एव, दुर्दिनं—वर्षो यस्मिन् तथाभूतः, स्वस्य क्रोधानलोऽपि तस्य शौर्यवह्निना दह्यमानः स्वदाहज्वाला-शमनार्थं तस्मात् स्वेदसलिलं निःसार्य तेन आत्मानं सिञ्चति इव इति भावः, दृश्यते च लोके दह्यमानः जलेनात्मानम् अभिवर्षति इति स्वेदाप्लुतकलेवरो जात इति निष्कर्षः।

(१७७) स्वावयवैः,—निजाङ्गैः, अदृष्टेति।—अदृष्टपूर्वात्—पूर्वमदृष्टात् कदाऽपि क्रोधाकरणादिति भावः, प्रकोपात्—प्रचण्डरोषात्, भीताः,—शङ्किताः ते इव, उपेतः,—युक्तः, क्रोधकम्पितकलेवर इत्यर्थः।

( १७८ ) कृतेति।—कृतः,—जनित इत्यर्थः, भैरवः,—भीषणः, आकारः,—मूर्तिः, अथवा—कृतः,—धृतः, भैरवस्य—शम्भुविभेदस्य, आकारः येन तथाभूतः। प्रकटितेति।—प्रकटित—प्रकाशित, नरसिंहस्य—नरः सिंह इव इत्युपमितसमासात्

(१७८) सूर्यकान्तशैल इव अपरतेजःप्रसरदर्शनप्रज्वलित, (१८०) प्रयदिवस इव उद्गतद्वादशादिनकरदुर्निरीक्ष्यमूर्तिः, महोत्पातमारुत इव सकलभूभृत्कम्पकारी, विन्ध्य इव (१८१) विवर्द्धमानविग्रहोत्क्षेप, महाऽऽशीविष इव दुर्नरेन्द्राभिभवरोषित, (१८२) पारिचित इव सर्वभोगिदहनोद्यत,

प्रायशा नर मृगश्च तस्य, (तथा चामर —"पुरुषस्तदर्थे व्याघ्रपुङ्गवर्षभकुञ्जरा । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचरा ॥" इति) यद्वा—वपुषि नर मुखे च सिंह इव तस्य, नृसिंहाकारमूर्तिभेदस्य च, [नीलोत्पलादिवत् समास] रूपम्—आकार, येन तथोक्त ।

(१७९) सूर्यकान्तशैल इव—सूर्यकान्तमणिमयपर्वत इव, अपरेति ।—अपरस्य—विपक्षस्य सूर्यस्य च इति भाव, तेजस—प्रतापानां, प्रभायाश्च, प्रसरस्य—विकासस्य, दर्शनेन—अवलोकनेन, प्रज्वलित,—प्रदीप्त, सूर्यकान्तमपि सूर्यकिरणसम्पर्केण प्रज्वलति इति प्रसिद्ध ।

(१८०) प्रयदिवस इव—कल्पान्तदिनमिव, ("क्षय कल्पान्त इत्यपि" इत्यमर)। उद्गतेति ।—उद्गताना—उदय गतवता, द्वादशाना—द्वादशसङ्ख्यकाना दिनकराणां—सूर्याणामिव, दुर्निरीक्ष्या—निरीक्षितुमशक्या, तीव्रेति भाव, मूर्ति,—आकार यस्य तथाभूत । महोत्पातमारुत इव—प्रलयकालवात इव, सकलेति ।—सकलानां—सर्वेषां, भूभृता—राज्ञां, पर्वतानाञ्च, कम्पकारी—वेपनहेतु, भयात् सञ्चालनाच्चेति भाव ।

(१८१) विवर्द्धमानेति ।—विवर्द्धमान,—विशेषेण वृद्धिं गच्छन्, क्रोधेन वर्द्धमानेन च इति भाव, विग्रहस्य—सङ्ग्रामस्य, देहस्य च, उत्क्षेप —उद्योग इति भाव, उच्छ्रायश्च यस्य तथाभूत । महाऽऽशीविष इव—महान् भुजङ्ग इव दुर्नरेन्द्रेति ।—दुर्नरेन्द्रस्य—दुर्विनीतस्य राज्ञ, गौडाधिपते इत्यर्थं, अनभिज्ञस्य विषवैद्यस्य च, ("नरेन्द्रस्तु महीपाले विषवैद्ये च पुरुषम्" इति मेदिनी) अभिभवेन—पराभवेन, भावयकर्पेण, गरुडादिमन्त्रप्रयोगरूपेण च इति भाव, रोषित,—कोपित ।

(१८२) पारिचित इव—परिचित अमल पुमान् पारिचित,—जनमेजय, स इव, ["तस्यापत्यम्" (४।१।९२ पा॰) इत्यण्] सर्वेति ।—सर्वेषां—समस्तानां, भोगिना—सुखभोगरतानां परिपन्थिराजानामित्यर्थं, सर्पाणाञ्च, ("भोगी भुजङ्गमेऽपि स्यात् कामपाले नृपे पुमान्" इति मेदिनी) दहने—भस्मीकरणे, प्रभावेण

(१८३) वृकोदर इव रिपुरुधिरपानतृषितः, सुरगज इव प्रतिपक्षवारणप्रधावितः, (१८४) पूर्वागम इव पौरुषस्य, उन्माद इव मदस्य, (१८५) आवेग इव अवलेपस्य, तारुण्यावतार इव तेजसः, सर्वोद्योग इव दर्पस्य, (१८६) युगागम इव यौवनोष्मणः, राज्याभिषेक इव समररसस्य, नीराजनदिवस इव अमर्षिष्णुतायाः परां भीषणताम् अयासीत्।

---

सर्पमेधयज्ञेन च इति भावः, उद्यतः,—प्रवृत्तः। पुरा पितरि परिक्षिति तक्षकेण नागेन दष्टे मृते च सति क्रुद्धो जनमेजयः सर्पकुलजिघांसया सर्पमेधयज्ञमन्वतिष्ठत् इति वार्त्ता भारतीया अत्र अनुसन्धेया।

(१८३) वृकोदर इव—भीमसेन इव, रिपुरिति।—रिपोः,—शत्रोः, कौरवाधिपस्य द्रौपद्या वेण्याः कर्षकस्य दुःशासनस्य च इत्यर्थः, रुधिरपाने—रक्तपाने, तृषितः,—तृष्णान्वितः, अनुबधार्थी इति यावत्। [ "रिपुरुधिरपानतृषित" इत्यत्र "रिपुरुधिरतृषित" इति पाठे,—रिपोः रुधिराय—रक्तपानायेत्यर्थः, तृषितः,—पिपासितः, जाताकाङ्क्ष इत्यर्थः ]। सुरगज इव—ऐरावत इव, प्रतिपक्षेति।—प्रतिपक्षस्य—शत्रोः, वारणाय—दमनाय, प्रतिपक्षवारणाय—प्रतिद्वन्द्विगजाय च, प्रधावितः,—चलितः। अत्र भूयसां साम्यप्रदर्शनात् श्लिष्टा मालोपमाऽलङ्कारः।

(१८४) पौरुषस्य—पुरुषकारस्य, पराक्रमस्य इत्यर्थः, पूर्वागम इव—प्रथमोपस्थिति इव, प्रथमं मूर्तिमान् पराक्रम इव इत्यर्थः। मदस्य—सौभाग्ययौवनादिजनितावलेपस्य, उन्माद इव—उन्मत्तभाव इव समुद्धतो मद इव इत्यर्थः।

(१८५) अवलेपस्य—गर्वस्य, आवेग इव—त्वरा इव, विग्रहवान् गर्वप्रसर इव इत्यर्थः। तेजसः,—प्रतापस्य, तारुण्यावतार इव—यौवनाविर्भाव इव, अभिनवोत्पन्न मूर्तिमान् प्रताप इव इत्यर्थः। दर्पस्य—अहङ्कारस्य, सर्वोद्योग इव—पूर्णोद्यम इव, सर्वथा समुद्धतस्य मूर्तिमती दर्पस्य प्रयत्नसह इव इत्यर्थः।

(१८६) यौवनोष्मणः—यौवनस्य—तारुण्यस्य, उष्मा—उष्णत्वं तस्य, युगागम इव—नवयुगावतार इव, देहधारी यौवनगर्व इवेत्यर्थः। समररसस्य—सङ्ग्रामानुरागस्य, [ "समररसस्य" इत्यत्र "रणरसस्य" इति पाठेऽपि स एवार्थः ] राज्याभिषेक इव—राजकर्मणि अभिषेचनमिव, नवे राज्येऽभिषिक्तः सङ्ग्रामरस इव कायवान् इत्यर्थः। अमर्षिष्णुतायाः,—अक्षमायाः, शत्रुनिधने कालविलम्बासहनशीलतायाः इत्यर्थः, नीराजनदिवस इव—शान्तिकर्मविशेषवासर इव तनुमान् इन्द्राख्य, राज्ञ

अवादीच्च,—(१८७) "गौडाधिपम् अपहाय कः तादृशं महापुरुषं तत्क्षण एव (१८८) निर्व्याजभुजवीर्यनिर्जितसमस्तराजकं मुक्तशस्त्रं कलशयोनिमिव कृष्णवर्त्मप्रसूतिः ईदृशेन (१८९) सर्वलोकविगर्हितेन मृत्युना शमयेत् धार्ष्ट्यम् ?

युद्धयात्राकाले नीराजना क्रियते इति व्यवहारः, विजिगीषो यात्राकाले तद्दिने यथा श्रीश्रयं दृश्यते, तद्वदेव इत्यर्थः, परा—महतीं, भीमवतीं—भयङ्करताम्। इह बहूनामुत्प्रेक्षितानाम् एकस्मिन् वस्तुनि सम्बन्धवशात् यथायथं जातिद्रव्यगुणक्रियोत्प्रेक्षा, खेदसलिलमोक्तसारेण दुर्दिनासम्बन्धेऽपि तत्सम्बन्धकथनात् अतिशयोक्तिः, अत भैरवाकारादिविशिष्टपदार्थयोगात् श्लेष इति, क्रोधोद्रेकादयः व्यभिचारिप्रकाशनुरागाः मृता इति रसाभासः, एतेषां पारस्परिकाश्रयानपेक्षितत्वेन स्थितत्वात् संकरः, वकुरतानुरीयसौन्दर्यवत् चमत्कृत्यातिशयप्रदीपक इति सङ्क्षेपः।

(१८७) गौडाधिप—शशाङ्कनामधेयम्, अपहाय—परित्यज्य, तं विना इत्यर्थः। तत्क्षण एव—तदानीमेव, दृष्टिपातमात्रे एव इत्यर्थः, आयासं विनैवेति भावः।

(१८८) निर्व्याजेति।—निर्व्याजेन—अकपटेन, कूटव्यवहारविमुखेन इति भावः, भुजवीर्येण—बाहुबलेन निर्जितं—पराभूतं समस्तं—सकलं, राजकं—राजन्यवर्गः, एकत्र,—शाल्वादिप्रतिपक्षराजाः, अन्यत्र,—युधिष्ठिरादिपाण्डवाः येन तथाभूतं, मुक्तशस्त्रं—त्यक्तायुधं निरस्त्रमित्यर्थः युद्धापगमात् पुत्रशोकाच्च इति भावः कलशयोनिमिव—कुम्भयोनिमिव द्रोणाचार्यमिव इत्यर्थः ("कुम्भयोनिरगस्त्ये स्यादपि च द्रोणयोः पुमान्" इति मेदिनी) कृष्णवर्त्मप्रसूतिः,—कृष्णस्य—कृष्णवर्णपापस्य, अन्यायस्य इत्यर्थः, वर्त्म—मार्गः दुराचार इत्यर्थः, तस्य प्रसूतिः—योनिः, उत्पत्तिहेतुरित्यर्थः, ("स्त्रियां क्तिन्" (३।३।९४ पा०) इति क्तिन्) अन्यत्र—कृष्णवर्त्मा—वह्निः, ("कृष्णवर्त्मा पुमानग्नौ दुराचारे विधुन्तुदे" इति मेदिनी) प्रसूतिः—योनिः यस्य सः, यज्ञाग्निसमुद्भूतः धृष्टद्युम्न इत्यर्थः, कुत्रचित् कारणात् द्रोणाचार्येणापमानितेन द्रुपदेनानुष्ठितस्य यज्ञस्य फलभूततया द्रोणघातक होमकुण्डात् उत्थितः असौ इत्यामनन्ति पौराणिकाः।

(१८९) सर्वलोकविगर्हितेन—सज्जननिन्दितेन, विश्वासघातपूर्वकमुपाय-हननादिति भावः, मृत्युना—मरणेन, कूटपर्यायजनितेन इति भावः, शमयेत् ?—निर्वापयेत् ? लोकान्तरं नयेत् ? इत्यर्थः, नीचाशय विश्वासहन्तारं गौडाधिपं विना इह इदृशं पापकारी कोऽपि नास्ति इति समुदितार्थः। अत्र स्फुटार्थमस्य निर्देशोऽत्र

(१८०) अनार्य्यञ्च तं मुक्त्वा भागीरथीफेनपटलपाण्डुराः केषां (१८१) मनःसु सरःसु राजहंसा इव परशुरामपराक्रमस्मृतिःकृतो न कुर्युः आर्य्यशौर्य्यगुणाः पक्षपातम्? (१८२) कथमिव

---

पुत्रवधमनुपन्यस्यते, तथा हि—पुरा द्रोणेन निर्जितः पञ्चालाधिपतिर्द्रुपदः तत्कृतावमाननाप्रतिक्रियार्थं द्रोणनाशनं यागमन्वतिष्ठत्, सम्पूर्णे च यज्ञे यज्ञकुण्डात् सकवच पुरुष एक कन्या चैकापरा उदतिष्ठताम्, स च पुमान् धृष्टद्युम्न कन्या च द्रौपदीति नाम्ना विख्यातौ बभूवताम्। ततश्च प्रवृत्ते कुरुक्षेत्रसमरे सेनापतिना द्रोणाचार्य्येण महता रणेन पाण्डवसैन्ये हन्यमाने हरिणा छलेन प्रेरितो युधिष्ठिर अनिच्छन्नपि "अश्वत्थामा हत" इति उच्चै "इति गज" इति च अनुच्चै समवादीत्। स च "इति गज" इति वाक्यस्य मृदुस्वरेण उच्चरितत्वात् श्रोतुमशक्नुवन् सत्यवादिनो युधिष्ठिरस्य प्रत्ययितेन वचनेन पुत्रमरणं दृढमत्यय द्रोणाचार्य्य शोकात् अस्त्र परित्यज्य रथस्योपरि विषण्ण उपविवेश। धृष्टद्युम्नश्च तदा तत्रागत्य त खड्गेन निजघान इति।

(१८०) अनार्य्यम्—असज्जन, नीचमित्यर्थ, अविधौ अपि पापाचरणादिति भाव, त—गौडाधिप शशाङ्क मुक्त्वा—विहाय, त विना इत्यर्थ, भागीरथीति।—भागीरथ्या,—गङ्गाया, फेनाना—डिण्डीराणा, पटलानि—पुञ्जा, तद्वत् पाण्डुरा,—शुभ्रा।

(१८१) परशुरामेति।—परशुरामस्य—भार्गवस्य, य पराक्रम,—शौर्य्य, तस्य स्मृति,—स्मरण, ता कुर्वन्ति—जनयन्तीति यथोक्ता, शौर्य्यविशेषेण जामदग्न्यस्मारका इत्यर्थ, आर्य्येति।— आर्य्यस्य—श्रेष्ठस्य, शौर्य्याणि—पराक्रमा एव, गुणा,—उत्कर्षा, मन सु—चित्तेषु, निर्मलाशयत्वात् इति भाव, सर सु—जलाशयेषु, राजहंसक्रीडास्पदत्वेषु च मानसाख्येषु इति भाव, राजहंसा इव "भागीरथी—" इत्यादि "परशुराम—" इत्यादि च विशेषणद्वयं राजहंसेऽपि योजनीयम्, पुरा भगवत शङ्करात् धनुर्विद्यामधीयानेन परशुरामेण किल कैलासैकदेशे क्रौञ्चशिखरिणि स्कन्दस्य स्पर्द्धया अतिनिशितविशिखमुखेन अत्यिण्डभेद भित्त्वा हंसमार्गः कृत इति श्रूयते, अत हंसाना तत्पराक्रमस्मृतिकृत्त्वमुक्तमित्यवधेयम्,. पक्षपातम्—अनुराग, पक्षै,—पतत्रै, पात,—पतनम्, उड्डीय क्रौञ्चरन्ध्रपथेन मानसे सरसि गमनमित्यर्थश्च।

(१८२) कथमिव—केन प्रकारेण इव, ["किमश्च" (५।३।२५ पा०) इति थमु-

अत्युग्रस्य यस्य आर्य्यजीवितहरणे निदाघरविरिव (१८३) कमला-करसलिलशोषणेऽनपेक्षितप्रीतय. प्रसृताः कराः ? क्वां नु (१८४) गतिं गमिष्यति ? कां वा योनिं प्रवेक्ष्यति ? कस्मिन् वा नरके निपतिष्यति ? श्वपाकोऽपि क इदम् आचरेत् ? नामापि गृह्णतोऽस्य पापकारिणः पापमलेन लिप्यत इव मे जिह्वा। (१८५) किं वा अङ्गीकृत्य कार्य्यम् आर्य्यः तेन क्षुद्रेण अनुप्रविश्य विगतहृदयेन घुणेन इव (१८६) सकल-भुवनाह्लादनचतुरः चन्दनस्तम्भः क्षयम् उपनीतः ?

प्रस्य ] अत्युग्रस्य—अतिदारुणस्य, अतिप्रखरस्य च, यस्य—ग्रहवर्म्मणः। आर्य्यस्य—पूज्यस्य, जीवितस्य—जीवनस्य, हरणे—मोषणे, इन्द्रनिलयस्य तस्मिन् निदाघरविरिव—ग्रीष्मसूर्य्य इव।

(१८३) कमलाकरसलिलशोषणे—पद्मयुक्तसरोवरजलस्य शोषणे, अनपेक्षितप्रीतय।—न अपेक्षिता—आदृता, प्रीतः,—स्नेहः, एतत्,—ग्रीष्मसूर्य्यपक्षे प्रियदर्शनत्वादिगुणस्य अनपेक्षत्वात्, अन्यत्र—सौन्दर्य्यादिगुणसम्भृतायाः स्वप्रियायाः भार्य्याया आश्रयभूतत्वात् इति भावः ये तथाभूताः, कराः,—हस्ताः किरणाश्च, प्रसृताः,—प्रहृताः। एतेन निदाघरविसाम्येन ग्रीष्माधिपतेः भीषणत्वं सकार्य्यसाधने निर्ममत्वञ्च व्यज्यते।

(१८४) गतिं—दशामित्यर्थः। कां वा योनिं प्रवेक्ष्यति—मनुष्येतराय कीदृशीं योनिमाश्रयिष्यति इत्यर्थः। "गमिष्यति" इत्यादौ "निपतिष्यति" इत्यन्ताख्यातेषु इति कर्तृपदमूहनीयम्। श्वपाकः,—चाण्डालः। पापमलेन—पाप—निन्दितं कर्म्म एव, मलः—पङ्कम्, मालिन्यजनकं वा तेन, जिह्वा पापकारिणो नामोच्चारणात् तत्सम्पर्केण तस्याः मललिप्तत्वम्, "कथाऽपि खलु पापानामलमश्रेयसे यत" इत्यादावनुमोदितत्वात् इत्याशयः।

(१८५) किं वा कार्य्यम् अङ्गीकृत्य—आश्रित्य कस्य कार्य्यस्य व्यपदेशेन इति भावः। क्षुद्रेण—नीचेन, क्रूरेणेत्यर्थः, अणुना च तेन—गौडाधिपेन शशाङ्केन, अनुप्रविश्य—अभ्यन्तरे प्रविश्य, विश्वास्य इति भावः, अन्तरं गत्वा च। विगतहृदयेन—निर्दयेन, घुणेन इव—घुणाख्यकाष्ठकृन्तककीटविशेषेण इव।

(१८६) सकलेति।—सकलानां—समग्राणां, भुवनानां—जगताम्, आह्लादने

(१८७) नूनं न अनेन सूदेन मधुरसास्वादलुब्धेन मधु इव आर्यजीवितम् आकर्षता भावी दृष्टः झिल्लीमुखसम्पातोपद्रवः। (१९८) निजगृहदूषणं जालमार्गप्रदीपकेन कज्जलमिव अतिमलिनं केवलम् अयशः सञ्चितं मौढाधमेन। न तु (१९९) आयुः एव अलम् उपगतवत्यपि त्रिभुवनचूडामणौ सवितरि (२००) वेधसा आदिष्टः सत्पथगवोः अन्धकारस्य निग्रहाय ग्रह-

---

—प्रीणने, एकत्र,—दयादाक्षिण्यपरोपकारित्वादिगुणेन, अन्यत्र,—शैत्यसुगन्धित्वदर्शनीयत्वादिगुणेन इत्यर्थः, चतुरः,—प्रवणः, चन्दनस्तम्भ,—चन्दनतरुनिर्मिता गृहावलम्बनभूता स्थूणा इत्यर्थः, अयम् उपनीत,—आम्र मनित न जाने, किं कार्यमुद्दिश्य निरस्तः विषम्यव आर्य्यं तेन पापेन शराहेन इयत घातित, यद्वी। नैषुण्यमिति समुद्दतार्थं।

(१८७) नूनम्—निश्चितम् वितर्के वा। सञ्चिति।—मधुन—पुष्परसस्य, रस,—माधुर्यमित्यर्थं, तस्य आस्वादे—स्वादग्रहणकर्मणि लुब्ध,—लोलुप, तेन आकर्षता—आक्षिपता, विनाशयता सङ्कलता च इत्यर्थं। भावी—भविष्यन्, कियदनन्तरमेवात्मन उपरि प्रपतिष्यन् इत्यर्थं, झिल्लीमुखेति।—झिल्लीमुखानां—वाणानाम्, पक्षेऽन्यत्र, भ्रमराणाञ्च इत्यर्थं, ("अलिबाणौ शिलीमुखौ" इत्यमरः) सम्पात,—सम्पतनमेव, उपद्रव,—अत्याचार, दृष्ट,—अवलोकित, तर्कित इति यावत, स्वार्थलोलुपतया मूढात्मना न भविष्यदत्याहितमात्र ज्ञातं इति निष्कर्षं।

(१९८) निजगृहदूषणम्—स्वगृहदूषणहेतु इत्यर्थं मत्कोपेन तस्य राजधान्याः अचिरादेव विनष्टुमायत्वादिति भाव, स्वगृहस्य शोभानाशनम् इत्यर्थश्च जालमार्गप्रदीपकेन—जालस्य—दम्भस्य, कपटस्य इत्यर्थं, ("जालं दम्भगवाक्षयोः। आनायदम्भेषु—" इति रभस) मार्ग—पन्थान व्यवहारमिति यावत, प्रदीपयति—प्रकाशयति य तेन कूटकर्मप्रवर्तकेन गवाक्षमार्गस्थितेन दीपेन इत्यर्थश्च। केवलम् अयश,—अकीर्तिमात्र, न तु कृतस्य कर्मण किमपि इष्ट फलमिति भाव, तस्य अचिरादेव मया यमसदनप्रापणादिति हृदयम्।

(१९९) त्रिभुवनचूडामणौ—त्रिलोकीशिरोरत्ने, एकत्र—जगत्प्रकाशकत्वात, अन्यत्र—शौर्यदाक्षिण्यादिगुणोत्कर्षादिति भाव, सवितरि—सूर्ये, तत्सदृशे तेजस्विनि राज्यवर्द्धने च इति भाव, आयु—जीवनम्, अस्तगमनमेवेत्यर्थ, अलम्—अत्यन्तम्, मारञ्च, उपगतवति प्राप्तवति।

(२००) वेधसा—विधात्रा, सत्पथग्रवो,—सन्—शोभन विद्यमानो वा,

षण्डविहारैकहरिणाधिपः शशी ? (२०१) विनयविधायिनि भग्नेऽपि चाङ्कुशे विद्यात एव व्यालवारणस्य विनयाय सकल-

---

पथा,—मार्गे, सदाचारस्य [ "ऋक्पू—" ( ५।४।७४ पा० ) इत्यादिना समासान्त अप्रत्ययः ] तस्य शर्वरी,—निशा, एकत्र—निबिडप्रदोषान्धकारेण आकुलतया मार्गे दुर्दर्शत्वात्, अन्यत्र,—कुत्सिताचारप्रवर्तनेन सदाचारविनाशादिति भावः, अन्ध-कारस्य—तिमिरस्य, मम पक्षे महापापपीडाधमस्य इत्यर्थः, निरासाय—विध्वंसनाय, षडेति ।—षण्डषण्डेषु—महत्सादिवृक्षखण्डेषु मध्ये,विहाराय—विचरणाय,एक एव हरिणः, —मृगः, वाहनभूत इति भावः, तस्य अधिपः,—प्रभुः, तदारूढ इति यावत्, यद्वा— षण्डखण्डेषु मध्ये विहरतीति ताद्दृशः, एकः,—एकमात्र, हरिणाधिपः,—हरिणः,—मृगः, शरणागत इति यावत्, शरणागतत्वात् स्वाङ्के धृत इति भावः, तम् अधिपाति—सम्यक् रक्षति यस्ताद्दृशः, पक्षे,—षण्डाः,—दर्पेण षण्डतुल्याः, दमनयोग्या इत्यर्थः, उद्दामा इति यावत्, ये गजाः,—हस्तिनः, हस्तिवत् दुर्मदा यौवना इति भावः, तेषां विहारे—विविधविषयप्रचारे, नाशने इत्यर्थः, यद्वा,—तेषु विहारः,—निग्रहपर्यटनम्, षण्डसदृशेषु सिंहानां यथा निर्भीकतया बलप्रदर्शनैरिति भावः, तत्र एकः,—एकमात्र, हरिणाधिपः,— मृगराज, सिंह इत्यर्थ, शशी—चन्द्र, चन्द्र इव आह्लादक इति च भावः, न तु भादित्य ? —भास्कर ? अपि तु भादित्य एव इत्यर्थः, तेजस्विनि राज्यवर्द्धने गतेऽपि कथं जीवति, स एव तस्य नाशः भविष्यति, शशी निर्विशेष एव इति भावः । अत्र अप्रस्तुतात्, शशी भगवागमनीयस्य चन्द्रस्य तिमिरध्वंसनात्, प्रस्तुत राज्यवर्द्धनध्वंसनीयस्य तत्सोदरस्य हर्षस्य गौडाधिपसहरणरूप वस्तु गम्यते इति अप्रस्तुता प्रस्तुतप्रतीतिरूपा अप्रस्तुतप्रशंसालङ्कार, तदुक्तं दर्पणे—"क्वचिद्विशेषः सामान्यात् सामान्यं वा विशेषतः । कार्यान्निमित्तं कार्यं च हेतोरथ समात् समम् ॥ अप्रस्तुतात् प्रस्तुतं चेत् गम्यते पञ्चधा ततः । अप्रस्तुतप्रशंसा स्यात् ॥" इति । अत्रत्यैतत् विशेषणेन शशिन स्वल्पसाधनस्यापि षण्डगजान्य-धिपत्यमिति, हर्षस्य स्वल्पसाधनस्यापि परिजयसामर्थ्यं सूच्यते । [ "शशी एव" इत्यत्र "शशी इव" इति पाठे, इवयन्दस्य शशिना सह अन्वये न अप्रस्तुतप्रशंसा, परन्तु उपमैव, हि,—सविस्तप्रतिमे ज्यायसि सहोदरे दिवं गतेऽपि यवीयसि भ्रातरि इह मयि सति किमु खलु यथा सम्भवति गौडाधिपस्य अन्धकारसन्निभस्य ? इत्यौपम्य मर्थं च सितार्थं इत्यवधेयम् ]।

(२०१) विनयविधायिनि—दण्डविधानसमर्थे । अङ्कुशे—सृणौ, हस्ति-शासनास्त्रविशेषे इति यावत्, अङ्कुशरूपे राज्यवर्द्धने इति प्रस्तुतम् । व्यालवारणस्य

मत्तमातङ्गकुम्भस्थलस्थिरशिरोभागभिदुरः खरतरः केसरिनखरः। तादृशाः (२०२) कुवैकटिका इव तेजस्विरत्नविनाशकाः कस्य न वध्याः ? क्व इदानीं यास्यति दुर्बुद्धिः ?"।

(२०३) इत्येतत् अभिदधत एव अस्य पितुरपि मित्रं, सेनापतिः, समग्रविग्रहप्राग्रहरः, (२०४) हरितालशैलावदातदेहः,

---

—दुष्टगजस्य, क्रूरग्राहस्येति च प्रस्तुतम्, विनयाय—दमनाय, शासनायेत्यर्थः। सकलेति।—सकलानां—सर्वेषां, मत्तानां—मदोत्कटानां, मातङ्गानां—हस्तिनां, कुम्भस्थलमेव—शिरस्थोभयपीवरमांसपिण्डभाग एव, स्थिरः,—कठिनः, दुर्भेद्य इति भावः यः शिरोभागः,—मूर्द्धदेशः, यद्वा,—मत्तमातङ्गानां यत् कुम्भस्थलं, तथाभूतः यः स्थिरः शिरोभागः, तस्य भिदुरः,—विदारणे स्वयं विपाटनपटुः इति वा अर्थः, "[ विदिभिदि—" (३। २। १६२ पा०) इत्यादिना कर्त्तरि कुरच्, सुव्यक्तसंस्थेऽपि स्वीकृत इति, तथा हि काशिका,—"विदादिभ्यो धातुभ्यस्ताच्छीलादिषु कर्त्तृषु कुरच् प्रत्ययो भवति, विदुरः पण्डितः, भिदुरं काष्ठं, छिदुरा रज्जुः। भिदिच्छिदोः कर्म कर्त्तरि प्रयोगः" इति] खरतरः,—अतितीक्ष्णः, केसरिनखरः,—सिंहनखः, केसरिनखरवत् क्रूरं इति च प्रस्तुतम्। अत्र हि अप्रस्तुतेन प्रस्तुतस्य प्रतीतेः पूर्व्ववदप्रस्तुतप्रशंसाऽलङ्कारः।

(२०२) कुवैकटिका इव—कुत्सिता वैकटिका —प्रकृतिवैकल्यकारिण इव, "कुत्सिताः स्वर्णकारा इव" इति केचित्, "वैकटिको रत्नबन्धकः" इत्यपरे, तेजस्विरत्नविनाशकाः,—तेजस्विनां—प्रभाववतां, दीप्तिमतां चेत्यर्थः, रत्नानाम्—उत्कृष्टवस्तूनां, ("जातौ जातौ यदुत्कृष्टं तद्रत्नमिह कथ्यते" इति कोषः) विनाशकाः —विध्वंसकारिण इत्यर्थः, कस्य न वध्याः ?—मारणीयाः ? सर्व्वस्यैव वध्या इति भावः, सद्रत्ननाशका गुणानामपरीक्षका मूढा इव कपटपरिचर्पितमहातेजसः गीताः कथमपि न मर्षणीया इत्याशयः।

(२०३) "इत्येतत्" इत्यस्य "सेनापतिः ···सिंहनादनामा··· समररसम् आनयन् विज्ञापितवान्" इति अग्रेण सम्बन्धः। अभिदधतः,—कथयतः, विलपत इत्यर्थः। सेनापतिं विशिनष्टि, समग्रेति।—समग्राणां—सकलानां, विग्रहाणां—युद्धानां, तथाविधेषु युद्धेषु वा, प्राग्रहरः,—श्रेष्ठः, सेनानीतया समराद्ययायी इत्यर्थः।

(२०४) हरीति।—हरितालस्य—स्वनामख्यातोपरसविशेषस्य, शैलः —पर्व्वतः, तद्वत् अवदातः,—गौरः, देहः,—शरीरं यस्य तथाभूतः, कमनीयसुगौरकान्ति

परिणतप्रगुणसालप्रकाण्डप्रकाशः प्रांशुः, अतिशौर्योष्मणा इव परिपाकम् आगतः, गतभूयिष्ठे वयसि वर्त्तमानः, (२०५) बहुशरशयनसुप्तोत्थितोऽपि हसन्निव शान्तनवम् अति-दीर्घेण आयुषा, (२०६) दुरभिभवशरीरतया जरयाऽपि भीत-भीतया इव प्रकटितप्रकम्पया परामृष्टः, कथमपि (२०७) सार-मयेषु शिरोरुहेषु शशिकरनिकरसितसरलशिरोरुहसटाला

---

रित्यर्थः। परिणतेति।—परिणत—प्रवृद्ध, प्रगुण,—शोभन, सालप्रकाण्ड—सालप्रकाण्डस्य इव, प्रकाशते—दीप्यते इति तथोक्तः, प्रांशुः,—उन्नतः, आकाश इव समुन्नतशरीर इत्यर्थः। अतिशौर्योष्मणेव—अतिशौर्येण—पराक्रमातिशयेन, य ऊष्मा—तापः तारुण्यसुलभः तेन इव, परिपाकं—परिणतिं, प्राचीनत्वमित्यर्थः आगतः,—प्राप्तः, दृढकाय इति भावः। गतभूयिष्ठे—अतीताधिकांशे, अल्पावशिष्टे इत्यर्थः, वयसि—जीवनकाले इत्यर्थः, अतिवार्द्धके इति यावत्।

(२०५) बह्विति।—बहवः—अनेके शराः—बाणाः, शत्रुप्रहिता इति भावः, तैः शयनं—शरघातेन भूमौ पतनमिति भावः, तेन सुप्तः—पूर्वं मोहं गत इति यावत्, पश्चात् उत्थितः,—तज्जन्यशरवेदनाम् अपनीय पुनर्युद्धायसमुद्यत इत्यर्थः, अथच—बहवः,—प्रचुराः, शराः,—इषव एव शयनं—शय्या, तत्र सुप्तः—निद्रितः, उत्थितः,—प्रबुद्धश्च, इति विभक्तिविपरिणामश्च योजनीयः शान्तनवं—भीष्मं हसन्निव—परिहासास्पदं कुर्वन्निव, भीष्मस्तु शरशयने स्थित एव निधनं गतः, अयन्तु तस्मात् उत्थितः पुनः सङ्ग्रामाय अवतरत इति हासकारणमिति भावः। हासोपमेयस्य उपमानादाधिक्योत्कर्षणात् व्यतिरेकसङ्कीर्णोत्प्रेक्षाऽलङ्कार इति ज्ञेयम्।

(२०६) दुरभिभवशरीरतया—दुर्जयदेहतया जरयाऽपि—विस्रसयाऽपि, वलिपलितादिना कायशैथिल्यापादकावस्थाभेदेनापीत्यर्थः वार्द्धक्येनापीति भावः, भीतभीतया—अतिभीतयेत्यर्थः अत एव प्रकटितप्रकम्पया—प्रकटितः—आविष्कृतः, प्रकम्पः—वेपथुः यया तथोक्तया, भीतत्वात् कम्पितदेहया इत्यर्थः, वार्द्धक्यजन्यकम्पमानदेहतया इति भावः, परामृष्टः,—स्पृष्टः, तस्य कम्पितकायत्वोत्प्रेक्षणात् अतिवार्द्धके स्थित इत्यर्थः।

(२०७) सारमयेषु—दृढेषु केशपतनाभावात् इति भावः, शिरोरुहेषु—केशेषु शशीति।—शशिनः—चन्द्रस्य, करनिकराः—किरणचयाः, तद्वत् सिताः—शुभ्राः काशस्तवकशोभाः इत्यर्थः, सरलाः—अकुटिलाः, शिरोरुहसटाः—

सैंहीमिव (२०८) निष्कपटपराक्रमरसरचितां सङ्क्रान्तो जीवन्नेव जातिम्, (२०९) अपरस्वामिमुखदर्शनमहापातकपरिजिहीर्षया इव भ्रूयुगलेन (२१०) वलितशिथिलप्रलम्बचर्मणा स्थगितदृष्टिः, (२११) धवलस्थूलगुञ्जापिच्छप्रच्छादितकपोलभागभास्वरेण वमन् इव विक्रमकालम् अकालेऽपि (२१२) विकाशिकाशकाननविशदं शरदारम्भं भीमेन मुखेन,

---

शिरस्त्राणम् शिरस्नेऽस्या इति तट्टीका, सैंहीमिव— सिंहस्य इयं सैंही ताम् इव, सिंहसम्बन्धिनीमित्यर्थः।

(२०८) निष्कपटेति।—निष्कपट —कापट्यरहित, यथार्थ इति भाव, य पराक्रम,—शौर्यं तस्मिन् रसम—अनुरागेण, रचिता—निर्मिता ताम्, जातिम्—सिंहत्वामन्यथं जीवन्नेव—प्राणन् एव इत्यर्थं सङ्क्रान्त,—अधिगत। केशरीपम-कायकलापेन सिंहविक्रमतया च साक्षात् सिंह इव विराजमान इत्युत्प्रेक्षा।

(२०९) अपरेति।—अपर —अन्य प्रभाकरवर्द्धनव्यतिरिक्त इति भाव, स्वामी—प्रभु तस्य मुखदर्शन—मुखावलोकनमेव, महत्—घोर, पातक—पाप, तस्य परिजिहीर्षयेव—तत्परिहर्तुमिच्छया इवेत्यर्थ।

(२१०) वलितेति।—वलित—वलियुक्तम् आकुञ्चितमिति भाव शिथिल—श्लथीभवत् प्रलम्ब—लम्बमान, चर्म—त्वक् यस्य तथाभूतेन। स्थगितदृष्टि,—आवृतनेत्र अतीव प्रभुभक्त लोलचर्मा च इति भाव।

(२११) धवलेति।—धवला—शुभ्रा स्थूला—पीवरा, घना दीर्घा चेत्यर्थ वा गुञ्जा—उत्तरोष्ठस्योपरि रोमराजि "गोंफ" इति वङ्गभाषया प्रसिद्धा इति भाव तस्या पिच्छ—पङ्क्ति परम्परा वा तेन प्रच्छादित —आवृत य कपोलभाग,—गण्डदेश, तेन भास्वरेण—प्रदीप्तेन मुखबिम्बेनेत्यन्वय। वमन्निव—उद्गिरन्निव। विक्रमकाल—पराक्रमप्रदर्शनोचितसमय, शरदारम्भमित्यस्य विशेषण, तत्र विजिगीषुभि युद्धयात्रा क्रियते इति शास्त्रम्। अकालेऽपि—असमयेऽपि, शरदारम्भस्य ज्ञात एव, शरदतिरिक्तो ग्रीष्मादिऋतौ इति भाव।

(२१२) विकाशीति।—विकाशिना—विकस्वरेण, काशकाननेन—पीत गलाग्र्यवर्णविशिष्टवनेन, काशाना भूयस्त्वात् शरदि कुसुमानि विकसन्ति, विशद—धवल, शरदारम्भ—शरत्कालागमम्। भीमेन—भीषणेन, [ बिभेत्यस्मात् इति

न्यूतमपि (२१३) हृदयस्थितं स्वामिनम् इव सितचामरेण वीजयन् नाभिलम्बेन कूर्चकलापेन, परिणामेऽपि धौतासिधारा-जलपानतर्षितैः इव विवृतवदनैः बृहद्भिः व्रणविदरैः विषमित-विशालवक्षाः, (२१४) निशितशस्त्रटङ्ककोटिकुट्टितबहुबृहद्व्रणा-क्षरपङ्क्तिनिरन्तरतया च (२१५) सकलसमरविजयपर्वगण-

पत्या "भीमादयोऽपादाने" (३।४।७४ पा०) इति भिय अपादाने मक्] काश-कुसुमगुच्छशोभितवदनेन शरदिवास्य अनयमित्यर्थः।

(२१३) हृदयस्थितम्—मनःसंस्थितं, गुणावर्जितहृदयत्वादिति भावः, स्वामिनम्—प्रभाकरवर्द्धनमिति यावत्, सितचामरेण—श्वेतवालव्यजनेन, सितच्छत्र-चामरादीनां राजाङ्गचिह्नोपकरणत्वादिति भावः। नाभिलम्बेन—नाभिदेशपर्यन्त-विलम्बिना, कूर्चकलापेन—श्मश्रुनिचयेन, ("कूर्चमस्त्री भ्रुवोर्मध्ये कठिनश्मश्रुकैतवे" इति मेदिनी)। परिणामेऽपि—वार्द्धकेऽपि, धौतेति।—धौता—विशोधिता, शाणिता इति भावः, असिधारा—खड्गस्य निशितमुखम् एव, जलम्—सलिलं, तस्य पानाय तर्षितैः,—पिपासाऽऽकुलैः तैरिव, विवृतवदनैः,—व्यात्तमुखैः, व्रणविदरैः,—क्षत-स्थानस्थितस्फोटैः, ("विदरः स्फुटनं भिदा" इत्यमरः) विषमितम्—उन्नतानत-बन्धुरितम्, विशालम्—विपुलं, वक्षः,—उरःस्थलं यस्य तथाभूतः। नाभि-लम्बेनश्मश्रुसन्तानेन सुशोभितकायस्य सेनापतेः विशाले वक्षसि प्राक् पतन्निशित-शस्त्रधाराभिक्षते एवमनुमीयते यत् सङ्ग्रामे प्रभूते काले खरधारैः पिपासितैः अपि जलपानार्थं विवृतमुखैः अद्यापि स्थीयते इति समुदितार्थः, असौ सङ्ग्रामेषु विजयी आसीत्, तथा सम्प्रति वार्द्धकेऽपि अनिर्वापितरणोत्साहश्च भवति इति भावः। इह धौतासिधारायाः जलस्यैव केवलं रूपणात् निरङ्गं रूपकम्, व्रण-दारणविवरत्वेन उत्प्रेक्षायाः पानासक्तिश्च प्रतिपादिता इति सङ्क्षेपः।

(२१४) निशितेति।—निशितानि—तीक्ष्णानि, शस्त्राण्येव—आयुधान्येव, टङ्काः,—पाषाणदारणास्त्रविशेषाः, तेषां कोटिभिः,—कोणैः, अग्रैः इत्यर्थः ("कोणस्तु स्त्रियः पाल्यश्रिकोटयः" इत्यमरः) कुट्टितानि—दलितानि, बहूनि—अनेकानि, बृहन्ति—आयतानि इत्यर्थः, व्रणानि एव—क्षतानि एव, अक्षरपङ्क्तयः,—वर्णावलयः, तासाम् निरन्तरतया—व्याप्ततया इत्यर्थः।

(२१५) सकलेति।—सकलेषु—सर्वेषु, समरेषु—सङ्ग्रामेषु, विजया एव—जयलाभा एव, पर्वाणि—क्षणाः, उत्सवाः इत्यर्थः, ("लिपिभेदे क्षणे पर्व"

नाम् इव कुर्व्वन्, पूर्व्वपर्व्वत इव पादचारी, (२१६) विविध-वीररसवृत्तान्तरामणीयकेन महाभारतमपि लघयन् इव, (२१७) प्रतिपक्षक्षपणातिनिर्बन्धेन परशुराममपि शिक्षयन् इव, (२१८) अब्धिभ्रमणेन अनादरश्रीसमाकर्षणविभ्रमेण मन्दर-

---

इत्यमरः ) तेषाम्, यद्वा—सुजनसमरविजयानां पञ्चभिः,—ग्रन्थिभिः अङ्गुलिसन्धिभिरिव प्रणयग्रन्थिभिरिति भावः गणनामिव—संख्यानमिव, बहुसमरविजयी इति भावः। पूर्व्वपर्व्वत इव—उदयगिरिः इव, पादचारी—चरणसञ्चरणशीलः, अभ्युन्नतकायत्वात् सदालोकेन उदितत्वाच्चेति भावः, पूर्व्वपर्व्वतोऽपि बहुभिः पादैः,—प्रत्यन्तपर्व्वतैः, चरति—भुवं समाक्रम्य तिष्ठतीत्यर्थः, ("पादाः प्रत्यन्तपर्व्वताः" इत्यमरः)।

(२१६) विविधेति।—विविधानां—बहुप्रकाराणां, वीररसानाम्—उत्साहस्थायिभावानाम् उत्तमप्रकृतिकसमाख्यायमानवस्तुविशेषाणां, प्रकारभेदेन बहुभेदाख्यापनाभीप्सिततया अत्र रसबहुत्वोक्तिः न दोषाय इत्यवधातव्यम्; यद्वा—विविधस्य—नानाप्रकारस्य वीररसस्य, पक्षे,—विविधाः—अनेके वीराः,—भीमद्रोणादयः येषां तथा रसस्य च—युद्धानुरागस्य च, वृत्तान्तेन—प्रक्रियया, अनुष्ठानेनेत्यर्थः, प्रस्तावेन च, विवरणेन च इत्यर्थः, ("वृत्तान्तः प्रक्रियायां स्यात् कार्त्स्न्यवार्त्ताप्रभेदयोः। प्रस्तावे •॥" इति मेदिनी) रामणीयकं—रमणीयत्वं तेन करणेन। लघयन्निव—लघूकुर्वन्निव महाभारतवर्णितवीररसादपि अधिकवीरकर्म्मानुष्ठायीति भावः।

(२१७) प्रतिपक्षेति।—प्रतिपक्षाणां—शत्रूणां, क्षपणे—संहारे, अतिनिर्बन्धेन—अत्याग्रहेण, परशुरामं—परशुधारी रामः स भार्गवमित्यर्थः [ "शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम्" ( वा० ) इति समासः ] शिक्षयन्—उपदिशन्, परशुरामस्यापि शत्रुनिर्य्यातनात्याग्रहविषये आचार्य्यकम् कुर्व्वन् इत्यर्थः, अत्रायमाशयः,—तथा हि, भो भृगुनन्दन। त्वमेकविंशतिवारं क्षत्रियान् हत्वाऽपि तान् निःशेषान् कर्त्तुं नाशक्नोः, तेन हि तव तत्रैव रणकर्म्मण्यपि अनभिज्ञता प्रतिभाति, अहं यथा समूलघातं शत्रून् विनाशयामि, ततः दृष्ट्वा अप्रमत्तः शत्रूणां समूलोन्मूलनकौशलं शिक्षयतु भवान् इति वदन् इवेति।

(२१८) अब्धिभ्रमणेनेति—अब्धिभ्रमणम्—अब्धिषु अप्सु वा भ्रमणं, समुद्रयात्रा इत्यर्थः, युद्धार्थे साङ्ग्रामिकपोतमारुह्य द्वीपान्तरस्थशासनाय इति भावः, जलदस्युकृतकठोरोत्पातप्रशमनाय वा इत्याशयः, जलं पुनः पुनः आवर्त्तनञ्च तेन, अनादरेति।—अनादरेण—

मपि मन्दयन् इव, (२१८) वाहिनीनायकमर्य्यादाऽनुवर्तनेन अम्भोधिमपि अभिभवन् इव, (२२०) स्थैर्य्यकार्कश्योद्धतिभिः अचलानपि क्षेपयन् इव, (२२१) सहजप्रचण्डतेजःप्रसरपरिस्फुरणेन सवितारमपि तृणीकुर्वन्निव,

---

अवहेलनं, यस सौभमाकर्षणं—श्रिया,—राजलक्ष्म्या, कमलाश्रयः, समाकर्षण—बलादायत्तीकरणं, समुद्रस्य, प्रभुश्च समुद्रश्च इति भाव, तेन (विभ्रम),—विलसितं यस्य तेन, मन्दर—मन्दरगिरिं समुद्रमन्थनदण्डभूतमिति भाव, मन्दयन् —लघयन् मन्दरगिरि असकृदेव अमुं परिभ्रम्य एका श्रियं समाजहार, असौ पुनः सकृत् तथा कृत्वा सहसा राज्ञां श्रियं समाजहार इति भाव। अयश्च श्रियो हरणासम्भवेऽपि सौरिव श्री कृता इति बिम्बप्रतिबिम्बभावबोधात् असम्भवद्वस्तुसम्बन्धरूपा निदर्शना, उपमानाधःकरणात् राजादरि श्रीत्कर्षप्रतीतेश्च व्यतिरेकालङ्कारश्च, इत्यनयो साङ्कर्यम्।

(२१८) वाहिनीति।—वाहिनीनां—सेनानां, तरङ्गिणीनाञ्च, नदीनाञ्चेत्यर्थः, ("वाहिनी स्यात् तरङ्गिण्यां सेना सैन्यप्रभेदयोः" इति मेदिनी) नायकमर्य्यादा—पति सम्मानना, सेनापतित्वं सरित्पतित्वञ्च इति यावत्, तस्या अनुवर्तनेन—अनुगमनेन अम्भोधिं—सागरमपि, अभिभवन्निव—जयन्निव। नदीनां परिमिततया सेनानान्तु अपरिमितत्वमिति भाव, यद्वा,—नदीनां यथेच्छप्रस्थानशक्त्यभावात् सेनानां यथेप्सितं यत्र तत्र प्रस्थानशक्तिमत्त्वेन इत्याशयः। अत्र सरित्पतेः स्वस्याधिक्यप्रतिपादनात् पूर्ववत् व्यतिरेकालङ्कारः।

(२२०) स्थैर्य्येति।—स्थैर्य्यं—सङ्ग्रामादपरावर्तित्वमित्यर्थः एकत्रावस्थायित्वञ्च, कार्कश्यं—काठिन्यम्, अक्रूरेति भाव, उभयत्रापि समानम्, यद्वा—कार्कश्यं—मनो निर्दयत्वम्, उद्धति,—सन्नाह तामि, अचलानपि—पर्वतानपि, क्षेपयन्निव—लज्जयन्निव। अचलादपि स्थैर्य्यादिमानासीत इति व्यतिरेक।

(२२१) सहजेति।—सहजस्य—स्वाभाविकस्य, प्रचण्डस्य—उग्रस्य, तेजःप्रसरस्य—तैजसां—प्रभावाणां प्रसरस्य—विस्तारस्य परिस्फुरणेन—उद्योतेन, तृणीकुर्वन्निव—तुच्छीकुर्वन्निव, सवितु तेजसा प्रसर दिवा एव, अस्य तु रात्रिन्दिवमपि इति स्वतेजसामधिककालिकत्वमेव तृणीकरणे हेतुरिति भाव, यद्वा,—तत्र दाहिका शक्तिरेवाधिकाऽभवदिति, इह तु दाहिकोज्ज्वलिकयोरुभयोरपि समानोत्कर्षवत्त्वम् इत्यासीदय विसदृशमेव।

आत्मान न चेतयन्ते। (२२८) श्रियो हि दोषा-न्धतादय कामला विकाराः। (२२९) छत्रच्छायान्तरित-रवयो विस्मरन्ति अन्य तेजस्विन जडधिय। किं वा करोतु वराक, येन अतिभीरुतया नित्यपराङ्मुखेण न तु दृष्टानि एव

चेतयन्ते—अवबोधयन्ते [ ज्ञानार्थकतया चेतने णिचि अणिकर्तु आत्मन कर्मत्व ज्ञेयम ] कोकिलया प्रसवानन्तरमेव निजशावका काकीनीडे सम्थाप्य ताभि पोष्यन्त, काक्य अपि वर्णसाम्यात स्वशावकधिया तान पालयन्ति अतस्तेषां परं प्रतिपाल मात परभृदिति सदा समजनि। तत जाते तु उड्डयनसामर्थ्ये शावका तत्समाजा-दपसृत्य स्वसमाजे सङ्गच्छन्ते इत्य काकीना कोकिलया विप्रलम्भत्व लोके प्रसिद्धमेव।

(२२८) कस्मात् ताम हतलक्ष्मीर्विप्रलभते ? इत्याह, श्रिय इत।—श्रिय — लक्ष्म्या दोषान्धतादय —दोषै —कुपुरुषानुरागादिभि वातादिभिश्च इति व्यज्यते, अन्धतादय —अन्धता एव आदिर्येषां ते, सदसद्व्याख्यानाभावनादय इति यावत, दृष्टिहीनत्वादयश्च इति व्यज्यते कामला —कमलसम्बन्धिन, कमलात आगता वा, विकारा —स्वस्या कमलालयत्वात नियतकमलवासेन आश्रयदोषात जाता रोगा इत्यर्थ "कामला" इति प्रसिद्धा पाण्डुरोगभेदजा इत्यपि व्यज्यते तस्मिन रोगे जाते सति रुग्णस्य चक्षुरादौ पीतत्वादिज्ञानम अन्धतादयश्च दोषा जायन्ते कमलस्य यथा दोषा—रात्रौ [ अव्ययमेतत दोषा रात्रौ च तन्मुखे इति अव्ययवर्गे मेदिनी ] अन्धतादय —सूर्यप्रकाशाभावात सङ्कोचादय विकारा जायन्ते, तथा लक्ष्म्या अपि तन्निवासात समजायन्त दोषान्धतादय —दोषा एव अन्धतादय —सत्पुरुषासत्पुरुषयो विचाराक्षमत्वम इति भाव।

(२२९) छत्रेति।—छत्रस्य—आतपत्रस्य छायया—आतपप्रतिपक्षभूतया अनातपेनेत्यर्थ अन्तरित —व्यवहित तिरस्कृतो वा कृतातिरस्कृतदर्शनत्वात इति भाव, रवि —सूर्य यै तथाक्ता [ "अच इ" (उ० ४ पा० १३८ सू० ) इति गन्धार्थकरुधातो इ ] जडधिय,—मूर्खा, लक्ष्मीमदमत्ततया इष्टानिष्टानभिज्ञा इति भाव तत्रात्मन —प्रतापवन्तम अन्यम—अपर पुरुष विस्मरन्ति—न चिन्तयन्ति न पश्यन्तीति भाव, आत्मानमेव एकमात्र तेजस्विन मन्यन्ते नान्य कमपि छत्रस्य महाप्रभावतसूर्याकिरणानामपि तिरस्करणात कोऽन्यस्य कथाप्रसङ्ग इति तात्पर्यम्, एवम अनुश्रूयते यथा — घनाच्छन्नदृष्टि अर्कमपि घनाच्छन्नमिति मन्यते। वराक —तपस्वी दुर्बलप्रकृति, इति यावत्। येन—वराकेण, गौडेश्वरेण जडाधिपत्यय। नित्यपराङ्मुख—

(२३०) सर्वातिशायिशौर्यातिशयश्रवणयुक्तपिञ्जकपोलपुलकपल्लवितकोपानलानि कुपितानां तेजस्विनां मुखानि। नासौ तपस्वी जानाति एवं, यथा (२३१) अभिचारा इव विप्रकृताः सद्यः सकलकुलप्रलयम् उपहरन्ति मनस्विनः। जलेऽपि ज्वलन्ति ताडिताः तेजस्विनः। (२३२) सकलवीरगोष्ठीबाह्यस्य तस्यैव इदम् उचितम् अनुत्तारनिरयनिपातनिपुणं

---

नियतविमुखेन, साहसकर्माणि कदाऽप्यप्रवृत्तत्वेन युद्धारम्भे एव स्वप्रतिघातं प्रदर्शितवता इति भावः, न तु दृष्टानि—अवलोकितानि द्रष्टुं पारितानि इत्यर्थः।

(२३०) सर्वेति।—सर्वातिशायिना—सर्वपरिभाविना, शौर्यातिशयेन—पराक्रमाधिक्येन, श्रवणम्,—ख्यातिः वसुर्मन्यत्वं, विख्यातं इति यावत्, दैवस्य राज्यवर्धनस्य महावीराणां वा इति भावः येषु तथाविधाः, पिञ्जाः,—आरक्ताः, ये कपोलाः,—गण्डदेशाः, तेषां पुलकम्—रोमहर्षेण, अपमानजन्यात्मग्लानिसमुत्थकम्पितमुखोद्गमात् इति भावः, पल्लवितः,—विस्तृतः, प्रकटीभूतो वा, कोपानलः,—क्रोधवह्निः येषु तानि। तेजस्विनाम्—महाप्रतापानाम्, अपमानमसह्यमिति विजिगीषुनृपाणां वा इति भावः।

(२३१) अभिचाराः इव—आथर्वणाः मारणादयो विधय इव, विप्रकृताः,—निकृताः, अवमानिताः इति यावत्, ("निकृतः स्याद्विप्रकृतः" इत्यमरः) विप्रैः,—ब्राह्मणैः, कृताश्च, मनस्विनः,—प्रशस्तमनसः, महावीराः इत्यर्थः, ["अस्मायामेधास्रजो विनिः" (५।२।१२१ पा०) इति विनिप्रत्ययः] सद्यः—अविलम्बेन इत्यर्थः, सकलकुलप्रलयम्—सर्ववंशविनाशनम्, उपहरन्ति—उपाङ्गीकुर्वन्ति, अर्पयन्ति इति यावत्। जलेऽपि—सलिलेऽपि, आत्मसम्भूतेऽपीति भावः, "आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी" इति श्रवणात्, अहुत्र च, ताडिताः,—वधुता प्रहृताश्च तेजस्विनः—अग्नयः, प्रतापवन्तश्च। अत्र मनस्विभिः तेजस्विभिश्च सह सकलकुलप्रलयजलज्वलनत्वादिधर्मे स्वस्य बिम्बप्रतिबिम्बभावेन धानात् दृष्टान्तालङ्कारः, 'दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम्" इति दर्पणलक्षणात्।

(२३२) सकलेति।—सकलानाम्—कृत्स्नानां वीराणाम्—शूराणां, गोष्ठी—समाजः, तस्याः बाह्यः,—बहिष्कृतः, ततो निष्कासित इत्यर्थः तस्य कापुरुषतादिदोषे वीरसमाजेषु अपाङ्क्तेयस्य इति भावः, गोष्ठीबाह्यस्य अनुपासितवृद्धत्वात् धर्मं न जानाति, अतएव तथाभूतस्य निरयोचितमिदं कर्म युज्यते इति सङ्गतिः,

कर्म । (२३३) मनस्विना हि प्रधनप्रधानधने धनुषि म्रियमाणे, सति च कमलाकलहंसकेलिकुवलयकानने कृपाणे, कृपणोपाया पयोधिमथनप्रसृतयोऽपि श्रीसमुत्थानस्य, किं पुनः ईदृश्या ? (२३४) येषाञ्च धाता धरित्रीं त्रातुं नियुक्ताः

---

तस्य—गौडाधिपस्य अनुसारेति।—नास्ति उत्तारः—उद्धारः यस्मात् तादृशे निरये—नरके निपातः—निपतनं तव तस्य वा निपुणं—समर्थम् आचरितमित्यर्थः इदं—विश्वस्तहननरूपं कर्म आचरितं—सदृशम् "मित्रद्रोही कृतघ्नश्च ये च विश्वासघातकाः । ते नरा नरकं यान्ति यावच्चन्द्रदिवाकरौ ॥" इत्युक्तेः । उपायः कृत्प्रयोगेण महाराज राज्यवर्द्धनस्य विश्वस्तं वीरसहभावकृतस्य गौडाधमस्यैवानुरूपम्, इति तस्य सामाजिकसद्वाक्य प्रहरणाय एव तथाविधानुष्ठाने हेतुः इति पूर्वपदार्थस्य हेतुभूततया निर्देशात् पदार्थहेतुकं काव्यलिङ्गम् इति बोध्यम् ।

(२३३) मनस्विना—वीराणां हि इत्यवधारणार्थे प्रधने तु।—प्रधनस्य—युद्धस्य ( "युद्धमायोधनं जन्यं प्रधनं प्रविदारणम्" इत्यमरः ) प्रधानं—श्रेष्ठं धनं—महामूल्यवस्तु साधनत्वात् भावः तस्मिन् धनुषि—कार्मुके म्रियमाणे—ध्रियमाणे । कमलेति ।—कमला—लक्ष्मीरेव कलहंसी—राजहंसी कमलायाः कलहंसीत्वं उभयोरेव कुवलयवनसञ्चारित्वाभेदारोपात् रूपकालङ्कारः, रूपकहंसी वा ( "कलहंसस्तु कादम्बे राजहंसे नृपोत्तमे" इति मेदिनी ) तस्याः केलिः—क्रीडा यत्र तादृशं कुवलयकाननं—नीलोत्पलवनं तत्सम तुल्यभूते इत्यर्थः, निशितानां कृपाणानां नीलोत्पलप्रभावत्त्वादिति भावः कृपाणे—करवाले इति च—विद्यमाने च ध्रियमाणे इत्यनुवर्तमानेयो वा तेन ध्रियमाणे सतीत्यर्थः, वीराणां कृपाणे एव कमला प्रतिवसतीति भावः श्रीसमुत्थानस्य लक्ष्मीसमाहरणस्य पयोधिमथनप्रसृतयोऽपि—मन्दरगिरिणा क्षीरसागरविलोडनादयोऽपि कृपणोपायाः—दीनचेष्टाः कापुरुषाचारा इति भावः । एतेन क्षीरसागरविलोडनचेष्टा तु दूरे पौरुषमेव लक्ष्मीलाभे हेतुः इति पौरुषस्य सर्वोत्कृष्टत्वप्रतिपादनात् व्यतिरेकालङ्कारः व्यज्यते। ईदृश्या—विश्वस्तहननादय इत्यर्थः किं पुनः ?—दीनोपाया इति किं वक्तव्यम् ? इत्यर्थः विश्वासहननादयः कापुरुषाचारा एवेति भावः ।

(२३४) येषां—मनस्विनां वीराणामित्यर्थः [ सम्बन्धविवक्षया षष्ठी ] धाता—ब्रह्मणा, धरित्रीं—पृथिवीं, त्रातुं—रक्षितुं, नियुक्ताः,—आदिष्टा इत्यर्थः गिरीषु

स्वयम् असमर्था इव (२३५) कुलिशकर्कशभुजपरिघप्रहरणहेतोः उद्गिरन्ति गिरयोऽपि लोहानि, ते कथमिव बाहुशालिनो मनसाऽपि विमलयशोबान्धवा ध्यायेयुः अकार्य्यम् ? (२३६) सर्व्वग्रहाभिभवभास्वराणां हि सुभटकराणाम् अग्रतो दिग्ग्रहणे पङ्गवः पतङ्गकराः।

---

गौरवसत्त्वादिति भावः, असमर्था इव—अक्षमा इव, अबलत्वादिति भावः। ["असमर्था इव" इत्यत्र "असमर्था एव" इति पाठान्तरम्]।

(२३५) गिरयः—पर्वता अपि, पर्वतनप्रस्तरमया अपीति भावः, कुलिशेति।—कुलिशवत्—वज्रवत्, कर्कशः,—कठिनः, भुजः,—बाहुः, स एव परिघप्रहरणं—मुद्गरास्त्रं तस्य हेतोः,—तन्निमित्तं, परिघनिर्म्माणार्थमित्यर्थः, लोहानि—तदाख्यधातुविशेषान् उद्गिरन्ति—उद्वमन्ति, प्रसूयन्ते इति यावत्, बाहुशालिनः,—प्रशस्तबाहवः, भुजवीर्य्यसमन्विता इत्यर्थः, विमलेति।—विमलानि—पवित्राणि, यशांसि—कीर्त्तय एव, बान्धवाः,—मित्राणि येषां तथाभूताः पूतयशोधना इत्यर्थः ते—येषामर्थे अचला अपि बाहुविरहिता गिरयोऽपि लोहानुद्गीर्य्य धर्म्मानुसारेण पृथिवी पालने सहायकं कुर्व्वन्ति, तादृशा राजान इत्यर्थः, विशेषो परिघप्रहरणार्थोद्गिरणसम्बन्धेऽपि इह सम्बन्धः प्रतिपादितः इत्यतिशयोक्तिः असमर्थत्वरूपगुणोत्प्रेक्षाऽङ्गम्, कथमिव—किमर्थमित्यर्थः, मनसाऽपि—चेतसाऽपि, किं पुनर्बहिरनुष्ठानेनेति भावः, अकार्य्यं—दुष्कार्य्यं, ध्यायेयुः?—चिन्तयेयुः? नैव कदाऽपि चिन्तयन्ति इत्यर्थः, येषां किञ्चिदपि बाहुबलमस्ति, ते मनसाऽपि न एतादृशं गर्हितमाचरन्तीति भावः।

(२३६) सर्व्वेति।—सर्व्वस्य—सकलवस्तुनः, ग्रहाभिभवः,—ग्रहः—बलात् ग्रहणमेव, अभिभवः,—तिरस्कारः, वस्तुस्वामिनामिति भावः अथ—सर्व्वे ग्रहाः,—चन्द्रादयः, तेषामभिभवः,—महत्या तेजसा विस्तारिततेजोरूपतिरस्कारः तेन भास्वराः, भास्वराः,—उज्ज्वलाश्च, इति लिङ्गविपरिणामेन "पतङ्गकराः" इत्यत्र योजनीयम्, सुभटकराणां—वीरबाहूनाम् अग्रतः,—पुरतः, पतङ्गकराः,—सूर्य्यकिरणाः, ("पतङ्गौ पक्षि सूर्य्यौ च" इत्यमरः) कराः—हस्ताश्च इति ध्वनिः, दिग्ग्रहणे—दशोः,—पूर्व्वपश्चिमात्मिकयोः दिशोः, ग्रहणे—ग्राने, अवलम्बने वा पङ्गवः,—अचलाः, दिग्बोधाक्षमाः, दिग्ग्रहणासमर्था वा इत्यर्थः, तासां बलेन महावीरसङ्ग्रामोद्यत ध्वनितम्, यदा महावीरा अस्त्राणां दृष्टिभिः गगनमाच्छादयन्ति,

मेव केवलम् । (२४२) अप्रतिहतशासनाक्रान्त्युपभोगसुखरसन्तु रसाया (२४३) दिक्कुञ्जरकरभारभास्वरप्रकोष्ठा वीरबाहव एव जानन्ति । (२४४) रविरिव उन्मुखपद्माकरगृहीतपाद-पल्लवः सुखेन अखण्डिततेजा दिवसान् नयति शूरः ।

---

प्रभुः प्रबाहु इत्यर्थः पृथ्वीभारधारीति भावः ग्र—भुजङ्गाधिपस्य भोगम्—देहम् फणमण्डलम् वा ("भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः" इत्यमरः) केवलं मणिपुञ्जमेव—मणिकाराशिमेव विभाति—वस केवलं मात्यगुरुवहनायसताहक प्रयासो न तस्य उचित इत्यर्थः प्रबाहुसदृशान् सारवत्पिण्डमात्रधारिण्या पायव्या धारणाय तस्य सहस्रफणाबहुलप्रशस्तीकार इयैव यतो आरम्भास परित्याग एव उचित इति भावः ।

(२४२) रसाया —भुवः ("भूर्भूमिरचलानन्ता रसा विश्वम्भरा स्थिरा" इत्यमरः) अप्रतिहतेति —अप्रतिहतेन—प्रतिघातवर्जितेन अनतिक्रमणीयेन इत्यर्थः, शासनेन—आज्ञया प्रतापेनेति यावत् या आक्रान्ति —आक्रमणम् प्रभावावस्तार इत्यर्थः तया च उपभोग —सम्भोग तेन च सुखरस —सुखास्वाद तम् ।

(२४३) दिङ् ०रति ।—दिक्कुञ्जरस्य—दिग्गजस्य करभार —शुण्डाभोग तद्वत् भास्वर —दीप्यमान प्रकोष्ठ —कूर्परमणिबन्धयोः अभ्यन्तरभाग येषां तथाभूता ("प्रकोष्ठो मणिबन्धस्य कूर्परस्यान्तरेऽपि च" इति मेदिनी) वीरबाहव —वीराणाम् —सुभटानाम् बाहव —भुजा एव जानन्ति—अनुभवन्तीत्यर्थ वीरभोग्या एव वसुन्धरा न तु प्रबाहुसदृशकापुरुष निमज्जमाप यमाश्रयणीयत्वेन रक्षणीया इति भाव ।

(२४४) रविरिति ।—शूर —वीरपुरुष रवि इव—सूर्य इव अखण्डित तेजा —अखण्डितम्—अप्रतिहत तेज —प्रताप द्युतिश्च यस्य तथाभूत सन् एव उन्मुखेति ।—उन्मुखया—उत्सुकया तत्परया इत्यर्थ सानुरागयेति भाव पद्मया—लक्ष्म्या करेण—हस्तेन गृहीत —संवृत पादपल्लव —चरणकिसलय अन्यत्र —उन्मुखे —ऊर्ध्वमुखे पद्माकरे —कमलसमूहे पद्मशोभे वा गृहीता —स्वविकाशकत्वेन प्राप्ता इत्यर्थ पादपल्लवा —किरणसञ्चया यस्य तथा भूत दिवसान्—वासरान् नयति—अतिवाहयति प्रापयति च करोतीत्यर्थ, रवे दिवसकरत्वात् अखण्डिततेजसो वीरा भवादृशा एव निभृत सुखेन स्यात्

(२४९) शस्त्रालोकप्रकाशिताः शून्याः दिशः शौर्यस्य। (२५०) रिपुरुधिरशीकरासारेण भूरिव श्रीरपि अनुरज्यते। (२५१) बहुनरपतिमुकुटमणिशिलाशाणकोण-कषणेन चरणनखराजिः इव राजताऽपि उज्ज्वलीभवति।

---

इत्यर्थः, शस्त्रेति।—शस्त्रेण—शौर्याभिमानिना भगिना इत्यर्थः, विद्रुता—पला-यिता, दिशम्—ककुभ येन तादृशानि तत्र यथाशास्त्रमवलम्बनैव शीघ्र न पलायिष्यन्ते, अतएव जिगीषुभिः अन्यथा न सम्यक् कार्यसिद्धि, पलायने यथोचितप्रति-शोधदानाप्रसङ्गात् इति भावः, यद्वा,—दर्पस्य—शौर्योचितगर्वातिरेकस्य, द्वाराणि—प्रवेशस्थानानि, तत्प्राप्त्युपाया इत्यर्थः, शस्त्रेति।—शस्त्रेण—दर्पमूलकाभिमानेन, विद्रुता,—विद्रुता सन्त अपसृता दिशम्—दिशश्च येभ्य तथाभूतानि, भवन्ति दर्पद्वाराणि महाशौर्यमूलकाहते शत्रुणा निर्जय कदाऽपि न सम्भवति, अत शौर्यदर्प एव प्रागाश्रयणीय इति तात्पर्यम्।

(२४९) शस्त्रेति।—शस्त्राणाम्—आयुधानाम् [शसते' "सर्वधातुभ्य ष्ट्रन्" (उ० ४ पा० १५८ सू०) इति ष्ट्रनि रूपम्] आलोकेन—उद्योतेन, प्रकाशिता,—उद्भासिता, शौर्यस्य—वीर्यप्रकटनस्य दिशः—ककुभः, पन्थान इति यावत्, शून्या,—अनावृता, जनरहिता इत्यर्थः, तदागमनवार्त्ताश्रवणेनैव पलायितप्रतिपक्षत्वादिति भावः, निशितशस्त्रप्रकाशभीत्येव शौर्यरूपा दिशो ज्योतिष्कादिभि उद्भासिता भवन्ति इति तात्पर्यम्।

(२५०) रिपुेति।—रिपूणाम्—शत्रूणाम्, रुधिराणि—शोणितानि तेषां शीकरासार,—बिन्दुधारासम्पात तेन, भूरिव—रणभूमिरिवेत्यर्थ, श्रीरपि—लक्ष्मीरपि, अनुरज्यते—अनुरक्ता भवति, रक्तवर्णा भवतीति भाव, अनुलिप्ता भवति इत्यपरः अर्थश्चैव विजयलक्ष्मीस्तामाश्रयितीत्याशय, रिपूणां मनोऽनुकूल-मन्तरेण शौर्यं भवति तात्पर्यम्। वीरानुरक्ता हि राजश्रियः भवन्ति इति ध्वन्यते।

(२५१) बह्विति।—बहूनाम्—अनेकेषाम्, नरपतीनाम्—राज्ञाम्, चरणपतितानामिति भाव, मुकुटेषु—किरीटेषु,—या मणिशिला:—रत्नानि इत्यर्थ, ता शाणा,—निकषशिला इव, ("शाणस्तु निकष कष" इत्यमर) तासां कोणै—अश्रिभि, कषण—घर्षण तेन, चरणनखराजिरिव—पादनखश्रेणिरिव, राजताऽपि—राजत्वमपि, साम्राज्यमिति भाव, उज्ज्वलीभवति—उज्ज्वलतामापद्यते इत्यर्थ,

(२५८) न च स्वप्नदृष्टनष्टेषु इव क्षणिकेषु शरीरेषु निबध्नन्ति बन्धुबुद्धिं प्रबुद्धाः। (२५९) स्थायिनि यशसि शरीरधीः वीराणाम्। (२६०) अनवरतप्रज्वलिततेजःप्रसरभास्वरस्वभावञ्च मणिप्रदीपमिव कलुषः कज्जलमलो न स्पृशति एव तेजस्विनं शोकः। (२६१) स त्वं सत्त्ववताम् अग्रणीः, प्राग्रहरः प्राज्ञानां, प्रथमः समर्थानां, प्रष्ठोऽभि-

---

(२५८) प्रबुद्धाः,—प्रकृष्टज्ञानिनः, बौद्धसिद्धान्तविदः वा, "यत् सत् तत् क्षणिकम्" इत्यादौ यत् सत्, तत् क्षणिकमिति क्षणभङ्गवादस्य तेषां सिद्धान्तेन निर्णीतत्वात् इति भावः, आमरणान्ताश्च स्वप्नेति।—स्वप्नेषु—निद्रावस्थायां विषयानुभवेषु, दृष्टानि—अवलोकितानि, नष्टानि—तदनन्तरम् एव अदर्शनं गतानि इत्यर्थः तेषु इव, क्षणिकेषु—क्षणमात्रस्थायिषु, कियत्कालव्यवधानेनैव भङ्गुरेष्वित्यर्थः, बन्धुबुद्धिम्—आत्मीयत्वज्ञानम्, निबध्नन्ति—स्थापयन्ति, स्वप्नदृष्टानीवास्थिरा न खलु भवन्ति शरीराणि, अतो ममत्वबुद्ध्या नश्वरशरीरनाशभयात् त्वया न कदाचित् भीतिः इति भावः।

(२५९) स्थायिनि—अविनश्वरे, चिरस्थाने इति भावः, ["अन्त्यद्विपरादिभ्यो ण्युयिन्यम्" (३।२।१२४ पा०) इति व्याख्याते विधिः]। शरीरधीः,—देहबुद्धिः, वीरा यश एव शरीरमेव आत्मत्वबुद्ध्या रक्षितं मन्यन्ते, न पाञ्चभौतिकं क्षणिकमिति भावः। इह भवादृशानां वीरव्रतचर्योपार्जितयशःशरीराभिरक्षणमेव श्रेयस्करी इति विशेषे वक्तव्ये साधारणवीरकदम्बसामान्यमभिहितम् इत्यप्रस्तुतप्रशंसाभेदोऽलङ्कारः।

(२६०) अनवरतेति।—अनवरत—सन्तत, प्रज्वलितेन—तैलपूरतयाऽपि भास्वता, तेजसा—प्रतापेन, ज्योतिषा च, प्रसरेण—प्रकाशेन, भास्वरः—दीप्तिमान्, स्वभावः,—प्रकृतिः यस्य तथाभूतं, तेजस्विनं—प्रतापवन्तं प्रज्वलन्तञ्च मणिप्रदीपमिव—रत्नदीपमिव, स्वभावोज्ज्वलमिति भावः कलुषः,—कलङ्कः पापपरिणामभूतश्च, तमोरूपश्च इत्यर्थः कज्जलमलः,—कज्जलम्—अञ्जनम्, अग्निशिखोद्भूतधूमजन्यम् इत्यर्थः, तदेव मलः,—मालिन्यम्, कज्जलवत् मलः—मलिन इत्यर्थश्च। न स्पृशति—नाश्रयति प्रतिकारसहायकत्वात् शोकप्रतिपक्षकोपोद्रेकाच्च इति भावः, अन्यत्र,—मणिमयत्वेन धूमसम्बन्धाभावादिति भावः।

(२६१) स त्वम्—सर्वविभवसम्पन्नो भवान् इत्यर्थः, एतेन सर्वकार्याणामनः-

जातानाम्, अग्रेसरः तेजस्विनाम्, आदिः असहिष्णूनाम्। (२६२) एताश्च सततसन्निहितधूमायमानकोपाग्नयः सुलभासिधारातोयतृप्तयो विकटबाहुवनच्छायोपगूढा धीरताया निवासशिशिरभूमयः स्वायत्ताः सुभटानाम् उरःकवाटभित्तयः।

---

धासलाधनस्यमत्व दर्शस्य सूचितम्। सत्त्ववतां—महाप्राणशालिनाम् अग्रणीः,—अग्रगण्यः। प्राज्ञानां—प्रकृष्टबुद्धिशालिनां, ग्रामणीः,—प्रधानं, वरिष्ठ इति यावत्, ('क्लीबे प्रधाने। मुख्यश्रेष्ठवरिष्ठार्थे'। ग्रामणीर्ग्रामाधिपे' इत्यमरः)। धीमतां—मतिमतां, प्रथमः,—आद्यः। अभिजातानां—महाकुलीनानां पृष्ठः—श्रेष्ठः, ("पृष्ठास्त्वग्रपदे श्रेष्ठे" इति मेदिनी)। तेजस्विनां—प्रतापवताम्, अग्रेसरः—मुख्यः, ["तत्पुरुषे कृति बहुलम्" (६।३।१४ पा०) इति सप्तम्या अलुक्]। असहिष्णूनाम्—अहितविक्रमासहनशीलानामिति यावत् आदिः,—प्रथमः मुख्य इत्यर्थः, एतादृशस्य सर्वगुणवतस्ते विपक्षदमने न कालातिक्रमः करणीय इत्याशयः।

(२६२) एताश्चेति।—एताः,—परिदृश्यमानाः, त्वद्बाहुवक्षःस्थलरूपा इति यावत्, सततेति।—सततसन्निहिताः,—निरन्तरसमीपावस्थिताः, धूमायमानाः,—धूमकुर्वन्त इत्यर्थः, कोपात्प्रभवदिङ्गितानुकूलपवनाभावेन असम्यग्ज्वलिततया निर्वाणोन्मुखा इति भावः, कोपाग्नयः—कोपानला यासु तथोक्ताः, भवदभिलापमात्रेणैव युद्धाय प्रस्थानैषिण्य इति भावः, सुलभेति।—सुलभाः—सुप्रापाः, ईप्सिता इति यावत् असिधारातोयेन—प्रयुक्तनिपातितनिस्त्रिंशधाराजलेन, तृप्तिः,—सौहित्यं, पिपासानिवृत्तिरित्यर्थः, आनन्द इति यावत् यासां तथाविधाः रणाङ्गने शत्रूणाम् असिप्रहारान् आकाङ्क्षमाणा इति भावः, विकटेति।—विकटानि—विशालानि दुरवगाहनीयानि, बाहव एव—भुजा एव, वनानि—अरण्यानि, तेषां छायाभिः,—अनातपैः इत्यर्थः, बाहुभीर्व्वरिति भावः, उपगूढाः,—आलिङ्गिताः, संवृता इत्यर्थः, धीरतायाः—धैर्यशालितायाः, निवासेति।—निवासस्य—अवस्थानस्य, शिशिरभूमयः,—शीतलप्रदेशाः, न केवलम् उद्दामवीर्यशालिनः, किन्तु धीरा अपि इत्यर्थः, दुष्प्रधर्षबलसम्पन्नत्वेऽपि विवेकवन्तः, न तु हठकारिण इति भावः, सुभटानां—महायोद्धॄणाम् उरः इति।—उरांसि—वक्षःस्थलानि एव, कवाटभित्तयः,—कवाटवत् दृढप्रशस्तवक्षःस्थलानीत्यर्थः, स्वायत्ताः,—स्वस्य—आत्मनः, भवत इति भावः, आयत्ताः,—अधीनाः।

ऽभिमानमहासन्निपातान्। (२७५) स्वदय सततसेवाऽञ्जलिमुकुलितकरसम्पुटोष्मभि इष्वसनगुणकिणकार्कश्यानि। (२७६) येन एव ते गत पिता पितामहः प्रपितामहो वा, तमेव मा हासीः त्रिभुवनस्पृहणीयं पन्थानम्। अपहाय कुपुरुषोचितां शुचं प्रतिपद्यस्व कुलक्रमागता केसरी इव कुरङ्गी राजलक्ष्मीम्। देव। देवभूयं गते नरेन्द्रे, (२७७) दुष्टगौडभुजङ्गजग्धजीविते च राज्यवर्द्धने, वृत्तेऽस्मिन् महाप्रलये

---

स्मिन्नभिमाना,—इयरा गर्वा, महितानामिति भाव, ते एव सन्निपाता —वसाध्यरोग विशेषा तान् जय—पराभव चमनय इत्यर्थ मदत चरणजो निपात्य निरभिमाना' क्रियन्तामिति भाव। सन्निपाते शिरसो गौरव भवति, तच्च खड्गादिना प्रशाम्यति इति ध्वन्यते।

(२७५) सततेति।—सतत—निरन्तर क्रियमाणा इत्यर्थं सेवाञ्ज—परिचर्याया, भवचरणयोरिति शेष, य अञ्जलि—युतौ करौ इत्यत्र, ('तौ युतावञ्जलि पुमान्' इति करविवरणे अमर) तेन मुकुलितस्य—मुकुलवत् वतस्य सहतस्य इत्यर्थ, करसम्पुटस्य—युक्तकरद्वयस्य इत्यर्थ उष्मभि—सन्तापै, सततकरद्वयसंश्लेषजन्यैरिति भाव स्वदयेति।—इषव,—शरा अस्यन्त—क्षिप्यन्त अनेन इति इष्वसन—धनु, तस्य गुण —मौर्वी, तेन ये किणा —कर्कशविकृतानि अविरतज्याऽऽकर्षणेन इति भाव तेषा कार्कश्यानि—काठिन्यानि, भवत्करयोः इति शेष, स्वदय—द्रावय, कोमलानि कुरु इत्यर्थ, उष्मस्वेदेन किणकाठिन्यम् अपनीयते इति प्रसिद्धि, अमून् धनुर्ज्याऽऽस्फालनक्षत मेव सेवया कुविति भाव। इह क्रियाद्वयसाद्वविधानेन विपक्षाय सान्ध्यकालिकाञ्जल बन्धनव्यापारदुर्बलात् इयस्य सकाशे कराधारव्यक्तिक्रमव्याखिल मदरिजन इति सूचय।

(२७६) येन, यथा गत गत। त्रिभुवनस्पृहणीय—जगज्जनलोभनीय पन्थान—मार्गं वीरोचितमिति भाव, मा हासी,—मा त्याक्षी। कुपुरुषोचिता—कापुरुषयोग्या, शुच—शोकम अपहाय—परित्यज्य, केसरी—सिंह कुरङ्गीमिव—मृगीमिव कुल क्रमागता—वंशपरम्पराप्राप्ता राजलक्ष्मी प्रतिपद्यस्व—गृहाण। नरेन्द्र—राजनि प्रभाकरवर्द्धने इति यावत्, विषवैद्ये च ("नरेन्द्रस्तु महीपाले विषवैद्ये च पुरुषम" इति मेदिनी) देवभूय—देवत्वम्।

(२७७) दुष्टेति।—दुष्ट —दृप्त क्रूरश्च, गौड,—गौडाधिप एव भुजङ्ग,—आशीविष, तेन जग्ध—भक्षित, निहत दष्टश्चेत्यर्थं, जीवित—जीवन यस्य तथाभूते।

धरणीधारणाय अधुना त्वं शेषः। (२७८) समाश्वासय अशरणाः प्रजाः। (२७९) क्ष्मापतीनां शिरःसु शरत्सविता इव ललाटन्तपान् प्रयच्छ पादन्यासान्। (२८०) अहितानाम् अभिनवसेवादीक्षादुःखमन्त्रश्यामधूममण्डलैः नखमयूखैः प्रचलित-चूडामणिचक्रवालबालातपैश्च आयाहि कल्माषपादताम्।

महाप्रलये—महासङ्कटे, समरक्षये इति भावः, कल्पान्ते च, इह—उपस्थिते, धरणीधारणाय—पृथ्वीपालनाय पृथ्वीभारवहनाय च शेषः,—अवशिष्टः, अनन्तनागश्च। इह श्लिष्टपदैः पक्षान्तरे प्रतीते श्लेषानुप्राणितं रूपकम्।

(२७८) समाश्वासय—सान्त्वय। अशरणाः—निराश्रयाः, प्रभाकरवर्धन-राज्यवर्धनयोः अकाले कालेन दुरात्मना कवलनात् सम्प्रति निरवलम्बा इत्याशयः।

(२७९) क्ष्मापतीनां—राज्ञां विद्विषामिति भावः, शीर्षाणां, मस्तकानामित्यर्थः। शरत्सविता इव—शारदीयः सूर्य इव ललाटन्तपान्—भानुतापि पादन्यासानमस्तकान् शिरःपीडाकरानित्यर्थः, अतिप्रचण्डानित्यर्थः, ["असूर्ये ललाटयोर्दृशि तपः" (३।२।३६ पा०) इति खश्, "अरुर्द्विषद्—" (६।३।६७ पा०) इत्यादिना मुमागमश्च] पादन्यासान्—चरणकमलन्यासान् स्वचरणपातानित्यर्थः, किरणपक्षे पादान् प्रयच्छ —निधेहि सर्वान् विद्विषः स्वचरणे प्रणतान् कुरु इत्यर्थः। अत्र श्लिष्टविशेषणोपमा इष्टव्यालङ्कारः।

(२८०) अहितानां—शत्रूणाम् अभिनवाः।—अभिनवा,—अपूर्वा अननुष्ठितपूर्वा इति भावः या सेवा —परिचर्या तस्याः दीक्षा —नवव्रतं व्रतविशेषाः तासु यत् दुःखं—क्लेशः अनुभूत इति भावः तेन मन्त्रश्यामाः—मलिनाः, श्यामलाना—निष्प्रभरूपाणामलङ्कृतानां, इत्यर्थः अतएवमपि— मयूखाः तैः नखमयूखैः —नखानां—पादनखानां किरणैः यावत् पयन्ति— नयन्तीति भावः श्रमेण [*मित्रमूर्ध्ने च* (३।२।३४ पा०) इति खश्] प्रणतिजातेन दुःखमलश्याम-श्वासवायुसंयोगात् चूडामणिसमूहातपतापस्नानात् भावः प्रचलितेति।—प्रचलितानां —प्रलुण्ठितानां चूडामणीनां—शिरोरत्नानां पादपतितानाम् अहितानामिति भावः, चक्रवालानि—मण्डलानि, तेषां बालातपः —नवोदितसूर्यकिरणकल्पाः प्रभाः तैश्च, कल्माषपादतां—चित्रचरणत्वं धूमेन आतपेन च योगात् कृष्णपाण्डुरचरणत्व-मित्यर्थः, ("चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे" "कल्माषो यातुधाने च कृष्णपाण्डुरवर्णयोः" इत्यमरमेदिन्यौ) तदाख्यराजर्षित्वञ्च। इह श्लेषोत्थापिते चरण

सञ्ज्वरसुखायमानस्पर्शशीतलेषु क्षत्रियक्षतजह्रदेषु अस्नायि",
इत्युक्त्वा व्यरंसीत्।

देवस्तु हर्षस्तं प्रत्यवादीत्,—"करणीयमेव इदम् अभि-हितं (२८९) मान्येन। इतरथा हि मे गृहीतभुवि भोगिनाथेऽपि दायादृष्टिः ईर्ष्यालोः भुजस्य। (२९०) उपरि गच्छति इच्छति निग्रहाय ग्रहगणेऽपि भ्रूलता चलितुम्। अनमत्सु शैलेषु अपि कचग्रहम् अभिलषति दातुं करः।

---

सञ्ज्वराः—सन्तापाः, ते सुखायमानाः,—सुखं वेदयमानाः, सुखं निरन्तरमुत्पादयन्त इत्यर्थः, सुखप्रदा इति भावः, ["सुखादिभ्यः कर्तृवेदनायाम्" (३।१।१८ पा०) इति सुखशब्दात् क्यङि शानचि च रूपम्] स्पर्शेन शीतलाः—हिमस्पर्शाः तेषु, [तृतीयासमासोत्तरं विशेषणसमासः] क्षत्रियेति।—क्षत्रियाणां—राजन्यानां, क्षतजानि—रुधिराणि, तेषां ह्रदाः,—अगाधजलस्थानानि तेषु अगाधशोणितपूर्णाशयविशेषेषु अस्नायि—स्नातं, स्वभावकोमलब्राह्मणोऽपि परशुरामः शत्रुरुधिरे स्नात्वा परिभवप्रतीकारं कृतवान्, कठोरप्रकृतिक्षत्रियेण त्वया तदवश्यकर्तव्यमेव इत्यत्र न काऽपि विचिकित्सा इति तात्पर्यम्। व्यरंसीत्—विरराम, मौनमवलम्बितवानित्यर्थः।

(२८९) मान्येन—मान्येन। इतरथा हि—अन्यथैव करणीयत्वोपदेशाभावेऽपि इति भावः, यद्वा—इतरथा हि—अन्यथाऽपि अरिनिग्रहार्थं कार्यस्यानवलम्बने इत्यर्थः, गृहीतभुवि—भूभारवाहिनि इत्यर्थः, भोगिनाथे—शेषनागे, नरनाथे च दायादृष्टिः,—दायं—पैतृकं धनं तत् आदत्ते इति दायादः,—पैतृकधनहरः इत्यर्थः, तस्मिन्निव दृष्टिः—विरुद्धदर्शनमिति यावत् मत्तोऽन्योऽपि भूभारधारी अस्ति इति प्रतिपक्षबुद्धिरिति भावः ईर्ष्यालोः,—परोत्कर्षासहिष्णोः, भुजस्य विद्वेषीत्यर्थः [ईर्ष्यां लाति इति विग्रहे "स्पृहिगृहि..." (उ० १ पा० ३८ सू०) इति कृदन्तत्वात् निपात्यते]।

(२९०) उपरीति।—उपरि—ऊर्ध्वदेशे अन्तरीक्षे इत्यर्थः, गच्छति—चरति, ग्रहगणे—ज्योतिर्गणेऽपि, निग्रहाय—कथं मे उपरि गच्छतीति रोषेण दण्डदानाय, भ्रूलता—भ्रूवल्ली चलितुं—कुटिलीभवितुमित्यर्थः, इच्छति—अभिलषति मामतिक्रम्य दीनः केन भावेन कश्चिदपि गमिष्यति इति न तु सहते एवेति भावः। शैलेषु—पर्वतेषु, अनमत्सु—नतिमकुर्वत्सु इत्यर्थः प्राकृतिकजाड्येन न चाभिमानादिकेऽपि

(२८१) तेजोदुर्विदग्धान् अर्ककरान् अपि चामराणि ग्राहयितुमीहते हृदयम्। (२८२) राजशब्दरुषा मृगराजानामपि शिरांसि वाञ्छति पादः पादपीठीकर्तुम्। (२८३) स्वच्छन्दलोकपालखेच्छागृहीतानाम् आक्षेपादेशाय दिशाम् अपि स्फुरति अधरः, किं पुनः ईदृशे दुर्जाते जाते? आत्मामर्षनिर्भरे च मनसि नास्त्येव अवकाशः

---

भाव, क्व—क्व, ममेति शेषः, अवकाशः—कीदृशाकर्षणं, दातुं—कर्तुमिति यावत्, मदुद्देश्ये सर्वेषु एवात्मगुरुभिर्भक्तिविवशैरिव अवसीदति इति भावः।

(२८१) तेज इति।—तेजोभिः—ज्योतिर्भिः दुर्विदग्धान्—दुर्विनीतान् दुःशीला-निति यावत्, प्रगल्भानिति भावः, अर्ककरान्—सूर्यकिरणान्। ईहते—चेष्टते, मदन्य-तेजस्विसम्बन्धं कथमपि न सहिष्णुर्भाव अभिलाषमहम् लोके तत्र हि सर्वे एव तेजस्विन-श्चिन्तनीयाः, कथं चामरादिकं गृहीत्वा मां सेवितामहा इव मे सन्ततमास्ते इति भावः।

(२८२) राजशब्दरुषा—राजेति शब्द—स्वनामधेयम्, तत्र या रुट्—रोष-स्तया, मदन्योऽपि राजेति कीर्त्यते इत्यत्र, मृगराजानां—सिंहानां, तत्र पशुजातित्व-सम्बन्धेऽपि राजशब्दप्रयोग इति भावः। पादः,—चरणः ममेति भावः पादपीठीकर्तुम्—अपादपीठानि पादपीठानि कर्तुं पादपीठीकर्तुं—चरणविन्यासार्थं करणम् ["अभूततद्भावे—" (५।४।५० पा०) इत्यादौ "अभूततद्भाव इति वक्तव्यम्" (वा०) इति च्विः] मम एव राजानं मदन्यो प्रयुक्त न कश्चित् अन्यस्य राजशब्दभाव भवतु इत्याशयः।

(२८३) स्वच्छन्देति।—स्वच्छन्दे—स्वाधीने, लोकपालैः—इन्द्रादिभिः, स्वेच्छया—स्वाभिलाषेण गृहीताः,—अधिकृताः दास्यादिवत् स्वीकृता इति यावत् तासां, दिशां—ककुभां शरीरावयवानामिव भवति, आक्षेपादेशाय—तिरस्कारार्थं अपि अधरः,—दन्तच्छदः, स्फुरति—स्पन्दते शिरश्छेदयतीन्द्रादीनामपि लोकपालान् अनादृत्य स्वयमेव सर्वदिशामधिपत्यं कर्तुमिच्छतीव मे मन इति भावः, यद्वा— आक्षेपादेशाय—तिरस्कारार्थे, कथं पुरुषान्तरमन्यमनुसरन्तु नाद्यैव दुर्गीव मां विहाय अनुरक्ता इति तां तिरस्कर्तुमिति भावः। ईदृशे—एवंविधे, दुर्जाते—व्यसने भ्रातृवधरूपे अनर्थे इति भावः, ("दुर्जातं व्यसने क्लीबे" इति मेदिनी) जाते—उत्पन्ने, किं

शोकक्रियाकरणस्य। अपि च (२८४) हृदयविषमशल्ये मुसल्ये जीवति जाल्मे जगद्विगर्हिते गौडाधिपाधमचण्डाले जिह्रेमि शुष्काधरपुटः पोटेव प्रतिकारशून्यं शुचा मूत्कर्तुम्। (२८५) अकृतरिपुजनाबलाविलोललोचनोदकदुर्दिनस्य मे कुतः करयुगलस्य जलाञ्जलिदानम्?

---

पुनः वक्तव्यमिति शेषः, भवदुपदिष्टात् ईदृशदुर्घटनापातात् प्रागेव मे एवंविध अभिलाषः प्रादुर्भूतः अधुना ईदृशदुर्जातजननानन्तरं तत्साधने किं पुनर्वक्तव्यम्? अवश्यमेव तत् साधयिष्यामि इति भावः। जातामर्षनिर्भरे—अमर्षेणापूरिते इत्यर्थः। शोकक्रियाकरणस्य—शोकसूचककर्माचरणस्य, अवकाशः—अवसरः नास्त्येव—न किञ्चिदपि वर्त्तते, अथवा,—किं पुनः इति पदं अध्येतव्यम्, तथा च—ईदृशे दुर्जाते जाते जातामर्षनिर्भरे च मनसि शोकक्रियाकरणस्य अवकाशः नास्त्येव इत्यर्थः किं पुनः वक्तव्यं, प्रागेव तथाविधः अभिलाषः जातः, अधुना मातुलादृशशोचनीयवस्तुना सद्य एव दुर्विनीतान् दण्डयिष्यामि नास्ति मे शोकावसरः, क्रोध एव शोकस्थानमध्यकार्षीत् इति भावः।

(२८४) हृदयविषमशल्ये—मर्मविदारकव्यथाजनके, यद्वा—हृदये—चेतसि, विषमः—दुःसहमित्यर्थः, शल्यः—शङ्कुः यस्मात् तथाभूते मनःपीडादायके इत्यर्थः, हृदयनिखातविषमशल्यभूते इत्यर्थो वा अतिदारुणशल्यात्मभूत इति यावत्, मुसल्ये—मुसलेन—मुसलेनेव, वधविशेषेण इत्यर्थः, वध्य,—नाशयितव्ये [“विध्यो विषयो वध्यो मुसल्यो मुसलेन च” इत्यमरः। मुसलम् अर्हति इति विग्रहे “दण्डादिभ्यो यत्” (५।१।६६ पा०) इति यत्] जाल्मे—पामरे, (“जाल्म स्यात् पामरे क्रूरेऽसमीक्ष्यकारिणि त्रिषु” इति मेदिनी) जगद्विगर्हिते—त्रिभुवननिन्दिते इत्यर्थः, गौडाधिपाधमचण्डाले—हीनश्वपचसदृशे गौडराजे जीवति—प्राणिति सति, पोटेव—पुरुषलक्षणयुता स्त्रीव, श्मश्रुप्रभृतिमती नारीवेत्यर्थः, (“पोटा स्त्रीपुंसलक्षणा” इत्यमरः) शुचा—शोकेन, मूत्कर्त्तुं—मूत्कारम्—अस्पष्टशब्दविशेषं कर्त्तुमित्यर्थः जिह्रेमि—लज्जे तादृशमूत्कृत्यादिभिः शोकसूचकाव्यक्तध्वनिविकाराः क्रियन्ते अलसैः पुरुषैः, न तु वीरैरिति हृदयम्।

(२८५) अकृतेति।—न कृतं—न जनितं रिपुजनाबलानां—शत्रुसैनिकाङ्गनानां विलोलानां—चञ्चलानां, लोचनानां—नयनानां उदकैः,—अश्रुभिः, दुर्दिनं—मेघाच्छन्नमहः येन तथाभूतस्य, रिपुरमणीनां नयनासारजनितमेघा

(२८६) अदृष्टगौडाधमचिताधूममण्डलस्य वा चक्षुषः स्वल्पमपि अश्रुसलिलम्? श्रूयतां मे प्रतिज्ञा,—शपामि आर्यस्यैव पादपांसुस्पर्शेन, यदि परिगणितैः एव वासरैः (२८७) सकलचापचापलदुर्ललितनरपतिचरणरणरणायमाननिगडां निर्गौडां न करोमि मेदिनीं, ततः तनूनपाति पीतसर्पिषि पतङ्ग इव

---

कृष्णाहरेत्यर्थः, मे—मम, [ कर्तरि षष्ठी ] करयुगलस्य—भुजद्वयस्य, [ शेषे षष्ठी, जलाञ्जलिना सहास्यान्वयः ] जलाञ्जलिदानं—तर्पणार्थम् उदकाञ्जलिदानं, भावे इति भावः, कुतः? न कुतोऽपि जनात् तस्मात् त्वत्तः अस्मादित्यर्थः, रिपुनारीणां हतभर्तृकाणां नयनसलिलैरेव अञ्जलिं पूरयित्वा भ्रातरं तर्पयिष्यामि इति भावः।

(२८६) अदृष्टेति।—न दृष्टं—अनवलोकितं, गौडाधमस्य—पापगौडाधिपस्य, चिताधूममण्डलं—शवदाहार्थविरचितप्रज्वलत्काष्ठपुञ्जोद्गतधूमसमूहः येन तथाभूतस्य चक्षुषः,—नेत्रस्य, मे इति शेषः, स्वल्पमपि—किञ्चिदपीत्यर्थः, अश्रुसलिलं—बाष्पवारि, कुतः? इति पूर्वेणान्वयः, अतो अदग्धे गौडदेहे नैव अश्रुजलं कियदपि पातयिष्यामीत्यर्थः। [ अत्र "अश्रुनेत्राम्बुरोदनमास्रमश्रु च" इत्यमरोक्तेः अश्रुशब्देनैव गतार्थत्वात् सलिलपदमधिकमिति अधिकपदत्वं दोषः इत्यवधेयम् ]। पादपांसुस्पर्शेन—चरणरजःस्पर्शेन, तत्स्पर्शं कृत्वेत्यर्थः, शपामि—शपथं करोमि, [ अत्र "शप उपालम्भे" इति धात्विकवचनात्, आक्रोशार्थकात् शपतेः आत्मनेपदमेव नियमितम्, इह तु तद्विहितमिति व्याकरणविरुद्धत्वेन च्युतसंस्कारत्वं दोषः इत्यवधेयम् ] परिगणितैः,—संख्यातैः, अल्पसंख्यया सम्मितैरित्यर्थः, वासरैः,—दिवसैः [ "अपवर्गे तृतीया" (२।३।६ पा०) इति सूत्रेण फलप्राप्तौ द्योतितत्वात् कालवाचकात् वासरशब्दात् अत्यन्तसंयोगे तृतीया ज्ञेया ]।

(२८७) सकलेति।—सकलानां—समस्तानां, चापचापलेन—धनुश्चापल्येन, धनुर्धरा एव वयमित्यभिमानेनेति भावः, दुर्ललितानां—दुर्विनीतानां, नरपतीनां—राज्ञां, चरणेषु—पादेषु, रणरणायमानाः,—रणरणशब्द इव आचरन्तः, रणरणशब्दं कुर्वन्त इत्यर्थः, [ रणशब्दस्य "नित्यवीप्सयोः" (८।१।४ पा०) इति द्वित्वे पश्चात् 'कर्तुः क्यङ् सलोपश्च' (३।१।११ पा०) इति उपमानात् कर्तुः रणरणशब्दात् क्यङि शानचि च रूपमेतदिति ज्ञेयम् ] निगडाः,—लौहशृङ्खलानि यस्याः तथाभूताम्, तथा निर्गौडां—निहतगौडपतिं, गौडाधिपवर्जितामित्यर्थः, दुष्टगौडेश्वरं निहत्य सर्वानेव अन्यान् दुर्विनीतान् नृपान् विजित्य च लौहशृङ्खलनिगडितपादान् यदि तान् कारागा

गाय वा ; गृह्यन्तां द्विषः चामराणि वा ; नम्यन्तां शिरांसि धनूंषि वा ; कर्णपूरीक्रियन्ताम् आज्ञा मौर्व्यो वा ; (२०३) शेखरीभवन्तु पादरजांसि शिरस्त्राणि वा ; घटन्ताम् अञ्जलयः करिघटाबन्धा वा ; (२०४) मुच्यन्तां भूमयः इषवो वा ; समालम्ब्यन्तां वेत्रयष्टयः कुन्तयष्टयो वा ; (२०५) सृष्टः क्रियताम् आत्मा मच्चरणनखेषु

करा,—हस्ता, करदानाय—राजभागदानाय ( इति सन्धिपक्षाय ), शस्त्रग्रहणाय—युद्धकरणायेति भाव, ( इति विग्रहपक्षाय ) सज्जीक्रियन्ता—प्रवर्त्यन्ता, लम्ब्यन्तामित्यर्थ, सर्वे एव मदधीनता स्वीकृत्य सभाजे मम कर ददतु, तदन्यथा चेत युद्ध कुर्वन्तु इति समुदिताय, ना सम्राट्त्वेन न स्वीकुरुथ चेत तदा युद्धे युष्मान विजित्याचिरादेव मदधीनता नेष्यामीत्याशय । एवमुत्तरत्रापि । द्विष,—शत्रव गृह्यन्ता—राज्य विहाय पलाय्य चामीरन्ता, चामराणि वा—बालव्यजनानि वा, गृह्यन्ता—धार्यन्ता मत्सेवार्थमिति भाव, युष्माभिरिति शेष । शिरांसि—मस्तकानि, नम्यन्ता—मच्चरणयो प्रणिपत्यन्ता धनूंषि—चापा वा नम्यन्ता—ज्यारोपणेन आकृष्यन्ता तानि युद्धाय सज्जितानि क्रियन्ताम इत्यर्थ युष्माभि इति शेष । आज्ञा,—आदेश मदीया इति शेष, कर्णपूरीक्रियन्ता—श्रवणाभरणीक्रियन्ता, कर्णभूषण यथा सतत कर्णे स्थित शोभते तथा मदीयाज्ञा नितरा कर्णेषु सादर निवेश्यतामिति भाव, अथवा मौर्व्य, —शिञ्जिन्य धनुर्गुणा इत्यर्थ ( "मौर्वी ज्या शिञ्जिनी गुण" इत्यमर ) कर्णपूरीक्रियन्ताम—आकर्णमाकृष्यन्ता, युद्धायेति भाव । इह आज्ञाया मौर्व्याश्च कर्णपूरीकरणयो सन्धिविग्रहोपधायकयोरैक्येन कर्तव्यत्वाविरोध, स चैकदा-श्रवणपथ्यमान तुल्यत्वमिहाज्ञामौर्व्यो कर्णपूरीकरणे द्वयोरपि तेन तयोरैक्यमेव कतुमशक्यत्वात सन्देहस्यैव पर्यवसानतया विकल्पालङ्कृति इत्यवधातम ।

(२०३) पादरजांसि—पदधूलय मदीयानीति भाव शेखरीभवन्तु—शिरोभूषण भूतानि भवन्तु शिरस्त्राणि वा—युद्धकाले शिरोरक्षार्थं शिरोवेष्टनविशेषा वा शेखरी भवन्त्वित्यन्वय युष्माकमिति शेष । अञ्जलय —हस्तपुटा, युक्तकरद्वयम इत्यर्थ, घटन्ता —जायन्ता प्रणतये करद्वय सयोजयन्ताम इत्यर्थ, करिघटाबन्धा वा—हस्तिव्यूहरचना वा घटना—भवन्तु इत्यर्थ ।

(२०४) भूमय,—राज्यानीति यावत इषव —शरा वा, मुच्यन्ता—त्यज्यन्ताम । वेत्रयष्टय,—वेत्रलता, समालम्ब्यन्ता—गृह्यन्ता नृहेषु भृत्यभावेन स्थीयतामिति भाव, कुन्तयष्टय,—कुन्ताख्यास्त्राणि वा,समालम्ब्यन्ता, युष्माभिरिति शेष ।

(२०५) मच्चरणनखेषु—मम पादनखरेषु सृष्टतया दर्पणवद्विम्बि

( २०८ ) ततश्च निजाधिकारापहारभीत इव भगवति अपि क्वापि गते गततेजसि अहिमभासि, तामरसवनेषु अपि निगूढशिलीमुखालापेषु त्रासादिव सङ्कुचत्सु, ( २०९ ) विहग-गणेषु अपि समुपसंहृतनिजपक्षविक्षेपनिश्चलेषु भिया इव

इत्यर्थः । अगलत्—अतिचक्राम आसन्नीदित्यर्थ सायमभवत् इति यावत् । रूपप्रहर इव—अहङ्कारावेग इव । सुतप्रातप्तस्य—अपत्य सुतवत इत्यर्थ । प्राच्य दृशा—प्राच्यम—अपरस्याम पश्चीन्मुख इत्यर्थ उषा—तेज पौरुषं वा यस्य तथाभूत, ( उषो चन्द्रस्तु च व्यष्ट पुमानुषा स्त्रिया लिपि' इति कोषात ) उपशब्दो नाम्नी ऽदन्तश्च दृश्यते तेन भानस्वोषशब्दस्याय प्रयोग इति ज्ञयम् । यो हि राज्ञ इयस्य एव दर्पाड्डीन वचनमश्रौषीत तस्य गत्य सपदि विलुप्तोऽभूत का कथा अन्यथा स्वय दिवसाऽपि स्वाभाविकसुख विहाय भयात प्रयामात तात्पर्यम् ।

( २०८ ) "ततश्च" इत्यस्य "प्रदोषाख्याने नातिचिर तस्थौ" इति परेण सम्बन्ध । निजेति ।—निजस्य—आत्मन अधिकारस्य—स्वामित्वस्य जगत्प्रतपनरूपे कर्माणि इति भाव अपहारात्—अपहरणकरणात् भीते इव—त्रस्त [illegible] इव विलोक्य दर्पान्मूलनाय सङ्कुचितकर इति भाव गततेजसि—निष्प्रभ इत्यर्थ, अहिमभासि—उष्णरश्मौ रवौ इत्यर्थ क्वापि गते—अदर्शन प्राप्त इत्यर्थ अस्तमिते इति भाव । निगूढेति ।—निगूढा —गुप्ता नायकस्य प्रभाकरस्य अस्तमगमनलोक्य विरहदुःखादिव पद्माना मुकुलीभावेन तद्गतापपातसूना भ्रमराणा सपदि तत्रावरुद्धत्वादिति भाव शिलीमुखाना—भ्रमराणा बाणानाञ्च ( "अलिबाणौ शिलीमुखौ" इत्यमर ) आलापा —गुञ्जनानि इत्यर्थ यत्तु पातशब्दा इत्यर्थश्च येषु तथाभूतेषु तामरसवनेषु —पद्मकाननेषु ( "अथ तामरस पद्म ताम्र काञ्चनयोरपि" इति मेदिनी ) त्रासादिव —भयादिव सङ्कुचत्सु—निमीलत्सु, भ्रमरान् स्थिता गुप्तभावेन मन्त्रणाकरणात् कथमनेन एव जलजानि किमपा मनसि वर्तते इति विविच्य इति भाव भ्रमरा अरपतनभयादिव कमलाभ्यन्तरमन्त्रमहंमन्यास्थनित्याप व्यञ्जयते लोकेऽपि गृहाभ्यन्तरे प्रच्छन्न मन्त्रयता वेशाचित अव्यक्तगुञ्जनमाकर्ण्य गृहाधिकारी भयात् सङ्कुचितो भवतीत्यपि दृश्यते ।

( २०९ ) विहगगणेषु—विहायसा—आकाशमार्गेण गच्छन्ति इति विहगा [ "ड [illegible] विहायसो विहादेशो वक्तव्य" ( वा० ) इति ड ] तेषा गणा तेषु पक्षिवृन्देषु इत्यर्थ, समुपेति ।—समुपसंहृत —सङ्कुचित इत्यर्थ निजपक्षाणा स्वपत्त्राणा,

अप्रकटीभवतु, भुवनव्यापिनीं सन्ध्यां प्रतिज्ञामिव मानयति नतशिरसि घटिताञ्जलिवने जने सकले, (२१०) स्वपदच्युतिचकितदिक्पालदीयमानाभ्रंलिहलोहप्राकारवलयासु इव बहलतिमिरमालातिरोधीयमानासु दिक्षु प्रदोषास्थाने न अतिचिरं तस्थौ। (२११) नमन्नृपलोकलोलांशुकपवनकम्पितशिखैः दीपिकाचक्रवालैः अपि प्रणम्यमान इव प्राहिणोत् लोकं, प्रतिषिद्धपारजनप्रवेशश्च शयनगृहं

---

विधेय,—चान्तर्निमग्ना ये तथाभूता, अत एव निश्चला,—अचञ्चला, स्थिरा इत्यर्थः तेषु, [विशेषणसमासः] अन्यत,—समुपसङ्कृत,—समाप्ति यत, सपदि क्षयमेव विनष्ट इत्यर्थः, सम्राज इवस्याभ्युदय इहेति भाव, निजपक्षाणाम्—आत्मसहायानां, य कियप,—प्रकार इत्यय, तन निश्चला तथाभूतस्तु इत्यय, स्थिरैव—हस्तेनेव, इत्यादिरि भाव, एकस,—स्वपक्षखण्डनात, अन्यव—स्वसहायाभावात्वाय इति भाव, अप्रकटीभवतु—अप्रकाशता गच्छतु। भुवनव्यापिनी—समस्ता अयदावरणकारिणी, जगति व्याप्ति-मापन्नामित्यर्थः, प्रतिज्ञामिव—शपथमिव, हर्षस्य इति भाव। मानयति—पूजयति, आद्रियमाणे इत्यर्थः। नतशिरसि—प्रणतमस्तके इत्यर्थः। घटिताञ्जलिवने—कृताञ्जलिसमूहे, सन्ध्यागमनात् शिरसि अञ्जलि बद्धा उपासितु प्रवृत्ते इत्यर्थः।

(२१०) दिक्षु—आशासु, स्वपदेति।—स्वस्य—आत्मन, पदात्—अधिकारात्, लोकपालकलपदात् इति भाव, च्युति,—भ्रंश, तस्मात् तेन वा चकिता,—शङ्किता, ये दिक्पाला,—दिग्धिपतय इन्द्रादय, तै दीयमान—विधीयमानम्, अभ्रंलिह—गगनस्पर्शि, ["वहाभ्रे लिह" (३।२।३२ पा०) इति खश्] लोहप्राकारवलयम्—अयस्मयवलयमण्डल यासु तथाविधासु इव, ("प्राकारो वरण साल" इत्यमर) बहलास।—बहलया—प्रभूतया तिमिरमालया—अन्धकारपटलेन तिरोधीयमानासु—आच्छिद्यमानासु सतीषु, प्रदोषास्थाने—रजनीमुखीयसभाभवने, सायमुपवेशनार्हसभामण्डपे इत्यर्थः।

(२११) नमदिति।—नमता—प्रणिपतता, नृपलोकाना—राजजनानाम्, [illegible]लस्य—चञ्चलस्य, अञ्चलमनवधीभाविति भाव, अंशुकस्य—वसनस्य, पवनेन—वायुना कम्पिता,—सञ्चालिता, शिखा,—ज्वाला येषा तै, दीपिकाचक्रवालै,—दीपमण्डलै। लोकं—पारजनमिति भाव, प्राहिणोत्—विससर्ज, स्वसमीपादिति

प्राविशत्, उत्तानश्च मुमोच अङ्गानि शयनतले। दीपद्वितीयश्च तम् अभिसर इव लब्धावसरस्तरसा भ्रातृशोको जग्राह। जीवन्तमिव हृदये निमीलितलोचनो ददर्श अग्रजम्। (३१२) उपर्युपरि भ्रातृजीवितान्वेषिण इव प्रसस्नुः श्वासाः। धवलांशुकपटान्तेन इव च अश्रुजलप्लवेन मुखम् आच्छाद्य निःशब्दम् अतिचिरं रुरोद; चकार च चेतसि,—(३१३) "कथं नाम आकृतेः तादृश्या युक्तः परिणामोऽयम् ईदृशः? पृथु-शिलासङ्घातकर्कशकायबन्धात् तातात् अचलात् इव लोहधातुः

---

शेष यथास्थानं वा। प्रविविशेति।—प्रविविश,—निवारित, परिजनानां—भृत्यानामिति यावत्, प्रवेश—अन्तर्गमनं येन तथाभूत। उत्तान,—ऊर्द्ध्वमुखशायी, ("उत्तानस्तगभीरे स्यादूर्द्ध्वास्यशायिनि त्रिषु" इति मेदिनी) शयनतले—शय्यायां, मुमोच—प्रसारितवान्। दीपद्वितीय—दीपमात्रसहचरमित्यर्थं, एकाकिनमिति भाव, तं—हर्षं, अभिसर इव—दस्युरिव, लब्धावसर,—प्राप्तावकाश, एकाकित्वादिति भाव, तरसा—बलेन जग्राह—व्याप्तवान्, तदानीं भ्रातृशोक समुदियाय इति भाव। भैरवो दस्यु यथा कमप्येकाकिनं दृष्ट्वा बलादाक्रामति, तथैव शोक सपदि तद्धृदयमधिकारैरिति समुदितताप्नम।

(३१२) उपर्युपरि—अविरतमित्यर्थं, ["उपर्यध्यधस सामीप्ये" (८।१।७ पा०) इति सामीप्यसामीप्ये द्विर्वचन] भ्रातृजीवितान्वेषिण इव—भ्रातृजीवनसङ्गानुसन्धायिन इव श्वासा —निश्वासमरुत, अन्वेषणप्रवृत्तमेणेति भाव, प्रसस्नु,—निर्जग्मुरिति ख। धवलांशुकपटान्तेन इव—श्वेतवसनाञ्चलेन इव, अश्रुजलप्लवेन—बाष्पवारिपूरेण, अश्रुजलमेव तस्य क्रन्दनकालिकमुखाच्छादनव्यापारं चकार इति भाव, शोकोऽपि अतिश्यनत्रपाहदी वस्त्राञ्चलेन मुखमाच्छाद्य रोदिति इति दृश्यते।

(३१३) नाम—वितर्के। तादृश्या,—रमणीयाया, सुन्दराकारेत्यर्थं, ईदृश,—एवंविध, शोच्य इत्यर्थ, परिणाम,—विपाक, अवसानमित्यर्थ, युक्त,—उचित। पृथ्विति।—पृथु,—विशाल, ["प्रथिम्रदि—" (उ० १ पा० २९ सू०) इत्यादिना कु सम्प्रसारणञ्च] शिलासङ्घात,—पाषाणस्तूप इत्यर्थ, तद्वत्, तेन च कर्कश,—कठिन, कायबन्ध,—कलेवरघटनं यस्य तथाविधात्, तातात्—पितु, अचलात्—पर्वतात्, लोहधातुरिव—लोहनामा खनिज पदार्थविशेष इव,

कठिनतर आसीत् आर्य्य.। कथञ्च अस्य मे (२१४) हत हृदयस्य आर्य्यविरहे सकृदपि युक्तम् उच्छ्वसितुम्? (२१५) इयं सा प्रीतिर्भक्तिः अनुवृत्तिर्वा? बालिशोऽपि कः सम्भावयेत् आर्य्यमरणे मज्जीवितम्? (२१६) तत् तादृशम् ऐक्यम् एकपद एव क्वापि गतम्? अयत्नेन एव हतविधिना पृथक् कृतोऽस्मि। (२१७) दग्धरोषान्तरितशुचा सुचिरं रुदितमपि न मुक्तकण्ठं गतघृणेन मया॥ सर्वथा (२१८) लूनातन्तुच्छटाच्छिदुराः तुच्छाः प्रीतयः प्राणिनाम्।

---

कठिनतर,—अतिकठिन, पाषाणमयमपि लौह पाषाणादपि कठिन भवतीति प्रयर्थमिति भाव, मत्स्यादुक्तोऽपि भीरुधातुयथा ततोऽपि कठिनतर इत्यतो, सर्वेव निठुरपि मदज हृढकाय आसीदिति तात्पर्यम्।

(२१४) हतहृदयस्य—मन्दभाग्यस्य, आर्य्यसमसुखायथितत्वादिति भाव, सकृदपि—एक क्षणमपि उच्छ्वसितु—प्राणितुम्।

(२१५) इयमिति।—का प्रीति,—तथाविध हृढतर उभयो प्रणय, का भक्ति,—पूज्यतया अकपट अनुराग, का अनुवृत्ति—आनुगत्यम् इयम्—ईदृशभाव मात्रित्यर्थ। बालिशोऽपि—मूर्खोऽपि। सम्भावयेत्?—सम्भवयेत्?।

(२१६) तत्—तातजीवद्दशायां यदीकर्षभागतम् वा वाल्यादिकत्र प्रथमावस्थादिना प्रकटमिति भाव तादृश—सम्मलोकातिदित्वविस्मय, ऐक्यम्—एकीभाव, आत्मभाव इत्यथ, एकपद एव—तत्काल एव आर्य्यस्य मरणादनन्तरमेवत्यर्थ, ("एकपद तत्काल नपुंसक वचनि स्त्री स्यात्" इति मेदिनी)। अयत्नेन—यत्न विना एव, अनायासेनेवेत्यर्थ, हतविधिना—दुर्दैवेन, पृथक कृत,—विभिन्न कृत वियोजित इति भाव।

(२१७) दग्धेति।—दग्धेन,—कृतेन अनिष्टयेनेति भाव रोषेण—आर्त्ति इति कोपेन, अन्तरिता—व्यवहिता तिरोहितेति यावत शुक्—शोक यस्य तथा भूतेन, शत्रोर्निनिग्रहाय क्रोधाद्यात शोक विस्मृतत्यर्थ, गतघृणेन—निर्दयेन ("घृणा दयाऽनुकम्पा स्यात्" इत्यमर) मया मुक्तकण्ठम्—उच्चै, सुचिरं—दीर्घकाल, न रुदितमपि—न क्रन्दितमपि।

(२१८) प्रीतय,—प्रणया, लूतेति।—लूतातन्तुच्छटा—लूता—ऊर्णनाभ,

(३१८) लोकयात्रामात्रनिबन्धना बान्धवता, यतोऽहमपि नाम पर इव आर्य्ये स्वगेहे स्वस्थ इव आसे। किञ्च दैवहतकेन फलम् आसादितम् ईदृशि परस्परप्रीतिबन्धनिर्वृतहृदये सुखभाजि भ्रातृमिथुने विघटिते ? (३२०) तथा चन्द्रमया इव जगदाह्लादिनो लोकान्तरीभूतस्य स्नेहचितान्मय इव आर्य्यस्य त एव दहन्ति गुणाः।" इत्येतानि च अन्यानि च

---

जाज्वर कोटरित्वम् इति यावत्, ("लूता स्त्री तन्तुवायोर्णनाभमर्कटकाः समाः" इत्यमरः) तथा तन्तुच्छटा—लूतानिचयः, तद्वत् छिद्राः,—सर्वत्र छिद्रार्त्ता इत्यर्थः, अत एव तुच्छाः,—हेयाः, असारत्वेन गर्हणीया इत्यर्थः।

(३१९) लोकयात्रामात्रनिबन्धना—लोकव्यवहारमात्रफला, स्वार्थसाधनैकमात्रप्रयोजना इति यावत् बान्धवता—बन्धुत्वम्, स्वार्थसाधनायैव लोके बन्धुत्वं क्रियते, न तु अविकृतगाढानुरागिणा परोपकारणायेम् इति भावः। नाम—कुत्साया, निन्दायै वा। पर इव—अन्य इव सोदरभिन्न इव इत्यर्थः। स्वस्थ इव—प्रकृतिस्थ इव, यथावत् निष्क्रियाकरणात् सुखित इव इत्यर्थः आसे—तिष्ठामि। ईदृशि—एवम्प्रकारे, परस्परात्।—परस्परयोः—अन्योऽन्ययोः, प्रीतिबन्धेन—प्रणयभरेणेत्यर्थः, निर्वृतम्—सुस्थम् सुखितमिति यावत् ('निर्वृति स्वास्थ्यतायाम् गमने च सुखे स्त्रियाम्' इति मेदिनी) हृदयम्—चेतः यस्य तथाभूते, सुखभाजि—सुखभोगनिरते, भ्रातृमिथुने—सोदरयुगले विघटिते—विच्छिन्ने, जाते सति इति शेषः, दैवहतकेन—दग्धविधिना, किं फलम्—को लाभः, आसादितम् ?—प्राप्तम् ? अस्मत्स्नेहनाशं सम्पाद्य दग्धविधेः को फललाभोऽभूत् इति भावः, दुरात्मा हि फलमनपेक्ष्यैव केवलं स्वभावादेव परानिष्टसम्पादने प्रवर्त्तते इति तात्पर्यम्। स्त्रीपुंसौ मिथुनं द्वन्द्वम् इत्यमरोक्तेः मिथुनशब्दस्य स्त्रीपुंसयोरभिधायकतया, अत्र भ्रात्रोः युगलार्थे प्रयोगे च्युतसंस्कृतदोषप्रसङ्ग इति विभाव्यम्।

(३२०) लोकान्तरीभूतस्य—परलोकप्रस्थितस्य मृतस्येत्यर्थः आर्यस्य—ज्येष्ठस्य, चन्द्रमया इव—इन्दुमयूखच्छाया इव सन्तापविहरणेन प्रीणनादिति भावः, तथा—तादृशाः, सर्वलोकानुभूताः इत्यर्थः, जगदाह्लादिनः,—भुवनवासिजनानाम् आनन्ददायिनः इत्यर्थः, त एव—ये इति आर्य्ये ये तदीया गुणाः सर्वसन्तापनाशकाः सन्ति, त एव अयं, गुणाः,—वात्सल्यसौजन्यदाक्षिण्यादयः, दहन्ति।—तथा,—तनुताः, चितामया,—चितानला, मृतस्य तस्य दाहकारिका इति भावः तेषु तथाभूता इव,

हृदयेन पर्यदेवयत्। प्रभातायाञ्च (३२१) शर्वर्यां प्रातरेव प्रतीहारम् आदिदेश अशेषगजसाधनाधिकृतं स्कन्दगुप्तं द्रष्टुम् इच्छामि इति।

(३२२) अथ युगपत् प्रधावितबहुपुरुषपरम्पराऽऽहूयमानः, स्वमन्दिरात् (३२३) अप्रतिपालितकरेणुः चरणाभ्यामेव सम्भ्रान्तः, ससम्भ्रमैः दण्डिभिः उत्सार्यमाणजानपदः,

---

चिताग्निभिः सह सङ्गता इव इति यावत्, दहन्ति—भस्मीकुर्वन्ति, इदानीमिति शेषः। सर्वलोकजीवनभूता दाहनाशना शीतस्पर्शा जलादयोऽपि अग्निसम्पर्कादुत्तप्ता यथा दहन्ति, तथा तपस्विनः सततं तस्य भ्रातुरपि गुणाः चितानलसम्पर्कादुष्णाः सन्त इदानीं निरतिशयं मां दहन्तीति भावः, तस्य गुणराशीनां स्मृत्या शोकाः अतीव प्रज्वलिताः सन्तः मां सन्तापयन्तीति तात्पर्यम्। पर्यदेवयत्—परिदेवितवान्, विललापेत्यर्थः।

(३२१) शर्वर्याम्—रात्रौ। प्रतीहारम्—दौवारिकम्, ["उपसर्गस्य—" (६।३।१२२ पा०) इत्यादिना पाक्षिको दीर्घः अमनुष्ये इति निषेधात् कथमिह प्रयुक्तः? इत्याशङ्कायाम् उदाहृतं ज्ञानेन्द्रसरस्वतीभिः—"अथ द्वाःस्थे दौवारिके प्रतीहारमनुष्येऽपि इति चेत्, अत्राहुः—प्रतिहारो द्वारि, द्वास्स्थे स्यादिति" ]। अशेषगजसाधनाधिकृतम्—समस्तगजातिहस्तिसैन्याध्यक्षम्।

(३२२) "अथ" इत्यस्य "स्कन्दगुप्तः विवेश राजकुलम्" इति परेण सम्बन्धः। तं विशिनष्टि, युगपदित्यादि।—युगपत्—समकालं, प्रधाविताः—ससम्भ्रमं प्रद्रुताः, बहूनाम्—अनेकेषां, पुरुषाणां—भृत्यजनानामिति यावत् परम्पराभिः—श्रेणीभिः, आहूयमानः—आकार्यमाणः, महाराजाज्ञयादरगौरवात् इति भावः।

(३२३) अप्रतिपालितकरेणुः—अनपेक्षितगजवाहनः इत्यर्थः सम्भ्रान्तः—सत्वरः। ससम्भ्रमैः—सत्वरैः, आदरातिशयवद्भिः, गजसेनाऽधिपतौ सम्मानप्रदर्शनार्थमिति भावः, दण्डिभिः—याष्टीकैः, सेनापतेः शरीररक्षिभिः सनिकैरिति यावत्, उत्सार्यमाणजानपदः—उत्सार्यमाणाः—अपसार्यमाणाः जानपदाः—जनपदाः, पुरवासिन इति भावः यस्मात् यस्य वा तथोक्तः। ["उत्सार्यमाणजानपदः" इत्यत्र "उत्सार्यमाणजनपदः" इति पाठोऽपि स एवार्थः, "जनपदो जानपदोऽपि जनदेशयोः" इति मेदिनीवचनात्]।

(३२४) पदे पदे प्रणमतः प्रतिदिशमिभभिषग्वरान् वरवारणानां विभावरीवार्त्ताः पृच्छन्, (३२५) उच्छ्रितशिखिपिच्छलाञ्छितवंशलतावनगहनगृहीतदिगायामैः विन्ध्यवनैः इव (३२६) वारणबन्धविमर्दोद्योगागतैः पुरःप्रधावद्भिः अनायत्तमण्डलैः आधोरणगणैः इव, (३२७) मरकतहरितघासमुष्टीः दर्शयद्भिः, नवग्रहगजपतीः इव प्रार्थ्यमानैः इव,

(३२४) पदे पदे—प्रतिपदक्षेपमित्यर्थः । प्रतिदिशं—दिशि दिशि, चतसृभ्यः दिग्भ्यः समागतान्, चतुर्दिगवस्थितान् वा इति भावः, इभभिषग्वरान्—गजवैद्यप्रवरान्, वरवारणानां—श्रेष्ठगजानां, विभावरीवार्त्ताः,—रात्रिवृत्तान्तान्, रात्रौ ते कीदृशाः आसन् इत्यादिप्रकारानित्यर्थः, पृच्छन्—जिज्ञासमानः, रात्रिवृत्तजिज्ञासया गजेन्द्रचक्रदिनचर्यावृत्तम् आपदीर्घं तस्य सम्यक् ज्ञातमेवेति गम्यते, एतेन चास्य स्वकार्यव्यक्तमपि अनौदासीन्यं प्रकटीकृतम् ।

(३२५) उच्छ्रितेति ।—उच्छ्रितानि—उन्नतानि, शिखिनां—मयूराणां पिच्छैः,—बर्हैः, लाञ्छितानि च—मण्डितानि च वंशलतावनानि—वेणुवल्लीकाननानि मयूराणां सर्वदा तत्र सञ्चारादिति भावः येषु तथाविधैः, गहनैः,—घनैः, गृहीताः,—अधिकृताः, व्याप्ता इत्यर्थः, दिशां—ककुभाम्, आयामाः—आभोगाः यैः तादृशैः, विन्ध्यवनैरिव—विन्ध्याचलकाननैरिव, परिदृश्यमानैरिति शेषः, कृष्णवर्णोन्नतदेहत्वात् निबिडश्मश्रुादिधारित्वाच्चेति भावः ।

(३२६) वारणेति ।—वारणानां—हस्तिनां बन्धे—धारणे रोधने इति यावत्, बन्धाय इति वा यो विमर्दः,—प्रयासः, तस्य उद्योगात्—उपक्रमात्, उद्योगाय वा, आगताः,—उपस्थिताः तैः, हस्तिनां वशीकरणार्थं सङ्ग्रहार्थं वा देशान्तरात् समागतैरिति समुदितार्थः, पुरः,—अग्रतः, प्रधावद्भिः,—प्रद्रवद्भिः, अनायत्तमण्डलैः,—न आयत्तं—वशीभूतं, मण्डलं—सङ्घः येषां तैः, अनधीनानुचरैरित्यर्थः, अचिरागमनादिति भावः, ["अनायत्तमण्डलैः" इत्यत्र "अनायतमण्डलैः" इति पाठे—अनायतं—न दीर्घं मण्डलं—सङ्घः गमनादिव्यवस्था येषां तथाविधैः, सम्भ्रमविपर्यस्तपरिक्रमैः इति भावः] आधोरणगणैः,—निषादिगणैः, हस्तिपालकवृन्दैरित्यर्थः, ("आधोरणा हस्तिपका हस्त्यारोहा निषादिनः" इत्यमरः) ।

(३२७) मरकतेति ।—मरकतवत्—तदाख्यहरिद्वर्णमणिवत्, हरितानां—श्यामलानां, घासानां—यवसानां, मुष्टीः,—कवलान्, मुष्टिगृहीतघासानित्यर्थः, दर्शयद्भिः,—दर्शयद्भिः, इद्धौ घासमुष्टीर्दातुं भक्षणे न वा इति जिज्ञासुभिरिति भावः ।

(३२८) लब्धाभिमतमनमातङ्गमुदितमानसैश्च सुदूरम् उपसृत्य नमस्यद्भिः, (३२९) आत्मीयमातङ्गमहामात्रांश्च निवेदयद्भिः, डिण्डिमाधिरोहणाय च विज्ञापयद्भिः, (३३०) प्रमादपतितापराधापहृतद्विरददुःखघटितदीर्घश्मश्रुभिः श्यतो गच्छद्भिः, (३३१) अभिनवोपस्तैश्च कर्पटिभिः वारणाप्तिसुखप्रत्याशया धावमानैः गणिकाऽधिकारिगणैः,

नवाद।—नव,—नूतन, मह,—महत आरम्भिन्य दैवा ाद्दया, ये गजपतय,—प्रधानपालक तान् प्रार्थयमान —एतान बन्धकरीन्द्रान भिक्षाय अस्मदधीनान् कुर्वात याचमानैः इत्यर्थः।

(३२८) लब्धेति।—लब्धा,—प्राप्ता, पाम्यत्वनात भाव, अभिमता —इष्टा, प्राविता इति भाव मता,—मदोत्कटा, मातङ्गा —हस्तिन, तैः हेतुभिः मुदितानि—हृष्टानि मानसानि—मनांसि येषां तैः अत एव सुदूरं दूरत एव सम्मुखाभ्यागतैरिति भाव, नमस्यद्भिः —प्रणिपतद्भिः। ["नमोवरिवस्यचित्रङः क्यच्" (३।१।१९ पा०) इति क्यजन्तात् शतृप्रत्ययः]।

(३२९) आत्मीयेति।—आत्मीया,—स्वाधिकृता इति यावत्, ये मातङ्गा,—गजा तेषां महामात्रान्—हास्त्यारोहकाधक्षान्, निवेदयद्भिः—विज्ञापयद्भिः तेषां कर्माणि नियोज्यत्वेनापयद्भिः इति भावः। डिण्डिमाधिरोहणाय—गजस्योपरि पटहवादित्रविधानाय इत्यर्थः।

(३३०) प्रमादेति।—प्रमादेन—अनवधानतया, पतितं—पतनं भूमिपृष्ठादिति, विषममार्गे चालनात् स्खलितं इति वा भाव, [भावे क्तप्रत्ययः] तदेव अपराध —दोष तेन हेतुना, अङ्कुशक्षोऽयं हस्तिपालकस्य इति धिया भाव यद्वा —प्रमादेन—अनवधानात् हस्तिपालने अवहेलनादिति यावत्, पतितं —उपस्थितं सञ्जातं इत्यर्थः, अपराधं तेन हेतुना, हस्तिपालकत्वमुज्झिष्यमिति धिया इति भाव अपहृत,—आच्छिद्य नीतं इत्यर्थं, यो द्विरद,—गज स्वाधिकृत इति भाव तस्य दुःखेन—क्षमेन तदपहरणजनितेन इति भाव घटितानि—रचितानि इत्यर्थः दीर्घाणि—प्रलम्बानि, श्मश्रूणि—कूर्चा यैः तथाभूतैः।

(३३१) अभिनवोपस्तैः —अल्पदिनमागतैः, कर्पटिभिः —जीर्णचीरवसनधारिभिः, वारणेति।—वारणस्य—गजस्य, आप्तौ—लाभे यत् सुखम्—आनन्द, तस्य प्रत्याशया—आकाङ्क्षया, धावमानैः —द्रवद्भिः गणिकाधिकारिभिः,

(३३२) विरलव्यान्तरैः उच्छ्रितकरैः कर्मण्यकरेणुका-सद्ग्रयनाकुलैः, (३३३) उल्लासितपल्लवचिह्नाभिः अरण्यपालपङ्क्तिभिरिव निष्पादितनवग्रहनागनिवहनिवेदनोद्यताभिः उत्तम्भिततुङ्गतोत्रवनाभिः, (३३४) महामात्रपेटकैश्च प्रकटितकरिकर्मचर्मपुटैः, (३३५) अभिनवगजसाधन-

—गणिका—वशी गजानां प्रलोभनार्थां हस्तिनीत्यर्थः, यया प्रलोभ्य हस्तिनो ध्रियन्ते इति भावः ("गणिका यूथीवेश्याभीमकारीषु—" इति मेदिनी) तस्या अधिकारिगणाः,—कुट्टनवर्गा तैः।

(३३२) विरलव्यान्तरैः—विरेव—दीर्घकालानन्तरमित्यर्थः, व्यन्त—प्राप्तम्, अन्तरम्—अवकाशः, करेणुकावार्ताविज्ञापने स्कन्दगुप्तदर्शने वा इति भावः यैः तथोक्तैः, उच्छ्रितकरैः,—उद्धृतहस्तैः करेणुसान्त्वनाय स्कन्दगुप्ते सम्मानप्रदर्शनाय वा इति भावः। कर्मण्येति।—कर्मण्या—करिग्रहणकुशला या करेणुका—हस्तिनी, तस्याः सद्ग्रयने—समासपने, आकुलाः—व्याप्ताः तैः गजसेनापतिना स्वस्य करेणुविषयकालापपरैरित्यर्थः।

(३३३) उल्लासितेति।—उल्लासिताः,—उद्धृताः पल्लवा एव—किसलयान्येव, चिह्नानि—लक्षणानि, वयमारण्यपाला इति सूचकानीति भावः याभिः तथोक्ताभिः, निष्पादितेति।—निष्पादितः,—सम्पादितः, यः नवग्रहणाः—नवधृतानां, नागानां—गजानां निवहः—समूहः, तस्य निवेदने—विज्ञापने उद्यताभिः—प्रवृत्ताभिः, उत्तम्भितेति।—उत्तम्भितम्—उल्लासितं तुङ्गम्—उन्नतं, तुदति अनेनेति तोत्रं—वेणुकं, हस्तिप्रासनत्वमदपाखण्ड इति भावः ("तोत्रं वैणुकम्" इत्यमरः) ['दाम्नी—' (३।२।१८२ पा०) इत्यादिना ष्ट्रन "तितुत्र—" (७।२।९ पा०) इत्यादिना इडभावः] तदर्थं वनम्—अरण्यजातं दारु इत्यर्थः याभिः तथोक्ताभिः, यद्वा,—उत्तम्भितानि—ऊर्ध्वमुत्तोलितानि तुङ्गतोत्रवनानि—अत्युच्चवेणुकारण्यानि, प्रभूतत्वादिति भावः याभिः तादृशीभिः अरण्यपालपङ्क्तिभिः—गजबन्धनार्थं वनरक्षिवर्गैरित्यर्थः।

(३३४) प्रकटितेति।—प्रकटितानि—आविष्कृतानि, प्रदर्शितानीत्यर्थः करिणां—हस्तिनां, कर्मणे—युद्धादिविचारे इत्यर्थः, चर्मपुटानि—चर्मनिर्मिता हस्ताकारा यैः तथोक्तैः महामात्रपेटकैः,—हस्तिपकाधिपकदम्बकैः,प्रधानहस्तिपकवृन्दैरित्यर्थः,("महामात्रः समृद्धे चामात्ये हस्तिपकाधिपे" "पेटकः पुस्तकादीनां मञ्जूषायां कदम्बके" इत्युभयत्र मेदिनी):

(३३५) अभिनवेति।—अभिनवं—नूतनं, गजानां—करिणां, साधनं—वशी-

समुद्रान् आघ्रापयन् इव, (२४०) शृङ्गारगैरिकपङ्काङ्गराग-सङ्ग्रहाय गिरीन् मुष्णन् इव, (२४१) दिग्गजाधिकारं ककुभाम् ऐरावतमिव अपहरन्, हरेर्हरपदभरनमितकैलासगिरि-गुरुभिः पादन्यासैः गुरुभारग्रहणगर्वमुर्व्याः संहरन्निव,

कर्णेषु—स्रोतमूलेषु इत्यर्थः, या मङ्क्षा,—कल्पव एव मङ्गनिर्मितालङ्कारा एवेत्यर्थः, सम्पद,—भूषणानीति भाव तासां सम्पादनाय—सङ्ग्रहाय, समुद्रान्—सागरान्, आघ्रापयन् इव—आदिशन् इव, कालकर्णशोभासम्पादनाय नूनं स्वगर्भस्थितान् मङ्क्षान् उद्धृत्यानेतु समुद्रानपि आज्ञापयन्निव इति भाव। एतेन तस्य समुद्रेभ्योऽपि गाम्भीर्यवत्त्वं सूचितम्। अत्युत्तोयाना करिणा कर्णेषु पताकेत्य मङ्क्षाराजय तेन विनि वशिता यथा समुद्रगभाश्यता मङ्क्षानवद्य निःश्वा एवाभूतमित्युत्प्रेक्षितम्।

(२४०) शृङ्गारेति।—शृङ्गार —गजमण्डन, हस्तिनामलङ्करणार्थमित्यर्थः, [ शृङ्गारः सुरते नाट्यरसे च गजमण्डने' इति मेदिनी। 'शृङ्गारभृङ्गारौ' (उ० २ पा० १२६ सू०) इति शृधातो आरन् गुम् गुक्र ह्रस्वे च रूपम् ] च, गैरिकपङ्क,—गैरिकद्रव, स [illegible] अङ्गराग —गजानामङ्गरञ्जनार्थं लेपविशेष, तस्य सङ्ग्रहाय—सञ्चयाय, गिरीन्—पर्वतान् मुष्णन् इव—अपहरन् इव, गैरिकाणीति शेष गजाङ्गरागसम्पादनाय गिरेरपि गैरिकधातोरुद्धारः इति भाव, एतेन तस्य पर्वतादपि दैर्घ्याद्य सूचितम्। सर्वत्र गजानामातिशय्यपीतत्वाय एवमुत्प्रेक्षति ज्ञेयम्।

(२४१) ककुभां—दिशां, दिग्गजाधिकार—दिग्गजाधिकारित्वं, सर्वदिग्गजश्रेष्ठ-त्वमित्यर्थ ऐरावतम्—अभ्रमातङ्गं पूर्वदिग्गजमिति यावत्, अपहरन्निव—मुष्णन् इव, गजवीर्यस्य सम्पदा च ऐरावतमपि अतिक्रामन्निवेत्यर्थः, यद्वा —केवलमयं गजाधिकारित्वम् ऐरावतम् अस्मद्गजेन्द्राधिकारप्रदानेन न्यक्कुर्वन् इव इत्याशय। हरेति।—हरस्य —शिवस्य पदभरेण—चरणभारेण चरणस्थापनप्रसङ्गेनेत्यर्थः, नमित —आवर्जित, भाराक्रान्ततया अधोगत इत्यर्थः य कैलासगिरि,—कैलासपर्वत, तद्वत् गुरुभि,—भारवद्भिः पादन्यासैः,—पदविक्षेप, हरेः —वराहरूपिणो नारायणस्य इति भाव, उर्व्याः —पृथिव्याः, गुरुभारग्रहणगर्वम्—महाभारोद्वहनाहङ्कारं, संहरन्निव—संकोचयन्निव गुरुपादन्यासेन वराहरूपिणो नारायणस्यापि दन्तयो व्यथां जनयन्निवेति भाव। पदभरेण वराहदन्तस्यापि नमनोत्प्रेक्षणादस्य महाभारवत्त्वं सूचितम्। इहोर्व्योनमनेन भगवतः वराहस्यापि दन्ताचलनमनं समुत्प्रेक्षितम्, अपि चोपमेयस्योत्कर्षदर्शनात् व्यतिरेकोऽपि व्यज्यते।

(३४२) गतिवशविलोलस्य च आजानुलम्बस्य बाहुदण्डद्वयस्य विक्षेपै आलानशिलास्तम्भमालामिव उभयतो निखनन्, ईषदुत्तुङ्गलम्बेन अधरबिम्बेन अमृतरसस्वादुना नवपल्लवकोमलेन कवलेन इव श्रीकरेणुका विलोभयन्, (३४३) निजनृपवंशदीर्घं नासावंशं दधान, अतिस्निग्धमधुरधवलविशालतया पीतक्षीरोदेन इव पिबन् ईक्षणयुगलायामेन दिशाम् आयाम, (३४४) मेरुतटादपि विकटविपुलालिक, सततम्

---

(३४२) गतीति।—गतिवशेन—गमनवशेनेत्यर्थ विलोलस्य—चञ्चलस्य। विक्षेपै—सञ्चालनै आलानानि।—आलानानि—गजबन्धनानि गजबन्धनाया इत्यर्थ, ये शिलास्तम्भा —पाषाणस्तूपा तेषा मालामिव—श्रेणिमिव उभयत —उभयो पार्श्वयो निखनन—प्रोथयन पाषाणकाठिन्यसम्बन्धभुजमालीति भाव। ईषदुत्तुङ्गलम्बेन—मनागुन्नतलम्बिना अमृतमिति —अमृतरसवत्—सुधाऽऽस्वाद इव स्वादना—सुरसेन सरसेन लोभनीयेन वा इति भाव नवेति।—नवपल्लववत्—अभिनवोद्गत किसलयवत् कोमलेन—सुकुमारेण मृदुना च अधरबिम्बेन—बिम्बोष्ठेन एतेन अधरस्य आरक्तत्वमपि सूचितम् कवलेनेव—ग्रासेनेव श्रीकरेणुका—लक्ष्मीहस्तिनीं राज्यलक्ष्मी हस्तिनी मति यावत विलोभयन—आकर्षयन।

(३४३) निजेति।—निज —स्वीय नृपवंश —राजकुल तस्य राजवंश सम्भूतत्वात भाव सदृश दीर्घम—आयतम् इत्युपमितसमासाश्रयणात आर्थीय मुपमालङ्कार स्वकीयवंश सुदीर्घ आसीत् इत्यावर्तयितुमिव सुदीर्घा नासिका धृतवा निति भाव न सावंश—नासिकावंशम्। अतीव।—अतिस्निग्धम् अतिकोमल मित्यर्थ मधुर—मनोहर धवल—शुभ्र विशालम्—आयत तस्य भाव तत्ता तया पीतक्षीरोदेन दुग्धसागरपायिना ईक्षणयुगलायामेन—नेत्रयुगलायामेन। आयाम —दैर्घ्य पिबन् इव—ग्रसन्निव आचामन्निव इति भाव।

(३४४) मेरुतटादपि—सुमेरुतटादपि सुमेरोरुन्नत्यादपीत्यर्थ विकटेति।—विकटम्—अत्यन्तं विपुल—विशालम् अलिक—भालदेश ललाटम् इत्यर्थ यस्य तथाभूत ("ललाटमलिकं गोधि" इत्यमर)।

(२४५) अविच्छिन्नच्छत्रच्छायाप्ररूढिभ्रमादिव नितान्तायतनीलकोमलच्छविसुभगेन स्वभावभङ्गुरेण कुन्तलवालवल्लरीवेल्लितविलासिना लुनन्निव लुप्तालोकान् अर्ककरान् वर्वरकेण, (२४६) अरिपक्षपरिचयपरित्यक्तकार्मुककर्माऽपि सकलदिगन्तश्रूयमाणगुरुगुणध्वनिः, आत्मस्थसमस्तमत्तमातङ्गसाधनोऽपि

---

(२४५) अविच्छिन्नेति।—अविच्छिन्ना—विच्छेदरहिता, या छत्रच्छाया—आतपत्रेण सौरतापावरणम् इत्यर्थः, ["विभाषा सेना—" (२।४।२५ पा०) इत्यादिना क्लीबत्वस्य वाचिकत्वात् अत्र तदभावः] तस्याः प्ररूढिः,—आतिशय्यं, मुहूर्तमपि छत्रशून्यतया अनवस्थानमित्यर्थः, तद्भ्रमादिव—तत्सम्बन्धादिवेत्यर्थः, नितान्तेति।—नितान्तम्—अत्यन्तम्, आयता—दीर्घा, नीला—कृष्णा, कोमला—अकर्कशा, स्निग्धा इत्यर्थः, सुखस्पर्शा इति भावः, या छविः,—कान्तिः, तया सुभगः—रम्यः तेन, आतपसम्पर्कजनितरूक्षताऽभावादिति भावः, स्वभावभङ्गुरेण—सहजभङ्गिमता, स्वत एव कुञ्चितेनेत्यर्थः ["भञ्जभासमिदो घुरच्" (३।२।१६१ पा०) इति घुरच्] कुन्तलेति।—कुन्तलाः,—केशाः, लम्बमाना अलिप्तकेशगुच्छा इति भावः वालवल्लर्य इव—नूतनलता इव, ताभिः वेल्लितेन—स्फुरणेन, विलसति—उल्लसति इति तथोक्तेन, वर्वरकेण—केशेन, केशबन्धेन इत्यर्थः ("वर्वरः पामरे केशे चक्रले नीवृदन्तरे" इति मेदिनी) लुप्तालोकान्—लुप्ताः,—विनष्टाः, आलोकाः —प्रकाशाः येषां तान् अर्ककरान्—सूर्यमयूखान्, लुनन्निव—खण्डयन्निव, कुञ्चितगाढकृष्णकेशपाशेन सूर्यकिरणान् भञ्जयन्निवेत्यर्थः।

(२४६) अरीति।—अरिपक्षाः—शत्रुसहायाः परिचयेन—समुन्नामेन, परित्यक्तम्—उत्सृष्टं, कार्मुककर्म—धनुराकर्षणादिकं येन तथाभूतोऽपि, न चासामर्थ्यौदासीन्याद्वा इत्याशयः, सकलेति।—सकलेषु—सर्वेषु, दिगन्तेषु—आशाप्रान्तेषु, श्रूयमाणः —आकर्ण्यमानः गुरुः —महान् गुणानां—मौर्वीणां, शौर्यादीनाञ्च ध्वनिः,—शब्दो यस्य तथाभूतः, अत्र परित्यक्तकार्मुककर्माऽपि श्रूयमाणगुरुगुणध्वनिः इति आपाततो विरोधः, स च शौर्यादिगुणध्वनिश्रवणरूपार्थान्तरपर्यवसानात् इति विरोधाभासोऽलङ्कारः। आत्मस्थेति।—आत्मस्थानि—आयत्तानि, स्वाधिकृतानीति यावत्, समस्ताः,—सर्वे मत्तमातङ्गाः —मदोत्कटगजा एव, साधनानि—सेनाङ्गानि यस्य तथाभूतोऽपि, आत्मस्थानि समस्तमत्तमातङ्गसाधनानि—निखिलमदस्राविगजारोहिसैन्यानि

अस्पृष्टो मदेन, (३४७) भूतिमानपि स्नेहमयः, पार्थिवोऽपि गुणमयः, करिणामिव (३४८) दानवताम् उपरि स्थितः, स्वामितामिव स्पृहणीयां भृत्यतामपि अपरिभूताम् उद्वहन्, (३४९) एकभर्तृभक्तिनिश्चलां कुलाङ्गनामिव अनन्यगम्यां प्रभुप्रसादभूमिम् आरूढः, (३५०) निष्कारणबान्धवो विदग्धानाम्, अभृतभृत्यो भजताम्, अक्रीतदासो विदुषां स्कन्दगुप्तो विवेश राजकुलम्। दूरादेव च

---

यस्य तथाभूतोऽपि दर्पो वा, मदेन—दानवारिणा मद्यपानजनितेन विकारेण च, गर्वेण च वा, अस्पृष्टः,—अनाक्रान्तः, आसव्यसनमातङ्गसाधनोऽपि मदेन अस्पृष्ट इति विरोधः, समाधानन्तु पर्यालोचनीयम्।

(३४७) भूतिमान्—ऐश्वर्यसम्पन्नः भस्मवांश्च स्नेहमयः—प्रेममयः, तैलादिस्नेहमयश्च भस्मवान्, कथं भवति स तैलादिस्नेहमय इति विरोधः। पार्थिवः,—मृत्पिण्डात्मकः, मृन्मय इत्यर्थः, राजा च गुणमयः—तन्तुमयः, शौर्यादिगुणसमन्वितश्च, यो हि मृन्मयो भवति, स कथं तन्तुमयः पटादिरूपः स्यादिति विरोधः।

(३४८) दानवताम्—दानशीलानां, मदस्राविणाञ्च उपरि स्थितः,—शिरोदेशे वर्तमानः, श्रेष्ठ इत्यर्थः। अपरिभूताम्—अनवमतां, भृत्यताम्—भृत्यभावमपि, स्पृहणीयाम्—लोभनीयामित्यर्थं, स्वामितामिव—प्रभुतामिव उद्वहन्—स्वीकुर्वन् भृत्योऽपि प्रभुप्रसादाधिगमात् प्रभाववान् दुःसाध्यविकल्पसाधनेन राजप्रयत्नादिति भावः।

(३४९) एकेति।—एकस्मिन् एव भर्तरि—प्रभौ उपरि च, भक्तिः—अनुरागः, निश्चला—स्थिरा यस्याः ताम्, अनन्यगम्याम्—अन्यदुर्लभां पुरुषान्तरसङ्गमशून्यां च, प्रभुप्रसादभूमिं—राजानुग्रहपात्रतां, पतिवत्नीपक्षे पत्यनुग्रहपात्रतां च, आरूढः—अधिगतः। इह स्वामिप्रसादलाभे कुलाङ्गनासाम्योक्तेः दृढानुरक्तिरुपमालङ्कारः।

(३५०) विदग्धानां—विदुषाम् अतिकठोराभिः कल्पनाकौशलक्रमाभिः आलापैः असाधारणकल्पनया निःस्पृह इत्यनीकृतवान् तथा विदग्धत्वम् इति भावः, निष्कारणबान्धवः—अकृत्रिमसुहृत्। भजताम्—सेवमानानाम् अभृतभृत्यः,—भिन्नः भर्ता इति भृतः,—भृतिभुक् वैतनिक इत्यर्थः ['भृतकं क्वापि निवेशं'] स न भवतीति अभृतः, भृत्यः,—सेवकः, अवैतनिककिङ्कर इत्यर्थः। अक्रीतदासः,—

(३५१) उभयकरकमलावलम्बितं स्पृशन् मौलिना महीतलं नमस्कारम् अकरोत्।

उपविष्टं (३५२) नातिनिकटे तं तदा जगाद देवो हर्षः,—"श्रुतो विस्तर एव अस्य आर्यव्यतिकरस्य अस्मच्चिकीर्षितस्य च; अतः शीघ्रं प्रवेशयन्तु प्रचारनिर्गतानि गजसाधनानि। न चाम्यति अतिसत्वरम् अपि आर्यपरिभवपीडापावकः प्रयाणविलम्बम्" इत्येवम् अभिहितश्च प्रणम्य व्यज्ञापयत्,—(३५३) "कृतम् अवधारयतु स्वामी समादिष्टं किन्तु स्वल्पं

---

प्रेष्य—भृत्य इत्यर्थः, दास,—सेवक, स न भवतीति, [नञ्समासः] अतिमहत्त्वेऽपि सता परिचर्याविधौ निरत इत्यर्थः।

(३५१) उभयेति।—उभाभ्याम्—द्वाभ्याम्, ["उभादुदात्तो नित्यम्" (५।२।४४ पा०) इति सूत्रस्य योगविभागमाश्रित्य, "उभशब्दात् वृत्तिविषये नित्यमयच् स्यात् स्वार्थे" इत्युक्तत्त्वबोधिनीकारैः, एवञ्च समासे उभशब्दस्य उभयरूपत्वे सिद्धमितीदं सूक्तमोपयोगिम्] करकमलाभ्याम्—पाणिपद्माभ्याम्, अवलम्बितं—धृतं, महीतलं—भूतलम्। मौलिना—शिरसा।

(३५२) नातिनिकटे—अनतिदूरे इत्यर्थः। आर्यव्यतिकरस्य—आर्यव्यसनस्य, तस्य गुप्तहत्याया इत्यर्थः ("अथ व्यतिकरः पुंसि व्यसन-व्यतिषङ्गयोः" इति मेदिनी) अस्मच्चिकीर्षितस्य—अस्माभिः कर्तुमिष्टस्य च, विस्तरः, वाक्प्रपञ्चः ["स च शब्दस्य विस्तरः" इत्यमरोक्तः "प्रथने वावशब्दे" (३।३।३३ पा०) इत्यप्]। प्रचारनिर्गतानि—प्रचारात्—सञ्चरणात्, ग्रामनिगमादौ भक्ष्यसङ्ग्रहार्थे, वन्यकरिग्रहणार्थं वा इति भावः, निर्गतानि—निष्क्रान्तानि गजसाधनानि—करिसैन्यानि प्रवेशयन्तु—आनीयन्तां, राजधानीमिति शेषः, युद्धयात्रार्थमिति भावः, यद्वा—प्रवेशयन्तु—रणभूमौ प्रेष्यन्तामिति भावः। आर्येति।—आर्यस्य—ज्येष्ठस्य परिभवेन—तिरस्कारेण शत्रुभ्यो हननेनेत्यर्थः, या पीडा—व्यथा, सैव पावकः,—अग्निः, प्रयाणविलम्बम्—युद्धयात्राकालातिक्रमणं, न चाम्यति—न सहते ["शमामष्टानां दीर्घः श्यनि" (७।३।७४ पा०) इति दीर्घः]।

(३५३) स्वामी—प्रभुः, भवानिति शेषः, समादिष्टम्—आज्ञप्तं, भवता यत् इति शेषः, तत्, कृतं—सम्पादितमेव, अस्माभिरिति शेषः, इति अवधारयतु निश्चि-

विस्मयमस्ति भर्त्तृभक्तेः; तत् आकर्णयतु देवः,—देवेन हि पुष्यभूतिवंशसम्भूतस्य अजातस्य सहजस्य तेजसः, दिक्करिकर-प्रलम्बस्य बाहुयुगलस्य, असाधारणस्य च सोदरस्नेहस्य सर्वं सदृशम् उपक्रान्तम्। काकोदराभिधानाः कृपणाः कृमयोऽपि न मृष्यन्ति विकारं, किमुत भवादृशाः तेजसां राशयः। केवलं (३५४) देवराज्यवर्द्धनोदन्तेन कियदपि दृष्टमेव देवेन दुर्जनदौरात्म्यम्। ईदृशाः खलु लोकस्वभावाः, प्रतिग्रामं प्रति-नगरं प्रतिदेशं प्रतिद्वीपं प्रतिदिशञ्च भिन्ना वेशाश्च आकाराश्च

---

नीत्, भवदाज्ञा पयरिहार्येव, तैमेदानीमक्रममपि क्रममेव तदिथमवधारयतु स्वामी इति तात्पर्यम्। भर्त्तृभक्ते,—स्वाम्यनुरागाद्धेतो। अजातस्य—जातो भव जातं, तत्र भवनीति तयोक्तस्य सर्वाथजाथतिग्राहिण इति भाव। सहजस्य—स्वाभाविकस्य, प्रकृतिसिद्धस्य इत्यथ। दिग्मिति।—दिक्करिणः—दिग्गजानां, करवत्—शुण्डादण्डवत्, प्रलम्बस्य—दीर्घस्येत्यथ, आजानुलम्बितस्येति भाव। सदृशम्—अनुरूपम्, उपक्रान्तम्—आरब्धम्। काकोदराभिधाना,—भुजङ्गनामान ("·भुजङ्गोऽहिर्भुजङ्गम.। · काकोदर फणी" इत्यमर) कृपणा,—दुर्बला, कृमयोऽपि,—क्रमिसदृशा कीट विशेषा अपि, विकार—परपरिभवं, न मृष्यन्ति—न क्षाम्यन्ति, न सहन्ते इत्यथ, अत्र भुजङ्गानामपि दुर्बलकीटविशेषत्वाभिधानेन अस्य महातेजस्वित्वं प्रकटितम्। किमुत—किं पुन, भवादृशाना तादृशावकाशाश्च ने वक्तव्यं एव नास्तीत्याशय।

(३५४) देवेति।—देवस्य—राज्ञ. राज्यवर्द्धनस्य उदन्तेन—उत—उद्गत, अन्त,—निर्णयो यस्मात् तादृशेन, वृत्तान्तेन इत्यर्थं, ("वार्त्ता प्रवृत्तिर्वृत्तान्त उदन्त स्यात्" इत्यमर) देवेन—राज्ञा, भवता इति भाव, दुर्जनदौरात्म्यम्—दुर्जनानां—खलानां, दौरात्म्यं—दुष्टता, कियदपि—अल्पमात्रमित्यर्थं, अपिरत्र सम्भाव्यार्थक इत्यवधेयम्, ("अपि पदार्थसम्भाव्यान्वसर्गगर्हासमुच्चये" इत्युक्ते) दृष्ट—ज्ञातमित्यर्थं। लोकस्वभावा,—जनाना प्रकृतय, खलु—निश्चये, ईदृशा—एवंविधा, दौर्जन्य-प्रधाना इति भाव। प्रतिग्राम—"विप्राश्च विप्रभृत्याश्च यत्र चैव वसन्ति हि। स तु ग्राम इति प्रोक्त शूद्राणां वास एव वा॥" इत्युक्तलक्षण विप्रादीनां वासस्थानं ग्रामः। ग्रामे ग्रामे इत्यर्थं, ["अव्ययम्—" (२।१।६ पा०) इत्यादिना वीप्सायां

आहाराश्च व्यवहाराश्च जनपदानाम्। तत् इयम् (३५५) आत्मदेशाचारोचिता स्वभावसरलहृदयजा त्वत्त्यतां सर्वविश्वासिता। (३५६) प्रमाददोषाभिपन्नेषु श्रुतबहुवार्त्त एव प्रतिदिनं देवः। (३५७) यथा,—नागकुलजन्मनः सारिकाश्रावितमन्त्रस्य आसीत् नाशो नागसेनस्य पद्मावत्याम्। (३५८) शुकश्रुतरहस्यस्य च श्वो: पयोयत श्रुतवर्मणः श्रावस्त्याम्।

---

पाधिकोऽव्ययीभावः ]। एव परत्रापि व्याख्येयम्। भिन्ना —पृथग्विधाः। वेशाः,—परिच्छदाः। व्यवहाराः,—आचरणानि इत्यर्थः। जनपदानां—जनानाम्, ("अथ जनपदो जानपदोऽपि जन देशयो" इति मेदिनी)।

(३५५) आत्मे त।—आत्मन,—स्वस्य, [ "क्षतिभ्यां मनिममनियौ" (उ० ४ पा० १५२ सू०) इत्यत्र मनिण् ] च देशाचार,—देशप्रचलितरीतिः सम्यग्विश्वासिताद्य इति यावत् तस्य उचिता—अनुरूपा स्वभावेति।—स्वभावेन—प्रकृत्या, सरलम्—अकुटिलम् उदारमित्यर्थः, यत् हृदयम्—मनः करणं तस्मात् जायते—उद्भवति इति तथाभूता प्रकृतिसरलोदारचित्तप्रभूता इत्यर्थः, सर्वविश्वासिता—सर्वेषु जनेषु विश्वासस्थापनम्। यद्यपि पवित्रोदाराशया श्रीकण्ठजानपदवासिन्या, तथापि अन्ये मानवाः प्रवञ्चनपरा नाधुना अपि तु मर्हन्ति इति मद्भावः।

(३५६) प्रमादेति।—प्रमाददोषेण—अनवधानताऽपराधेन अभिपन्ना,—पराभूताः तेषु श्रुतेति।—श्रुता,—आकर्णिता बह्वी,—अनेका, वार्ता,—वृत्तान्ता येन तथाभूतः।

(३५७) प्रतिज्ञामनिश्चिविधिपश्चात् निदर्शयितुमाह —यथेति। नागकुलजन्मन,—नाग,—तन्नामा कश्चिद्राजा तस्य कुले—वंशे, जन्म—उत्पत्तिः यस्य तथाविधस्य सारिकेति।—सारिका—पक्षिविशेष, तया श्रावित,—तन्मुखेन आकर्णितं, प्रकाशित इत्यर्थः, मन्त्र,—गुप्तमन्त्रः यस्य तथाभूतस्य, नागसेनस्य—तदाख्यस्य नृपस्य, पद्मावत्याम्—तदाख्यायां नगर्यामित्यर्थः, नाशः,—निधनम्। पुरा पद्मावत्यां नागसेनो नाम राजा मन्त्रिणम् अद्भुताचरणदोषेण ताडयित्वा सारिकासमक्ष मन्त्रणामकरोत्, स मन्त्री सारिकामुखात् तद्विज्ञाय विश्वासघातकतापूर्वकं तं नागसेनं हतवानिति वार्ता।

(३५८) श्रावस्त्याम्—इत्याख्यया नगर्यामित्यर्थः, [ "श्रावन्त्याम्" इत्यत्र "श्रावस्त्याम्" इति पाठान्तरम् ] शुकेति।—शुकात्—कीरात् श्रुतम्—आकर्णितं, रहस्यम्—गुप्तमन्त्रः यस्य तथाभूतस्य, श्रुतवर्मणः,—तदाख्यस्य नृपते,

(३५९) स्वप्नायमानस्य च मन्त्रभेदोऽभूत् मृत्यवे मृत्तिकावत्यां स्वर्णचूडस्य। (३६०) चूडामणिलग्नलेखप्रतिबिम्बवाचिता- क्षरा च चारुचामीकरचामरग्राहिणी यमतां ययौ यवनेश्वरस्य। (३६१) लोभबहुलञ्च बहुलनिशि निधानम् उत्खनन्तम्

---

श्री,—लक्ष्मीः, यवीयसः—अनुजस्य, शुकमुखेन मन्त्रभेदात् दुर्व्यापाद्य। अत्र सर्वे- श्वादिवाक्यस्थपदजातेषु प्रकारस्याप्रकटत्वात् तथ्यतुल्यत्व। पुरा श्रावस्तीपतौ श्रुत- वर्माऽपि पूर्ववत् शुकमुखात् विभिन्नमन्त्रो राज्यभ्रष्टोऽभूदिति वार्ता। एतेन आख्यान- द्वयेन विजिगीषुणा यत्नात् गूढमन्त्रेण भाव्यमित्युक्तम्।

(३५९) स्वप्नायमानस्य—स्वप्न,—स्वप्नवान्, स इव आचरतः, निद्रितावस्थया गुप्त- मन्त्रं प्रकाशयत इत्यर्थः, उदयदीयत्वात् स्वप्नायमानस्य इति भावः, स्वर्णचूडस्य— तदाख्यस्य राज्ञः, मृत्तिकावत्याम्—तदाख्यायां नगर्याम्, मन्त्रभेदः,—रहस्यप्रकाशः, मृत्यवे—निधनाय, निधनकारणमित्यर्थः, अभूत्। पुरा मृत्तिकावत्यां नगर्यां स्वर्णचूडो नाम राजा कश्चित् विश्वासपूर्वकं मित्रेण मन्त्रितवान्, तदेव तस्य निद्रितावस्थायां मुखेन। तत् श्रवणम् आकर्ण्य केनचित् एतच्छिरोरक्षकेण भूत्वा असौ निधनं व्यापादित इति वार्ता। अनेन अज्ञातकुलशीलो भृत्यो न नियोज्य इत्युक्तम्।

(३६०) चूडामणीति।—चूडामणिः,—शिरोरत्नं, तत्र लग्न—संलग्नः, यः लेखप्रतिबिम्ब—लिपिप्रतिच्छाया, तेन वाचितानि—पठितानि इत्यर्थः, अक्षराणि—वर्णाः, लेखस्थानि इति शेषः यया तथाभूता, चूडामणिप्रतिफलितलेखाक्षराणि पठन्तीति भावः, चारुचामीकरचामरग्राहिणी—मनोहरकाञ्चनदण्डचामरव्यजनहस्तेत्यर्थः, तादृशवेशेन चामरैः वीजयन्तीति भावः, यवनेश्वरस्य—यवनाधिपस्य, यमता—मृत्युता, ययौ—प्राप। पुरा यवनेश्वरं केनचित् मन्त्रिणा व्यापादयितुमिष्ट इति स्वसुहृदा तद्वृत्तान्तं लेखेन बोधितः, लेखपृष्ठे च तेन लिखितं, स्वयं वाचयितव्यमिति। तथा लेखं स्वयं वाचयतः यवनेश्वरस्य चूडामणिप्रतिबिम्बितानि अक्षराणि अनुप्रयुक्ता काचित् चामरग्राहिणी निगूढं वाच- यित्वा स्वस्वामिने सर्वं व्यज्ञापयत्, ततः तेनोपजप्ता सा निभृतं तं जघान इति वार्ता। अनेन भृत्योऽपि मन्त्रभेदोपाय परिहर्त्तव्य इति सूचितम्।

(३६१) लोभेति।—लोभबहुलम्—अतिलुब्धं, बहुलनिशि—कृष्णपक्ष-

उत्खातखड्गप्रमाथिनी ममन्थ माथुरं बृहद्रथं विदूरथवरूथिनी। (३६२) नागवनविहारशीलञ्च मायामातङ्गाङ्गात् निर्गता महासेनसैनिका वत्सपतिं न्ययंसिषुः। (३६३) अतिदयितलास्यस्य च शैलूषमध्यमध्यास्य मूर्धानम् असिलतया मृणालमिव अलुनात् अग्निमित्रात्मजस्य सुमित्रस्य मित्रदेवः।

रजन्यां निशायां—भूगर्भस्थित रत्नम्, उत्खनन्—उद्धरन्, माथुरं—मथुराधिपं, बृहद्रथं—तदाख्य राजानं, विदूरथवरूथिनी—विदूरथस्य—तदाख्यस्य भूपवर्गीयराजस्य, वरूथिनी—सेना ("ध्वजिनी वाहिनी सेना । वरूथिनी बलं सैन्यम् " इत्यमरः) उत्खातेति।—उत्खातेन—उत्पाटितेन कोषात् बहिष्कृतेन इत्यर्थः खड्गेन—असिना, प्रमथ्नाति—ताडयतीति तथाभूता सती, ममन्थ—जघान। विदूरथमन्त्रितेन गूढप्रयुक्त-राजन्यवृन्देन प्रलोभितो बृहद्रथो नाम राजा कस्यचन निशायां विदूरथविवादविषयीभूत-खनितो रत्नजातमुद्धर्तुं प्रवृत्त तत्सैनिकैर्निहत इति वार्ता। एतेन सुविमृश्य कर्त्तव्यमित्युक्तम्, "सहसा विदधीत न क्रियाम्" इत्याद्युक्ते।

(३६२) नागेति।—नागानां—गजानां, वनं—काननं, [illegible] इत्यर्थः, तत्र विहारे—भ्रमणे शीलं—स्वभावः यस्य तथाभूतं वत्सपतिं—वत्सराजम् उदयनमिति यावत् महासेनस्य—महासेनाख्यस्य वासवदत्तापितुः उज्जयिनीराजस्य, सैनिकाः,—सैन्यानि मायामातङ्गाङ्गात्—मायया—कपटेन रचितः मातङ्गः—हस्ती तस्याङ्गम्—अवयवः तस्मात्, निर्गताः—निःसृताः सन्तः, न्ययंसिषुः,—बबन्धुः। पुरा महासेनो नाम उज्जयिनीपतिः स्वां दुहितरं वासवदत्ताम् उदयनाय दित्सुः अन्तर्निगूढसैनिकं माया-मातङ्गं वने मुक्त्वा [illegible] नागवनविहाराय च प्रलोभितवान्। सोऽपि गज-व्यसनितया अविचार्यैव कतिपयपरिजनपरिवृतः वीणां वादयन् तत्र गतः। ततश्च सिद्धाभिप्रायः महासेनः मायामातङ्गशरीरनिर्गतैः स्वसैनिकैः तं नियम्य स्वगृहमानीय कन्यां ददौ इति वार्ता। एतेन [illegible] न विश्वस्तव्यमित्युक्तम्।

(३६३) अतीति।—अतिदयितम्—अतिप्रियं, लास्यं—नृत्यं यस्य तथोक्तस्य, अत्यर्थं नृत्यप्रियस्य इत्यर्थः ("लास्यं नृत्यञ्च नर्त्तने" इत्यमरः)। शैलूषमध्यं—नटमध्यं, ("शैलूषो नटबिल्वयोः" इति मेदिनी) अध्यास्य—अधिष्ठाय, नटच्छद्मना इति भावः, ["अधिशीङ्स्थासां कर्म" (१।४।४६ पा०) इत्याधारस्य कर्मसंज्ञा]। अलुनात्—चिच्छेद। मित्रदेवः,—तन्नामा कश्चित् सुमित्ररिपुः। पुरा [illegible] नाम राजा नृत्यव्यसनी नटजने विश्वस्य मित्रदेवेन नटरूपिणा व्यापादितः, तत्र च दीर्घदर्श-

(३६४) प्रियतन्त्रीवाद्यस्य अलाबूवीणाभ्यन्तरशुषिरनिहित-निशिततरवारयो गान्धर्वच्छद्मच्छन्नाः विच्छिदुरश्मकेश्वरस्य शरभस्य शिरो रिपुपुरुषाः। (३६५) प्रज्ञादुर्बलश्च बलदर्शनव्यपदेशदर्शिताशेषसैन्यः सेनानीरनार्यो मौर्यं बृहद्रथं पिपेष पुष्यमित्रः स्वामिनम्। (३६६) आश्चर्यकुतूहली च चण्डीपतिः दण्डोपनतयवननिर्मितेन नभस्तलयायिना यन्त्रयानेन अनीयत

---

प्रयोगसिद्धिहितकर्षेण बभूवेति कथा। अनेन च धनलिप्सा प्राकृतजनैर्विश्वस्तो न सर्वथा सेवितव्या इति प्रकटितम्।

(३६४) अलाबुवीणेति।—अलाबु—तुम्बी तद्रचिता वीणा—विपञ्ची तस्या अभ्यन्तरशुषिरे—मध्यरन्ध्रे निहिताः—स्थापिताः निशिताः—तीक्ष्णाः तरवारयः—असयः यैस्तथोक्ताः गान्धर्वच्छद्मच्छन्नाः—गान्धर्वं—सङ्गीतं तस्य छद्म—मिथ्या, तदेव छन्न—कपटवेशो तथाभूताः वयमस्मिन् काले गान्धर्वं शिक्षितुमागता इति छलेन समुपस्थिता इति भावः रिपुपुरुषाः—शत्रुप्रयुक्ताः पुरुषाः। प्रियेति।—प्रिय—दयितं तन्त्रीवाद्य—वीणावाद्यं यस्य तथाभूतस्य तन्त्रीवाद्यप्रियस्येत्यर्थः अश्मकेश्वरस्य—अश्मकाख्यजनपदाधिपस्य शरभस्य—तदाख्यस्य नृपतेः शिरः मूर्धानं विच्छिदुः—अकृन्तन्। शरभो नाम राजा वाद्यविद्याविशारदानाम् अवारितद्वारः प्रवेशमददात्। तेनासौ छद्मरूपधारकैः गूढायुधैः शत्रुपुरुषैर्निहत इति वार्ता। अनेन व्यसनासक्तिमपि सर्वथा परिहर्तव्या इति पुष्पोऽकरैः दृढीकृता।

(३६५) प्रज्ञेति।—बलानां—सैन्यानां दर्शनम्—अवलोकनमेव, व्यपदेशः—छलं तेन दर्शितानि—अवलोकितानि अशेषाणि—अतिबहूनि इत्यर्थः सैन्यानि—बलानि, स्वाधिकृतानि इति भावः येन तथाभूतः अनार्यः—अनार्यः सेनानीः—सेनापतिः, प्रज्ञादुर्बलं—बुद्धिबलहीनं मौर्यं—मौर्यवंशोद्भवं स्वामिनं प्रभुं बृहद्रथं पिपेष—अघातयत्। एतेन केऽपि न सर्वाधिकारिणः कर्तव्या इति व्यक्तीकृतम्।

(३६६) आश्चर्येति।—आश्चर्य—विस्मयकारकं यत् तद्दर्शने इत्यर्थः कुतूहली—कौतुकवान् चण्डीपतिः—चण्डीनाम नगरी तस्याः पतिः—प्रभुः दण्डेति। दण्डेन—सङ्ग्रामेण, उपनताः—निर्जिता इति यावत् ये यवनाः—तद्देशवासिनो म्लेच्छविशेषा इत्यर्थः तैः निर्मितं—रचितं तेन नभस्तलयायिना—आकाशमार्गेण गमनशीलेन अमरपथगामिना इत्यर्थः, यन्त्रयानेन—विमानविशेषेण, यन्त्रचालितरथेन

क्वापि। (२६७) काकवर्णः शैशुनागिश्च नगरोपकण्ठे कण्ठे निचकृते निस्त्रिंशेन। अतिस्त्रीसङ्गरतम् अनङ्गपरवशं (२६८) शुङ्गम् अमात्यो वसुदेवो देवभूतिदासीदुहित्रा देवीव्यञ्जनया वीतजीवितम् अकारयत्। (२६९) असुरविवरव्यसनिनं चापजह्नुः अपारमितरमणीमणिनूपुरझणझणाह्लादरम्यया मागधं गोधनगिरिसुरुङ्गया स्वविषयं मेकलाधिपमन्त्रिणः।

---

इत्यर्थ, क्वापि—कुत्रापि, अनिर्दिष्टदेशमिति यावत्, अनीयत—प्राप्यत अदर्शनं गमित इत्यर्थः। पुरा चकोरपति यवनान् विजित्य ते उपायनीकृतेन स्वर्णरचितेन यन्त्रयानेन परदारान् गच्छेति प्रलोभ्य स्वदेशं नीत्वा व्यापादित इति वार्त्ता। एतेन प्रभुषु तत्प्रदत्तोपायनेषु च न विश्वासः विधेय इति प्रकटीकृतम्।

(२६७) शैशुनागिः,—शिशुनागाख्यजनपदाधिपतिः, काकवर्णः,—तन्नामा कश्चिद्राजा, नगरोपकण्ठे—पुरीसमीपे, ("समीपे निकटासन्न। उपकण्ठान्तिकाभ्यर्णाः" इत्यमरः) निस्त्रिंशेन—खड्गेन, कण्ठे निचकृते—निकृत्त, चिच्छिदे इत्यर्थ, केनचित् प्रभुणेति शेषः।

(२६८) देवीव्यञ्जनया—देवी—राज्ञी एव व्यञ्जनं—रूपं यस्याः तथाभूतया, महिषीवेशधारिण्येत्यर्थः, देवभूतिदासीदुहित्रा—देवभूतेः,—तन्नामप्रसिद्धस्य कस्यचित्, दासी—काचित् परिचारिका, तस्याः दुहित्रा—तनयया, [प्रयोज्यकर्तरि तृतीया करोतेः णिचि प्रयोज्यकर्तुः कर्मत्वस्य पाक्षिकत्वादिति ज्ञेयम्] शुङ्ग—तदाख्य नृप, वीतजीवितम्—अपगतजीवनं विनष्टमित्यर्थः। अनेन वनितादिविषयेषु अत्यासक्तिः दूरतः परिहार्य्या इति बोधितम्।

(२६९) मेकलाधिपमन्त्रिणः—मेकलाधिपस्य—तदाख्यपर्वतवेष्टितदेशस्वामिनः, "मेकलो विन्ध्याद्रि" इति कश्चित्, मन्त्रिणः,—सचिवाः अपरिमितेति।—अपरिमितानां—बह्वीनां, रमणीनां—नारीणां, मणिनूपुराणां—रत्नमञ्जीराणां, झणझणाह्लादः,—झणत्कार-शब्दः, तेन रम्या—मनोज्ञा तया, श्रवणसन्तर्पणशिञ्जितसुभगयेत्यर्थः, गोधनगिरिसुरुङ्गया—गोधनाख्यपर्वतान्तःकृतविवरवर्त्मना, "गोधनगिरिः सूर्याख्यः पर्वतः" इति कश्चित्, असुरविवरव्यसनिनम्—असुराणां—दानवानां, ["अचिहरन्" (उ० १ पा० ४३ सू०) इति उरन्] विवरम्—आवासरन्ध्रं, पातालम् इत्यर्थ, तत्र व्यसनी—कुतूहलीत्यर्थ त, पातालदर्शनाय प्रलोभितमित्यर्थः, मागधं—मगधराजं, स्वविषयं—स्वजनः

राजयक्ष्माणम् अजनयत्। (३७२) स्त्रीविश्वासिनश्च महादेवीगृहगूढभित्तिभाक् भ्राता भद्रसेनस्य अभवत् मृत्यवे कालिङ्गस्य वीरसेनः। (३७३) मातृशयनीयतूलिकातलनिषण्णश्च तनयोऽन्य तनयम् अभिषेक्तुकामस्य दध्रस्य करूषाधिपतेः अभवत् मृत्यवे। (३७४) उत्सारकरुचिश्च रहसि ससचिवमश्व दूरीचकार चकोरनाथ शूद्रकदूत चन्द्रकेतु जीवितात्।

---

इति यथ तथापत —सदाक्षम राजपुत्रस्य राजयक्ष्माणम्—क्षयरोग व्याधम्, अजनयत् उदपादयत् कुभवन पाश्रजिता इति भाव, एतेन चाणक्यात्मकौषध न मात्यमित्युक्तम्।

(३७२) स्त्रीविश्वासिन —नारीषु विश्वसं कुर्वत कालिङ्गस्य कालिङ्गदेशाधिपस्य भद्रसेनस्य—तन्नाम्नस्य भ्राता—अनुज इत्यर्थ वीरसेनः महादेवीत।—महादेव्याः —राजमहिष्याः इत्यर्थ पूर्वमुपजनितया इति भाव गृह—कक्षमध्य इत्यथ गूढ गुप्तः यथा तथा भित्ति—कुड्य भजते—आश्रयते इति तथाभूत सन् मृत्यवे—तस्य मृत्यवे निधनायेत्यर्थ [“क्रियार्थोपपदस्य—” (२।३।१४ पा०) इत्यादिना चतुर्थी] अभवत् ज्यायांसं भ्रातरं निधनमकरोदिति भाव। एतेन स्त्रीष्वपि विश्वासः नैव कार्य्य इति व्यञ्जितम्

(३७३) मात्रेति —मातुः जनन्याः शयनीयतूलिका—मृदुशयनीय कायां गद्दी इत बहुमृदुतरा प्रसिद्धा तस्याः तल—निम्नदेशं निषण्ण —अवस्थित तनय —पुत्र कान्तम् इति भाव अन्यतनयम्—अपरपुत्रं ज्येष्ठमिति भाव अभिषेक्तुकामस्य —राज्ये अभिषेक्तुकामस्य दध्रस्य—दध्राख्यस्य करूषाधिपतेः —करूषजनपदाधिपस्य मृत्यवे—मरणाय अभवत् अजायत निधनमकरोदित्यर्थ पितृहत्यामकरोत् इति भाव एतेन राज्यलोभात् पुत्रोऽपि स्वजनकं हन्तीत्यतः पुत्रादपि नैव विश्वसनीयं इति प्रकटीकृतम्

(३७४) उत्सारकरुचिरिति—उत्सारक—दूरीकरणे रुचि —अभिलाषी यस्य तथाभूत शूद्रक नृप चकोराधिपतेः समीपे ये उत्सारक द्वारपाल तान् प्रभुद्वारतो जनान् दूरीकरोति इति व चन्द्रकेतुः भवान् दृश्यतां दृष्टिः रुच —अति यस्य तथाविध समीपे दूतं चन्द्रकेतुं द्वारपालवेशं द्वारं नयन्ते वा,

( ३७५ ) मृगयाऽऽसक्तम्य च मथ्नतो गण्डकान् उद्दण्डनड्वलनल-वननिलीनाश्च चम्पाधिपचमूचरभटाः चामुण्डीपतेः आचेमुः प्राणान् पुष्करस्य। ( ३७६ ) वन्दिरागपरश्च परप्रयुक्ता जय-शब्दमुखरमुखा मद्रा मौखरिं मूर्खं चत्रवर्माणम् उदखनन्। ( ३७७ ) अरिपुरे च परकलत्रकामुकं कामिनीवेशगुप्तश्च

---

ससचिवं—सचिवसहितं, चकोरनाथं—चकोराख्यजनपदाधिपं चन्द्रकेतुं तदाख्यं, शूद्रकदूतः—तदाख्यनृपते वार्तावह छिद्रितदृतान्त इति भावः, रहसि—विजने, जीविताद—प्राणेभ्यः, दूरीचकार—अपसारयामास, निजघान इत्यर्थः। एतेन मन्त्री नैव प्रकाशनीय इति सूचितम्।

( ३७५ ) उद्दण्डेति।—उद्दण्डानि—उन्नतनालानि, नड्वलेषु—नडभूयिष्ठदेशेषु, यानि नलवनानि—नलाख्यतृणवनानि इत्यर्थः [ "नडप्रायो नड्वलः नड्वल इत्यपि" इत्यमरः। "नडशादाड्ड्वलच्" ( ४।२।८८ पा० ) इति सूत्रञ्च ] तेषु निलीनाः,—सुगूढं स्थिताः चम्पेति।—चम्पाधिपस्य—तदाख्यनगरीपतेः, चमूषु—सेनासु, चरन्ति—भ्रमन्ति, तिष्ठन्तीति यावत् तथोक्ताः, भटाः—वीराः, चम्पाधिपसैनिका इत्यर्थः, मृगयाऽऽसक्तस्य—आखेटव्यसनिनः गण्डकान्—"गण्डार" इति वङ्गभाषया प्रसिद्धान् खड्गिनः, ( "गण्डके खड्गखड्गिनौ" इत्यमरः ) मथ्नतः—व्यापादयतः इत्यर्थः, चामुण्डीपतेः,—चामुण्डीति म नगरी, तस्याः पातः,—ईश्वरः तस्य पुष्करस्य—तदाख्यस्य राज्ञः, प्राणान्—जीवनमित्यर्थः आचेमुः,—भक्षयामासुः, तं निजघ्नुरित्यर्थः। एतेन मृगयायामपि अत्यासक्तिः परिहर्तव्या इति प्रदर्शितम्। चामुण्डीपतेः चानामसहृदा-रूप्या इत्यनुप्रासोऽलङ्कार इति ज्ञेयम्।

(३७६) परप्रयुक्ताः,—शत्रुप्रहिताः, जयेति।—जयशब्देन—विजयतां विजयताम् इत्याकारध्वनिना, मुखराणि—शब्दायमानानि, मुखानि—वदनानि येषां तथाभूताः मद्राः,—तदाख्याः क्षत्रियाः, वैतालिकच्छद्मानः जयशब्दमुखरवदनाः इति भावः, [ "मद्रा" इत्यत्र "सद्रा" इति पाठान्तरम् अयौक्तिकं मकारघटितायां मुकारस्य विजातीयतया इत्यनुप्रासानुकूलत्वात् इति सङ्क्षेपः ] वन्दीति।—वन्दिनः —स्तुतिपाठकाः, वैतालिकाः इति यावत् तेषु रागः —अनुरागः प्रीतिरिति यावत्, [illegible] एव परः,—प्रधानं यस्य तथाविधं तदासक्तमित्यर्थः मौखरं—मुखरवंशसम्भूतं, मूर्खं—निर्बोधं, चत्रवर्माणं—तदाख्यं राजानम्, उदखनन्—उदपाटयन् निजघ्नुरित्यर्थः। एतेनापि आसक्तिः सर्वैव परिहर्तव्या इति प्रकटीकृतम्।

चन्द्रगुप्तः शकपतिम् अशातयदिति। (३७८) प्रमत्तानां प्रमदाकृताः प्रमादाः श्रुतिविषयम् आगता एव देवस्य। यथा —(३७९) मधुमोदितं मधुरकलिप्तैः लाजैः सुप्रभा युवराज्यार्थं महासेनं काशिराजं जघान। (३८०) व्याजजनितकन्दर्पदर्पा च दर्पणेन क्षुरधारापर्यन्तेन अयोध्याधिपतिं परन्तपं रत्नवती

---

(३७७) चन्द्रगुप्त,कामिनीति।—कामिनीवेशेन—स्त्रीपरिच्छदं गृहीत्वेत्यर्थ,गुप्त —गोपायितस्वरूप, छद्मचारी सन्नित्यर्थ, अरिपुरे—शत्रुनगरे, परकलत्रकामुकं—परस्त्रीसमासक्तं,शकपतिं—शकाख्यम्लेच्छविशेषराजम्, अशातयत्—अवधीत्। चन्द्रगुप्तभ्रातृवधूं ध्रुवदेवीं कामयमानं शकाधिपतिं ध्रुवदेवीनिभेन चन्द्रगुप्तेन गूढं व्यापादित इति वार्ता। एतेन कोऽपि परकलत्रं नैव द्रष्टव्य,विशेषतो लोकशासकराजैः इति व्यक्तीकृतम्।

(३७८) प्रमत्तानां—प्रमादशालिनां, प्रमदाकृता,—प्रमदाभि,—कामिनीभि, कृता —सम्पादिता इत्यर्थ, प्रमादा,—अनवधानतानिबन्धना विपद इत्यर्थ, देवस्य —भवत इति भाव, श्रुतिविषयं—कर्णपथम्, आगता,—प्राप्ता, भवता श्रुता इत्यर्थं, तथाऽपि कार्यान्तरव्यासक्तचित्ततया ते विस्मृतिश्चेत् स्यादिति मत्वा अनुजीविभिरवश्य-कर्त्तव्यतया एवं कथ्यन्ते, न त्वश्रुतपूर्व्वाश्च ते विज्ञाप्यन्ते इत्याशय। एतेन प्रभो: सन्ततम् आपत्कालावस्थापनमेवाधिकारिणां प्रभुपरायणताया परिचायकम् इत्यावेदितम्।

(३७९) सुप्रभा—तन्नामप्रसिद्धा समहिषी युवराज्यार्थे—तनय राज्ये अभिषेक्तु-मित्यर्थं, मधुमोदितं—मधुना—मद्येन, मोदितम्—उल्लासितं, अगणितचित्तविकारमिति यावत, महासेनं—तन्नामानं, काशिराजं—वाराणसीपतिं मधुरकलिप्तैः —मधुरकेण —मधुरेणैव मधुरकेण तेन, विषविशेषेण इत्यर्थं, ("मधुरा शतपुष्पायां । क्लीबे विषे यष्टि रसे " इति मेदिनी) लिप्तैः,—दिग्धैः, लाजैः —भृष्टधान्यैः, जघान—निहतवती। ("लाजैर्नूपुरैरित्यर्थं, तथा च —विषप्रदिग्धेन च नूपुरेण देवी विरक्ता किल काशिराजम्' इति मनुटीकायां कुल्लूकभट्टधृतवचनम्" इति केचित्)।

(३८०) व्याजेति।—व्याजेन—छलेन जनित,—उत्पादित, कन्दर्पस्य—कामस्य दर्प,—आधिक्यातिशय इत्यर्थं यया तथाविधा, कल्पितस्वकामभावप्रदर्शनेन आश्रयस्य काममुद्दीपयन्तीति भाव, रत्नवती—तन्नाम काचित् कामिनी, क्षुरेति।—क्षुरधारा—क्षुरस्येव—स्वनामप्रसिद्धास्त्रविशेषस्येव, धारा—तीक्ष्णता इत्यर्थ पर्यन्ते—प्रान्तदेशे यस्य तादृशेन, क्षुरवन्निशितेनेत्यर्थं, दर्पणेन—आदर्शेन अयोध्याधिपतिम्—

जारूथ्यम्; (३८१) विषचूर्णचुम्बितमकरन्देन च कर्णेन्दीवरेण देवकी देवरानुरक्ता देवसेनं सौह्मम्; (३८२) योगपरागविरसवर्षिणा च मणिनूपुरेण वल्लभा सपत्नीरूपा वैरन्त्यं रन्तिदेवम्; (३८३) वेणीनिगूढेन च शस्त्रेण विन्दुमती वृष्णिं विदूरथम्; (३८४) रसदिग्धमध्येन च मेखलामणिना हंसवती सौवीरं वीरसेनम्;

---

अर्थाध्याहारः, परन्तप—शत्रुतापिन ["द्विषत्परयोस्तापेः" (३।२।३९ पा०) इति खच्, "खचि ह्रस्वः" (६।४।९४ पा०) इत्युपधाया ह्रस्वः] जारूथ्य—तदाख्य नृप, अघानीति पूर्वेणान्वयः। एवमुत्तरत्र।

(३८१) देवरानुरक्ता—देवरे—पत्युः कनीयसि भ्रातरि, अनुरक्ता—आसक्ता, विषचूर्णेन—गरलचूर्णेन चुम्बित—स्पृष्ट, मकरन्दः—मधु यस्य तादृशेन, कर्णेन्दीवरेण—कर्णपूरनीलोत्पलेन सौह्मं—सुह्मदेशाधिप देवसेन—तदाख्यम्।

(३८२) वल्लभा—प्रिया, महिषीत्यर्थः सपत्नीरूपा—प्रकामनमाहृत्य सपत्नीं प्रति समासक्त इति कोपनीया भावः, योगेति।—योगपरागः,—आभिचारार्थं कल्पित मन्त्रपूतौषधचूर्णविशेष तेन विरस—विरुद्ध, वर्षतीति वर्षी—तेन, यद्वा,—विरसः,—विषम् यथा, ("रसो गन्धरसे जले। शृङ्गारादौ विषे वीर्ये तिक्तादौ द्रवरागयोः॥" इति मेदिनी) तद्वर्षिणा—तद्वर्षिणा, तद्विषपरागविरसवर्षिणेत्यर्थः मणिनूपुरेण—रत्नमञ्जीरेण, वैरन्त्य—वैरन्ती नाम नगरी तस्या अधिप वैरन्त्य त, ["वृद्धेत्कोसला—" (४।१।१७१ पा०) इत्यादिना ञ्यङ्] रन्तिदेव—तन्नामान नृपम्।

(३८३) विन्दुमती—तन्नाम्नी महिषी, वेणीनिगूढेन—केशपाशे गोपायित्वा निहितेन, वृष्णि—वृष्णिवंशप्रभूत, विदूरथ—तन्नामान राजानम्, तथा च—"शस्त्रं वेणीविनिगूहितेन विदूरथं वै महिषी जघान" इति मनुटीकायां कुल्लूकभट्टधृतवचनम्।

(३८४) हंसवती—तन्नाम्नी राजमहिषी, रसदिग्धमध्येन—रस,—विष, ('शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः' इत्यमरः) तेन दिग्ध—लिप्त, मध्यम्—अभ्यन्तरं यस्य तथाभूतेन मेखलामणिना—काञ्चीदाममध्यनिबद्धरत्नेन, सौवीर—तदाख्यजनपदाधिपति, वीरसेन—तदाख्य नृपम्। एवं प्रबन्धे स्वप्रेयस्योऽपि स्वात्मना कदाचित् कालसर्पिण्यो भवन्ति इति विभाव्य नरेन्द्र सतत सावहितं स्थातव्यम् इति प्रदर्शितम्।

(३८५) अट्टस्थागदलिप्तवदना च विषवारुणीगण्डूषपायनेन पौरवी पौरवेश्वरं सोमकम्" इत्युक्त्वा (३८६) विरराम स्वाम्यादेशसम्पादनाय च निर्जगाम।

देवोऽपि हर्षः (३८७) सकलराज्यस्थितीश्चकार। ततश्च तथा कृतप्रतिज्ञे (३८८) प्रयाणं विजयाय दिशां समादिशति देवे हर्षे, गतायुषां प्रतिसामन्तानाम् उदवसितेषु बहुरूपाणि उपलिङ्गानि वितेनिरे। तथा हि (३८९) अविप्रक्षुण्णाः कालदूतहृदय इव इतस्तत' चेरुः पटुलाः कृष्णसारश्रेणय'।

---

(३८५) अट्टस्थेति।—अट्टस्थेन—गूढेन, अगदेन—वदाभ्यौषधेन, आत्म-रक्षार्थं विषनाशकेन इति भाव लिप्त—दिग्ध, वदन—मुख, मुखकुहरमित्यर्थ यस्या' यथा वा तथाभूता, नविषासममद्यपायनेन राजान जिघांसन्ती राज्ञी तेन स्वप्राणवियोगे भवेन चेत इति शङ्कया विषनाशकौषध स्वमुखाभ्यन्तरे उपालिम्पदिति विभाव्यम्, पौरवी—तन्नाम महिषी विषेति।—विषवारुणी—गरलयुक्ता सुरा, तस्या गण्डूष—मुखपूरण, तस्य पायनेन—पानक्रियया, स्वभर्तार राजान पाययित्वा इत्यर्थ, पौरवेश्वरं—पुरुवंशीयानामधिपं सोमक—तदाख्य नृपम। एभि वचनजातै स्त्रीविहितमहानर्थ प्रदर्शनेन सम्राड्दुमस्य वह्निर्मीरमप्रमूलाना करस्थरूपा स्त्रियो हि सदैव परिवर्जनीया इति प्रतिपादितम।

(३८६) विरराम—तूष्णीम्बभूव। स्वाम्यादेशसम्पादनाय—प्रभोराज्ञा पालयितु मित्यर्थ।

(३८७) सकलराज्यस्थितीः—समस्तराज्यव्यवस्था, राजकार्यस्य सुष्ठु निर्वाह-विधानानीत्यर्थ विजिगीषुभि प्रयाणकाले प्रथम स्वाधिकारस्थस्य अवश्यकर्तव्य-त्वादिति भाव।

(३८८) दिशा विजयाय—दिग्विजयाय, प्रयाण—यात्रा, समादिशति—आज्ञापयति सति इत्यर्थ। गतायुषा—नि शेषजीवितकालाना, प्राप्तकालानामिति भाव, प्रतिसामन्ताना—हर्षवर्द्धनस्य विपक्षभूपानाम्, उदवसितेषु—गृहेषु, उपलिङ्गानि—उपलिङ्ग्यन्ते—अनुमीयन्ते अशुभानि यै तानि, अनिमित्तानि इत्यर्थ, उत्पातचिह्नानीति यावत वितेनिरे—आनशिरे, विस्तार प्रापु इति भाव।

(३८९) कालेति।—कालस्य—यमस्य, दूता,—अनुचरा इत्यर्थ, तेषा हृदय

(३८०) प्रचलितलक्ष्मीनूपुरप्रणादप्रतिमा मधुसरघासङ्घात-झङ्कारा जज्ञादिरे। (३८१) विवृतविकृतवदनविवर-विसृतवह्निविसरा वासरेऽपि विरसं विरेसुः चिरम् अशिवा-र्थम् अशिवाः शिवाः। (३८२) प्रवपिष्पितप्ररूढप्रणया इव कपिपोतकपोलकपिलपक्षतयः काननकपोताः पेतुः।

---

इव—नेत्राणि इव, चटुला,—चञ्चला., कृष्णसारश्रेण्य,—कृष्णसारमृगनिवहा, अविप्रकृष्टा,—सन्निहिता सन्त, चेरु,—भ्रमन्ति स्म, जनविरले कानने ग्रामे ग्रामपदे नियत विहरणशीलाना भीतप्रकृतिकाना तेषा जनपदादौ निर्भय पर्यटनस्य अचिरादेव बहुलजनवधेन जनपदादीनामरण्यीभवनसूचकत्वादिति भाव ।

(३८०) प्रचलितेति।—प्रचलिताया,—प्रस्थिताया., तेषा भवन परित्यज्य इति भाव, लक्ष्म्या,—श्रिया, नूपुराणा—मञ्जीराणा, प्रणादप्रतिमा,—निक्वणसदृशा, मधुसरघाणा—मधुमक्षिकाणा, ("सरघा मधुमक्षिका" इत्यमर ) सरघाशब्देनैव मधुमक्षिकायामुक्तायामपि पुन मधुपद मधुसञ्चयासक्तत्वद्योतक ज्ञातव्यम्, सङ्घातस्य—समूहस्य, झङ्कारा,—गुञ्जनानि, झङ्कारै—व्यजृम्भन्त, मधुकरा गुगुञ्जु इत्यर्थं। सदनादौ मधुकरेण विमुच्य निरन्तरम् सञ्चलोपमलालस सरघाणा स्वरादौऽप्यनर्थज्ञापक इत्याशय ।

(३८१) विवृतेति।—विवृताना—व्यात्तानाम्, अत एव विकृताना—विकटाना, वदनाना—मुखाना, विवरेभ्य—कुहरेभ्य, विसृत,—निर्गत, वह्निविसर,—अग्नि-प्रसर यासा तथाभूता व्यात्तवदने अग्निमुद्गिरन्त्य इति यावत् अशिवा,—अमङ्गल-सूचिका, शिवा,—शृगाला, उल्कामुख्य इति यावत् अशिवार्थम्—अमङ्गलार्थं, वासरेऽपि—दिवसेऽपि, का कथा निशायाम् इति अपिशब्दार्थ विरस—विकट, विरेसु,—शब्दायन्ते स्म, निशायाम् प्रतियाम शिवा शब्दायन्ते, अत तदतिरिक्ते काले कीदृशा निनादा अशुभसूचका इति ज्ञेयम्। [इह व स र आगामसकृदावृत्त्या वृत्त्यनुप्रास]।

(३८२) कपीति।—कपिपोताना—वानरशावकाना, कपोला,—गण्डदेशा इव, कपिला,—पिङ्गला, पक्षतय,—पक्षा येषां तथाविधा, काननकपोता,—आरण्यपारा-वता, "स्वभा" इति केचित् प्रवेति।—प्रवाना—प्रवदेहाना, पिप्पिलेषु—मांसेषु, प्ररूढ,—प्रवृद्ध, प्रणय,—स्पृहा येषा तथाभूता इव, प्रवपिष्पिताशनकाङ्क्षिण इवेति यावत्, पेतु,—पतन्ति स्म, नगरवासानभ्यस्ताना वन्यकपोताना वन्यफलमूलनिरतानाम्

(२८३) आमन्त्रयमाणा इव दधुः अकालकुसुमानि समम् उपवनतरवः। (२८४) तरलकरतलप्रहारप्रहतपयोधरा रुरुदुः प्रसभं सभाशालभञ्जिकाः। ददृशुः (२८५) आसन्नकचग्रहभयोद्भ्रान्तोत्तमाङ्गमिव आत्मानं कबन्धम् आदर्शोदरेषु योधाः। (२८६) चूडामणिषु चक्रशङ्खकमललक्ष्माणः प्रादुरभवन् पादन्यासा राजमहिषीणाम्। (२८७) चेटीचामराणि

---

चलत्वात् नगरीप्रयाणस्यात् हतनृपतिप्रतिबिम्बितभवनश्रेणया इव इन्दुप्रेक्षानात्म्यम्, तथा तथाविध प्रकीर्ण महोत्पातज्ञापकम् इति आकुलिका ।

(२८३) उपवनतरवः—आरामवृक्षाः, आमन्त्रयमाणा इव—प्रेषणार्थं कुर्वन्त इव, भोगावधीव सपदि सम्पाद्दविगुणमभिगन्दयन्त इवेत्यर्थं, समम्—युगपत्, अकाल कुसुमानि—असामयिकपुष्पाणि, पुष्पोद्गमायोग्यकालेऽपि पुष्पाणि इत्यर्थः, दधुः,—धारयन्ति स्म, जनयन्ति स्मेति भावः। दोहददानप्रयत्नादिकमन्तरेणापि आकालिक कुसुमायुद्गम देशोपद्रवसूचक इत्याशय ।

(२८४) तरलेति।—तरलेन—चपलेन, करतलेन—पाणितलेन य प्रहार, —आघात, तेन प्रहतौ—ताडितौ, पयोधरौ—स्तनौ याभि तथाविधा सभाशाल भञ्जिका,—सभापुत्तलिका, प्रसभम्—सहसा, रुरुदुः,—रुदन्ति स्म रुदति स्मेव, ता भाविवियोगशोकात् तत्र स्वस्व करतले प्रहत्य अश्रु चक्रन्दुरित्युत्प्रेक्षा बोद्धव्या, प्रतिमास्पन्दन मवलोकदुर्निमित्तज्ञापकम् इति क्षेयम्।

(२८५) योधा,—सैनिका, आसन्नेति।—आसन्नात्—अतिसन्निहितात्, अचिरभाविन इत्यर्थ कचग्रहात्—केशाकर्षणात् शत्रुभिः इत्यर्थः इति भाव, भयेन—त्रासेन, उद्भ्रान्तम्—विघूर्णितम् उत्तमाङ्गम्—शिरो यस्य तथाभूतमिव, आत्मानम्—स्वदेहम्, आदर्शोदरेषु—मुकुराभ्यन्तरेषु, कबन्धम्—अशिरस्कम्, ("कबन्धस्तु क्रियायुक्तमपमूर्द्ध कलेवरम्" इत्यमर)। आदर्शादौ आत्मन कबन्धदर्शन त्वरितमृत्युज्ञापकमिति बोध्यम्।

(२८६) राजमहिषीणा—प्रतिपक्षनृपवनितानां चूडामणिषु—मुकुटरत्नेषु, चक्रेति। —चक्रादीना—रथाङ्गादीनां, पादस्थितानां सम्राड्व्यञ्जनानामिति भाव, लक्ष्माणि— चिह्नानि येषु तथाभूता पादन्यासा,—चरणनिवेशा, विजेतृचक्रवर्तिन इति भाव, प्रादुरभवन्—समपतन् राज्ञः हर्षस्य रथाङ्गादिशोभित पदं हनिष्यमाणरिपुरमणीनां शिरोमणिषु प्रतिबिम्बितमिदानीमेवाभूदिति फलितम्। चरणादीनामभावेऽपि तच्चिह्नप्रतिबिम्बनात् विभावनालङ्कार, विजिगीषोर्दिग्विभूतिमत्त्वमनेन द्योतितम् इत्यलङ्कारेण वस्तुध्वनि।

अकस्मात् अधावन्त पाणिपल्लवात्। प्रणयकलहेऽपि दत्तपृष्ठा चिरम् अभवन् भटाः पराङ्मुखा मानिनीनाम्। (३९८) करिकपोलेषु व्यघटन्त मधुलिहो मधुमदिरा-पानगोष्ठ्यः। (३९९) समाघ्रातयममहिषगन्धा इव ताम्यन्तः स्तम्बकरिम् अपि हरयो हरितं नवयवसं न चेरुः।

---

(३९७) चेटीति।—चेटीनां—दासीनां, चीत्कारकारिणीनामिति भाव, आलपाणि—आलम्बनानि, पाणिपल्लवात्—करकिसलयात्, अधावन्—अपतन्। दत्तपृष्ठा,—दत्त—प्रदर्शितमित्यर्थ, पृष्ठ—पश्चाद्देश यै तथाभूता, प्रणयकलहे पराजयतया पृष्ठप्रदर्शनं कृतवन्त इति भाव, भटा —वीरा, चिर पराङ्मुखा,—चिर विमुखा, पलायनपरा इति भाव, अभवन—अजायन्त, अयमाशयः—प्रणयकलहेऽपि पराजय तेषां भाविमहासङ्ग्रामे अपयश पराभव बोधयति इति भाव।

(३९८) करिकपोलेषु—करिणां—हस्तिनां, कपोलेषु—गण्डेषु, अद्भुतमदेषु इति भाव मधुलिहां—भ्रमराणां, मधुमदिरा।—मधु—मदजलरूपं पुष्परसं एव, मदिरा—मद्य तस्याः पानगोष्ठ्य —पानसभा, व्यघटन्त—व्यभुज्यन्त विघटिता भूता इत्यर्थ मकरन्दलालुपा अपि मधुपा कुसुमानिकरवसात परित्यज्य सर्वमदकरिकपोलेषु प्राक् नितरामवसन् इदानीन्तु विपुकरिणां मदवारिविलासाभावात् अलीनां सभा पूर्ववत् तत्र नासीदिति भाव, भूतजात् निमित्तस मदवारि न अस्रवत् इति समुदितार्थ। कुञ्जराणां कपोलादिदमात् भ्रमराणां पलायनस्य दुर्निमित्तसूचकत्वादिति भाव।

(३९९) हरय —वाजिन घोटका इत्यर्थः ("यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशु-वाजिषु। शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु॥" इत्यमर) समाघ्रातेति।—समाघ्रात,—सम्यक् आघ्रात घ्रात इत्यर्थ, यममहिषस्य—कृतान्तवाहनस्य इति यावत् गन्ध —इय यै तथाभूता इव ताम्यन्त,—क्लिश्यन्त, आसन्नमृत्युसम्भावनया इति भाव स्तम्बकरिं —स्तम्ब—गुच्छं करोति यस्त व्रीहिमित्यर्थ, तथा हरितं—श्यामलं नवयवसमपि—नूतन घासमपि, यद्वा,—इह समुच्चयार्थकोऽपिशब्द तेन श्यामलं नवयवसं स्तम्बकरिमपि इत्यन्वय अन्यथा ["स्तम्बशकृतोरिन्" (३।२।२४ पा०) इत्यत्र "व्रीहिवत्सयोरिति वक्तव्यम्" (वा०) इति व्रीह्यर्थे एव इन विधानात्] यद्वा—स्तम्बफलप्रसवोन्मुखमपि सुरस नवं वाजिन न अभुञ्जत इति अन्वयव्याख्या, न चेरु,—न भक्षयामासुरित्यर्थ।

धृतधनुषि बाहुशालिनि शैला न नमन्ति यत्तदाश्चर्य्यम्।
रिपुसञ्ज्ञकेषु गणना कैव वराकेषु काकेषु ?॥ २॥

(१) अथ व्यतीतेषु च केषुचित् दिवसेषु, मौहूर्त्तिकमण्डलेन शतशः सुगणिते सुप्रशस्तेऽहनि

---

मनुम् अनायासेनैव विभिन्दन्ति इति भाव, पातालम्—अधोभुवन, स्थली—अकृ-त्रिमभूमिभूत, ["जानपद—" (४।१।४२ पा०) इत्यादिना ङीष्] अप्रशस्तभूभाग इति भाव, दुर्गस्थ पातालमपि समतलभूस्थानवत् अनायासेन रिपुजयार्थं प्रविशन्ति इति भाव, सुमेरु,—हेमाद्रि, स्वर्गराज्यमिति भाव, वल्मीक,—कीटविशेषरचित-मृत्तिकास्तूप इत्यथ, तुङ्गस्य सुमेरुमपि वल्मीकस्तूपवत् अवहेलया आक्रामन्तीति भाव, यूरा हि निजशौर्य्यप्रभावेण त्रिभुवन करतलगतफलमिव मन्यन्ते, न तु स्ववीर्य्यगुणाना तेषा साधनाल्पप्रयोजनमिति निष्कर्षः। अत्र केवलाया वसुधाया अङ्गनादिरूपत्वोक्तेः, तथा जलधेः कुल्यारूपतया पातालस्य स्थलीभूततया सुमेरो वल्मीकरूपतयोक्तेश्च निरङ्गाणा रूपकाणा सजातीयाना संसृष्टि। आर्य्या वृत्तम्॥ १॥

वीराणा प्रभावमाह, धृतेति।—बाहुशालिनि—भुजवीर्य्यवति इत्यथ, जने इति शेष, धृतधनुषि—धनुष्पाणौ सति, त्रिभुवनमेव जेष्यामि इति प्रतिज्ञाय गृहीतचापे सतीत्यथ, [अत्र समासान्तविधेरनित्यत्वात् "धनुषश्च" (५।४।१३२ पा०) इति बहुव्रीहेरनङादेशाभाव इति ज्ञेयम्, अन्यथा धृतधन्वनि इति स्यादिति विभाव्यम्] शैला,—पर्व्वता, न नमन्ति—न प्रणमन्ति, आत्म वज्राघातभयादिति भाव, इति यत्, तत्—अनमनमिति यावत्, आश्चर्य्यं—चित्र, पर्व्वतानपि वीरा धनुर्बलेन नमयित मन्यन्तीति भाव, रिपुसञ्ज्ञकेषु—शत्रुनामधारिषु, वराकेषु—दीनेषु, काकेषु—काकप्रायेषु अतुल्यनिर्वीर्य्येषु स्वल्पवीर्य्येषु वा, यद्वा,—कर्णकठोररटनमात्रपरा-यणोच्छिष्टभोजिषु इति भाव, कैव गणना ?—क आदर ? इत्यथ, अन्ये धृतेस्य समा भवन्तस्य बाहुबलशालिन सकाशे नमन्त्या, तान् हि असौ तृणाय मन्यते च इति भाव। एतेन हर्षस्य भावि त्रिभुवनविजयित्व सूच्यते। अत्र रिपुषु काक-रूपत्वोक्तेः निरङ्ग रूपकम्। आर्य्या वृत्तम्॥ २॥

(१) अथेति।—"अथ" इत्यस्य "मङ्गलाद्रिं नाम" इति परेण सम्बन्ध। क्रमेण विवृणोति, व्यतीतेषु इति।—व्यतीतेषु—अतिक्रान्तेषु। मौहूर्त्तिकमण्डलेन—ज्योतिर्विद्गणेन, शतशः,—पुन पुनरित्यर्थं, सुगणिते—सुष्ठु गणनया निरूपिते।

(२) दत्ते चतसृणामपि दिशां विजययोग्ये दण्डयात्रालग्ने, सलिलमोचविशारदैः शारदैरिव अम्भोधरैः कलधौतैः शातकौम्भैश्च कुम्भैः स्नात्वा, (३) विरचय्य परमया भक्त्या भगवतो नीललोहितस्य अर्चाम्, उदर्चिषं हुत्वा प्रदक्षिणावर्त्तशिखाकलापम् आशुशुक्षणिम्, दत्त्वा द्विजेभ्यो रत्नवन्ति राजतानि जातरूपमयाणि च सहस्रशः तिलपात्राणि,

---

(२) दण्डयात्रालग्ने—दण्ड,—सैन्य, चतुरङ्ग बलमिति भाव, ("दण्डोऽस्त्री लगुडे पुमान्। सैन्ये काले नामभेदे ·· ·" इति मेदिनी) तस्य, यद्वा,—दण्डाय—युद्धाय, तुरीयोपायभूतायेत्यर्थ, यात्रा—प्रयाण, तस्या लग्नम्—अनुकूलराश्युदय, शुभक्षण इत्यर्थ तस्मिन्, दत्ते—निर्दिष्टे। सलिलेति।—सलिलस्य—जलस्य, मोचे—[illegible]हारणे, उद्गिरणे इत्यर्थ, विशारदा,—पटव तै, सुखमि सार्थकजलैरिति यावत्, प्रभूतमनुजैरिति भाव, अथच,—सलिलाना मोचेण—वर्षासु वर्षणेन, विशारदा,—प्रथिता ते, शारदे,—शरत्कालिकैरिव, अम्भोधरै,—जलधरै, जलपूर्णैरित्यर्थ, मेघैश्च, कलधौतै,—राजतै, ("कलधौत रौप्य हेम्नो" इत्यमर) अथच,—कालेन—वर्षापगमेन धौता,—निर्मला श्वेता वा तै, शातकौम्भै,—कानकै, स्वर्णमयैरित्यर्थ, ("स्वर्ण सुवर्ण कनक हिरण्य हेम हाटकम्। तपनीय शातकुम्भम्" इत्यमर.)। अम्भोधरै सह कुम्भानामवैधर्म्यसाम्योक्तेः श्लेषानुप्राणितोपमाऽलङ्कार ।

(३) नीललोहितस्य—नील कण्ठे लोहित. जटाया तस्य, हरस्येत्यर्थ, ["वर्णो वर्णेन" (२।१।६९ पा०) इति समास.। "धूर्जटिर्नीललोहित । हर स्मरहर ··" इत्यमर ) अर्चा—पूजा, विरचय्य—विधाय, उदर्चिषम्—उद्गतशिख, प्रदक्षिणेति।—प्रदक्षिण—दक्षिणभागमनुलक्ष्येत्यर्थ, आवर्तते—उद्गच्छति य तथाविध, शिखाकलाप,—ज्वालासमूह यस्य तथाभूत, दक्षिणावर्त्तवह्नेः शुभसूचकत्वादिति भाव, आशुशुक्षणिम्—अग्निम्, ("अग्निर्वैश्वानरो वह्नि शिखा वानाशुशुक्षणि" इत्यमर.) हुत्वा—तर्पयित्वा, पावके हवि प्रक्षिप्येति भाव, द्विजेभ्य,—ब्राह्मणेभ्य, रत्नवन्ति—रत्नभूयिष्ठानि, राजतानि—रौप्यमयाणि, जातरूपमयाणि—स्वर्णमयानि, ("स्वर्ण सुवर्ण ·· · । चामीकर जातरूपम् ·· ·॥" इत्यमर.) सहस्रश —बहुश अनेकसहस्राणीति यावत्, ["सङ्ख्यैकवचनाच्च वीप्सायाम्" (५।४।४३ पा०) इति शस्] तिलपात्राणि—तिलपूर्णानि भाजनानि,

(४) कनकपत्रलताऽलङ्कृतग्रफशृङ्गशिखरा गाश्च अर्बुदश, समुपविश्य विततव्याघ्रचर्म्मणि भद्रासने, (५) विलिप्य प्रथम-विलिप्तायुधो निजयशोधवलेन आ चरणतः चन्दनेन शरीरं, परिधाय राजहंसमिथुनलक्ष्मणी सदृशे दुकूले, (६) परमेश्वर-चिह्नभूता शशिकलाम् इव कल्पयित्वा सितकुसुममुण्डमालिकां शिरसि, नीत्वा कर्णाभरणमरकतमयूखमिव कर्णगोचरतां गोरोचनाच्छुरितम् अभिनव दूर्व्वापल्लवं, विन्यस्य सह

(४) कनकेति।—कनकपत्रलताभिः—सुवर्णपत्रभङ्गिभिः, अलङ्कृतानि—भूषितानि, ग्रफानि—खुराः, शृङ्गशिखराणि—विषाणाग्राणि च यासां तथाभूताः, गाः,—धेनूः, अर्बुदश, दशकोटिशः, बहुसङ्ख्या इत्यर्थः। विततेति।—विततं—विस्तृतं, व्याघ्रचर्म्म—शार्दूलत्वक् यस्मिन् तथोक्ते, भद्रासने—नृपासने हैमासनासने इति यावत्, ("नृपासनं यत्तद्भद्रासनं सिंहासनन्तु तत्। हैमम्" इत्यमरः) राज्ञः व्याघ्रचर्म्मासनस्य चक्रवर्त्तियोग्यत्वज्ञापकत्वादिति भावः।

(५) निजयशोधवलेन—निजेन—स्वकीयेन यशसा—कीर्त्त्या धवलं—समधिकं श्वेतं तेन, यद्वा—निजयशोवत् धवलेन चन्दनेन—श्रीखण्डेन श्वेतचन्दनेनेति यावत्, प्रथमेति।—प्रथमम्—अग्रे एव इत्यर्थः विलिप्तानि—चतुरञ्जितानि, आयुधानि—कोदण्डगदाशक्तिचक्रप्रासादीनि येन तथाभूतः आ चरणतः—चरणपर्य्यन्तं शरीरं—देहं, विलिप्य—उपदिह्य। राजेति।—राजहंसमिथुनं—रक्तचञ्चुचरणश्वेतवर्णहंसाविव दम्पतीत्यर्थः ("राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः" इत्यमरः) लक्ष्म—चिह्नं ययोः तथाभूते ("चिह्नं लक्ष्म च लक्षणम्" इत्यमरः) सदृशे—अनुरूपे राजयोग्ये इत्यर्थः दुकूले—वसने उत्तरीयाधोवस्त्रे इत्यर्थः, परिधाय—परिहित्य, यथोपयुक्ताचारेण इत्याशयः।

(६) परमेश्वरचिह्नभूता—परमेश्वरस्य—महाराजस्य हरस्य च चिह्नभूता—लक्ष्मरूपा सार्व्वभौमलक्षणा हरकृपाप्रसादीकृताश्च इत्यर्थः, नैष्ठिकोपासकैः इष्टदेवसमर्पणं विना माल्यवसनभूषणादयः नैव स्वीक्रियन्ते इति भावः, सितकुसुममुण्डमालिकां—श्वेतपुष्पहारविशेषं शिरसि कल्पयित्वा—धृत्वा। कर्णाभरणमरकतमयूखमिव—श्रवणभूषणहरिन्मणिकिरणमिव, गोरोचनाच्छुरितं—गोरोचनया—माङ्गल्यद्रव्यविशेषेण छुरितं—प्रलिप्तम् अभिनवम्—अम्लानं, हरिद्वर्णमिति यावत्, दूर्व्वापल्लवं—शतपर्व्विकाकिसलयं,

(७) शासनवलयेन गमनमङ्गलप्रतिसरं प्रकोष्ठे, (८) परिपूजित प्रहृष्ट-पुरोहित करप्रकीर्यमाण-शान्तिसलिलशीकरनिकराभ्युक्षितशिराः समेत्य महार्हाणि वाहनानि, (९) बहलरत्नालोकलिप्तककुभि च भूषणानि भूभुजा संविभज्य, (१०) क्लिष्टकार्पटिककुलपुत्रलोकमोचितैः प्रसाददानैः विमुच्य

---

कौसुम्भदुकूलोद्भासितमित्यर्थः, दूर्वाः पल्लवानि च तन्तुमुखाग्रम इति वा [ "विभाषा—" (२।४।१२ वा०) इत्यादौ "पशुशकुनिद्वन्द्वे विरोधिनां पूर्वनिपातः ... बहुप्रकृतिरेव द्वन्द्व एकवदिति वाच्यम्" (वा०) इति वहुवचनान्तस्यापि एकवद्भाव ] कर्णगोचरता—श्रुतिविषयता, कर्णदेशमित्यर्थः, नीता—प्रापिता, कर्णयोः धृतेत्यर्थः।

(७) शासनवलयेन—मुद्राकटकेन, "मोहर" इति वङ्गभाषया प्रसिद्धेन राजकीयलेखादीनामुपरि मुद्रणार्थं धारितेन राज्ञानुमोदनज्ञापकचिह्नविशेषयुक्तेन करभूषणेनेति यावत् सह गमनमङ्गलप्रतिसरं—यात्रिकमङ्गलसूत्रम्, विहिता विजयाय युद्धयात्राया साफल्यार्थं करधार्य मन्त्रपूत सूत्रविशेषमित्यर्थः, ( "हस्तसूत्रं प्रतिसरोऽस्त्रियाम्" इत्यमरः ) प्रकोष्ठे—कूर्पर-मणिबन्धयोः मध्ये।

(८) परिपूजितेति।—परिपूजितेन—समर्चितेन, अत एव प्रहृष्टेन—प्रीतेन, पुरोहितेन—पुरोधसा करेण—हस्तेन, प्रकीर्यमाणानां—विक्षिप्यमाणानां, शान्तिसलिलानां—शान्त्युदकानां, शीकरनिकरैः,—कणसमूहैः, अभ्युक्षितं—सिक्तं, शिरः,—मस्तकं यस्य तथाभूतः, पूजाप्रीतपुरोहितशान्तिजलाभिषेकात् यात्रायां मङ्गलानि भवन्ति न विघ्नमर्हन्ति इति विवेकः, महार्हाणि—बहुमूल्यानि, वाहनानि—हस्त्यादीनि।

(९) बहलेति।—बहलानां—प्रभूतानां, रत्नानां—मणीनाम्, आलोकेन—प्रभया, लिप्ता—रञ्जिता, ककुभः,—दिशः यैः तानि भूषणानि—अलङ्कारान् भूभुजा—राज्ञा स्वपक्षीयसामन्तानामिति भावः, संविभज्य—सम्यक् विभागेन दत्त्वा इत्यर्थः, दानरूपद्वितीयोपायप्रयोगेण मित्रराजानां वशीकरणार्थमिति भावः, एतेनास्य नीतिकुशलता प्रदर्शिता।

(१०) क्लिष्टेति।—क्लिष्टकार्पटिकाः,—जीर्णमलिनवसनाः अत एव दरिद्रा इत्यर्थः, ये कुलपुत्रलोकाः—सत्कुलजातजनाः, सत्यजातीयाः, तेषु मोचितैः,—निक्षिप्तैः, दारिद्र्यक्लेशविघटनपटीयोभिः इति भावः, प्रसाददानैः,—अनुग्रह

बन्धनानि, (११) नियुज्य तत्कालस्मरणस्फुरणेन कथितात्मानमिव च अष्टादशद्वीपजेतव्याधिकारे दक्षिणं भुजस्तम्भम्, अहमह-मिकया सेवकैः इव सुनिमित्तैः अपि समग्रैः अग्रतो भवद्भिः, (१२) प्रमुदितप्रजाजन्यमानजयशब्दकोलाहलो हिरण्यगर्भ इव ब्रह्माण्डात् कृतयुगकरणाय भवनात् निर्जगाम।

(१३) नातिदूरे च नगरात् उपसरस्वति निर्मिते महति तृणमये, समुत्तम्भिततुङ्गतोरणे, वेदीविनिहितपल्लवललामहेम-

---

वितरणे बन्धनानि—दारिद्र्यनिगडसन्दानानि, अविनाभावसम्बन्धबहुलानि बन्धनवत् पीडाकराणि दारिद्र्यदुःखानि वा इति भावः। विमुच्य—अपाकृत्यैव कुलपुत्रलोकाना-मिति भावः।

(११) तत्कालस्मरणस्फुरणेन—तत्कालस्य—तात्कालिकहर्षावसरस्य, भ्रातृपरिभव-रूपस्य इति भावः। स्मरणेन—मनसि उदयेन यत् स्फुरणं—बाहोः स्पन्दनम् उद्दीपन-मिति भावः, तेन कथितः,—निवेदितः आत्मा—स्वरूपं यस्मै तथाभूतमिव, निवेदित-प्रतिहिंसाऽभिप्रायमिव इति भावः, अष्टादशेति।—अष्टादशानाम्—अष्टादशसंख्यकानां, द्वीपानां—जम्बूप्रभृतीनां जेतव्यानां—विजेतुमर्हाणां यः अधिकारः,—आयत्ती-करणं सैन्यानामिति यावत् तस्मिन्, एषां दक्षिणभुजस्पन्दनस्य शुभसूचकत्वादिति भावः। अहमहमिकया—अहमग्रे अहमग्रे इत्येव स्पर्द्धया, ("अहमहमिका तु सा स्यात् परस्परं यो भवत्यहङ्कारः" इत्यमरः)। सुनिमित्तैः—शुभसूचकैः लक्षणैः। अग्रतो भवद्भिः,—पुरतो गच्छद्भिः, तस्य गमनकाले बहूनि सुलक्षणानि प्रादुरासन् इति भावः।

(१२) प्रमुदितेति।—प्रमुदिताभिः—प्रहृष्टाभिः प्रजाभिः—प्रकृतिवर्गैः, जन्यमानः—क्रियमाणः जयशब्दकोलाहलः—जय जयेति कलरवः यस्य तथाभूतः, ब्रह्माण्डात्—हैमाण्डात् हिरण्यगर्भः इव—ब्रह्मा इव, कृतयुगकरणाय—सत्ययुग-स्थापनार्थं, कृतस्य—आचरितस्य शत्रुजनितस्य भ्रातृद्रोहस्य इति भावः युगकरणाय—प्रतीकाराय अन्यच्च दुर्जनान् समूलं विनाश्य कृतयुगवत् सज्जनानां स्थापनाय इत्यर्थो वा। इह हिरण्यगर्भ-हर्षयोः सादृश्यावबोधादुपमा, ब्रह्माण्डेन सह भवनस्याभेदारोपाच्च रूपकमिति सङ्करः।

(१३) उपसरस्वति—सरस्वत्या नद्याः समीपे, [इत्यव्ययीभावः]। तृणमये—तृण-बहुले, तृणरचिते इत्यर्थः। समिति।—समुत्तम्भितं,—समुत्थापितं, [उत्तुङ्गकृतात् स्तम्भस्य

कलशे, (१४) बद्धवनमालादाम्नि, धवलध्वजमालिनि, भ्रमच्छुक्लवाससि, पठद्विजन्मनि मन्दिरे प्रस्थानम् अकरोत्। तत्रस्थस्य च अस्य (१५) ग्रामाक्षपटलिकः सकलकरणिपरिकरः

---

ककारलोपः ] तुङ्गः,—उन्नतः, तोरणः,—बहिर्द्वारं यस्य तथाभूते। वेदीति।—वेद्यां—परिष्कृतभूमौ, विनिहितः,—स्थापितः, पल्लव एव—नवकिसलय एव, आम्रादीनामिति भावः, ललाम — लाञ्छनम्, चिह्नमित्यर्थः, माङ्गल्यबोधकमिति भावः, यद्वा,—ललाम—भूषणं यस्य तथाभूतः, पल्लवभूषित इत्यर्थः, ("ललाम लाञ्छने ध्वजे। शृङ्गे प्रधाने भूषायाम्" इति मेदिनी) हेमकलशः,—स्वर्णकुम्भः, मङ्गलघट इति भावः यस्मिन् तथोक्ते।

(१४) बद्धेति।—बद्ध—विरचितं, वनमालादाम—वनपुष्पमालासमूहः, यद्वा,—"आजानुलम्बिनी माला सर्वर्त्तुकुसुमोज्ज्वला। मध्ये स्थूलकदम्बाढ्या च वनमालेति कीर्त्तिता॥" इत्युक्तलक्षणक पुष्पपत्रप्रतियोजितं माल्यं यस्मिन् तथोक्ते। धवलध्वजानां—शुक्लपताकानां, माला—श्रेणिः अस्ति अस्मिन्निति तथाभूते। भ्रमदिति।—भ्रमन्ति—इतस्ततः चलन्ति, वायुवेगादिति भावः, शुक्लानि—शुभ्राणि, वासांसि—पताकारूपाणि वस्त्राणि, द्वारादौ आवरणभूतानि वेति भावः, यद्वा,—भ्रमन्तः—इतस्ततः सञ्चरन्तः शुक्लवाससः—शुभ्रवस्त्रपरिधायिनः परिचारकजना यस्मिन् तथोक्ते। पठदिति।—पठन्तः,—अधीयानाः, मङ्गलार्थं वेदान् धर्मशास्त्राणि वा समुच्चारयन्त इति भावः, द्विजन्मानः—ब्राह्मणा यस्मिन् तथोक्ते। प्रस्थानम्—स्थितिमित्यर्थः।

(१५) ग्रामाक्षपटलिकः,—अक्षाणां—भूतानां, पटले—समूहे नियुक्तः अक्षपटलिकः, ग्रामस्य अक्षपटलिकः ग्रामाक्षपटलिकः, ग्रामवासी वेतालसाधकः, तान्त्रिकविद्यावेत्ता वा इति भावः, यद्वा,—अक्षाणां—व्यवहाराणां, विवादानामित्यर्थः, अक्षाणां—द्यूतानां, द्यूतसाधनपाशकादीनामित्यर्थो वा, ("अक्षमिन्द्रिये। ना द्यूताङ्गे कर्षचक्रव्यवहारे कलिद्रुमे" इत्यमरः) पटले नियुक्तः अक्षपटलिकः, ग्रामस्य अक्षपटलिकः ग्राम्यव्यवहारदर्शक इत्यर्थः ग्राम्याणामपि विवादमीमांसायां राजनियुक्त अधिकरणिकविशेष इति यावत् ग्राम्यद्यूतक्रीडाध्यक्षो वा, सकलकरणिपरिकरः,—सर्वप्रकारलेख्यरचनानिपुण इति यावत्, ["करणिः,—कायस्थः" इति कश्चित्, तथाच सर्वकायस्थपरिवृत इत्यर्थः.]।

"करोतु देवो (१६) दिवसग्रहणम् अद्यैव अवन्ध्यशासनः शासनानाम्" इति अभिधाय (१७) वृषाङ्काम् अभिनवघटितां हाटकमयीं मुद्राम् उपनिन्ये, जग्राह च तां राजा। समुपस्थापिते च प्रथमत एव मृत्पिण्डे परिभ्रश्य करकमलात् अधोमुखी महीतले पपात मुद्रा। (१८) मन्दायमानपङ्कपटले मृदुमृदि सरस्वतीतीरे स्फुटं व्यराजन्त राजयो वर्णानाम्। अमङ्गलाशङ्किनि च (१९) विषीदति परिजने नरपतिः अकरोत् मनसि एतत्,—"अतत्त्वदर्शिन्यो हि भवन्ति अविदग्धानां

(१६) अवन्ध्यशासन,—अप्रतिहताज्ञ शासनानाम्—राजशासनानामिति यावत्, दिवसग्रहण—सामयिकमङ्गलनिरूपणम् इत्यर्थं, अद्य प्रभृति भवान् ग्रामशासनाधिकारे नियुक्त इत्येव नियमार्थं भवन्नामाङ्कितमुद्राग्रहणमिति भावः।

(१७) वृषाङ्का—वृषचिह्नाम्, अभिनवघटिता—नवगठितां हाटकमयीं—काञ्चनमयीं मुद्रा—वर्णावलीखचिताकारपट्टकविशेषम् उपनिन्ये—अर्पयामास। करकमलात्—पाणिपद्मात्, हस्तेनेति भाव, प्रथमत—आदौ एव, समुपस्थापिते—स्थापिते केनचिदिति भाव मृत्पिण्डे—मृत्तिकागोलके, परिभ्रश्य—निपत्य अधोमुखी—अधः राजमुद्राकारमायामलपृष्ठभागा इत्यर्थ।

(१८) मन्दे ति।—मन्दायमानम्—ईषच्छुष्क, पङ्कपटल—कर्दमचयः यस्मिन् एवंभूते अत एव मृदुमृदि—मृदी—कोमला मृत—मृत्तिका यस्मिन् तथाभूते सरस्वतीतीरे—तदाख्यनदीतटे, वर्णाना—मुद्राक्षराणां राजय—श्रेणय स्फुट—स्पष्ट, व्यराजन्त—प्रभासिरे, मुद्राक्षरपङ्क्तय सरस्वतीतीरस्थकर्दमलग्नाः प्रकाशमाना अभवन्निति निष्कर्षः। एतेन समुद्रमुद्रितामखिलवसुधां स्वयमादेवाद्राज्यासमुद्रा-ग्रहण करिष्यतीति द्योतितं, तच्च विज्ञदैवज्ञादयो विचारयन्तु इति निगदामः।

(१९) विषीदति—विषण्णीभवति, इदं पश्यति अमङ्गलपदेऽपीति भाव। अतत्त्व-दर्शिन्य,—अयथार्थदर्शिन्य, अदीर्घदर्शिन्य इति यावत् कुशङ्काग्रस्ता इति भाव। ["अतत्त्वदर्शिन्य" इत्यत्र "तत्त्वदर्शिन्य" इति पाठे,—स्वल्पदर्शिन्य, स्थूल-दर्शिन्य इति यावत्, उपस्थितदर्शिन्य अन्तःपदार्थविवेकाभावात् इति भाव] अवि-दग्धानाम्—अज्ञानाम्।

(२३) अग्रतः स्थित्वा च मुहूर्त्तमिव पुनः प्रयाणक्रोशसङ्ख्यापकाः स्पष्टम् अष्टौ अदीयन्त प्रहाराः पटहे पटीयांसः ।

(२४) ततो रटत्पटहे, नन्दन्नान्दीके, गुञ्जत्कुञ्जे, कूजत्काहले, शब्दायमानशङ्खे, (२५) क्रमोपचीयमानकटककल-

---

ध्वनिः,—निनादः यस्य तथाभूतः, [ "दिक्कुञ्जरबृंहितगम्भीरध्वनिः" इत्यत्र दिक्कुञ्जरजृम्भमाणगम्भीरध्वनिः" इति पाठे,—दिक्कुञ्जराणां जृम्भमाणः,—प्रवर्द्धमानः इत्यर्थः, गम्भीरध्वनिरिव ध्वनिः यस्य तथाभूतः ] प्रयाणपटहः,—युद्धयात्राकालिकवाद्यभेद इत्यर्थः, अताड्यत—अवाद्यत इत्यर्थः, पाटहिकैरिति शेषः ।

(२३) अग्रतः,—अग्रे, अनन्तरमिति भावः, मुहूर्त्तमिव—मुहूर्त्तकालमित्यर्थः इव शब्दोऽत्र अवधारणे, स्थित्वा—विलम्ब्येत्यर्थः, प्रयाणेति ।—प्रयाणस्य—यात्रायाः क्रोशाः,—"चतुर्विंशत्यङ्गुलिभिर्हस्तं तत्त्वविदो विदुः । सहस्रैरष्टभिः ख्यातं हस्तैः क्रोशमानकम् ॥" इत्युक्तलक्षणाः अष्टसहस्रहस्तपरिमिताः अध्वान इत्यर्थः, केचित्तु सहस्रधनुःसमाना इत्याहुः, तेषां सङ्ख्यापकाः,—सङ्ख्याज्ञापकाः, अष्टौ—अष्टसङ्ख्याकाः, अद्य अष्टौ क्रोशाः गन्तव्याः इत्येव सङ्ख्यासंस्थापकाः इत्यर्थः, पटीयांसः,—अतिपटवः, [ "द्विवचनविभज्योपपदे—" ( ५।३।५७ पा० ) इत्यादिना ईयसुन् ] प्रहाराः,—ताडनानि ।

(२४) "ततः" इत्यस्य "प्रयाणसमये ...राजभिः आपूपुरे राजद्वारम्" इत्यनेनान्वयः । प्रयाणसमये इति विशिनष्टि, रटत्पटहे इत्यादि ।—रटन्तः,—ध्वनन्तः, पटहाः—आनकाख्यवाद्यविशेषाः यस्मिन् तथोक्ते । नन्दन्नान्दीके—नन्दन्त्यः —राजलोकान् उल्लासयन्त्य इति यावत्, नान्द्यः,—भेरीसहस्रमाङ्गल्यवाद्यभेदाः, आशीर्वचनसंयुक्ता स्तुतयो वा, "आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते । देवद्विजनृपादीनां तस्मान्नान्दीति कीर्त्यते ॥" इति लक्षणात्, ताः यस्मिन् तथोक्ते । गुञ्जत्कुञ्जे—गुञ्जन्तः,—ध्वनन्तः, कुञ्जाः,—शङ्खभेदाः यस्मिन् तथोक्ते, ते तु "कञ्जा" इति नाम्ना प्रसिद्धाः, पृष्ठ च तेषां जतु परिकलितं भवतीति विज्ञानम् । कूजत्काहले—कूजन्त्यः,—स्वनन्त्यः, काहलाः,—वाद्यभेदाः यस्मिन् तादृशे, ( "काहला वाद्यभाण्डस्य भेदे चाप्सरसां भिदि" इति मेदिनी ) । शब्दायमानशङ्खे—शब्दायमानाः,—ध्वनन्तः, शङ्खाः,—कम्बवः, "मुखशङ्खा" इति प्रसिद्धाः यस्मिन् तथोक्ते । शङ्खनादानां सुभटहृदयोल्लासकत्वात् माङ्गलिकत्वाच्च युद्धयात्रादौ विशेषव्यवहारः सदातन इति ज्ञेयम् ।

(२५) क्रमेति ।—क्रमेण—शनैः, शनैरिति यावत्, उपचीयमानः,—वृद्धि

काले, परिजनोत्थापनव्यापृतव्यवहारिणि, (२६) द्रुतद्रुघण-घातघट्यमानकोणिकाकीलकोलाहलकलितककुभि, (२७) बलाधिकृतबध्यमानपाटीपतिपेटके, जनज्वलितोल्कासहस्रालोकलुप्यमानविद्यामातमसि, (२८) यामचेटीचरणचलनोत्थाप्यमानकामिमिथुने, (२९) कटुककटुकनिर्दंशनश्यन्निद्रोन्मिष-

गच्छन, कटकानां—सैनिकानामिति यावत, कलकल —कोलाहल यस्मिन तथोक्ते। परिजनेति।—परिजनानां—पार्श्वचराणां, निद्रितानाम इति भाव, उत्थापने—प्रबोधने, व्यापृता,—व्यग्रा, व्यवहारिण —कर्मचारिण यत्र तथाभूते।

(२६) द्रुतेति।—द्रुत—सत्वर, द्रुघणस्य—मुद्गरस्य इति प्रसिद्धस्य शस्त्रभेदस्य, घातेन—ताडनेन, घट्यमाना—चाल्यमाना या कोणिका—ताडनयष्टिविशेष, तस्या, कोलस्य—पटमार्गस्य, कोलाहलेन—निनादेन, कलिता —पूरिता, ककुभ,—दिशो यत्र तथोक्ते, यद्वा —द्रुत द्रुघणस्य—मुद्गरस्य ("द्रुघणो मुद्गरेऽपि स्यात" इति मेदिनी) घातन—ताडनेन घट्यमाना —चाल्यमाना, ▮ कोणककोला,—काण एव कोणिका—वाद्यभेद वल्लकीकरणी वा, ("कोणो वाद्यप्रभेदे स्यात् वीणादीनाञ्च वादने। एकदेशे गृहाङ्गोलामस्त्रो च लगुडेऽपि च।" इति मेदिनी) तत्र ये कीला,—शङ्कव, वस्त्रपट्टनिबद्धा वस्त्रगृहधारणार्थं तन्निबद्धा वा, तेषां कोलाहलै कलिता ककुभ यत्र तथोक्ते, शिविरमुद्गराघातोत्थाप्यमानानल्पकीलककठोरारवभुवनव्यापी सञ्जाते एतेन बलोद्यद्घातान् बोधनस्य सीलिवम व्यवगम्यते।

(२७) बलेति।—बलाधिकृतै —सैन्याधिकारिभि बध्यमान—ताड्यमानं, पाटीपतिपेटकं—प्रतिनियतरक्षकवर्ग,प्रमादीति भाव यत्र तथोक्ते। जनेति।—जनै,—परिजनैरिति यावत, ज्वलितानां—प्रज्वालितानाम उल्कासहस्राणाम्—उल्मुकसहस्राणां, दीपसमूहानामिति यावत, आलोकेन—प्रभया, लुप्यमान—विनाश्यमानं विद्यामातमस, तिमिरं यस्मिन् तथोक्ते।

(२८) यामेति।—यामचेटीभि,—प्रहरिकदासीभि प्रहारचौभिरित्यर्थं चरण चलनेन—पदक्षेपनिनादन इति यावत, पादस्पर्शनेत्यर्थो वा, उत्थाप्यमान—प्रबोध्यमानं, कामिमिथुन—कामयुगल यस्मिन् तथोक्ते।

(२९) कटुकेति।—कटुकाना—कर्णपकनिष्ठोलानां, कटुकेन—दृढेन, निर्दशन—भाषया, नश्यन्ती—अपगच्छन्ती या निद्रा—स्वाप, तया उन्मिषन,—

मदस्यन्दि दन्ति सन्दान शृङ्खलाखनखन निनाद निर्भर-भरितदश-दिशि, (२६) घासपूलकप्रहारप्रनष्टपांशुलकरिपृष्ठप्रसार्य-माणप्रस्फोटितचर्मणि, (२७) गृहचिन्तकचेटकसंवेष्ट्यमान-पटकुटीकाण्डपटमण्डपपरिवस्त्रावितानके, (२८) कील-कलापापूर्यमाणचिपिटचर्मपुटे, (२९) सम्भाण्डायमान-भाण्डागारिणि, भाण्डागारवहनवाह्यमानमन्दुरलीवर्दिके,

---

भाव., मुच्यमाना,—परित्यज्यमाना, मदस्यन्दिनां—दानजलस्राविणां दन्तिनां—गजानां, ये सन्दानशृङ्खला,—बन्धनशृङ्खला, तेषाम् खा—खणत्क, खणखणनिनादेन —खणखण इति शब्दविशेषेण, निर्भरम्—अत्यन्तं यथा तथा, भरिता —पूरिता, दश दिश —दशसङ्ख्याका ककुभ यस्मिन तथोक्ते।

(२६) घासेति।—घासपूलकस्य—यवसलवकस्य, प्रहारेण —ताडनेन, मार्जने-नेति यावत्, प्रनष्ट —परिष्कृत, पांशुल—रजोबहुल, अनेन विकीर्णत्वादिति भाव, यत् करिपृष्ठ—करिपृष्ठ, तत्र प्रसार्यमाणम्—आसनार्थं विस्तार्यमाणम्, प्रस्फोटित—प्रमृष्ट, ताडित वा, धूल्याद्यपनयनार्थमिति भाव, ("प्रस्फोटनन्तु शूर्पे स्यात् ताडने च विकासने" इति मेदिनी) चर्म—अजिनं यस्मिन तथोक्ते।

(२७) गृहेति।—गृहाणां—भवनानां, सैनिकावाससिबिरादीनामित्यर्थ, चिन्तका,—कार्यदर्शिन इत्यर्थ, ये चेटका —भृत्या, तै संवेष्ट्यमाना,—परिश्रिय-माणा, संवेष्ट्यमाना इत्यर्थो वा, पटकुट्य,—पटै —वस्त्रै, कुट्य,—गृहनगरभेदा, स्कन्धावारसन्निवेशा इत्यर्थ, काण्डपटमण्डपानि—काण्डपटा —काण्ड इव पटा, "कानात्" इति प्रसिद्धा पटभेदा, तत्र सङ्कीर्णनेन इक्षुकाण्डवत्ता काण्डवत्ता वा जायते इत्यत काण्डपट इति संज्ञा, तद्विहितमण्डपानि—गृहा परिवस्त्रा,—यवनिका, वितानका,—उल्लोचा, चन्द्रातपभेदा इति यावत् यत्र तथोक्ते, ("अस्त्री वितानमुल्लोच" इत्यमर)।

(२८) कीलेति।—कीलानां—शङ्कूनां कलापै,—समूहै, आपूर्यमाणा,—भ्रियमाणा, परि पुन स्कन्धावारस्थापनार्थमिति भाव, चिपिटा,—ह्रस्वा, क्षुद्रा इति यावत, चर्मपुटा,—चर्मनिर्मितभाजनविशेषा यस्मिन तथोक्ते।

(२९) सम्भाण्डेति।—सम्भाण्डायमाना —भाण्डानि सञ्चिन्वन्त, सङ्ख्या भारान् एकत्रीकुर्वन्त इत्यर्थ, ("भाण्डात् समाचयने" (वा०) इति णिङ्, डित्वा-

( ४० ) निषादिनिश्चलानेकानेकपारोप्यमाणकोशकलसपीडापीड़सङ्कटायमानसामन्तौकसि, ( ४१ ) दूरगतदत्तदासेरकक्षिप्रप्रक्षिप्यमाणोपकरणसम्भारभ्रियमाणदुष्टदन्तिनि, ( ४२ ) तिर्य्यगानमज्जाघनिक करक्षच्छाकृष्ट-लम्बमान-परतन्त्र-तुन्दिल-तुन्दी-

दात्मनेपद, तत शानच ] भाण्डागारिक,—भाण्डपूर्णपेटकरक्षका इत्यर्थ यस्मिन् तथोक्ते। भाण्डेति।—भाण्डागारस्य—"भाण्डार" इति प्रसिद्धस्य महार्घ्यपात्रसमूहादिस्थानस्येत्यर्थ, वहनाय—प्रापणाय, स्थानान्तरनयनाय इत्यर्थ, दाप्यमाना,—नीयमाना, बहव,—अनेके बलीवाहिका,—बलीवर्दा यस्मिन् तथोक्ते। ["बली-वाहिके" इत्यत्र "नालीवाहिके" इति पाठे,—नालीवाहिका,—करिणा वाहयन्त्य-र्पयुक्ता हस्तिपकविशेषा, "मेठ" इति प्रसिद्धा। करिवरसैन्यसङ्ग्रामादिपरि-भ्रमणरताना राजकीयभाण्डागारवहननियोग. न तथा सदयपरिचायक इत्येष पाठ न समीचीन इति ध्येयम्।

( ४० ) निषादीति।—निषादिभि,—आरोहिभि, चतुरङ्गत्रियकैर्वा, तदभावे प्रसादाद्यपातात् इति भाव, निश्चलेषु—स्थिरेषु, तिष्ठत्सु इत्यर्थे, अनेकेषु—बहुषु, अनेकपेषु—हस्तिषु, [ "सुपि स्थ" ( ३।२।४ पा० ) इति सूत्रे सुपीति योगो विभज्यत, तेन सुबुपपदे पातेर्धातो क इति कप्रत्यय। "     हस्ती द्विरदोऽनेकपो द्विप" इत्यमर ] तत्पृष्ठेषु इति भाव, आरोप्यमाणाना—निधीयमानाना, कोशकलसाना—धनपूर्णकुम्भाना पीडापीडेन—सङ्कीर्णतया स्थापनेन इति भाव, सङ्कटाय-मानानि—सङ्कीर्णानि इति यावत्, सामन्ताना—राज्ञाम्, अध्यक्षिणामिति भाव, ओकासि—स्थानानि यत्र तथोक्ते।

( ४१ ) दूरेति।—दूरगते,—विप्रकृष्टस्थानस्थै, अतीव इत्यर्थो वा, दत्ते,—भारवहनकर्मणि इति यावत्, यद्वा—दूरगत—दूरगमने. दत्ता,—प्रस्ताव, दासेरक,—उष्ट्रै, क्षिप्र—सहसैव यावत् प्रक्षिप्यमाणा,—भूमौ पात्यमाना, ये उपकरणसम्भारा,—परिच्छदसमूहा, तै भ्रियमाणा,—पूरितपृष्ठा इति यावत्, दुष्टा,—दुर्दान्ता लोकाना वहने दोषकारिण इत्यर्थ, उत्कटा इति यावत् दन्तिन,—गजा यस्मिन् तथोक्ते।

( ४२ ) तिर्य्यगिति।—तिर्य्यक्—कुटिल यथा तथा, आनमन—आनतीभवन्, येन कोऽपि न पश्यतीति भाव. य जाघनिक,—जघनस्पर्शी, कामुक इति भाव, [ "जाघनिक" इत्यत्र "जाघनि" इति पाठेऽपि स एवार्थ ] तेन करेण—हस्तेन,

जनजनितजनहासे, (४३) पीड्यमानशारशारिवरत्रागुणग्राहित-मालविहारबहुदहुदुन्मदकारिणि, (४४) करिघटाघट-मानघण्टाटाङ्कारक्रियमाणकर्णज्वरे, पृष्ठप्रतिष्ठाप्यमानकण्ठा-लककदर्थितकूजत्करभे, (४५) अभिजातराजपुत्रप्रेष्यमाण-

कर्केण—करेण आकृष्टा—आकर्षितेति भावः, लम्बमाना—अपसरन्तीति भावः, अथ च परतन्त्रा—पराधीना, अपसर्तुमसमर्थेति यावत्, तुन्दिला—बृहत्कुक्षिः, स्थूलशरीरेत्यर्थः, स्थूलाङ्गी इति भावः ("तुन्दिभस्तुन्दिकस्तुन्दी बृहत्कुक्षिः पिचिण्डिलः" इत्यमरः) या कुब्जी—कुब्जा सा एव जनः,—लोकः, तेन जनितः,—उत्पादितः, जनानां—लोकानां सम्पादितानामिति भावः, हासः,—हास्यं यस्मिन् तथोक्ते, तथाभूतां कुब्जां दृष्ट्वा हसज्जने इत्यर्थः।

(४३) पीड्यमानेति।—पीड्यमाना—लोकेनातिदीर्घेण क्लिश्यमानेत्यर्थः, शारा—शबला चित्रिता इत्यर्थः, ("शारः स्यात् शबले वाच्यलिङ्गः पुंसि समीरणे" इति मेदिनी) या शारिः,—गजपर्याणम् पृष्ठदेशे स्थाप्यमानास्तरणविशेष इति यावत्, ("शारिर्नाक्षोपकरणे स्त्रियां शकुनिकान्तरे। युद्धार्थगजपर्याणे व्यवहारान्तरेऽपि च॥" इति मेदिनी) तस्याः वरत्रागुणैः,—कक्ष्यारज्जुभिः, कक्षबन्धनरज्जुभिरित्यर्थः, गृहीतानुभिया चर्मरज्जुभिरित्यर्थः ("वरत्रा वध्रा वरधा स्यात्" "नद्धी वध्री वरत्रा स्यात्" इत्यमरः) ग्राहितानि—संयमितानि मालानि—ग्रीवाणि तेषां विहारेण—बन्धेन बहुलः,—महान् बहवः—अनेके, दुदुलः,—महान्तः, उन्मादाः,—मदमत्ताः, करिणः—हस्तिनो यत्र तथोक्ते।

(४४) करीति।—करिणां—हस्तिनां, घटासु—घटनासु, श्रेणिषु इत्यर्थः, ("करिणां घटना घटा" इत्यमरः) घटमानानां—संचरमाणानां, घण्टानां—वाद्यविशेषाणां, टाङ्कारेण—टाङ्कृति निनादेन, क्रियमाणः—जन्यमानः, कर्णज्वरः,—श्रवणपीडा यस्मिन् तथोक्ते। पृष्ठेति।—पृष्ठेषु—अपरदेशेषु इत्यर्थः प्रतिष्ठाप्यमानैः—आरोप्यमाणैः, कण्ठालकैः—भाण्डभेदैः, द्रोणीभेदैः वा इत्यर्थः, ("कण्ठाला तु द्रोणीभेदे ना क्रमेलके" इति मेदिनी। स्वार्थे कप्रत्ययः) कदर्थिताः,—क्लेशिताः, अत एव कूजन्तः,—रुवन्तः, भारातिशय्यतया इति भावः, करभाः,—करभशावकाः यस्मिन् तथोक्ते।

(४५) अभिजातेति।—अभिजाते—कुलीने, [illegible] व्यापारैरिति भावः, राजपुत्रे—नृपकुमारे, प्रेष्यमाणानि—चाल्यमानानि, अत एव

कुप्रयुक्ताकुलकुलीनकुलपुत्रकलत्रवाहने, (४६) गमनवेलाविप्रलब्धवारणाधोरणान्विष्यमाणनवसेवके, (४७) प्रसादवित्तपत्तिनीयमाननरपतिवल्लभवरवाजिनि, (४८) चारुचारभटसैन्यन्यस्यमाननासीरमण्डलाडम्बरस्थूलस्थासके, (४९) स्थानपालपर्य्याण-न्यस्यमान लवणकलापोकिङ्किणी-नालीसनाथ सङ्कलिततल-

कुप्रयुक्तेन—असङ्गतसञ्चालनेन आकुलाना—व्यस्ताना, कुलीनाना—सज्जनाना, कुलपुत्रकलत्राणा—कुलीनकुलाङ्गनाना, वाहनानि—यानानि यस्मिन तथोक्ते। इदावीयाद्यमानवाविस्थनिमित्ताभावात "वाहनमाहितात" (८।४।८ पा०) इति न णत्वम ]।

(४६) गमनेति।—गमनवेलाया—यात्राकाले, विप्रलब्धा,—प्रतारिता, अविदितगमनवेला इत्यर्थ, अत एव वारणाना—हस्तिनाम, आधोरणै,—निषादिभि, पालकैरित्यर्थ, ("आधोरणा हस्तिपका हस्त्यारोहा निषादिन" इत्यमर) अन्विष्यमाणा—अनुसन्धीयमाना, नवसेवका,—नूतनभृत्या यस्मिन तथोक्ते कार्य्यानभिज्ञतया नवनियुक्ता प्राय प्रतारिता भवन्ति इत्याशय।

(४७) प्रसादेति।—प्रसादेन—राजानुग्रहेण, वित्ता,—ख्याता, ("प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुता" इत्यमर) ये पत्तय,—पदातिसैन्यानि, तै नीयमाना,—प्राप्यमाणा, चाल्यमाना इत्यर्थ नरपते,—राज्ञ वल्लभ,—प्रिय, वर,—श्रेष्ठ, वाजी—अश्व यस्मिन् तथोक्ते, [ "वरवाजिनि" इत्यत्र "वारवाजिनि" इति पाठे,—नरपते वल्लभा, वारवाजिन —वारे—अवसरे, अनुग्रहयोग्यकाले इत्यर्थ, प्राप्ता: इति भाव ("निवहावसरौ वार" इत्यमर) वाजिन यस्मिन तथोक्ते, राजप्रसादलब्धघोटकाकटमेनेति इत्यर्थ ]।

(४८) चार्व्विति।—चारु,—मनोज्ञ, चार,—गतिर्येषा तथाभूतानि, भटसैन्यानि—योधवलानि ("भटा योधाश्च योद्धार" इत्यमर) तै न्यस्यमाना,—निधीयमाना, नासीरमण्डलाडम्बरस्य—सेनाऽग्रगामिसैन्यनिवहस्य, स्थूला,—महान्त इत्यर्थ स्थासका,—अलङ्करणानि यस्मिन तथोक्ते, यद्वा,—चारुचारभटसैन्यै, न्यस्यमाना,—आत्मन एव क्रियमाणा, नासीरेण—कर्पूरेण, मण्डलाडम्बराय—सैन्यसमूहशोभावर्द्धनाय, स्थूला,—महान्त, दीर्घा इति यावत्, स्थासका,—चर्चा, तिलकविशेषा इत्यर्थ यस्मिन तथोक्ते, ("चर्चा तु चार्चिक्य स्थासक" इत्यमर)।

(४९) स्थानेति।—स्थानपालानाम्—अश्वपालाना, पर्य्याणेषु—पल्ययनेषु,

मानानेकमन्दुराविमर्दे, (५४) सज्जीकृतकरेणुकारोहाह्वानमत्वर-सुन्दरीदीयमानमुखालेपने, ( ५५ ) चलितमातङ्गतुरङ्गप्रधावित-प्राकृतप्रातिवेश्यकलोकलुण्ठ्यमाननिर्घासशस्यसञ्चये, संचरच्चेल-चक्राक्रान्तचक्रीवति, ( ५६ ) चक्रचीत्कारिगन्त्रीगणगृह्यमाण-

---

ते तन्यमाने,—क्रियमाणे, अनेकासां—बह्वीनां, मन्दुराणां—वाजिशालानां, ["मन्दिवाशि—" ( उ० १ पा० ३८ सू० ) इत्यादिना उरच्। "वाजिशाला तु मन्दुरा" इत्यमरः ] विमर्दे,—विध्वंसे यत्र तथोक्ते।

( ५४ ) सज्जीकृतेति।—सज्जीकृतासु—कृतकल्पनासु, आरोहणार्थम् आस्तरणादिना अलङ्कृतासु इत्यर्थः, ("कल्पना सज्जना समे" इति गजप्रकरणे अमरः) करेणुकासु—क्षुद्रहस्तिनीषु, ("करेणुर्गजयोषायां स्त्रिया पुंसि मतङ्गजे" इति मेदिनी) आरोहाय—आरोहणार्थमित्यर्थः आह्वाने—आकारणाय, कस्यचित् सामन्तस्येति भावः, यद्वा,—सज्जीकृतकरेणुकारोहाह्वानेन—सज्जीकृतायां करेणुकायाम् आरोहः,—निषादी, तेन आह्वानम्—उच्चैराकारणं तेन सत्वरा—त्वरावती, अलङ्कृतहस्तिनी-निषादस्ताम्त्वरेण त्वरान्विता इत्यर्थः, या सुन्दरी—कामिनी, हस्तिपकस्य इति भावः, तया दीयमानं—विधीयमानं, मुखालेपनं—सिन्दूरादिना मुखानुलेपः, करेणुकाया इति भावः यस्मिन् तथोक्ते।

( ५५ ) चलितेति।—चलितेषु—प्रस्थितेषु मातङ्गेषु—हस्तिषु तुरङ्गेषु—अश्वेषु च, प्रधावितैः—सत्वरमापतितैः प्राकृतैः,—साधारणैः, प्रातिवेश्यकलोकैः,—प्रतिवेशि-जनगणैः, समीपवासिमनुष्यैरित्यर्थः, लुण्ठ्यमानाः—क्रियमाणाः, निर्घासशस्यसञ्चयाः,—निः,—निःसृष्टाः, त्यक्ता इत्यर्थः भुक्तावशिष्टा इति यावत्, घासाः,—यवसाय, शस्यानि च—यवगोधूमादीनि च, तेषां सञ्चयाः—समूहा यत्र तादृशे। संचरदिति।—संचरता,—इतस्ततो भ्रमता, तथा चेलचक्रेण—वस्त्रसमूहेन ("चेलं वस्त्रेऽधमे त्रिषु" इत्यमरः) "चेलचक्रेण वालकसङ्घेन" इति केचित्, आक्रान्ताः,—आपूरितपृष्ठाः, समाक्रान्तपृष्ठा इत्यर्थः, चक्रीवन्तः,—गर्दभा यत्र तथोक्ते ["आसन्दीवत्—" ( ८।२।१२ पा० ) इत्यादिना मतुपि निपातनात् सिद्धम्। "चक्रीवन्तस्तु बालेया रासभा गर्दभाः खराः" इत्यमरः। "चक्रीवन्—उष्ट्रः" इति केचित् ]।

( ५६ ) चक्रेति।—चक्रैः—रथाङ्गैः, चीत्कारिणः,—उच्चैः कूजन्तः, ये गन्त्री-रथाः,—वृषभवाह्यशकटवृन्दानि, ) "गन्त्री कम्बलिवाह्यकम्" इत्यमरः। अत्र कम्बलि-वाह्यकं—वृषभवहनीयशकटमित्यर्थः ) तैः गृह्यमाणानि—आक्रम्यमाणानि, अत

प्रहतवर्त्मनि, (५७) अकाण्डदीयमानभाण्डभरितानडुहि, (५८) निकटघासलाभलुभ्यल्लभ्यमान-प्रथमप्रसार्यमाण-सारसौरभेये, (५९) प्रमुखप्रवर्त्यमानमहासामन्तमहानसे, पुरःप्रधावध्वजवाहिनि, (६०) प्रियशतोपलभ्यमानसङ्कटकुटीरकान्तरालनिःसरणे, (६१) करिचरणदलितमठिकोत्थितलोकलोष्टा-

---

एव प्रहतानि—हतानि, शकटचक्रेण सञ्जातखातानीत्यर्थः, वर्त्मानि—मार्गा यत्र तथोक्ते।

(५७) अकाण्डेति।—अकाण्डे—सहसा, दीयमानेन—आरोप्यमाणेन, भाण्डेन—द्रव्यपूर्णपात्रेण, भरितः,—पूरितपृष्ठ इति यावत्, अनड्वान्—वृषः यस्मिन् तथोक्ते, ("अनड्वान् सौरभेयो गौः" इत्यमरः)।

(५८) निकटेति।—निकटे—समीपे, घासस्य—यवसस्य, लाभेन—प्राप्त्या, लुभ्यन्तः,—लोलुपतां गच्छन्तः लभ्यमानाः,—गृह्यमाणदेहाः, चालकहस्तैर्धृताः इति भावः, प्रथमम्—अग्रे, प्रसार्यमाणाः,—प्रस्थाप्यमानाः, सारसौरभेयाः,—बलवद्बलीवर्दा यस्मिन् तथोक्ते।

(५९) प्रमुखेति।—प्रमुखे—अग्रे, प्रथममेवेत्यर्थः, प्रवर्त्यमानम्—प्रस्थाप्यमानम्, आगामिस्कन्धावारसन्निवेशस्थानमुद्दिश्येति भावः, महासामन्तानाम्—प्रधानसामन्तनृपतीनाम्, अधीननृपतिषु प्रधानानामित्यर्थः, महानसम्—रसवती, रन्धनशाला इत्यर्थः यस्मिन् तथोक्ते, ("रसवत्यां तु पाकस्थानमहानसे" इत्यमरः)। पुर इति।—पुरः,—अग्रतः, प्रधावन्तः,—प्रचलन्तः ध्वजवाहिनः,—पताकाधारिणः सैन्यविशेषा यत्र तथोक्ते।

(६०) प्रियशतेति।—प्रियशतैः,—चाटुवाक्यसमूहैः, उपलभ्यमाने—प्राप्यमाणे, सङ्कटात्—सङ्कीर्णात्, कुटीरकाणाम्—क्षुद्रगृहाणाम्, अन्तरालात्—मध्यात्, निःसरणे—मुखे, निर्गममार्गे इत्यर्थः यस्मिन् तथोक्ते, यद्वा,—प्रियशतैः,—प्रीतिकरवचनैः, उपलभ्यमाने—प्राप्यमाणे सङ्कटकुटीरकान्तरालात्—सङ्कीर्णक्षुद्रनिकेतनमध्यात् इत्यर्थः, निःसरणे—मोक्षे, मुक्तिरित्यर्थः यस्मिन् तथोक्ते ("मुखं निःसरणम्" "अथ निःसरणं मृत्युपायमोक्षेषु निर्गमे" इत्यमर मेदिन्यौ। "प्रियशतोपलभ्यमानसङ्कट—" इत्यत्र "प्रियशतोपलभ्यमानासङ्कट—" इति पाठे,—असङ्कटात्—ईषत् सङ्कीर्णात् इत्यर्थः)।

(६१) करीति।—करिणः—हस्तिनः, चरणैः,—पादैः, दलिताः,—

हन्यमानाऽऽधोरणक्रियमाणामन्दसाक्षिणि, (६२) सङ्घट्टविघट्टमानव्याधकुटीपलायमानक्षुद्रकुटुम्बके, (६३) कलकलोपद्रवद्रवद्दुर्विगणबलीवर्दविद्राणवणिजि, (६४) पुरःसरदीपिकाऽऽलोकविरलायमानलोकोत्पीडसुखप्रस्थितान्तःपुरकरिणीकदम्बके,

---

मर्दिताया, मन्त्रिकाया,—कुतूहलात्, छर्द्यते,—उद्धते। लोष्टैः,—शष्कुलीभिः, हन्ते लोष्टेन—कठिनमृत्खण्डेन आहन्यमाने,—ताड्यमाने, उष्ट्रभयात् इति भावः, आधोरणे,—हस्तिपके, ["अपि लोष्टाहन्यमानाधोरण" इत्यत्र "अपि लोष्टहन्यमानमेण्ठ" इति पाठे—लोष्टेन—मृत्खण्डेन हन्यमाने,—पीड्यमाने मेण्ठे, —"मेठ" इति प्रसिद्धे करिणां यवसतृणादिवाहिपरिचारकविशेषे इत्यर्थः, "मेण्ठे, —आधोरणे" इति केचित्] क्रियमाणा,—विधीयमाना, आसन्ना —समीपस्था, मीला इति ईर्ष्या साक्षिणि,—प्रचुरद्रष्टरि, राजद्वारे अभियोगार्थमिति भावः यत्र तस्मिन्।

(६२) सङ्घट्टेति।—सङ्घट्टेन—सङ्घर्षेण सैनिकानाम् अश्वगजादिवाहनानां वा इति भावः विघट्टमाना—भिद्यमाना, या व्याधकुटी—तृणनिर्मितकुटीरम्, ["व्याध कुटी" इत्यत्र "व्याधपर्णी" इति पाठेऽपि स एवार्थः] तस्याः पलायमानम्—पद्रवत्, क्षुद्रकुटुम्बकम्—स्वल्पपरिजनं यस्मिन् तस्मिन्।

(६३) कलकलेति।—कलकलोपद्रवेण—कोलाहलकृतोत्पातेन, द्रवन्ति—धावन्ति, द्रावयन्ति—धनानि द्रव्याणि इति यावत् येषां तथाविधा ये बलीवर्दाः —वृषाः, तैः विद्राणाः —पलायमानाः भयार्ता वा वणिजः —पण्याजीवाः यस्मिन् तस्मिन्।

(६४) पुर इति।—पुरःसरैः —अग्रगैः, दीपिकानाम्—आलोकवर्तिकानाम्, आलोकैः,—प्रभाभिरित्यर्थः विरलायमानेन—स्वल्पीभवता, अपसरतेति भावः लोकोत्पीडेन—जनसम्मर्देन सुखप्रस्थितानि—अनायासप्रचलितानि जनसम्मर्दापसरणेन अनिरुद्धमार्गत्वादिति भावः, ["पुरःसर लोकोत्पीडसुखप्रस्थिता—" इत्यत्र 'पुरःसर .. लोकोत्पीडप्रस्थिता—"इति पाठान्तरम्] अन्तःपुराणाम्—अन्तःपुरवासिनीनां नारीणामिति यावत्, करिणीकदम्बकानि—हस्तिनीवृन्दानि, अन्तःपुरिकाणां वाहनभूतानीति यावत् यस्मिन् तस्मिन्।

(९५) हयारोहाकृष्यमाणलम्बितशुनि, (९६) सम्भ्रमसचरण-निपतन-नियमनगमन-सुखायमान खक्खट स्तूयमान तुङ्गतुङ्गणगुणे, (९७) स्खलद्वेसरविसंवादिसीददाक्षिणात्यसादिनि, (९८) रजोध्वस्तजगति प्रयाणसमये, (९९) प्रतिदिशमागच्छद्भिः

---

(९५) हयेति।—हयारोहैः,—अश्वारोहिभिः, आकृष्यमाणाः,—आकार्यमाणाः, लम्बिताः,—पश्चात् स्थिताः, श्वानः,—कुक्कुराः यस्मिन् तस्मिन्, गुरुभारेण विषमं चलनेनाक्रमणदूषणाय भयाशाहाय्याय च सारमेयाणामपेक्षकत्वादिति भावः।

(९६) सम्भ्रमेति।—सम्भ्रमेण—सवेगेन, चरणनिपतनेन—पादक्षेपेण, नियमगमनेन च—धीरचलनेन इति भावः, सुखायमानाः,—सुखमनुभवन्तः, ये खक्खटाः,—हठाः, परिहासकथाप्रसङ्गे वीरवाक्य रचनाप्रापनेतारः, अन्यथा मद्भणी भ्रुखवाहिनीषु वर्णयितामभिनिवेश निष्प्रयोजनो भवेत इति मूढाशय ["सुखादिभ्यो ङन" (उ० ४ पा० ८१ सू०) इति हाड़ार्थकखखटधातोरटन्] तैः स्तूयमानाः,—प्रशस्यमानाः, तुङ्गानाम्—उन्नतानाम्, तुरङ्गाणाम्—अश्वानाम्, तदर्थवादिभिर्जातानां वा, ["तुङ्ग" स्थले "तङ्गण" इति पाठान्तरम्] गुणाः,—गतिसौष्ठवाद्युत्कर्षविशेषाः यस्मिन् तस्मिन्।

(९७) स्खलदिति।—स्खलन्तः—स्फुटन्तः, पथ्यनि पतितानीति भावः वेसराः—अश्वतराः, विसंवदन्ति—परिशीलयन्ति, अनुशोचन्तीति भावः तस्मिन् विसंवादिनि,—अनुशोचन्तः इत्यर्थः, द्रुतगमनाक्षमत्वेन अश्वीयसङ्घभ्रष्टत्वात्, दक्षिणापथे वेसरा न वर्तन्ते इत्यनभ्यस्तवेसरारोहणतया द्रुतगमनाक्षमत्वेन पश्चात् पतनात् पथिक्लान्तिसहकारा इति भावः, अत एव सीदन्तः,—अवसादं गच्छन्तः, दुःखिता इति भावः, दाक्षिणात्याः,—दक्षिणापथजाताः, सादिनः,—अश्वारोहाः यस्मिन् तस्मिन्, ("अश्वारोहास्तु सादिनः" इत्यमरः)।

(९८) रज इति।—रजोभिः,—धूलिभिः ध्वस्तानि—विनष्टानि, अदृश्यतां गतानीत्यर्थः, आपूरितानीति यावत् जगन्ति—भुवनानि यस्मिन् तस्मिन्। ["रजोध्वस्तजगति" स्थले "रजोजग्धजगति" इति पाठे,—रजोभिः,—धूलिभिः, जग्धानि—ग्रस्तानीत्यर्थः आच्छन्नानीति यावत्, जगन्ति—भुवनानि यत्र तस्मिन्]। इह सैनिकधूलिभिर्जगतामाच्छादनमित्यसम्बन्धे सम्बन्धत्वाध्यवसायसिद्धे तद्रूपातिशयोक्तिः सान्दर्भिकस्वभावीकरणम्।

(९९) प्रतिदिशमागच्छद्भिः,—समन्तात् प्रसृतैः, ["अव्ययं—" (२।१।६ पा०)

गजवधूसमारूढैः, आधोरणोर्द्धध्रियमाणहेमपत्रभङ्गभारशार्ङ्गैः, अन्तरासनासीनान्तरङ्गगृहीतासिभिः, ताम्बूलिकविधूयमानचामरपल्लवैः, (७०) पश्चिमासनिकार्पितभस्त्राभरणभिन्दिपालपूलिकैः, (७१) पत्त्रलताकुटिलकलधौतनलकपल्लवितपर्याणैः, (७२) पर्याणपक्षकपरिक्षेपपट्टिकाबन्धनिश्चल-

---

इत्यादिना प्रतियोगे वीप्सायामव्ययीभावः ] गजवधूसमारूढैः,—करिणीपृष्ठस्थैः । आधोरणेति ।—आधोरणैः,—हस्तिपालैः, ऊर्द्धे—उपरिभागे, आरोहिणां पत्त्रप्रतिरोधार्थं पृष्ठोपरि स्थापितस्य धातुनिर्मितस्य वेदनीविशेषस्य "हावोदा" इति प्रसिद्धस्य इति भावः, ध्रियमाणानि—स्थाप्यमानानि हेमपत्रभङ्गेन—काञ्चनपत्ररचनया, भाराणि—चित्राणि, शार्ङ्गाणि—धनूंषि येषां तैः, [ "शार्ङ्गं कार्मुकमात्रेऽपि विष्णोरपि शरासने" इति मेदिनी । "आधोरणोर्द्ध—"इत्यत्र "आधोरणैरूर्द्ध—" इति व्यस्तपाठे,—प्रतिदिशमागच्छद्भिः गजवधूसमारूढैराधोरणैरित्येकवाक्यतयाऽन्वयः, एतत्पक्षे सापेक्षत्वेऽपि गमकत्वात् समासः ]। अन्तरेति ।—अन्तरासनेषु—मध्यवर्तिषु पीठेषु, समीपेषु इति भावः, आसीनैः,—उपविष्टैः, अन्तरङ्गैः,—स्वजनैः, गृहीताः,—धृताः, असयः,—करवालाः येषां तैः । ताम्बूलिकेति ।—ताम्बूलिकैः—ताम्बूलदायिभिः परिजनैः [ "तदस्य पण्यम्" ( ४।४।५१ पा० ) इति ठक् ] विधूयमानाः,—सञ्चाल्यमानाः चामरपल्लवाः,—किसलयकोमलबालव्यजनानि येषां तैः ।

(७०) पश्चिमेति ।—पश्चिमासनिकाया—पश्चाद्वर्तिनि आसने, अर्पितानि—स्थापितानि, भस्त्राभरणानि—तूणभेदा इति यावत्, भिन्दिपालाः,—हस्तक्षेप्यनालिकाऽस्त्रविशेषाः, ("तोमरा" इति केचित्, तत् कोषकारासम्मतायत्त्वादयुक्तम्) तेषां पूलिकानि—समूहा येषां तैः ।

(७१) पत्त्रेति ।—पत्त्रलतया—पताकलिरचनया, कुटिलानि—भङ्गिमन्ति, कलधौतनलकैः—काञ्चननिर्मितनलाकारैः, पल्लवितानि—रञ्जितानि इति भावः, पर्याणानि—पल्ययनानि आसनविशेषा इति भावः येषां तैः ।

(७२) पर्याणेति ।—पर्याणस्य—पल्ययनस्य, पक्षकः,—प्रान्तः, पार्श्वं वा, ("पक्षकस्तु पुमान् पार्श्वद्वारे च पार्श्वमात्रके" इति मेदिनी), यद्वा,—पर्याणपक्षकः,—पर्याणालङ्कृतहस्तिपार्श्वभागः, ("पक्षभागः पार्श्वभागः" इति गजावयवनिरूपणे अमरः) तस्य परिक्षेपपट्टिका—वेष्टनपट्टी, तस्या बन्धेन—संयमनेन, निश्चलम्—अचञ्चलम्,

वर्त्तमेचकैः कञ्चुकैश्च, उपचितचीनचोलकैश्च, (७७) तारमुक्तास्तवकित स्तवरकवारबाणैश्च, नानाकषायकर्बुरकूर्पासकैश्च, (७८) शुकपिच्छच्छायाऽऽच्छादनकैश्च, (७९) व्यायामालुप्तपार्श्वप्रदेशप्रविष्टचारुशस्त्रैश्च, (८०) गतिवशवेल्लितहारलतालग्नलोलकुण्डलोन्मोचनप्रधावितपरिजनैः, (८१) चामीकरपत्राङ्कुर-

---

देहेषु—शरीरेषु विराजमाना,—शोभमाना, राजावर्त्तक—इत्यपाषाणवत् मेचका,—श्यामला ते, कञ्चुके—वर्माभि, उपलक्षिते इति योजनीयम्, [ "इत्थम्भूत—" (२।३।२१ पा०) इत्यादिना तृतीया ]। उपचितेति।—उपचित—शोभितम्, [ "उपचितम्" इत्यत्र "अपचितम्" इति पाठे,—पूजितम्, उत्कर्षतो वर्त्तमित्यर्थः, यद्वा,—अपचितं—व्ययित, क्षयितमित्यर्थः, कञ्चुकघर्षणादिति भावः। "भवेदपचिति पूजाव्ययनिष्कृतिहानिषु" इति मेदिनी ] चीन—चीनदेशीयम्, सूक्ष्ममिति यावत्, चोलक—वसन येषां ते।

(७७) तारेति।—तारा,—विशदा, मुक्ता,—मौक्तिकानि, ( "तारो वानरभिन्मुक्ताविशदो शुद्धमौक्तिके" इति मेदिनी ) ताभि स्तवकिता,—सञ्जातपुष्पगुच्छाकारा, स्तवरका —वस्त्रभेदा वारबाणा,—कञ्चुकाश्च येषां ते। नानेति।—नानाकषायैः—विविधनिर्य्यासविशेषैः, रञ्जनसाधनैरित्यर्थः, कर्बुरा,—चित्रा, रञ्जिता इत्यर्थः, कूर्पासका,—चोलका, वस्त्रभेदा इति यावत येषां ते।

(७८) शुकेति।—शुकस्य—पक्षिभेदस्य पिच्छ—बर्हं पक्ष इत्यर्थः, तस्य छाया—कान्तिरिव कान्ति येषां तादृशानि आच्छादनानि—उत्तरीयाणि येषां ते, हरितवर्णोत्तरीयैरित्यर्थः।

(७९) व्यायामेति।—व्यायामेन—अङ्गचालनाविशेषेण, आलुप्तेषु—प्रमृष्टेषु, क्षीणेषु इत्यर्थः, पार्श्वप्रदेशेषु—कक्षशरीरपार्श्वभागेषु, कटिदेशेषु इति यावत प्रविष्टानि—स्थितानि इत्यर्थः, चारूणि—रम्याणि शस्त्राणि—आयुधानि येषां तैः।

(८०) गतीति।—गतिवशेन—द्रुतगत्येति यावत् वेल्लितायां—दोलितायां, हारलतायां—मुक्ताऽऽवलीयष्ट्यां, शिर स्थितायामिति भाव, लग्न—समजत, [ "लग्न—" इत्यत्र "गलत—" इति पाठे,—पतत, सङ्क्रममानमित्यर्थः ] अत लोल—तरल, गतिवशादेव इति भाव कुण्डल—कर्णभूषण, तस्य उन्मोचनाय—निष्क्रामणाय, प्रधावित,—द्रुतोपगत इत्यर्थः, परिजन,—परिचारक इति यावत् येषां तैः।

(८१) चामीकरेति।—चामीकर,—सौवर्ण इत्यर्थः, पत्राङ्कुर,—दलप्ररोह,

कर्णपूरकविघट्टमानवाचालवालपाशैश्च, (८२) उष्णीषपट्टावष्टब्धकर्णोत्पलनालैश्च, (८३) कुङ्कुमरागकोमलोत्तरीयान्तरितोत्तमाङ्गैश्च, (८४) चूडामणिखण्डखचितक्षौमचोलैश्च, (८५) मायूरपत्रायमाणशेखरोड्डीयमानषट्पदपटलैश्च, (८६) मार्गागतशारिकाशारिवाहवेगदण्डैः,

---

यस्य तथाभूतः, यत्र कर्णपूरकं—कर्णभूषणं, तत्र विघट्टमानः—सङ्घर्षं गच्छन् अत एव वाचालः,—मुखरितः, "ठठह्" इति शब्दं कुर्वन् इत्यर्थः, वालपाशः,—चमरकर्णाभरणविशेष येषां तैः ।

(८२) उष्णीषेति।—उष्णीषपट्टेन—शिरोवेष्टनवस्त्रेण, ("अप्युष्णीष : शिरोवेष्ट-किरीटयोः" इत्यमरः) अवष्टब्धानि—आक्रान्तानि, संलग्नानीत्यर्थः, कर्णोत्पलनालानि—कर्णभूषणीकृतनीलोत्पलदण्डानि येषां तैः ।

(८३) कुङ्कुमेति।—कुङ्कुमेन—काश्मीरजेन रागः,—रञ्जनं, तेन कोमलैः,—मृदुलैः, मनोहरैरिति यावत् उत्तरीयैः,—उपरवस्त्रैः, अन्तरितम्—वेष्टितम् उत्तमाङ्गम्—शिरः येषां तैः ।

(८४) चूडामणीति।—चूडामणीनां—शिरोरत्नानां, खण्डेन—शकलेन, खचितं—बद्धं संयुक्तमित्यर्थः, क्षौमचोलं—दुकूलवसनं, शिरःस्थमिति भावः येषां तैः ।

(८५) मायूरेति।—मयूरस्य इदं मायूरं—मयूरसम्बन्धि इत्यर्थः ["तस्येदम्" (४।३।१२० पा०) इत्यण्] पत्रं—पिच्छमित्यर्थः, तदिव आचरत्, मयूरपिच्छवत् दृश्यमानमित्यर्थः, यत् शेखरं—शिरोभूषणं, तस्मिन् उड्डीयमानानाम्—उड्डयनं कुर्वतां, षट्पदानां—भ्रमराणां, पटलं—समूहः येषां तैः । ["मायूरपत्रायमाणशेखरोड्डीयमानषट्पदपटलैः" इत्यत्र "मायूरपत्रायमाणशेखरषट्पदपटल" इति पाठे, —मायूरपत्रायमाणशेखरे षट्पदपटलम्, उड्डीयमानमिति भावः येषां तैः ]।

(८६) मार्गागतेति।—मार्गागताः,—पथिप्राप्ताः, शारिकाशारिवाहवेगाभ्याम्—हस्तमिदानाः, दण्डाः,—लगुडाः यैः तथोक्तैः, यद्वा,—मार्गागतानाम्—पथि द्रुतगमनार्थं आनीतानामश्वानां, अश्वपालैरिति भावः, शारिकाशारिवाहानां—शारिषु —ग्रहरक्ष-

, याः कशाः —चर्मताडन्यः ताः वहन्ति —प्रभवः, प्रहरणचादिति भावः

ताडनाः, ये वाहाः,—अश्वाः, तेषां वेगार्थे—द्रुतचालनार्थे दण्डाः,—ताडन्यः, हस्ते इति भावः येषां तैः, यद्वा,—मार्गागताः,—मार्गमनुसरन्तः, प्रमत्तत्वादिति भावः, शारः,—द्यूतार्थं पर्याणमेव शारिका, ("शारिर्नाऽक्षोपकरणे स्त्रियां शकुनिकान्तरे।

(८७) पुरश्चञ्चच्चामरकिर्मीरिताडम्बरवर्ममण्डलमण्डनोड्डीयमानचटुलडामरचारभटभरितभुवनान्तरैः, (८८) आस्कन्दत्काम्बोज-वाजिशत शिञ्जान-जातरूपायाण रव मुखरित दिङ्मुखैश्च, (८९) निर्दयप्रहतलम्बापटहशतपटुरवबधिरीकृतश्रवणविवरैः, (९०) उद्घोष्यमाणनामभिः, उन्मुखपादातप्रतिपाल्यमानाम्बापातैः राजभिः आपुपूरे राजद्वारम् ।

---

युद्धादेगजपर्याणे व्यवहारान्तरेऽपि च ॥" इति मेदिनी ) तस्याः आरि,—श्रेणि येषां ते तथोक्ता, [ "स्त्रिया,—" (६।३।३४ पा० ) इत्यादिना पुंवद्भाव ] ते च ते धाटाः, तथोक्ता, धगदण्डाः,—तरुणहस्तिन येषां तथोक्ते ।

(८७) पुर इति ।—पुरः,—अग्रतः, चञ्चद्भिः,—चलद्भिः, चामरैः,—बालव्यजनैः, किर्मीरितानि—शबलानि आडम्बराणि—आडम्बरदेशोद्भवानि, वर्ममण्डलानि—वर्मनसमूहा एव, मण्डनानि—भूषणानि, बहुस्वर्णसुवर्णखचितत्वादिति भावः, तैः सह उड्डीयमानानि—नभसि उत्प्लवमानानि, चटुलानि—तरलानि, डामराणि—विशालानि, उत्कटानि इत्यर्थः, चारभटानि—तदाख्यदेशोत्पन्नसैनिकानि, गुप्तपुरुषरूपसैनिकानि इत्यर्थो वा तैः भरितम्—आपूरितं भुवनान्तरं—भूमण्डलावकाशः येषां तथोक्तैः ।

(८८) आस्कन्ददिति ।—आस्कन्दताम्—आक्रामताम्, वल्गतामित्यर्थः, काम्बोजवाजिनाम्—काम्बोजदेशीयानाम् अश्वानां शतानि—समूहा इत्यर्थः, तेषु शिञ्जानानि—रणन्ति, यानि जातरूपाणि—सौवर्णानि, आयाणानि—अश्वभूषणविशेषाः, [ अत्र "आयान—" इति पाठः लिपिकरप्रमादपतित इति प्रतीयते, "आदान—" इत्येव सङ्गतः पाठः, "आदानं ग्रहणेऽपि स्यादलङ्कारे च वाजिनाम्" इति मेदिनीवचनात् ] तेषां रवैः—शब्दैः, मुखरितं—ध्वनितं दिङ्मुखं—ककुभान्तरालमित्यर्थः येषां ये वा तैः ।

(८९) निर्दयेति ।—निर्दयं—दृढं यथा तथा, प्रहतानां—ताडितानां, लम्बापटहानां—देशविशेषे "तामिला" इति प्रसिद्धानां पटहाख्यवाद्यविशेषाणां शतानि—समूहा इत्यर्थः, तेषां पटुरवैः—विकटशब्दैः, बधिरीकृत—श्रवणशक्तिहीनीकृतं, पूरितमिति यावत् श्रवणविवरं—कर्णरन्ध्रं येषां यैः वा तैः ।

(९०) उद्घोष्यमाणेति ।—उद्घोष्यमाणं—कीर्त्यमानं, वन्दिभिरिति भावः, नाम—आख्या येषां तैः, राज्ञां बहिर्गमनसमये वन्दिनां नामोच्चारस्य प्रथा

उदिते च भगवति दिनकृति राज्ञः (८१) समायोगग्रहणसमयशंसी सस्तान संनाहपटहो मुहुर्मुहुः। (८२) अथ न चिरादिव प्रथमप्रयाण एव दिग्विजयाय दिग्गजसमागममिव (८३) गमनविलोलकर्णतालदोलाविलासैः कुर्व्वाणया करेणुकया उह्यमानः, (८४) वैदूर्यदण्डविकटेन उपरि

---

क्रमव्यत्यासादिति भावः। अभिमुखेति।—अभिमुखे,—अग्रमुखे, आदेशश्रवणार्थमिति भावः, पादातं,—पदातिसैन्ये, ["तस्य समूहः" (४।२।३७ पा०) इत्यण्] प्रतिपाल्यमानं,—प्रतीक्ष्यमाणम्, आज्ञापनं,—आदेशवचनमिति यावत् येषां तैः, राजभिः,—सामन्तनृपतिभिरित्यर्थः, राजद्वारं—हर्षशिबिरप्रवेशतोरणम्, आपुपूरे—व्याप्तमित्यर्थः। इह "ततो रटत्पटहे" इत्यारभ्य एतदवधि हर्षशिबिरद्वारे समाश्रितसामन्ताद्यधीनां यथायथकर्मकविवरणविच्छित्तिमय स्वभावोक्तिरलङ्कारः, यद्वा, इत्यनुप्रासातिशयोक्त्यादय अङ्गानि इत्यवधेयम्।

(८१) समायोगेति।—समायोगः—सन्निधानम्, सन्नाह इति यावत्, कवचादिरिति भावः, यद्वा,—समायोगः—प्रयोजनम्, प्रयोजनीयं वस्तु इत्यर्थः, यात्रिकपर्यटनादादिकमिति भावः ("समायोगस्तु सयोगे समवाये प्रयोजने" इति मेदिनी) तस्य ग्रहणं—स्वीकारः, परिधानादिकं इत्यर्थः, तस्य समयः,—कालः, तं शंसति—सूचयतीति तथोक्तः, सन्नाहपटहः,—संहननकम्बुः, सस्तानं—दध्वान, यात्रासमय समागतः, अत एव सज्जितो भव इति ज्ञापनार्थं अङ्गध्वनि चक्रे तत्कर्माधिकृता इति निष्कर्षः।

(८२) अथेति।—"अथ" इत्यस्य "दिग्विजयाय निर्जगाम नरपतिः" इति परेण सम्बन्धः। ["न चिरादिव" इत्यत्र समस्तपाठे नञर्थकनशब्देन "सह सुपा" (२।१।४ पा०) इति समासः]। प्रथमप्रयाणे एव—प्रथमप्रस्थानेऽपि, दिग्गजसमागममिव—ऐरावतसङ्गमिव।

(८३) गमनेति।—गमनेन—गतिवशादित्यर्थः, विलोलाः,—चञ्चलाः, कर्णतालाः,—कालतालवत् कर्णदेशाः, साम्यमनुसृत्य चालितकर्णा इत्यर्थो वा, तेषां दोलाविलासैः,—कम्पनविभ्रमैः। करेणुकया—हस्तिन्या, उह्यमानः—नीयमानः, प्रयुक्तकरिणीपृष्ठसमारूढ इत्यर्थः।

(८४) वैदूर्येति।—वैदूर्यं—विदूरपर्वतजो मणिः, तस्य दण्डः,—तन्निर्मितनालं इत्यर्थः, तेन विकटम्—उच्चतया तेन।

(९५) प्रत्युप्तपद्मरागखण्डखचिततया सूर्योदयदर्शनकोपादिव लोहितायतया ध्रियमाणेन मङ्गलातपत्रेण, (९६) कदलीगर्भाभ्यधिकम्रदिम्ना नवनेत्रनिर्मितेन द्वितीय इव भोगिनाम् अधिपतिः अङ्गलग्नेन कञ्चुकेन, (९७) अमृतमथनदिवस इव क्षीरोदफेनपटलधवलाम्बरवाही, बाल इव पारिजातपादप इव आखण्डलभूमिम् आरूढः,

---

(९५) प्रत्युप्तेति।—प्रत्युप्तैः,—निबद्धैः, पद्मरागाणां—रक्तमणिविशेषाणां, खण्डैः—शकलैः, खचितं—घटितं, तस्य भावः तत्ता तया सूर्योदयदर्शनकोपादिव—भास्करप्रकाशावलोकनक्रोधादिव, लोहितायतया—लोहितरूपधारणेनेत्यर्थः, [ अलोहितो लोहितो भवतीत्यर्थे "लोहितादिडाज्भ्यः क्यष्" (३।१।१३ पा०) इति क्यषि, लोहितायनामधातोः कर्त्तरि पचादित्वादचि लोहिताय इति सिद्धे, ततः भावे तलि रूपम्, "लोहितायमानेन" इति प्रकाश्यपाठस्तु अपसौकर्य्यात् समीचीन एवेति प्रतीयते ] ध्रियमाणेन—धार्यमाणेन छत्रधारिणेति शेषः, मङ्गलातपत्रेण—राजलक्षणच्छत्रेण, [ "इत्थम्भूतलक्षणे" (२।३।२१ पा० ) इति तृतीया, करणे वा ]।

(९६) कदलीति।—कदली—रम्भातरुः, तस्याः गर्भः,—उदरम् अभ्यन्तरभाग इत्यर्थः तस्मादभ्यधिकः,—अतिशयः, म्रदिमा—मार्दवं यस्य तेन, नवनेत्रनिर्मितेन—नूतनपट्टवस्त्रविशेषकल्पितेन, ( "नेत्रं मथिगुणे वस्त्रभेदे मूले द्रुमस्य च" इति मेदिनी ) अङ्गलग्नेन—देहसक्तेन, कञ्चुकेन—वर्मणा, गात्रावरणविशेषेण इत्यर्थः, निर्मोकेण च, ("कञ्चुको वारबाणे स्यान्निर्मोके कवचेऽपि च। वर्धापकगृहीताङ्गस्थितवस्त्रे च चोलके॥" इति मेदिनी ) भोगिनाम्—सर्पाणाम् अधिपतिः,—प्रभुः, अनन्तनाग इत्यर्थः।

(९७) क्षीरोदेति।—क्षीरोदस्य—दुग्धसागरस्य, फेनपटलम्—डिण्डीरपुञ्जः, तद्वत् धवलम्—शुभ्रम्, अम्बरम्—वस्त्रम् अन्तरीयञ्च वहति—परिधत्ते इति तथोक्तः, अत एव अमृतमथनदिवस इव—अमृताय—पीयूषाय, मथनं—विलोडनं, क्षीरोदस्येति भावः, तद्दिवस इव—तद्दिनमिव, परिदृश्यमान इति शेषः। बाल एव—क्षीरोदधिनवोद्भूत इत्यर्थः, उत्तरोत्तरसमृद्धिमानिति भावः, एवञ्च अमृतमथनकालिकत्वज्ञापनाय अनुधर्म्यसाम्यप्रतिपत्तये पारिजातपादपे बालत्वमध्यव्यपदेशः इत्यवगन्तव्यम्। आखण्डलभूमिम्—इन्द्रस्थानं, नन्दनोद्यानमित्यर्थः, इन्द्रसङ्गमनेपथ्यञ्च, ऐरावतापम-

(९८) विधूयमानचामरमरुद्विधूतकर्णपूरकुसुममञ्जरीरजसा सकलभुवनवशीकरणचूर्णेन इव दिशः कुर्वन्, (९९) अभिमुखचूडामणिघटमानपाटलप्रतिबिम्बम् उदयमानं सवितारमपि पिबन् इव तेजसा, (१००) बहलताम्बूलसिन्दूरच्छुरितया विलम्भमान इव दोषान्तराणि ओष्ठमुद्रया, (१०१) अनुरागस्य स्फुरन्महाहारमरीचिचक्रवालानि चामराणि इव दिशोऽपि

---

गजवराधिष्ठितत्वादिति भावः, यद्वा,—आखण्डलभूमिम्—इन्द्रस्थानम्, राजेन्द्रमर्यादा सित्ययं, भूलोकाधिकारित्वात् इति भावः, पा.८८,—अधिष्ठित ।

(९८) विधूयमानेति।—विधूयमान्यो—चाल्यमानाः चामर्यो,—चाव व्यजनयो, मरुता—वायुना विधूताया—कम्पिताया कर्णपूरकुसुममञ्जर्याः,—कर्णभूषणीकृतपुष्पवल्लर्याः, रजः—पराग तेन, सकलेति।—सकलानां—कृत्स्नानां, भुवनानां—जगतां वशीकरणाय—जयाय चूर्णे—रज, मन्त्रपूतौषधविशेष इति यावत् तेनेव कुर्वन्—व्याप्नुवन् ।

(९९) अभिमुखेति।—अभिमुखे—सम्मुखवर्तिनि स्वस्य चूडामणौ—शिरोरत्ने, घटमान—प्रतिफलन पाटलं—श्वेतरक्तम् अरुणवर्णमित्यर्थः प्रतिबिम्बं—प्रतिच्छाया यस्य तम्, उदयमानम्—उद्गच्छन्तं, सवितारं—सूर्यं, सूर्यादपि अधिकतेजस्वीति भाव ।

(१००) बहलेति।—बहलेन—प्रभूतेन, ताम्बूलसिन्दूरेण—पर्णरागेण छुरित—व्याप्ता, रञ्जिता इत्यर्थः तया, ओष्ठमुद्रया—रदनच्छदविभागेन। विलम्भमान इव—वितीर्णयन् इवेत्यर्थ, आत्मान मज्जयित मुद्राप्रदर्शनेन दोषावस्थान् प्रतीभयत्रिवेति भाव, एतेनास्य भाविसप्तद्वीपाधिपतित्व प्रकटीकृतम्। केचित्तु—"विलम्भमान अर्थिसात् कुर्वन्। मुद्रया हि ससिन्दूरया विलभ्यते" एवं व्याख्यानयन्ति, व्याख्या भेदानेन चास्य अतीव दातृत्वम् अखण्डभुवनशासकत्वञ्च सूचितम्।

(१०१) स्फुरदिति।—स्फुरन्—विकसन् यो महाहार—उत्कृष्टमुक्तावली कलाप, तस्य मरीचीनां—मयूखानां, चक्रवालानि—मण्डलानि अनुरागस्य—प्रीते, हर्षं प्रतीति शेष, चामराणि—वालव्यजनानीव दिशोऽपि—दिग्वध्वोऽपीति यावत्, अनुरागात् दिग्वध्वोऽपि त वीजयन्त्य इवाभासन्त भाव, एतेनास्य सर्वदिगाधिपत्य सूचितम्।

ग्राहयन्, (१०२) राजकेक्षणोत्क्षिप्तविभागया त्रीन् अपि लोकान् करदानाय आज्ञापयन् इव सविभ्रमं भ्रूलतया, द्राघीयसा बाहु-प्राकारेण परिक्षिपन् इव रिरक्षया सप्तापि सागरमहाखातान्, अखिलमिव क्षीरोदमाधुर्य्यम् आदाय उद्गतया लक्ष्म्या समुपगूढं गाढम्, अमृतमय इव (१०३) पीयमानः कुतू-हलोत्तानकटकलोकलोचनसहस्रैः, स्नेहार्द्रेषु राज्ञां हृदयेषु गुणगौरवेण मज्जन्निव, लिम्पन्निव सौभाग्यद्रवेण द्रष्टॄणाम्,

(१०२) राजकेति।—राजकानां—राजन्यानाम् ईक्षणे—दर्शने उत्क्षिप्तः,—उन्नमितः विभागः—तृतीयो भागः यस्याः तथाभूतया [क्वचित् सकलसमुद्धाना पुरस्तादर्थमपि दृश्यते] सविभ्रमं—सविलासं, हेलयैव इति यावत्, एतेन तस्य त्रैलोक्याधिपत्यफलं प्रकटीकृतम्। द्राघीयसा—अतिदीर्घेण ["द्विवचन—" (५।३।५७ पा०) इत्यादिना ईयसुन्, ततः "प्रियस्थिर—" (६।४।१५७ पा०) इत्यादिना दीर्घस्य द्राघादेशः] बाहुप्राकारेण—भुजप्राचीरेण, रिरक्षया—रक्षितुमिच्छया, सुप्रासनगुणेन स्वात्मनः चतुरक्षीकरणेच्छया इत्यर्थः, [लिपिकरप्रमादात् उकारलोपेन रिरक्षयैत्यत्र रिरक्षया जाता तत्र रक्ष्यते सन्नन्तात् भावे अ प्रत्यये टापि च रूपमेतदिति ध्येयम्।] सागरमहाखातान्—सागराः—समुद्रा एव, महान्ति—दुस्तराणि इत्यर्थः, खातानि—पुष्करिण्यः, प्राकारवेष्टनार्थं येषां तान् ("पुष्करिण्यान्तु खातं स्यात्" इत्यमरः) दीर्घानपि अपि परिक्षिपन्निव—परिवेष्टयन्निव, एतेनास्य आसमुद्रक्षिति-पालत्वं सूचितम्। अखिलं—सम्पूर्णं, क्षीरोदमाधुर्य्यं—दुग्धसमुद्रस्य रमणीयताम्, आदाय—गृहीत्वा उद्गतया—उत्थितया। गाढम्—अशिथिलं यथा तथा, समुपगूढः,—समालिङ्गितः, दुग्धधवलकान्तिः लक्ष्मीकान्तः इति भावः।

(१०३) कुतूहलेति।—कुतूहलेन—आश्चर्यरूपमिदमिति कौतुकेन उत्तानानाम्—उच्चितानां कटकलोकलोचनानां—सैनिकजननयनानां, सहस्राणि—समूहा इत्यर्थः तैः, पीयमानः,—सादरं दृश्यमानः इति भावः। स्नेहार्द्रेषु—स्नेहेन—प्रीत्या, आर्द्रेषु—सरसेषु प्रीतिरससिक्तेषु इत्यर्थः, राज्ञां—सामन्तनृपाणां, हृदयेषु—अन्तःकरणेषु, गुणगौरवेण—गुणानां—शौर्यदाक्षिण्यादीनां गौरवेण—भारेण मज्जन्निव—बुडन्निव अन्तःप्रविशन्निवेत्यर्थः गुणानुरक्तानां राज्ञां हृदये कृतपदासनः इति भावः, भारवद्वस्तु अपि आर्द्रस्थानेषु मज्जतीति दृश्यते। द्रष्टॄणां—दर्शनकर्तॄणां जनानां, सौभाग्यद्रवेण—सौभाग्यं—शुभादृष्टं, तद्दर्शनहेतुभूतमिति भावः, तदेव

राग्राय इव सुशकुनसम्पादनाय चेलुः। (१११) मेघायमानरेणुमेदुरं मन्दिरशिखण्डिन इव खमुड्डीयमानाः कोमलकल्पपादपपल्लवचन्दनमालाकलापा इव आबध्यन्त। (११२) दिग्द्वारेषु दिक्पालैः प्रणम्यमानश्च, नेत्रविभागैश्च कटाक्षैश्च समग्रेक्षितैः भ्रूवल्गितैश्च अर्धहसितैश्च परिहासैश्च छेकालापैश्च

---

नृपतिवृन्दे, चलनमति—प्रणमति। प्रभामुखाम—आशीर्वर्षिणाम्। अधाश्च,—अधःप्रसरन्। तिर्यञ्च,—पार्श्वेषु चरन्। उदञ्च,—उद्गच्छन्, ऊर्ध्वं प्रसरन् इत्यर्थः। चपल,—स्फुरन्। आवरायव इव—नीराजनाच्छायाविसमूहा इव, सुशकुनसम्पादनाय—शुभनिमित्तप्रकटनाय, चेलु,—चलन्ति स्म। विजिगीषुराज्ञे, वामपार्श्वे विजयलक्ष्मीदिवसे सर्वत्र विजयकामनया इष्यते इति व्यवहारः।

(१११) मेघेति।—मेघायमाना,—मेघा इव आचरन्त, अन्तरीक्षाच्छादनादिति भाव, ये रेणव,—रजांसि, तै मेदुर—स्निग्ध, सघनाच्छन्नमिति भाव, ["भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः" (३।१।१२ पा०) इति सूत्रम्] खम—आकाशम्, उड्डीयमाना,——उद्गच्छन्त, मयूरा इति शेष, मन्दिरशिखण्डिन इव—गृहमयूरा इव, परिभ्रमन्त इति शेष, सितपीतनीलादिविविधवर्णाना मणीना प्रभापटलानि मयूरपिच्छकलापा इव परिलक्ष्यन्ते इति निष्कर्ष, तथा कोमलेति।—कोमला—मृदुला, कल्पपादपस्य—देवतरुविशेषस्य ये पल्लवा—किसलया, तेषु चन्दनमालाकलापा इव—चन्दनधाराणि इव, आबध्यन्त—गुम्फिता, समस्तभवनं इत्यर्थ, स्वयमेवेति शेष।

(११२) दिग्द्वारेषु—दिशाद्वारेषु इत्यर्थ दिक्पालै,—इन्द्रादिभि आशापालकसामन्तप्रवीरैश्च, इत्याशया माङ्गल्यसम्पादनाय नानादिग्भ्य विदिग्भ्यश्च समुपस्थितैरिति भाव, अनेन भूलोकनाथस्य दिक्पालत्वेनावाप्ता महाप्रतापवत्ता गम्यते, प्रणम्यमान,—अभिवन्द्यमानश्च, दशानामपि दिशामधिपस्य सम्राजो हर्षस्य समीपे एकैकदिगधिपाला सामन्ता नरेन्द्रादयो देवविग्रहधारिणो राजानो वा प्रणामम् अवश्यकर्त्तव्यमधारयदिति भाव। नेत्रविभागै,—विभागो भौमितदृष्टिभिरित्यर्थ, सङ्कुचितदर्शनैरित यावत् कामिनीभिश्च इति शेष, एवमुत्तरत्र, कटाक्षै,—अपाङ्गदर्शनै, वक्रदृष्टिभिरित्यर्थ, समग्रेक्षितै—सम्पूर्णदर्शनै पूर्णोन्मीलितदृष्टिभिरित्यर्थ, नर्तितपत्रराजान इति भाव भ्रूवल्गितै,—भ्रूभङ्ग्या वल्गितै, प्रसन्नदृष्टिभिरिति भाव, ["भ्रूवल्गितै" इत्यत्र "भ्रुवल्गितै" इति पाठे—भ्रुवा—भ्रूविक्षेपेण, वल्गितै,—

कुशलप्रश्नैश्च प्रतिप्रणामैश्च उन्मत्तभूर्वीक्षितैश्च आघ्राताननैश्च आक्रोशन् इव मानमयान् प्राणान् प्रणयदाने. प्रवीराणां वीरो यथाऽनुरूपं विबभाज राजकम् ।

अथ प्रस्थिते राजनि (११३) कलकलवस्तदिङ्नागसूत्कार-रव इव दूरस्ततः तस्तार तारतरः तूर्याणां प्रतिध्वनः आशातटेषु। दिग्गजेभ्यः प्रकुपितानां विप्रसुतानां करिणां मदप्रस्रवणवीथीभिः अलिकुलकालीभिः कालिन्दीवेणिका-सहस्राणि इव सस्यन्दिरे। (११४) सिन्दूररेणुराशिभिः अरुणाय-

---

मनोभिः, उन्नतैकभ्रूभिरित्यर्थः ] भ्रूक्षितैः,—ईषद्धास्यैरित्यर्थः, हीकालापैः,—वक्रोक्तिभिः, अन्यस्याऽन्यस्याप्यर्थैरित्यर्थो वा। उन्मत्तेति।—उन्मत्तैः,—उन्मादरोगग्रस्तस्येव पीतमद्यस्येव वा चपलैरित्यर्थः, भ्रूवीक्षितैः,—भ्रूसञ्चालनैः, परिहासादमिति भावः प्रवीराणां—वीरश्रेष्ठानां, राज्ञामिति शेषः, मानमयान्—अभिमानघनानित्यर्थः, प्रणयदाने,—प्रीतिज्ञापनैरित्यर्थः, आक्रोशन्निव—विक्षिपन्निव क्षिपन्निव, [ "आक्रीडन्निव" इत्यत्र "आक्रीडन्निव" इति पाठे—क्रीडां कुर्वन् इव, तान् प्रति स्वानुग्रहभावज्ञापनार्थमिति भावः। प्रथमम नेत्रविभागैश्चाददाम प्राणान् आक्रोशन इति न्यूनाधिकविनिमयान् परिहासेन अलङ्कृति निश्चयेन पश्चादप्यधिकश्रेष्ठत्व स्वस्य प्रतिपादितवान् इति तद्वेप ] वीरः, इवं इति शेषः, यथाऽनुरूपं—यथोचितं, विबभाज—विभज्य स्थापितवान इत्यर्थः ।

(११३) कलकलेति।—कलकलेन—कलरवेण, जनसमूहानामिति भावः, त्रस्तानां—भीतानां, दिङ्नागानां—दिग्गजानां, सूत्कारव इव—नासाशब्दविशेष इव, "शुत" "शीत" इत्याकारक इत्यर्थः। तस्तार—व्याप। तारतरः,—उच्चैस्तरः। तूर्याणां—वाद्यविशेषाणाम्। आशातटेषु—दिग्विभागेषु। दिग्गजेभ्यः,—दिग्गजान् प्रतीत्यर्थः, [ "क्रुधद्रुह—" (१।४।३७ पा०) इत्यादिना चतुर्थी ]। विप्रसुतानां—त्रिभिः अङ्गैः कपोलादिभिः, प्रसुतानां,—मदस्राविणां तेषाम्। अलिकुलकालीभिः,—भ्रमरकुलश्यामलाभिरित्यर्थः, मदप्रस्रवणवीथीभिः,—दानजलधाराभिरित्यर्थः, कालिन्दीवेणिकासहस्राणि इव—यमुनाप्रवाहसहस्राणि इव सस्यन्दिरे—स्रुस्रुवुः, दानजलानीति शेषः।

(११४) सिन्दूरेति।—सिन्दूररेणुराशिभिः—नागसम्भवचूर्णानां, करिकुलैर्वर्णितिहिता-

मानबिम्बे रवौ अस्तमयसमयं शशङ्किरे शकुनयः। करिणां (११५) षट्पदकोलाहलमांसलैः कर्णतालनिस्वनैः तिरोदधिरे दुन्दुभिध्वनयः। (११६) दोधूयमानश्च सचराचरम् आचचाम चामरसङ्घातो विभ्रमम्। (११७) अश्वीयश्वास-निक्षिप्तैः शिश्विन्दे सिन्धुवारदामशुचिभिः निरन्तरम् अन्तरीक्षं फेनपिण्डैः। (११८) पिण्डीभूततगरस्तबकपाण्डुराणि पपुः इव

---

नाम इति भावः, रश्मिभिः,—निवहैः, रवौ—सूर्ये, अरुणायमानं—लोहितायमानं, तच प्रतिफलनादिति भावः, बिम्बं—मण्डलं यस्य तथाभूते, सतीति शेषः, एतेन सैन्यस्य गजानामतिबाहुल्यं महोन्नत्यञ्च सूचितम्, शकुनयः,—पक्षिणः इति यावत्, अस्तमयसमयम्—अस्तगमनकालं, सन्ध्याकालमित्यर्थः, शशङ्किरे—शङ्कितवन्तः, तेषां तथा दर्शनेन विशेषशङ्का जातेति भावः। इह कविप्रौढोक्तिसिद्धो भ्रमः अस्तगामिसूर्य-बिम्बसाम्यातिशयव्यञ्जकः, तेन हि शकुनानाम् अनस्तमनोन्मुखे रवौ अस्तमनोन्मुखत्व-बुद्धेरुदयात् भ्रान्तिमदलङ्कारः।

(११५) षट्पदेति।—षट्पदानां—भ्रमराणां, मदवारिलुब्धानामिति भावः, कोलाहलेन—कलकलेन, मांसलाः,—प्रबलाः इत्यर्थं तैः, [ "सिध्मादिभ्यश्च" (५।२।९७ पा०) इति पामादिको लच् ] कर्णेति।—कर्णौ—श्रवणे एव, तालौ—करतला-स्फालने, कांस्यनिर्मितवाद्यविशेषौ वा तयोः निस्वनः,—शब्दैः, तिरोदधिरे—तिरस्कृताः, कर्णतालशब्दबाहुल्येन दुन्दुभिध्वनयः न श्रुतिगोचराः अभवन्नित्यर्थः।

(११६) दोधूयमानः,—पुनः पुनः सञ्चाल्यमानः, [ धुनोतेः धूनातेः धवतेर्वा यङन्तात् कर्मणि शानचि रूपम् ]। सचराचरं—स्थावरजङ्गमसहितम्। आचचाम —जग्रास, आच्छादयामासेति यावत्।

(११७) अश्वीयेति।—अश्वीयम्—अश्वानां समूहः, तस्य श्वासेन—निश्वास-पवनेन, निक्षिप्तानि—पातितानीत्यर्थः तैः, सिन्धुवारदामशुचिभिः,—निर्गुण्डी-मालाविशदैः, फेनपिण्डैः,—डिण्डीरस्तबकैः। शिश्विन्दे—शुक्लतां प्रापयाञ्चक्रे, [ श्विन्दतेः औणादिकस्य कर्मणि लिटि रूपम् ]। एतेनाश्वानामपि अतिबाहुल्यं सूचितम्।

(११८) पिण्डीभूतेति।—पिण्डीभूतः,—राशीभूतः, यः तगरस्तबकः,—तगरपुष्पगुच्छः, तद्वत् पाण्डुराणि—विशदानि, शुभ्राणि इत्यर्थः।

परस्परसङ्घट्टनष्टाष्टदिशि दिवसम् उच्चचामीकरदण्डानि आतपत्रवनानि। (११९) रजोरजनीनिमीलितो मुकुटमणिशिलावलीबालातपेन विचकास वासरः। (१२०) राजतैः हिरण्मयैश्च मण्डनकाभाण्डमण्डलैः ह्रादमानैः हरितीकृताः परिह्रादा हरितो बधिरतां दधुः। (१२१) अरिप्रतापानलनिर्मूलनाय इव मदोम्भशीकरैः शिशीकिरे करिणः ककुभां चक्रम्। (१२२) चक्षुषाम् उन्मेषं मुमुषुः तडिच्चञ्चलानि

---

उच्चचामीकरदण्डानि—उच्चा,—उन्नता चामीकरदण्डा,—सौवर्णयष्टयः येषां तानि, आतपत्रवनानि—छत्रारण्यानि अनेकसहस्रच्छत्राणीत्यर्थः, परस्परेति।—परस्परात्याम्—अन्योऽन्यासां, दिशामिति भावः सङ्घट्टन—सङ्घर्षेण, नष्टाः,—अदर्शनं गताः, अष्टौ—अष्टसङ्ख्याकाः, दिशः,—ककुभः यत्र तत्। यथा स्यात्तथा। अनेकसहस्रच्छत्रच्छायया दिवालोकस्य प्रतिहतत्वादिति भावः।

(११९) रज इति।—रज एव—धूलिरेव सैन्यपदोत्थितमिति भावः, रजनी—रात्रिः, गगनमण्डलाच्छादनादिति भावः, तया निमीलितः,—मुद्रितः, रजसा आच्छन्न इति यावत्, वासरः,—दिवसः, मुकुटेति।—मुकुटमणिशिलावलीनां—किरीटरत्नानां, बालातपेन—नवालोकेन मन्दकिरणेनेति यावत्, विचकास—विदिद्युते व्यशोभत इत्यर्थः। रजसाऽन्धकारीभूतोऽपि दिवसः मुकुटमणिप्रभया प्रचकाश इति निष्कर्षः।

(१२०) ह्रादमानैः—रणद्भिः राजतैः,—रौप्यैः हिरण्मयैः,—सौवर्णैश्च, मण्डनकभाण्डमण्डलैः—मण्डनकानि—शोभाजनकानि यानि भाण्डानि—अश्वाभरणानि, ("भाण्डमश्वाभरणे" इत्यमरः) भूषणपात्राणि वा तेषां मण्डलैः—समूहैः, परिह्रादाः—परितो निस्वनपूरिताः, राज्याभिषेकनिमित्तं निनादिता इत्यर्थः [ ह्रादतेः कर्मणि घञ् ] तथा हरितीकृताः—श्यामीकृताः अश्वानां घासखादनादिना इति भावः, यद्वा,—हरितीकृताः,—अलङ्कृता इत्यर्थः, आभरणप्रभाभिरिति भावः, हरितः,—दिशः, ("दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः" इत्यमरः)।

(१२१) अरीति।—अरीणां—शत्रूणां, प्रतापानलस्य—तेजोवह्नेः, निर्मूलनाय इव—निर्वापणाय इव मदोम्भशीकरैः,—दानवारिणां सन्ततकणिकाभिः, ककुभां—दिशां, चक्रं—मण्डलं, शिशीकिरे—सिषिचुः, गजसम्पत्तन्मदासारैः सिक्तवन्तः इत्याशयः। ["शीकते" इत्यस्य सौवादिकस्य लिटि रूपम्]।

चूडामणीनामर्चींषि। स्वयमपि (१२३) विसिसिषे बलानां भूपालः सर्वतो विक्षिप्तचक्षुः अद्राक्षीत् आवासस्थानमकाशात् प्रतिष्ठमानं स्कन्धावारम्, (१२४) अधोक्षजकुक्षेः इव युगादौ निष्पतन्तं जीवलोकम्, अम्भोनिधिमिव कुम्भभुवो वदनात् प्लावितभुवनम् उद्भवन्तम्, (१२५) अर्जुनबाहुदण्ड-सहस्रसम्पिण्डितोन्मुक्तमिव सहस्रधा प्रवर्त्तमानं प्रवाहं नर्मदायाः। (१२६)"प्रसर तात। ।भाव। किं विलम्बसे? लङ्घति

(१२२) तडिल्लताजालानि—विद्युत्लताजालानि अर्चींषि—किरणाः, चक्षुषा—नेत्राणां, तत्रत्यजनानामिति भावः, उन्मेष—विकासं मुमुषुः—अहरन्, हठात् तीव्रालोकसम्पातस्य दृष्टिप्रतिबन्धकत्वादिति भावः।

(१२३) विसिसिषे—प्रस्थातुम् अमन्यत इत्यर्थः। बलानां—सैन्यानाम्। [ अत्र "षष्ठी शेषे" (२।३।५० पा०) इति षष्ठी ] भूपालः—हर्षः। विक्षिप्तचक्षुः—पातितनेत्रः। प्रतिष्ठमानं—प्रचलन्तम्। स्कन्धावारं—शिविरं, चतुरङ्गवाहिनीमित्यर्थः। सर्वतो विक्षिप्तचक्षुः भूपालः स्वयमपि आवासस्थानप्रकाशात् प्रतिष्ठमानं "अधोक्षजकुक्षेः—" इत्यारभ्य "नर्मदायाः" इत्यन्तविशेषणकं बलानां स्कन्धावारम् अद्राक्षीत् विसिसिषे च इत्यन्वयः।

(१२४) युगादौ—सत्ययुगप्रारम्भे, अधोक्षजकुक्षेः,—नारायणोदरात्, निष्पतन्तं—निःसरन्तम्। कुम्भभुवः,—अगस्त्यस्य, ("अगस्त्यः कुम्भसम्भवः" इत्यमरः)। प्लावितभुवनं—प्लावितं भुवनं येन तथाभूतं व्याप्तजगतमित्यर्थः, यद्वा—क्रियाविशेषणञ्चैतत्, प्लावितं भुवनं यस्मिन् कर्मणि तद्यथा स्यात् तथेत्यर्थः। उद्भवन्तं—निःसरन्तमित्यर्थः।

(१२५) अर्जुनेति।—अर्जुनस्य—कार्त्तवीर्य्यार्जुनस्य इत्यर्थः, बाहुदण्डानां—भुजयष्टीनां, सहस्रेण—दशशतसङ्ख्यया, आदौ सम्पिण्डितम्—समाहृतं पश्चादुन्मुक्तं—परित्यक्तं सहस्रधा—सहस्रप्रकारेणेत्यर्थः, प्रवर्त्तमानं—प्रसरन्तम्। पूर्वं कार्त्तवीर्य्यार्जुनेन हैहयाधिपतिना पुरस्त्रीभिः सह नर्मदायां जलकेलिनिरतेन तत्प्रवाहो भुजसहस्रेण समयतो बद्धः पश्चात् त्यक्त इति वार्त्ता। इह आवासस्थानप्रकाशात् प्रतिष्ठमानं स्कन्धावारमारभ्यैतदवधि स्कन्धावारस्योपमानानि अधोक्षजादीनां निष्पतज्जीवलोकादिकानि एकवाक्यान्वितानि इति मालोपमा।

(१२६) तात—वत्स! प्रसर—गच्छ! भाव!—विद्वन्! मान्य इत्यर्थः, किं विलम्बसे?—कथं चिरयसि? लङ्घति—चलति, प्रचण्डवेगेन धावतीति भावः।

तुरङ्गम.। भद्र। भग्नचरण इव सञ्चरसि यावदमी पुरःसराः सरभसम् उपरि पतन्ति। वाहयसि किमुक्षम्? न पश्यसि निर्दय! शुकशिशुं प्रयान्तम्?। वत्स रामिल।(१२७) रजसि यथा न नश्यसि। नो पश्यसि गलति शक्तुप्रसेवकः?। किमेवम् (१२८) इत्वर। त्वरसे? सौरभेय।। सरणिम् अपहाय क्षयमध्यं धावसि धीवरि!?। विशसि गन्तुकामा मातङ्गि। मातङ्गमार्गम्?। भद्र! गलति तिरश्चीना चणकगोणी। गणयसि न मामारटन्तम्?। अवटम्

---

[ "त्वरि गतौ" इति भौवादिकस्य त्वरते लटि रूपम् ]। भग्नचरण इव—खण्डितपद इव। पुरःसराः—अग्रगामिनः। सरभसम्—सवेगम्। प्रयान्तं शुकशिशुं पश्यन् दलन यासीति भावः। [ "शुकशिशुम्" इत्यत्र "शिशुकशिशुम्" इति पाठे,—शिशुक—शिशिवम्, अज्ञातचौऽसस्कारत्वादस्यैवमस्कारमित्यर्थ, अत एव सम्यग् रूपाऽऽस्वादम् इति भावः ]।

(१२७) रजसि—धूलिराशौ इति भावः, यथा न नश्यसि—न अदर्शनं यासि, तथा कुरु इति शेषः, यद्वा,—यथा रजसि—यादृक् अनुरक्तो भवसि, तथैति भावः, [ रजते भौवादिकस्य लटि रूपम् ] न नश्यसि—न प्रणाशं गच्छसि, एतादृगनुरागस्य अभ्युदयहेतुत्वादिति भावः। शक्तुप्रसेवकः,—शक्तुना—तन्नामकभक्तेन इति भावः, प्रकर्षेण सेवते इति तथोक्तः भक्तदास इत्यर्थः, शक्तुमात्रवेतनो भृत्य इति भावः, तदाख्यो वा गलति—दूरं गच्छतीत्यर्थः, यद्वा,—शक्तुना प्रसेवकः,—शक्तुपूर्णः स्यूतः, शणपट्टादितन्तुनिर्मितः धान्याद्याधारविशेष इत्यर्थः, ("स्यूतप्रसेवौ" इत्यमरः) "प्रसेवकः भस्त्राभरणम्" इत्येके, गलति—पतति नो पश्यसि?—नावलोकसे? [ "नो" इत्यत्र "न" इति पाठान्तरम् ] शक्तुदेश्यादिरपि दृश्यते।

(१२८) इत्वर।—गमनशील। [ इण् गतावित्यस्मात् "इण् नश्—" (३।२।१६३ पा०) इत्यादिना क्वरप् प्रत्ययः ] त्वरसे?—अश्रान्तोऽसि? द्रुतं धावसीत्यर्थः। सौरभेय।—वृषभ। वृषभवत् दान्त इति भावः ("ऋषभो वृषभो वृषः। अनड्वान् सौरभेयो गौः" इत्यमरः) धीवरि।—धीवरकन्ये। सरणिं पन्थानम् अपहाय—परित्यज्य, क्षयमध्यम्—गृहाभ्यन्तरं, धावसि?—द्रुतं यासि? मातङ्गि।—चण्डालतनये। इत्यर्थः ("चण्डालप्लवमातङ्ग" इत्यमरः) मातङ्गमार्गं—हस्तिमार्गं, विशसि?—आश्रयसि? प्रविशसीत्यर्थः। भद्रेति सम्बुद्धौ। तिरश्चीना—अनृजुविहितेति भावः, चणकगोणी—चणकाख्यधान्याधारस्थलिका, गलति—च्यवते। गणयसि

श्रतटेन श्रवतरसि ? (१२८) सुखमास्व खेरिणि । सौवीरक । कुम्भो भग्नः । मन्थरक । खादिष्यसि गतः सक्तिसुम्, उच्चार्य प्रसादय । कियच्चिरं विनोषि चेट । वदराणि ? दूरं गन्तव्यम् । किमद्यैव विद्रासि ? द्रोणक । द्राघीयसी दण्डयात्रा। (१३०) विनैकेन निष्ठुरक्षेण निःक्षेयम् अस्माकम् । अग्रतः पन्थाः खपुटकः । स्थावरक ! यथा न भनक्षि फाणितस्थालीम् । ( १३१ ) गरीयान् गण्डकतण्डुलभारको न निर्वहति दम्यः । दासक । मायीयात्

—वहु मन्यसे। श्राटन—भ्रमणम्। श्रवट—गर्त, ("गर्तावटौ भुवि श्वभ्रे" इत्यमर ) श्रतटेन—श्रमार्गेण, श्रप्रपाताधोभागीयपथेनेत्यर्थ ।

(१२८) श्रास्व—स्थिति कुरु। स्वैरिणि ।—स्वेच्छाचारिणि । [ "स्वादीरेरिणो" (वा० ) इति वृद्धि ]। सौवीरक ।—काञ्जिकतत्त्वावधायकेत्यर्थ, तन्नाम्ना कश्चित्। उच्चार्य—कुम्भम, ( "उष्ट्रा भद्रे बलीवर्द ऋषभो वृषभो वृष" इत्यमर ) प्रसादय—शान्तय इत्यर्थ । वदराणि—कोलफलानि विनोषि ?—चयसि ? दूरं—दूरमध्वान मित्यर्थ, गन्तव्य केवल दासा त्वपरीता पथि वदरंफल भोक्तु प्रवृत्ता, तन्निवृत्त्यर्थ मयमुक्तिरिति बोध्यम । श्रद्यैव—इदानीमेव विद्रासि ?—प्रयासि ? खद्यसे इति यावत् दण्डयात्रा—सङ्ग्रामप्रयाणम अस्माकमिति शेष द्राघीयसी—श्रतिदीर्घा श्रति महतोऽयथ श्रत श्रद्यैव गमनप्रदेशे गमनम् श्रसम्भवितमेवेति मन्यामहे इति भाव ।

( १३० ) विनैकेन—एकेन—केवलेन, निष्ठुरकेण—निर्दयाचरणेन, सङ्ग्रामेण इति भाव, यद्वा—एकेन—एकमात्रेण, निष्ठुरकेण—निर्दयेन, सङ्ग्रामेण इत्यर्थ, विना—सङ्ग्रामप्राप्तिमन्तरेणेत्यर्थ, [ "पृथग्विना—" ( २।३।३२ पा० ) इत्यादिना पञ्चे तृतीया ] निःक्षेयम्—कल्याणं शोभनीयं न भवेदिति शेष । खपुटक —विषमस्थान सञ्चारी गतोन्नतेन पथा गच्छति, श्रन्त पन्था कि न पश्यति भवान् इत्यर्थ । फाणित स्थालीं—फाणितम्—इक्षुविकार गुड इति यावत तस्य स्थालीं—भाण्डमित्यर्थ, यद्वा—फाणि—दधिमिश्रितशक्तु सोऽस्याऽस्तीत्यर्थे इतच्, तत्पूर्णस्थालीमिति यावत भनक्षि—खण्डयसि भग्नां करोषि इत्यर्थ ।

( १३१ ) गण्डकेति ।—गण्डकतण्डुलभारक—गण्डकेषु—खड्गिषु, पशुविशेषेषु इत्यर्थ तण्डुलभारक—तण्डुलभार गरीयान्—श्रतीव गुरु, महानित्यर्थ, दम्य,—दमनीय, शिक्षणीय गण्डक इति भाव, यद्वा—गण्डक,—सङ्ख्याभेद, तत्परिमित इत्यर्थ, तण्डुल,—वितुष धान्य, तं निर्वहति—वहति गमयोऽत, श्रल्पतण्डुल

अमुतः द्राक् दात्रेण मुखघासपूलकं लुनीहि, को जानाति (१३२) यवसगतं गतानाम्? यव। वारय बलीवर्दान्, वाहीकरचितं चेत्रमिदम्। (१३३) लम्बिता शकटी, शाकरं धुरन्धरं धुरि धवलं नियुङ्क्ष्व। यवपालित। प्रमदा. पिनक्षि. अचिणी किं ते स्फुटिते?। हत हस्तिपक रे। (१३४) दीव्यसि करिकरदण्डे?। समद सम्मर्द। कर्दमे स्खलसि?। भ्रातर्भाव! विधुरबन्धो। उद्धर पङ्कात् अनड्वाहम्। इत एहि (१३५) माणवक। घनेभघटामर्द-

---

घाक्षी इति यावत निर्दहति—बोढ शक्नोति। अमुतः—अमुष्मात, मार्गोपात—माषकनायचेत्रान, ("स्निग्धतैलीभक्ष्याणोमाषुभञ्जाल विकचता" इत्यमर) द्राक—झटिति, मुखघासपूलक—किञ्चिन्मानमुखमानितमयी घास मुखघास, तस्य पूलकं—गुच्छं, लुनीहि—छिन्धि।

(१३२) गताना—प्रस्थिताना, पशूनामिति शेष, यवसगत—यवस—घास एव, गत—गतिविषय तत्, "क्तादभिहितो भावो द्रव्यवत प्रकाशते" इति न्यायात् इति भाव, पशवो यवस विना चणमपि जीवित नोत्सहन्ते इति को जानाति ॥ इति भाव। यव!—नर! बलीवर्दचालक पुरुष! इत्यर्थ, ("यव पुमान नरे धूर्ते पक्षो कृष्णान्तरेऽपि च" इति मेदिनी) बलीवर्दान—वृषभान, वारय—क्षत्रचरान् वारय इत्यर्थ, वाहीकरचित—परिपालकरचितम् ईषदपि भक्षयतो महाप्रमाद प्रसजेत इत्याशय।

(१३३) शकटी—चुद्रशकट लम्बिता—मार्गादपस्खलितेत्यर्थ। धुरन्धर—भारवहनसमर्थमित्यर्थ, धवल—श्वेतकाय, शाकर—शक्कर एव शाकर स, युव युवान वा वृषभमित्यर्थ शक्करशब्दस्यापि वृषभवाचकत्व दृश्यते, तथाच षष्ठे ५८८ पृष्ठे शक्करशब्दस्य वृषभवाचकत्व, यथा—"शङ्करशक्करशक्कर—" इति। धुरि—यानमुखे, ("धू स्त्री क्लीबे यानमुखम्" इत्यमर) नियुङ्क्ष्व—योजय इत्यर्थ। यवपालित। सम्बोधन पदमिदम, प्रमदा—स्त्रिय, पिनक्षि?—दलसि? पदनिर्पेषैः इति भाव [ पिषे रौधादिकस्य रूपम् ] स्फुटिते?—विदीर्णे? अन्ध किमु भवान? इति भाव।

(१३४) करिकरदण्डे—हस्तिशुण्डादण्डे हस्तिशुण्डोपरि इत्यर्थ दीव्यसि?—क्रीडसि? समद!—मत्त इत्यर्थ, सम्मर्द! इति कस्यचित सम्बोधन, स्खलसि?—पतसि?। भ्रात!—भ्रात! विधुरबन्धो!—दीनदयालो! अनड्वाह—वृषभ।

(१३५) माणवक!—बालक! ("बालस्तु स्यान्माणवक" इत्यमर)

मानं क्वचित् (१३८) असहायैः क्लेशार्जितकुग्रामकुटुम्बिसम्पादित-सीदत्सौरभेयसम्बलसंवाहनायासावेगागतसंयोगैः (१३९) स्वयङ्गृहीतगृहोपस्करणैः "इयम् एका कथञ्चित् दण्डयात्रा यातु, यातु पातालतलं तृष्णा, (१४०) भूतैः अभवनिर्भवतु,

वण्डा —वर्जतविवाहा तरुणी, हंसादयः विकणा वा "बँड़े" इति वङ्गभाषा, ["वण्ड —" इत्येव "षण्ढ —" इति पाठे —षण्ढाः,—क्लीबाः, "बँटे" इति वङ्गभाषा] वठराः,— मूर्खाः, सम्बला —गर्दभदासाः, सैरिन्ध्रिकाः,—जनपरिचारकाः, लुण्ठकाः,—चौराः, चेटाः,—दासाः चाटाः,—धूर्ताः ["चाट—" इत्यत्र "भाट—" इति पाठान्तरम्] चण्डालाः,—श्वपचाः इत्यर्थः, तेषां मण्डलानि—समूहाः तैः शून्यमार्गम्—शून्यं मार्गम्मानमित्यर्थः ।

(१३८) असहायैः,—अमात्यसहायैरित्यर्थः, क्लेशेति ।—क्लेशेन—आयासेन, अर्जितैः —लब्धैः कुग्रामकुटुम्बिभिः,—नीचग्रामीणैः, सम्पादितः—दत्तः अत एव सीदतः,—क्लान्तिं गतस्य, सौरभेयस्य—कुक्कुरस्य इत्यर्थः, सम्बलम्—पाथेयम्, पाथधारणोपयोगि यत्किञ्चिद्वहनीयं द्रव्यमित्यर्थः, तस्य संवाहने—संकर्षणे, य आयासः,—क्लेशः, तेन हेतुना य आवेगः —त्वरा, तेन आगतः —प्राप्तः, संयोगः,—सम्बन्धः यैः, अत्रकष्टातिशयनसहितैः अतः संज्ञागतकुक्कुरस्त्यक्ताभावात् समागतैरिति भावः यद्वा—क्लेशार्जितकुग्रामकुटुम्बि-सम्पादिता —क्लेशार्जितैः,—भूयसा आयासेन लब्धैः उपार्जितैः कार्ये, कुग्रामकुटुम्बिभिः, —पल्लीवासिभिः कृषकैः, सम्पादिताः —पोषिताः अत एव सीदन्तः,—अवसादं गच्छन्तः यथेष्टखाद्यप्राप्त्यभावादिति भावः, सौरभेयाः —वृषभाः एव, सम्बलाः,— अवशिष्टधनभूताः, पाथेयप्राया इत्यर्थः, संवाहनानि—भारादिवाहकाः येषां तथाभूतानां, [सपूर्वकात् वहतेः णिचि कर्तरि ल्युट्] दुर्बलबलीवर्दानामित्यर्थः, ये आयासावेगागतसंयोगाः राष्ट्रीयदुर्बलपशुसम्प्राप्तसंयोगा इति भावः तैः ।

(१३९) स्वयमिति ।—स्वयङ्गृहीतानि—आत्मनैव धृतानि आनीतानीत्यर्थः, न तु दासादिनेति भावः, गृहस्य—भवनस्य, उपस्करणानि—सामग्र्यः अभ्यासनादीनि भूषणजातानि इति भावः यैः तथोक्तैः ["उपात् प्रतियत्न—" (६।१।१३९ पा०) इत्यादिना उपात् कृञ्ज सुट्]। इयं पुरोवर्त्तिनी दण्डयात्रा—युद्धार्थं प्रचलिता सेनेति यावत् एकैव—अस्माकं सहायभावमप्राप्येव इत्यर्थः, यातु—गच्छतु। तृष्णा—लोभः, आकाङ्क्षेति यावत्, अस्माकमिति शेषः पातालतलम्—पातालस्यापि अधः इत्यर्थः, यातु—गच्छतु, एतत्सङ्गेन अस्माकं सुखाशा चिरमस्तु इति भावः ।

(१४०) भूतैः,—सम्पद्, अभवनिः,—अनुत्पत्तिरित्यर्थः, [ आक्रोशे नञ्यनिः"

शिव सेवां करोतु, स्वस्ति (१४१) सर्व्वदुःखकूटाय चाटकाय" इति दुर्विधकुलपुत्रकैः निन्द्यमानं, क्वचित् (१४२) अति-तीक्ष्णमलिनस्रोतःपातिनीगतैः इव ग्रथितैः इव पङ्क्तिभूतैः जनैः अतिदूरं द्रवद्भिः (१४३) कणकठिनस्कन्धगुरुगुडैः गृहीतसौवर्णपादपीठीकरङ्ककलशपतद्ग्राहावग्राहैः (१४४) प्रत्यासन्नपार्थिवोपकरणग्रहणगर्व्वदुर्वारैः सर्व्वमेव बहिः-

---

(१।११११ पा०) इत्यभिधानम् ] भवतु—सम्पद्यताम्, संसारे भूति भवतु इति भावः। सेवा—भृत्यभाव, शिव—मङ्गल, करोतु—विदधातु।

(१४१) सर्व्वदुःखकूटाय—समस्तलोकदुःखजातकारायेत्यर्थं, चाटकाय—सैनिकाय, सैनिकजनाय इति भावः, स्वस्ति—शुभम्, अस्त्विति शेषः, ("नमः स्वस्ति—" (२।३।१६, पा०) इत्यादिना चतुर्थी। "शिव सेवा चाटकाय" इत्यत्र "शिवसेवां करोतु स्वस्ति सर्व्वदुःखकूटाय चाटकाय" इति पाठे—शिवसेवा—शिवाराधना, सर्व्वदुःखकूटाय चाटकाय स्वस्ति करोतु इत्यन्वयः शिवसेवा सैनिकजने रक्षतु लोकानिति भावः ]। दुर्विधेति।—दुर्विधा—दरिद्राः, ('नः खलु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः" इत्यमरः) कुलपुत्रका,—कुलक्रमागतसेवका इत्यर्थः तैः। ["दुर्विधकुलपुत्रकैः" इत्यत्र "दुर्विधःखकुलपुत्रकैः" इति पाठान्तरम् ]।

(१४२) अतितीक्ष्णेति।—अतितीक्ष्णम्—अत्युग्रम्, अतिवेगवदित्यर्थं, यत् मलिनस्रोतः,—जलप्रवाहः तत्र पातिनी—पतन्ती, भाव—मरणं गता,—अधिष्ठिताः तैरिव। ग्रथितैरिव—गुम्फितैरिव लोकाधिक्यादविरलभावेनावस्थितैः इत्यर्थामित्यर्थः भावः। पङ्क्तिभूतैः,—श्रेणीबद्धैः, द्रवद्भिः,—गच्छद्भिः।

(१४३) कणेति।—कणेषु—नियतभारोद्वहनात् श्यामीभूतेष्वित्यर्थं, कठिनेषु—दृढेषु, स्कन्धेषु—असदेशेषु, गुरवः,—महान्तः, गुडाः,—दण्डानि येषां तैः। गृहीतेति।—गृहीताः,—धृताः, सौवर्णपादपीठ्यः,—काञ्चनपादपीठानि, करङ्काः,—ताम्बूलपात्राणि च, कलशाः,—कुम्भाश्च, तथा पतद्ग्राहाः,—पतता—मुखादिभ्य स्रवता, जलादीनामिति शेषः ग्राहः—ग्रहणं यत्र ते, निष्ठीवनपात्राणि इत्यर्थं ("प्रतिग्राह पतद्ग्रहः" इत्यमरः) तेषां अवग्राहाः,—धारणशीलाः ये तथाभूतैः।

(१४४) प्रत्यासन्नेति।—प्रत्यासन्नस्य—निकटस्थस्य, पार्थिवस्य—राज्ञः उपकरणानाम्—आसनादीनां, ग्रहणेन—धारणेन, वहनेनेत्यर्थः, ये गर्व्वाः,—

कारयद्भिः भूपतिभृतकभारिकैः महानसोपकरणवाहिभिश्च (१४५) बद्धवराहवर्ध्रवार्ध्रीणसैः (१४६) लम्बमानहरिणचटुक-चटकजूटजटिलैः शिग्रुशकशाकपत्रवेत्राग्रसङ्ग्रहसङ्ग्राहिभिः (१४७) शुक्लकर्पटप्रावृतमुखैकदेशदत्तार्द्रमुद्रागुप्तगोरसभाण्डैः

---

अहङ्कारा, यत्र लोकभग्ना इत्येवरूपा इति भावः तैः। दुर्वारा—वारयितुमशक्या, उद्धता इति यावत् तैः। सर्वमेव, जनमिति शेषः, अहि कारयद्भिः,—निरस्यद्भिरित्यर्थः, पदगर्वेण अवज्ञया इवेति भावः। भूपतिभृतकभारिकैः,—भूपतेः,—राज्ञः, भृतकः—भरणापन्नोऽपि घटादिकमित्यर्थं तस्य भारिकाः,—भारवाहिनः तैः। महानसोपकरण-वाहिभिः,—महानसे—पाकशालायां, ("रसवत्यां तु पाकस्थानं महानसम्" इत्यमरः) यानि उपकरणानि—द्रव्यसम्भाराः, तानि वहन्ति—नयन्ति ये तैः, रन्धनसामग्रीवाहकैरित्यर्थः।

(१४५) बद्धेति।—बद्धानि—सङ्कीलानि, वराहवर्ध्राणि—शूकरचर्माणि, शूकरचर्मनिर्मितरज्जुविशेषा इत्यर्थः, तथा वार्ध्रीणसाः,—पक्षीयच्छागविशेषाः तच्चर्माणि वा यैः तथाभूतैः। ["बद्धवराहवर्ध्रवार्ध्रीणसैः" इत्यत्र "बद्धवराहवध्रवार्ध्रीणसैः" इति पाठान्तरम्]।

(१४६) लम्बमानेति।—लम्बमानाः,—स्कन्धे धारणादिति भावः, हरिणस्य—मृगविशेषस्य चटुकाः,—पूर्वभागाः, चटकाः,—पक्षिविशेषाश्च तेषां जूटैः,—समूहैः, जटिलाः—युक्ताः तैः। शिग्रुरिति।—शिग्रवः,—वन्यलवङ्गाः, शकाः,—मृगभेदाः, शाकपत्राणि—शाकानां—हरितकानां, व्यञ्जनीपयोगिद्रव्याणामित्यर्थं, ("अस्त्री शाकं हरितकम्" इत्यमरः) पत्राणि—पर्णानि, वेत्राग्राणि—वेत्राङ्कुराः, वानीराख्यलताग्रभागा वा, तथा सङ्ग्रहे—समाहृतौ, ("समाहृतिस्तु सङ्ग्रहः" इत्यमरः) निपुणा इव सङ्ग्राहिणः,—सञ्चयकारकाः तैरित्यर्थः। वेत्राङ्कुरतैलादनानि स्वादुवत्तम-बहुलानि देशविशेषे बहूपहृतानि दृश्यन्ते, अतः शिग्रुशकशाकैः तस्य सहयोगो न विषमशीलत्वमस्य इत्यवधेयम्।

(१४७) शुक्लेति।—शुक्लेन श्वेतेन, कर्पटेन—वसनेन प्रावृतम्—आच्छादितं, मुखं—वदनं येषां तानि, तेषां एकदेशे—एकस्मिन् विभागे, दत्ता—निहिता, आर्द्रा—अभिनवेति भावः, मुद्रा—चिह्नविशेषः येषां तानि, अत एव गुप्तानि—अप्रकाशानि, सुरक्षितानीत्यर्थः; यद्वा—शुक्लकर्पटप्रावृतमुखस्य एकदेशे—एकस्मिन् भागे, ग्रन्थिबन्धनस्थाने इत्यर्थः, दत्तया आर्द्रया मुद्रया गुप्तानि, राजपेयतया विषयोगादिभयादिति भावः, गोरसभाण्डानि—गव्यपात्राणि यैः तथाभूतैः। एतेन अनुप्रयुक्तैः पुरुषैः गूढचारिभिः

(१४८) तलकतापकतापिकाहस्तकताम्रचरुकटाहसङ्कटपिटकभारिकैः समुत्साध्यमानपुरोवर्त्तिजनं, क्वचित् (१४९) "क्षेमोऽस्माकं, फलकाले अन्य एव विटाः समुपस्थास्यन्ते" इति मुखरैः पदे पदे पततां दुर्बलबलीवर्दानां खेटने नियुक्तैः खेटचेटकैः (१५०) खिद्यमानासंविभक्तकुलपुत्रलोकं, क्वचित् (१५१) नरपतिदर्शनकुतूहलादुभयतः प्रजवितप्रधावितग्रामेयकजनपदं,

---

विजिगीषुणा भोग्यग्रामीणादौ किञ्चित् छिद्रमवाप्य विग्रहोऽपि कर्त्तव्यः इति सूचितम्।

(१४८) तलकेति।—तलक,—याग्यकटिका, लौहधुल्लीति याबत्, तापक,—ताम्रादिनिर्मित सूपादिकरणपात्र, तापिका—काककपालिका, यत्र तैलादिभिः भक्ष्याणि परिपच्यन्ते, "कटाहमातीय" इति मन्यते, हस्तक,—सुव, मांसादिपाकसाधनमिति भावः, ताम्रचरुकटाह,—ताम्रनिर्मितपायसादिपाकार्थं कटाहविशेष इत्यर्थः, सङ्कटपिटक,—क्षुद्रभाण्ड, तेषां भारिका,—भारवाहिन तैः, समुत्साध्यमानेति।—समुत्साध्यमाना,—दूरीक्रियमाणा, पुरोवर्त्तिन,—अग्रस्थायिन, जना,—लोका यस्य यत्र वा तथाभूतम्।

(१४९) क्षेमोऽस्माक, बलीवर्द्दगाहनादिना इति भावः, किन्तु फलकाले—पुरस्कारलपफलप्राप्तिसमये विटाः,—धूर्त्ताः समुपस्थास्यन्ते—सन्तोषयिष्यन्ते, प्रभुरा इति शेष, न वयमिति भावः, मुखरै,—वाचालैः, पदे पदे—प्रतिपदक्षेपे, पतता—स्खलता, दौर्बल्यादिति भावः, दुर्बलबलीवर्द्दाना—क्षामवृषाणा, खेटने—प्रेरणे, चालने इति यावत्, ["खेटने" इत्यत्र "खलने" इति पाठे,—स्खलने—स्खलनादुद्धरणे इति भावः] नियुक्तै,—आदिष्टै। ["खेटने नियुक्तै" इत्यत्र "नियुक्तै खेटने" इति पाठान्तरम्]। खेटचेटकै,—ग्रामकभृत्यै, ["खेटचेटकै" इत्यत्र "स्खलचेटकै" इति पाठे—स्खलचेटकै,—दुष्टभृत्यैरित्यर्थः]।

(१५०) खिद्यमानेति।—खिद्यमाना—क्लेश्यमाना, चेटैरसम्बद्धोक्त्या इति भावः, असंविभक्ता,—कर्म्मविशेषेण असम्प्रदत्तविभागा, विशेषकर्म्मवाह्या इत्यर्थः, कुलपुत्रलोका,—कुलक्रमागतसेवकजना इत्यथ यत्र तथोक्तम्।

(१५१) नरपतीति।—नरपते,—राज्ञ, दर्शने—अवलोकने, यत् कुतूहलम्—कौतुकं तस्मात्, उभयत,—उभयो पार्श्वयो, कटकस्येति भावः,

(१५२) मार्गग्रामनिर्गतैराग्रहारिकजाल्मै: पुरःसरजरन्महत्तरोत्तम्भिताम्भ:कुम्भै: (१५३) उपायनीकृतदधिगुडखण्डकुसुमकरण्डै: घटितपेटकै: सरभसं समुत्सर्पद्भि: (१५४) प्रकुपितप्रचण्डदण्डिविवासनविद्रुतै: दूरगतैरपि स्खलद्भिरपि पतद्भिरपि नरेन्द्र-

---

प्रजविनेति।—प्रजवित—सवेगं यथा स्यात्तथा, प्रधाविता,—चलिता ग्रामेयका,—ग्राम्या, जनपदा,—जना यस्मिन् तथाभूतम्। ("भवज्जनपदो जानपदोऽपि जनदेशयो" इति मेदिनी)।

(१५२) मार्गग्रामनिर्गतैरिति,—मार्गे—प्रयाणमार्गसमीपे स्थिता इत्यर्थ, ये ग्रामा,—संवसथा, विप्रादिवर्णप्राया प्राकारपरिखादिरहिता बहुजनवसतय इत्यर्थ, ('ग्रामौ संवसथ ग्रामौ" इत्यमर) तेभ्य निर्गता,—निःसृता तै, आग्रहारिकजाल्मै,—आग्रहारिका,—ब्रह्मस्वभूमिनियुक्ता, यद्वा,—अग्रहाराऽयमाय नियत दीयते येभ्य इति व्युत्पत्त्या अग्रहारब्राह्मणा ठाकु इत्यर्थ, अग्रदानीयविप्रा इत्यन्ये तेषु जाल्मा,—निर्बोधा पुरुषा तै। पुरःसरेति।—पुरःसर,—अग्रगे, जरद्भि,—स्थविरै, महत्तरै,—महाजनै, उत्तम्भिता—ऊर्ध्वीकृता अम्भःकुम्भा,—जलपूर्णकलशा यै त यात्रिकशुभसूचनायमिति भाव।

(१५३) उपायनीकृतेति।—उपायनीकृतानि—उपढौकनत्वेन दत्तानि, राज्ञे इति भाव दधीनि—क्षीरान्तरावस्थाभावा, ("दधि क्षीरान्तरावस्थाभाव श्रीवाससामयी" इति मेदिनी) गुडा,—इक्षुपाकभेदा, ("गुडो गोलेक्षुपाकयो" इत्यमर) खण्डा,—फाणितानि इक्षुविकारविशेषा इत्यर्थ ("मत्स्यण्डी फाणित खण्डविकारी" इत्यमर) कुसुमानि—पुष्पाणि, एषां करण्डा—भाजनानि यै तथाभूतै। [ 'करण्डक्रियम' (उ० १ पा० १२८ सू०) इति क्रोऽन्डन् ] घटितपेटकै,—कश्चित कदम्बे, श्रीधरश्च इत्यर्थ, यद्वा,—उपायनीकृतानां दध्यादीनां करण्डै,—पात्रै, घटिता—पूरिता इत्यर्थ पेटका,—मञ्जूषा यैस्त, ("पटक पुस्तकादीनां मञ्जूषायां कदम्बके" इति मेदिनी)। सरभस—सवेग, समुत्सर्पद्भि—समुपगच्छद्भि, अत्र महता भिक्षया अन्यथाऽऽदराद् एव राजदर्शनाभिलाषात् इत्याशय।

(१५४) प्रकुपितेति।—प्रकुपितानाम—अतिक्रुद्धाना, प्रचण्डानाम—उग्राणां, दण्डिना—वेत्रपाणीन, विवासनेन—भयप्रदर्शनेन, विद्रुता,—पलायिताः तै.। दूरगतैरपि—सुदूरमपसृतैरपि। स्खलद्भिरपि—भग्नाङ्घ्रिरपि। नरेन्द्रेति।—नरेन्द्रे—

"धर्मः प्रत्यक्षो देव." इति स्तुतीः आतन्वद्भिः अपरैः (१५९) लूयमाननिष्पन्नशस्यप्रकटितविषादैः क्षेत्रभुजा सकुटुम्बैरेव निर्गतैः (१६०) प्ररूढप्राणच्छेदैः परितापत्याजितभयैः "क्व राजा ? कुतो राजा ? कीदृशो वा राजा ?" इति प्रारब्धनरनाथनिन्दैः, (१६१) शशाङ्कैरिव पदे पदे प्रजविप्रचण्डदण्डपाशिपेटकानुबद्धैः गिरिगुडकैः इव हन्यमानैः इतस्ततः सञ्चरद्भिः अपरैः युगपत् पर्यापतित-

[ "पारगुडै" इत्यत्र "अपारगुड" इति पाठान्तरम्, एतच्चे "धर्मः प्रत्यक्षो देव" इति व्याजस्तुतिरवगन्तव्यम्, देव,—सम्राट् त्वं प्रत्यक्षो धर्म,—विग्रहवान् धर्म एव, भवतीति शेष, न तस्य दोषलेशोऽपि दृश्यते, यतो दुर्गतानस्मान् सम्यक् पालयितुमादिदेश, अधिकृतास्तु परमदुर्जना, ते पुन सम्यगेव सभाराजानमस्मात् कृत्वा आश्रितान् क्लेशयन्ति इति भाव ] स्तुती,—सवान प्रशंसावादानित्यर्थ, आतन्वद्भि,—कुर्वद्भि ।

(१५९) लूयमानेति ।—लूयमाने,—छिद्यमाने, सैनिकसहैरिति भाव, अत एव निष्पन्ने,—सम्यक्पीनीकृते, शस्ये,—व्रीहियवगोधूमादिसस्येष्वित्यर्थ, प्रकटित,—प्रकाशित विषाद,—विषण्णता, कातरता इति यावत् यै येषा वा तथाभूतै, क्षेत्रभुजा —क्षेत्राणां शस्यनाशजनितशोकेन इति यावत्, सकुटुम्बैरेव—सपरिवारैरेव ।

(१६०) प्ररूढेति ।—प्ररूढ,—सञ्जातप्राय प्राणाना —जीवनाना प्राणहेतुभूतशस्यानामिति यावत्, यद्वा—प्ररूढानाम—अङ्कुरिताना, फलितानामिति यावत्, प्राणाना —जीवनधारणहेतुभूतशस्यानामिति यावत् छेद,—कर्तनं, नाश इत्यर्थं येषां तथाभूतै चेदक्षणाय तेषा प्राणनाशतुल्यदुःखदायक इति भाव । [ "प्ररूढप्राणच्छेदै" इत्यत्र "प्ररूढच्छेदै" इति पाठे —प्ररूढ,—जात, छेद शस्यानामिव इति भाव येषा तथाभूते ]। परितापेति ।—परितापेन—शस्यनाशदुःखेन, त्याजित—मोचित, भयं—त्रास सैन्यादिभ्य इति भाव येषा तथाभूतै, निर्भयैरिति भाव । कुत,—कस्मात्, कस्माद्देशादागतोऽय राजा ? इति भाव । प्रारब्धेति ।—प्रारब्धा —उपक्रान्ता, नरनाथस्य—राज्ञ निन्दा —दोषकीर्तनं यत्र येन वा तथोक्तम ।

(१६१) "शशाङ्कै" इत्यस्य "आशुगो बलात कृतकलङ्कान्" इत्यपेक्षान्वय । शशकान विशिनष्टि, प्रजवीति ।—प्रजविन,—प्रकृष्टवेगशालिन, प्रचण्डा,—उग्रा ये दण्डपाशय,—वेत्रधारिण पुरुषा, तेषा पेटकेन—कदम्बकेन, समूहेन इत्यर्थ, अनुबद्धा,—अनुसृता तै। गिरिगुडकै इव—पाषाणलोष्टै इव, हन्यमानै,—ताड्यमाने । युगपत्—समकाले, पर्यापतितै,—समुपस्थितै,

महाजनग्रस्तैः तिलशो विलुप्यमानैः (१६२) अनेक-जन्तुजङ्घाऽन्तरालनिःसरणकुशलिभिः (१६३) कुटिलिका-व्यंसितश्वादिखड्गिभिः (१६४) पतल्लोष्टलगुडकोणकुठारकोल-कुद्दालखनित्रदात्रयष्टिभिरपि निःसरद्भिः आयुषो बलात् कृत-कलकलम्, अन्यत्र (१६५) सद्भयो घासिकैः बुसधूलिधूस-

महाजनैः,—महद्भिः लोकैः, ग्रस्ताः,—आक्रान्ताः तैः। तिलशः,—तिलं तिलं कृत्वा विलुप्यमानैः,—चोर्यमाणैः, महाजनैर्गृह्यमाणत्वादिति भावः।

(१६२) अनेकेति।—अनेकेषां—बहूनां, जन्तूनां—प्राणिनां, जङ्घान्तरालेभ्यः,—जङ्घयोः,—प्रसृतयोः जानुगुल्फयोर्मध्यभागयोरित्यर्थः, ("जङ्घा तु प्रसृता" इत्यमरः) अन्तरालेभ्यः,—मध्यभागेभ्यः, निःसरणे—निर्गमने, कुशलिनः,—निपुणाः। अल्पदेहत्वादिति भावः तैः, [कुशलशब्दस्यात्र विशेष्यत्वमेव बोद्धव्यं, तस्य च विशेषणत्वे मत्वर्थीयस्य विरोधेऽपि निरर्थकत्वमेवेति ध्येयम्]।

(१६३) कुटिलिकेति।—कुटिलिकया—वक्रगमनेन, व्यंसिता,—वञ्चिताः, श्वादिनाम्—श्वमार्जारादयः, खड्ग,—गण्डकाः, श्वान,—कुक्कुराः, कुटिलगत्या पश्चात्ताडनाय-मानैस्तैः इति भावः ये तथाभूतैः। एतेन मूर्खजनव्यापारव्यवसायाः, मतिमाद्यप्यविदग्ध-र्षेऽपि दुर्बोधगतिभिः प्राणिभिः सुधा क्रियन्ते इत्यवगम्यते।

(१६४) पतदिति।—पतन्तः,—पतन्तः इतस्ततः लोष्टानि—लोष्टाः, मृत्पिण्डानीत्यर्थः, ("लोष्टानि लेष्टवः पुंसि" इत्यमरः) लगुडाः,—दण्डाः, कोणाः,—वादनदण्डाः, ("कोणो वीणादिवादनम्" इत्यमरः) कुठाराः,—परशवः, कोलाः,—मुद्गराः, कुद्दालाः,—"कोदाल" इति बङ्गभाषया प्रसिद्धाः भूमिदारणोपयोगिशस्त्रविशेषाः, ("कुद्दालः स्यात् पुमान् भूमिदारणे युगपत्रके" इति मेदिनी) खनित्राणि—अवदारणानि, "खन्ता" इति प्रसिद्धानि खननसाधनानि शस्त्राणि इत्यर्थः, ("खनित्रमवदारणम्" इत्यमरः) ["अर्त्तिलू—" (३।२।१८४ पा०) इत्यादिना इत्र] दात्राणि—"दा" इति प्रसिद्धानि लवित्राणि, ("दात्रं लवित्रम्" इत्यमरः) यष्टयः,—अस्त्रभेदाः, भुजदण्डा न वेणु तयोक्ते, ("यष्टि पुंसि स्यात् भुजदण्डके। इषीहारलतायां मधुका-शस्त्रभेदयोः॥" इति मेदिनी) आयुष,—जीवनकालस्य, दीर्घजीवनायुष इत्यर्थः, बलात्—प्रभावात्, निःसरद्भिः,—निर्गच्छद्भिः तत्पदस्याघातलाभाभावादिति भावः, प्रभवैरिति पूर्वोक्तैः योजना कृतकलकलम्—कृतकोलाहलम्।

(१६५) सद्भय,—वहद्भय, घासिकैः,—घासे नियुक्तैः, घासवहादिभिः

रितवासजालजालकितजघनैश्च (१६६) पुराणपर्य्याणैकदेशदोलायमानदात्रैश्च शीर्णोर्णाप्रकलशिथिलमलिनमलकुथैश्च (१६७) प्रभुप्रसादीकृतपाटित पटच्चरचलच्चोलकधारिभिश्च धावमानैः उद्धूयमानधूलिपटलं, क्वचित् (१६८) एकान्तप्रवृत्ताश्ववारचक्रचर्व्यमाणागामिगौडविग्रहं, क्वचित्

ग्रामवाहिभिश्च इत्यर्थ, कुथेति।—कुथेन—कडङ्करेण, पश्चात्लादिचूर्णमित्यर्थ, ("कडङ्गरो बुस क्लीवे" इत्यमर) तथा धूलिभि,—पांशुभि, धूसरितानाम—व्याकीर्णत्वादीषत्पाण्डुवर्णानां, घासानां—यवसानां, जालेन—समूहेन, जालकितानि—सञ्जातजालानि इव लक्ष्यमाणानि जघनानि—नितम्बभागा इत्यर्थ येषां ते ।

(१६६) पुराणेति।—पुराणस्य—पुरातनस्य, पर्य्याणस्य—पल्ययनस्य, एकदेशे—एकस्मिन्नंशे पश्चाद्देशे इति यावत्, दोलायमानानि—लम्बमानानि, दात्राणि—घासच्छेदनास्त्रविशेषा येषां ते। शीर्णेति।—शीर्णानि—क्षीणानि, जीर्णानि इति यावत, ऊर्णानां—मेषादिलोम्नाम् ("ऊर्णा मेषादिलोम्नि" इत्यमर) प्रकलानि—खण्डानि, स शिथिला,—दुर्बला इत्यर्थ, सुविरला इति भाव, मलिना,—मलदिग्धा, मलकुथा—(हस्त्यास्तरणानि, कम्बलवर्णकम्बला इत्यर्थ येषा ते, ("प्रवेण्यास्तरण वर्णः परिस्तोमः कुथो द्वयो" इत्यमर)। क्वचित् "मलकुथा—सप्तपदी कविविषय" इति व्याख्यातवान् ।

(१६७) प्रभ्विति।—प्रभुणा—स्वामिना, प्रसादीकृत—कृपया दत्त, पश्चात् पाटित—छिन्न यत पटच्चर—जीर्णवस्त्र, ("पटच्चर जीर्णवस्त्रम्" इत्यमर) तस्मात् चलन—भ्रश्यन् यत् चोलक—वस्त्रखण्ड तत् धारयन्ति—वहन्ति, धरन्ति इति भाव ये तथाभूतै । धावमानै,—द्रुत गच्छद्भि, घासिकैरिति पूर्वोक्तेनान्वय, उद्धूयमानेति।—उद्धूयमानानि—उत्क्षिप्यमाणानि द्रुतपदविक्षेपणादिति भाव, धूलिपटलानि—पांशुसमूहा, मार्गगतानीति भाव यत्र तथोक्तम ।

(१६८) एकान्तेति।—एकान्तप्रवृत्तै—एकस्मिन्नंशे अवस्थितैरित्यर्थ, अश्ववारचक्रे—सादिसमूहै चर्व्यमाण,—भक्ष्यमाण पुन पुन आलोच्यमान इति यावत, आगामी—अचिरभावी, गौडविग्रह,—गौडराजेन सह युद्ध, युद्धस्य शुभाशुभमित्यर्थ, आगामिनि गौडयुद्धे क पराजयिष्यते इत्येवरूप इति यावत यत्र तथोक्तम, यद्वा,—आगामिन,—युद्धाय तूर्णमागमिष्यत, कृतयुद्धोद्यमस्येति भाव, गौडस्य—गौडाधिपस्य, विग्रह,—शरीर यत्र तथोक्तम् ।

तया कौतुकजननं, प्रलयजलधिम् इव (१७३) जगद्ग्रास-ग्रहणाय प्रवृत्तं, पातालमिव महाभोगिनां गुप्तये समुत्पादितं, कैलासमिव परमेश्वरवसतये सृष्टं, (१७४) दृश्यमानसकल-प्राणिपर्य्यायं चतुर्युगसर्गकोशमिव प्रजापतीनां, क्लेशबहुलमपि तपःकरणमिव क्रमकारणं कल्याणानाम्, एवञ्च वीक्ष्यमाणः कटकं जगाम।

(१७५) आसन्नवर्त्तिनाञ्च तत्रभवतां,—"मान्धाता प्रवर्त्तिताः

---

धान्यमानाश्चर्य्योभितमिति भाव, अनेकव्यापारतया—बहुव्यापारवया, उत्कर्षेण इति भाव, कौतुकजनन—चमत्कारावहम्।

(१७३) प्रलयजलधिमिव—कल्पान्तकालिकसमुच्छ्वसितसमुद्रमिव, जगदिति।—जगदिव—भुवनमिव, ग्रास,—कवलः, तस्य ग्रहणाय—स्वीकरणाय, प्राशनाय इत्यर्थः, सर्व्वजगदात्माधीनीकरणाय सर्व्वजगत्सङ्कलनाय च इति यावत्। महाभोगिनां—महान्तः,—महान्तः इत्यर्थः, भोगिनः,—सुखभोगरता लोकाः, सर्पाश्च तेषां, गुप्तये—रक्षणाय, समुत्पादित—रचितं, सर्वेणापि क्षेत्र., दुर्लङ्घ्यतामल्पाधारास् लोकान् धातु सङ्घटितमिति समुदितार्थः। परमेश्वरवसतये—परमेश्वर,—हर्षः, हरश्च, तस्य वसतये—स्थितये।

(१७४) प्रजापतीनां—ब्रह्मादीनां, चतुर्युगेति।—चतुर्णां—चतुःसङ्ख्यकानां, युगानां—सत्यादीनां, समाहृतानामिति भाव, सर्गकोशमिव—सृष्टिस्थानमिव, दृश्यमानेति।—दृश्यमाना,—ईक्ष्यमाणा, सकलानां—सर्वेषां, प्राणिनां—जीवानां, पर्य्यायाः,—क्रमाः, प्रकारभेदा इत्यर्थः, यत्र,—पर्य्याय,—परि—समन्तात्, आयः,—आगमन यत्र तथोक्तं, सर्व्वप्राणिसमाकीर्णमिति यावत्। तपःकरणमिव—तपश्चरण-मिव, सिद्धिलाभजनकत्वादिति भाव.। क्रमकारणं—क्रमेण श्रेयसां साधनं, दुर्लङ्घ्योप-द्रवनिवारकेनेति भाव। [ "क्रमकारणम्" इत्यत्र "क्रमकारिणम्" इति पाठे,—क्रम,—क्रम. शक्तौ निर्देशस्त्वयं, यद्वा,—क्रम,—अनुक्रम, उपक्रम इत्यर्थः, ("क्रमश्चानुक्रमे शक्तौ कल्पे चाक्रमणेऽपि च" इति मेदिनी) तस्य कारी तम्।

(१७५) "आसन्नवर्त्तिनाम्" इत्यस्य "दुर्व्वचमाश्रान्··· आलापान् पार्थिव-कुमाराणाम् मद्भर्तालिना शृण्वन् एव आससाद आवासम्" इत्युत्तरेण सम्बन्धः।

पन्थानो दिग्विजयाय। (१७६) अप्रतिहतरथरंहसा रघुणा लघुना एव कालेन अकारि ककुभां प्रसादनम्। शरासनद्वितीयः करदीचकार चक्रं क्रमागतभुजबलाभिजनधनमदावलिप्तानां भूभुजां पाण्डुः। (१७७) पाण्डवः सव्यसाची चीनविषयम् अतिक्रम्य राजसूयसम्पदे (१७८) क्रुध्यद्गन्धर्वधनुष्कोटिटाङ्कारकूजितकुञ्जं हेमकूटपर्वतं पराजैष्ट।

---

मान्धेति।—चाक्रवर्तिनाम्—चक्रवर्तिनाम्, समभवत्—मान्धाता, पार्थिवकुमार इत्यनेनान्वयः। आद्यप्रकारमाह, मान्धातेति।—मान्धाता—युवनाश्वसुतेन सूर्यवंशीयेन राज्ञा, दिग्विजयाय—सर्वदिगवस्थितानां राज्ञां पराभवायेत्यर्थः, पन्थानः,—सरण्यः, दृष्टान्ता इति यावत्, प्रदर्शिताः,—प्रदर्शिता इत्यर्थः।

(१७६) अप्रतिहतरथरंहसा—अप्रतिहतस्यन्दनवेगेन। लघुनैव—अल्पेनैव, कालेन—समयेन, ["प्रकृत्यादिभ्य उपसङ्ख्यानम्" (वा०) इति तृतीया] ककुभां—दिशां, प्रसादनम्—दुष्टराजशासनजनितकण्टकापनोदनेन प्रसन्नताविधानमित्यर्थः, वशीकरणम् इति यावत्। शरासनद्वितीयः,—धनुर्मात्रसहायः, अन्यसाहाय्यानपेक्ष इति भावः, पाण्डुः,—युधिष्ठिरादीनां जनकः, क्रमागतेति।—क्रमागतस्य—पितृपितामहादिभ्य प्राप्तस्य भुजबलस्य—बाहुवीर्यस्य, अभिजनस्य—वंशमर्यादायाः, धनानाम्—अर्थानाञ्च, मदेन—गर्वेण, अवलिप्ताः,—उद्धताः तेषां, भूभुजां—राज्ञां, चक्रं—मण्डलं, करदीचकार—शासनाधीनं विदधे।

(१७७) सव्यसाची—सव्येन—वामेन, वामहस्तेनापीति यावत्, सचति—वर्षति, बाणान् विक्षिपति इत्यर्थः यः सः, पाण्डवः,—अर्जुन इत्यर्थः, राजसूयसम्पदे—तदाख्यमखविशेषसम्पत्तिनिमित्तं, राजसूययज्ञसम्पादनोचितधनार्थमित्यर्थः, [राज्ञा सूयते असौ राजसूयः क्रतुः इत्यर्थे "राजसूयसूर्य—" (३।१।११४ पा०) इति सूत्रेण क्यबन्तो निपात्यते] चीनविषयं—चीनराज्यम्, अतिक्रम्य—निर्जित्येत्यर्थः।

(१७८) क्रुध्यदिति।—क्रुध्यता—कुप्यता गन्धर्वाणां—देवयोनिविशेषाणां, धनुष्कोटि,—कार्मुकाटनेः, टाङ्कारेण—ज्यानिस्वनेन, कूजिताः,—शब्दिताः, कुञ्जाः,—निकुञ्जाः, लतादिपिहितस्थानानीत्यर्थः यस्य तथोक्तं, ("निकुञ्ज-कुञ्जौ वा क्लीबे लतादिपिहितोदरे" इत्यमरः) हेमकूटपर्वतं—सुमेरुपर्वताधिवासिनं गन्धर्वसमूहमिति यावत्, पराजैष्ट—जिगाय, जयतेर्लुङि रूपं, ["विपराभ्यां जेः" (१।३।१९ पा०) इति आत्मनेपदम्]।

(१७९) सङ्कल्पान्तरितो विजयः तरस्विनाम्। (१८०) सहिमहिमवद्व्यवहितोऽप्युवाह बाहुबलव्यतिकरकातरः करं कौरवेश्वरस्य किङ्कर इव भगतो द्रुमः। (१८१) नातिजिगीषवः खलु पूर्वे येन अल्प एव भूभागे भूयांसो भगदत्त-दन्तवक्त्र-क्राथ-कर्ण-कौरव-शिशुपाल-साल्व-जरासन्ध-सिन्धुराजप्रभृतयोऽभवन् भूपतयः। (१८२) सन्तुष्टो राजा युधिष्ठिरः, यो हि असहन्त समीप एव धनञ्जयजयजनितजगत्त्रासः किम्पुरुषाणां

---

(१७९) तरस्विना—वीर्यशालिना, विजयः—शत्रुपराभव इति यावत्, सङ्कल्पान्तरितः,—मननमात्रव्यवहितः, सङ्कल्पमात्रसाध्य इत्यर्थः, सङ्कल्पमात्रव्यवहितो हि विजयः तेजस्विनामिति फलितार्थः। विजिगीषुणा विजयी सङ्कल्पादन्यत् किमपि फलितमनुत्पादयितुं न शक्नोति, सङ्कल्पात् परमेव ते कार्यं सम्पादयन्तीति भावः।

(१८०) सहिमेति।—सहिमेन—तुषाराकीर्णेन, हिमवता—हिमाद्रिणा, व्यवहितः,—व्यवहितः, दुर्जयोऽपि सन्निति भावः, बाहुबलव्यतिकरकातरः—भुजवीर्यसम्बन्धभीत इति यावत्, भगतो—भग्नः, दुर्बल इत्यर्थः, द्रुमः,—तदाख्यः किन्नरपतिः कौरवेश्वरस्य—दुर्योधनस्य, करं—राजग्राह्यभागम्, उवाह—वहति स्म, दुर्गमप्रदेशस्थमपि द्रुमं तेजस्वी दुर्योधनः सङ्कल्पमात्रेणैव करदं चकारेति समुदितार्थः।

(१८१) पूर्वे—पुरातनाः राजानः नातिजिगीषवः,—नातिविजयाकाङ्क्षिण इत्यर्थः, आसन्निति शेषः, येन—येन हेतुना, नातिजिगीषुतयेत्यर्थः, अल्पे एव भूभागे—अदूरवर्तिप्रदेशमध्ये अल्पीयसि भूमिभागे इत्यर्थः, भूयांसः,—अतिबहवः, भगदत्तः,—प्राग्ज्योतिषाधिपतिः दुर्योधनश्वशुरः, दन्तवक्त्रः,—कृष्णद्वेषिनृपविशेषः, क्राथः,—नृपविशेषः कर्णः,—अङ्गाधिपः दुर्योधनसुहृत्, कौरवः,—दुर्योधनः, शिशुपालः—चेदिराजः कृष्णद्वेषी, साल्वः—सौभाधिपतिः, जरासन्धः,—मगधाधिपतिः, सिन्धुराजः,—जयद्रथः तत्प्रभृतयः,—तदादयः, एतेषां जिगीषुत्वे च अल्पीयसि भूभागे एकस्यैव भूपतित्वं स्यादिति फलितार्थः।

(१८२) युधिष्ठिरः—राजा पाण्डोः ज्येष्ठसुतः, [युधि स्थिर इति अलुक्समासे "गवि युधिभ्यां स्थिरः" (८।३।९५ पा०) इति सत्वं षत्वम्] सन्तुष्टः,—अल्पेनैव मुदितः इत्यर्थः, अजिगीषुरपि वीतमत्सरतया कारुण्यपूर्णतया वा हिंसाबहुले दण्डविधौ अलसः

गतागताप्रहतभुवम्; (३८२) उपवेत्रसुपरचितैर्मञ्चैश्च सूच्यमानश्वापदोपद्रवम्; दिशि दिशि च (३८३) प्रतिमार्गद्रुमकृतानां, पथिकपादप्रस्फोटनधूलिधूसरैः नवपल्लवैर्लाञ्छितच्छायानाम्, (३८४) अटवीसुलभसालकुसुमस्तबकाञ्चितनवखातकूपिकोपकण्ठप्रतिष्ठितनागस्फुटानाम्, (३८५) अच्छिद्रकटकल्पितकुटीरकाणां, (३८६) कुटिलकीटवेणीविद्धा

---

कृच्छ्रतयाकायमर्दादिति भावः, गताभ्याम्—प्रारब्धाभ्याम्, गतागताभ्याम्—यातायाताभ्याम्, अप्रहता—नातिक्षुण्णा, नातिक्रान्ता इत्यर्थः, भूः,—भूमिः यत्र तम्।

(३८२) उपवेत्र—वेत्रसमीपे, [सामीप्येऽव्ययीभावः] यद्वा,—वेत्रेषु उप वेत्रमिति [विभक्त्यर्थेऽव्ययीभावः] उपरचितैः,—कल्पितैः, मञ्चैः,—"माचा" इति बङ्गभाषया प्रसिद्धैः, ["उपरचितैर्मञ्चैश्च" इत्यत्र "उपरचितैरच्चैर्मञ्चैश्च" इति पाठान्तरम्] सूच्यमानेति।—सूच्यमानः,—अनुमीयमानः, श्वापदानाम्—हिंस्रजन्तूनाम्, श्वापदस्य—व्याघ्रस्य वा, उपद्रवः,—उत्पातः यत्र तम्।

(३८३) प्रतिमार्गेति।—प्रतिमार्गे—प्रतिपथं, द्रुमैः,—वृक्षैः, कृतानां—रचितानाम्। पथिकेति।—पथिकानाम्—पान्थानां, पादप्रस्फोटनात्—चरणताडनात्, सवेगपदक्षेपणादित्यर्थः, उत्थिताः इति शेषः, याः धूलयः,—पांशवः, ताभिः, तत्सङ्गमेन इति भावः, धूसराः,—ईषत्पाण्डुवर्णाः तैः, लाञ्छितेति।—लाञ्छिताः,—चिह्निताः, युक्ता इत्यर्थः छाया—प्रतिबिम्बं यासां तथोक्तानाम्।

(३८४) अटवीति।—अटव्याम्—अरण्ये, सुलभाः,—सुप्रापाः, ये सालाः—वृक्षविशेषाः, तेषां कुसुमस्तबकैः,—पुष्पगुच्छैः, अञ्चिताः,—शोभिता इत्यर्थः, तत्पुष्पगुच्छानां निजाङ्गेषु पतनादिति भावः, नवखाता—नूतनखनिता, या कूपिका—क्षुद्रकूपः, तस्याः उपकण्ठे—अन्तिके, ("उपकण्ठान्तिकाभ्यर्णाभ्यग्रा" इत्यमरः) प्रतिष्ठिताः,—प्रतिष्ठां गताः, ये नागस्फुटाः,—नागदन्तिकाः, प्रस्फुटितपुष्पनालकेसरकुसुमाः वा यत्र तासाम्।

(३८५) अच्छिद्रेति।—अच्छिद्र—छिद्ररहितं यथा तथा, कटैः,—तृणाख्यद्रव्यविशेषैः, किलिञ्जैः, ("कट श्रोणौ द्वयोः पुंसि किलिञ्जेऽतिशये शवे" इति मेदिनी) कल्पितानि—रचितानि, कुटीरकाणि—क्षुद्रगृहाणि यासां तासाम्।

(३८६) कुटिलेति।—कुटिला—वक्रगामिनी, या कीटवेणी—कीटश्रेणी,

सानप्रक्रुषारशरावश्रेणीश्रितानाम्, (३८७) अध्वगजनजग्ध जम्बूफलास्थिशबलसमीपभुवाम्, उद्धूलितधूलीकदम्बस्तबक-प्रकरपुलकिनीनां, (३८८) कण्टकितकर्करीचक्राक्रान्त-काष्ठमञ्चिकामुषिततृषां, तिम्यज्जलशीतलसिकतिलकलशी-शमितश्रमाणाम्, (३८९) आश्यानशैवलश्यामलितानिर्झर-

---

पिपीलिकापङ्क्तिरिति भावः, तया वेष्ट्यमाना,—व्याकीर्यमाणा, सक्तुभिः,—भृष्टयवचूर्णैः धारा,—प्रबला शरावाणां—मृन्मयभाजनविशेषाणां, श्रेणयः,—पङ्क्तयः, ताभिः श्रिता,—युक्ता तासाम्।

(३८७) अध्वगेति।—अध्वगैः,—पान्थैः, जनैः,—लोकैः जग्धानां—खादितानां, जम्बूफलानां—जाम्बवफलानाम् अस्थिभिः—बीजैः, अष्ठिभिरिति भावः, शबला—चित्रा, समीपभूः,—निकटस्थभूमिर्यासां तथोक्तानाम्। उद्धूलितेति।—उद्धूलित,—उत्थितपरागे, धूलीकदम्बानां—नीपभेदानां, कदम्बविशेषाणामित्यर्थः, ("धूलीकदम्बो नीपे स्यात् तिनिशे वरुणद्रुमे" इति मेदिनी) स्तबकप्रकरैः,—पुष्पगुच्छसमूहैः, पुलकिन्य,—पुलकवत्य इव, रोमाञ्चिता इव दृश्यमाना इति भावः तासाम्।

(३८८) कण्टकितेति।—कण्टकितानां सञ्जातकण्टकानां, कर्करीणां—लताविशेषाणां, [ कर्करी इत्यत्र 'कर्कटी' कर्कारु" इति वा पाठः समीचीनः, कर्करीशब्दस्य लताविशेषवाचकत्वस्य कोषादावदर्शनात्, कर्कटी कर्कारु इति वा पाठे,—"काँकुड इति प्रसिद्ध फलविशेष, कुष्माण्डो वा इति बोध्यम् ] चक्रैः,—मण्डलैः, आक्रान्ता,—आवृता, या काष्ठमञ्चिका,—दारुनिर्मितमञ्चविशेषः, ताभिः, तद्दृश्यैरित्यर्थः, फलभक्षणाशयेति भावः, मुषिता,—हृता, तृष,—तृष्णा येन तथाविधानाम्। तिम्यदिति।—तिम्यत्सु—आर्द्रेषु, तलेषु—अधोदेशेषु, शीतलाभिः,—हिमाभिः, सिकतिलाभिः,—वालुकामयीभिः कलशीभिः,—घटैः, घटस्पर्शैरिति भावः, शमितः,—अपनीतः, श्रमः,—सन्तापजायासः इत्यर्थः, पान्थानामिति भावः, यासु तथोक्तानाम्।

(३८९) आश्यानेति।—आश्याने,—ईषच्छुष्के, [illegible], निविड भावैर्वा श्लिष्टैरित्यर्थः, शैवलैः,—जलनीलीभिः, निरन्तरजलसद्भावात् [illegible] भावः, श्यामलितेषु—श्यामलतां गतेषु, निर्झरेषु—मणिकेषु,

जायमानजलजडिम्नाम्, (३९०) उदकुम्भाऽऽकृष्टपाटलशर्करा-शकलशिशिरीकृतदिशां, (३९१) घटमुखघटितकटहारपाटल-पुष्पपुटानां, (३९२) शीकरपुलकितपल्लवपूलीपाल्यमानशोष्य-सरसशिशुसहकारफलजूटीजटिलस्थाणूनां, (३९३) विश्राम्यत्-कार्पटिकपेटकपरिपाटीपीयमानपयसाम्, अटवीप्रवेशप्रपाणां

---

"जाला" इति वङ्गीयैराख्यातेषु मृन्मयजलाधारविशेषेषु इत्यर्थः, ("अलिञ्जर स्यान्मणिकम्" इत्यमरः) जायमानः,—सम्पद्यमानः जलानां—सलिलानां, जडिमा—शैत्यं यासु तथोक्तानाम्।

(३९०) उदकुम्भेति।—उदकुम्भेभ्यः,—जलघटेभ्यः, आकृष्टानां—बहिरानीतानां, पाटलानां—श्वेतरक्तानां, शर्कराणां—कर्कराख्यवालुकानां, शकलैः—खण्डैः, अंशविशेषैः इति भावः, शिशिरीकृताः,—शीतलीकृताः, वायुना जलीयांशस्य इतस्ततो विक्षिप्यमाणत्वादिति भावः, दिशः,—ककुभः यासु तथोक्तानाम्।

(३९१) घटेति।—घटानाम्—उदकुम्भानां मुखेषु—आस्येषु उपरिभागेषु इत्यर्थः, घटितः,—रचितः, कटहारः—तृणविशेषनिर्मितहारः, पाटलम्—श्वेतरक्तं, पुष्पपटश्च—कुसुमावरणश्च, यद्वा,—घटमुखे घटितकटहारे यत् पाटलपुष्पं—"पारुल" इति वङ्गीयैराख्यातं पाटलाख्यकुसुमविशेषः ग्रथितमिति भावः, तं पुटः,—आच्छादनम् अधिवासनार्थमिति भावः यासु तथोक्तानाम्।

(३९२) शीकरेति।—शीकरैः,—अम्बुकणैः, पुलकिता—सम्पृक्ता इति यावत्, या पल्लवपूली—किसलयसमूहः, तया पाल्यमानः—रक्ष्यमाणः आप्याय्यमानः इत्यर्थः, अत एव शोष्योऽपि—शोषणयोग्योऽपि, सरसः—अशुष्कः इत्यर्थः, परिपुष्ट इति यावत्, ■ शिशुसहकारः,—बालाम्रतरुः, तस्य फलजूटीभिः—फलसमूहैः, जटिलाः,—संयुक्ताः, स्थाणवः,—शाखापल्लवरहिततरवः इत्यर्थः यासु तथोक्तानाम्, यद्वा—शीकरपुलकितपल्लवपूलीपाल्यमानाः अत एव शोष्योऽपि शाखापल्लवादिशून्यत्वेनातपराहित्यादिति भावः, सरसः, आम्रशाखाभिराच्छादनादिति भावः, शिशुसहकारफलजूटीजटिलस्थाणुर्येषु तथोक्तानाम्।

(३९३) विश्राम्यदिति।—विश्राम्यद्भिः—श्रममपनुदद्भिः, कार्पटिकैः,—कर्पटेन—कषायवस्त्रेण चरन्तीति तैः, तीर्थयात्रिकैरित्यर्थः, पेटकपरिपाटीभिः,—पात्रविशेषश्रेणीभिः, यद्वा—कार्पटिकपेटकैः,—तीर्थयात्रिकवृन्दैः, ("पेटकः पुस्तकादीनां मञ्जूषायां कदम्बके" इति मेदिनी) परिपाट्या—आनुपूर्व्या, अनुक्रमेणेत्यर्थः,

शैत्येन त्याजयन्तमिव ग्रैष्मम् उष्माणम्, (३८४) क्वचित् अन्यत्र ग्राहयन्तमिव अङ्गारीयदारुसङ्कूटदाहिभि व्योकारैः; सर्वतश्च (३८५) प्रातिवेश्यविषय-वासिना, समासन्नग्रामगृहस्थापितस्थविरपरिपाल्यमानपाथेय-स्थगितेन, (३८६) कृतदारुणदारुव्यायामयोग्याङ्गाभ्यङ्गेन, (३८७) स्कन्धाध्यासितकठोरकुठारकण्ठलम्बमानप्रातराशपुटेन,

---

पीयमानं सलिलं—जलं यासां यत्र वा तथोक्तानाम् अन्धीभवद्वधपाशाम्—अरण्ये प्रवेश पानीयशालानाम्, ("प्रपा पानीयशालिका" इत्यमरः)। ग्रैष्मम्—ग्रैष्मिकम् उष्माणम्—उत्तापम्।

(३८४) अङ्गारीयदारुसङ्कूटदाहिभि—अङ्गारेभ्य—अङ्गारेभ्यः हितानि अङ्गारीयाणि—अङ्गारोपयोगीनि यानि दारूणि—काष्ठानि तेषां सङ्कूटं—सञ्चयं, राशिरित्यर्थः तं दहन्ति—भस्मीकुर्वन्तीति तथाभूतैः व्योकारैः—लौहकारैः कर्म्मकारैः इत्यर्थः ("व्योकारो लौहकारकः" इत्यमरः) अन्यत्र क्वचित् ग्राहयन्तमिव—सङ्क्रामयन्तमिव, उष्माणमिति पूर्वेणान्वयः।

(३८५) प्रातिवेश्येति।—प्रातिवेश्यः—प्रतिवेशी विषयवासी—जनपदवासी तेन, यद्वा—प्रातिवेश्यः—प्रातवास्तः—प्रतिवेशिनः अयं प्रातिवेशिसम्बन्धीत्यर्थः, विषयः—आश्रयः (विषय आश्रये" इत्यमरः) तत्र वसति—तिष्ठतीति तेन यद्वा, —प्रातिवेश्यः—गृहसमीपवर्त्ती यो विषयः—देशः ग्रामान्तरमित्यर्थः (विषयो गोचरे देशे तथा जनपदेऽपि च" इति मेदिनी) तद्वासिना। समासन्नेति।—समासन्ने—सन्निहिते, ग्रामे—धातव्ये यत् गृहं—भवनं तत्र स्थापितेन—रक्षितेन स्थविरेण—वृद्धेन परिपाल्यमानं—रक्ष्यमाणं यत् पाथेयं—शम्बलं, तेन स्थगितः—पाथेया-नधिगमात् गमनात् निवृत्त इत्यर्थः तेन।

(३८६) कृतेति।—कृतः—विहितः दारुणस्य—कठिनस्य दारुव्यायामस्य—काष्ठच्छेदनरूपपरिश्रमस्य योग्यः—अनुरूपः अङ्गाभ्यङ्गः—शरीरे तैलमर्द्दनं वक्ष्य-यैन तथोक्तेन अभ्यङ्गलक्षणमुक्तं यथा—"मूर्द्ध्नि न्यस्य यदा तैलं मर्द्दनं सर्वाङ्गसङ्गतम्। स्रोतोभिन्नपयोधाङ्ग अभ्यङ्गः स उदाहृतः॥" इति।

(३८७) स्कन्धेति।—स्कन्धः—अंसदेशे अध्यासितस्य—स्थापितस्य कठोरस्य—तीक्ष्णस्य इति यावत् कुठारस्य—परशोः, कण्ठ—अग्रभागे इत्यर्थः, लम्बमानः—तिष्ठदित्यर्थः प्रातराशपुटः—प्रातर्भोजनपात्रं यस्य तथाभूतेन।

(३९८) पाटच्चरप्रत्यवायप्रतिपन्नपटच्चरेण, कालवेत्रक-त्रिगुणव्रततिवल्कलपाशग्रथितग्रीवाग्रथितैः पत्रपोटाहृतमुखैः पीतकूटैः उदकधारिणा (३९९) पुरःसरबलवद्बलीवर्दयुग-सरेण, नैकटिककुटुम्बिकलोकेन, काष्ठसङ्ग्रहार्थम् अटवीं प्रविशता, (४००) श्वापदव्यधनव्यवधानवल्लीसमारोपित-कुटीकृतकूटपाशेन, (४०१) गृहीतमृगतन्तुतन्त्रीजालवलय-

---

(३९८) पाटच्चरेति।—पाटच्चरः,—चौरः, ("चौरैकागारिकस्तेन । पाटच्चरमलिम्लुचाः" इत्यमरः) स एव प्रत्यवायः —अन्तरायः, तेन हेतुना प्रतिपन्नः—गृहीतः, परिहितमित्यर्थः पटच्चरः—जीर्णवस्त्रं येन तथोक्तेन, ("पटच्चरं जीर्णवस्त्रम्" इत्यमरः) दस्युतस्करादिभिः परिहृतजीर्णवस्त्रस्य वस्त्रपूर्णकार्पटप्रत्यभयाभावात् इति भावः। कालेति।—कालवेत्रकाः—कृष्णवेत्रकाः, त्रिगुणः—त्रिरावृत्तः वल व्रततिवल्क—लतावल्कलमेव, पाशः,—रज्जुः, यद्वा,—त्रिगुणः व्रततिवल्कलपाशः —लतावल्कल-रचितरज्जुः तेन ग्रथितया—वेष्टितया, ग्रीवया—कण्ठेन ग्रथितैः,—विधृतैः, कण्ठरक्षे-रित्यर्थः तादृशग्रीवावद्भिरिति यावत् पत्रेति।—पत्रपोटया—पत्रसम्पुटेन, आवृतम् —आच्छादितं, मुखम्—अग्रभागः इत्यर्थः येषां तथोक्तैः, पीतकूटैः,—पानपात्र-विशेषैः उदकधारिणा—उद्गृहीतसलिलेन।

(३९९) पुरःसरेति।—पुरःसरम्—अग्रसरं यथा तथा, बलवत्—सबलं, बलीवर्दयुगलम्,—वृषभयुगलं यस्य तेन, ["पुरःसरबलवद्बलीवर्द—" इत्यत्र पुरः-सरबलवद्बलीवर्द—" इति पाठस्तु समीचीनतया प्रतिभाति, तस्मिन् पुरःसर,—अग्रे गच्छन्, बलवान्—सबलं बलीवर्दयुगलं यस्य तेन] नैकटिककुटुम्बिकलोकेन —सन्निहितगृहस्थलोकेन "उपेतम्" इत्यनेनान्वयः। एवमुत्तरत्रापि तृतीयान्त-विशेष्यपदानां सङ्गतिः बोद्धव्या।

(४००) श्वापदेति।—श्वापदानां—व्याघ्रादिहिंस्रजन्तूनां, व्यधनाय—वेधनाय, व्यवधाने—अन्तराले, या वल्ली—निभृत स्थानं, तत्र समारोपिता—रचितेत्यर्थः, या कुटी—क्षुद्रं तृणनिर्मितं गृहं तथा कृताः,—स्थापिताः, कूटपाशाः,—कूटरज्जवः यन्त्रपाशुरा वा येन तथाभूतेन।

(४०१) गृहीतेति।—गृहीताः,—धृताः, मृगतन्तवः,—मृगाणाम् जन्तवः इति यावत्, ते [illegible] तन्त्रीजालानि—रज्जुसमूहाः, तेषां वलये,—मण्डले, कालस्तोतं

वागुरैः, वहिर्व्याधैः विचरद्भिः; असावसक्तनीतमव्यालम्ब्यमानबालपाशिकैश्च, (४०२) सङ्गृहीतग्राहककाककारकपिञ्जलादिपञ्जरकैः शाकुनिकैः सञ्चरद्भिः, (४०३) च्युतमासकलेशनिम्नलतावधूलट्वालम्पटानाञ्च पेटकैः पाशकशिशूनाम् घटद्भिः, (४०४) दवस्तम्बान्तरिततित्तिरितरलायमानकौलेयककुलचाटुकारैश्च विहङ्गमृगयां मृगयुयुवभिः

---

भाव, वागुरा—पाश ये तथाभूतैः, मृगाकर्षिणिपाशधारिभिरित्यर्थः, वहि, विचरद्भिः,—सञ्चरद्भिः व्याधैः—लुब्धकैः। असेति।—असेषु—स्कन्धदेशेषु असक्ताः, —सक्ताः, नीतसा,—"सालनला" इति बङ्गभाषया ख्यातानि मत्स्यधरणार्थानि उपकरणानि ("नीतसञ्चकरणं मत्स्ये मत्स्यादिबन्धनम्" इत्यमरः) व्यालम्बमानाः—दोलायमाना इत्यर्थः, बालपाशिका—पुदरज्जुः येषां तैः, यद्वा, —असावसक्तनीतेषु व्यालम्बमाना—सम्बद्धानीत्यर्थः, बालपाशिका येषां तैः।

(४०२) सङ्गृहीतेति।—सङ्गृहीतानि—धृतानीत्यर्थः, ग्राहकाणां—धातिविहगानां, श्येनानामित्यर्थः, ("ग्राहकौ घातिविहगे व्यालग्राहे ग्रहीतरि" इति मेदिनी) काकराणां—ककचानां, "कयेर" इत्याख्यपक्षिणामित्यर्थः, ("ककायकलवौ समौ" इत्यमरः) कपिञ्जलादीनाञ्च—गौरतित्तिरीणां चातकानां वा, पञ्जरकाणि—पिञ्जराणि यैः तथाभूतैः शाकुनिकैः,—पक्षिव्याधैः, पाशगृधैः इत्यर्थः।

(४०३) च्युतेति।—च्युतलाञ्छकाः,—निवासशून्या इत्यर्थः, निष्पन्दा इति यावत् तथा लेशेन—लवेन लासकलवेनेति यावत् कदाचित् चाटुकमादितिभाव निम्ना —सङ्कटा, लता,—वीरुध एव, वधू —नार्यः, तासु [illegible] लट्वा,—पक्षिभेदाः, ग्राम्यचटका इति यावत्। ("लट्वा करञ्जभेदे स्यात् फले वाद्ये खगान्तरे" इति मेदिनी) तासु लम्पटाः,—लुब्धा तेषां, पाशकशिशूनां—व्याधबालकानां, घटद्भिः,—घटमानैः पेटकैः,—समूहैश्च।

(४०४) दवेति।—दवानाम्—अर्जुनानां, स्तम्बेषु—गुल्मेषु, अन्तरिताः,—निभृतास्थिता, ये तित्तिरयः,—तदाख्यपक्षिभेदाः, तेषु तरलायमानानां—लोलुपानां, कौलेयकानां—सारमेयाणां, कुक्कुराणामित्यर्थः, ("कौलेयकः सारमेये कुलीने" इति मेदिनी) यत् कुलं—समूहः, तस्य चाटुकारैः,—सेवकैरिति यावत्, तन्मध्ये

क्रीडद्भिः, (४०५) परिणतचक्रवाककण्ठकषायरुचां शोध-श्यानां वल्कलानां कलापान्, नातिचिरोद्धृतानाञ्च धातुत्विषां धातकीकुसुमानां गोणीः अगणिताः, (४०६) पिचव्यानां अतसीगणपट्टमूलकानां पुष्कलान् सम्भारान्, भारांश्च मधुनो माक्षिकस्य, मयूराङ्गजस्य, अक्लिष्टमधूच्छिष्टचक्रवालानां, (४०७) लम्बमानलामज्जककूटजटानाम्, अपत्वचां खदिर-

रिति भावः, विहङ्गमेयां—पक्षिषु आखेटं क्रीडद्भिः,—खेलद्भिः, कुर्वद्भिरित्यर्थः, मृगयुयुवभिः,—तरुणैर्व्याधैः।

(४०५) परिणतेति।—परिणत,—स्थविरं च चक्रवाकः,—रथाङ्गनामा पक्षिभेदः, तस्य कण्ठः—गलदेशः, तद्वत् कषाया—पीतरक्ता, लोहिता वा ("कषायो रसभेदेऽपि। तुवरे लोहिते त्रिषु॥" इति मेदिनी) रुक्—प्रभा येषां तथोक्तानां, शोधश्यानां—शोधसाधकसुपाणिश्यानोपयोगिनाम्, ऐश्वर्याणामित्यर्थः, वल्कलानां—त्वचां कलापान् समूहान्। नातिचिरोद्धृतानाम्—अनतिचिरोच्चितानां, धातुत्विषां—गैरिकवर्णानां, ("धातुर्मनःशिलाद्यद्रेर्गैरिके तु विशेषतः" इत्यमरः) धातकी-कुसुमानां—धातपुष्पिकाख्यपुष्पाणां, "धाइफुल" इति बङ्गीयैराख्यायमानानामित्यर्थः, अगणिताः,—असङ्ख्याः, गोणीः,—सुवर्णनिर्मितभाजनविशेषान्।

(४०६) पिचव्यानां—पिचु,—तूलं तदुपयोगिनां, कार्पासानामिति भावः, तथा अतसीति।—अतसीगणः—अतसीभद्रः, पट्टः,—पट्टसभद्रः, मूलकानि—ओषधिभेदाः तेषाम्, यद्वा,—अतसीवर्णानां—क्षौमवस्त्रोपयोगिनां सूत्राणामित्यर्थः, पट्टानां—कौषेयाणां, कौषेयवस्त्रोपयोगिनामित्यर्थः, मूलकानि—मूलानि, बीजानि इत्यर्थं तथा, पुष्कलान्—प्रभूतान् सम्भारान्—निचयान्। माक्षिकस्य—मक्षिका विशेषकृतस्य, मधुनः,—क्षौद्रस्य इत्यर्थं भारान्—समूहान्। मयूराङ्गजस्य—शिखि पिच्छस्य, "भूयसो भारकान्" इति पदेनान्वयः। अक्लिष्टेति।—अक्लिष्टानाम—अक्षुण्णानां मधूच्छिष्टानां—सिक्थकानां, "मोम" इति बङ्गे प्रसिद्धानामित्यर्थं चक्र-वालानि—समूहाः तेषाम्। ["मधूच्छिष्टचक्रवालानाम्" इत्यत्र "मधूच्छिष्टचक्र-मालानाम्" इति पाठे,—मधूच्छिष्टचक्राणां—"मौमाछिर चाक" इति प्रसिद्धानां मधुनिर्विकाराणां आवासभूतानां सिक्थकबीजानां, माला,—श्रेणयः तासाम्]।

(४०७) लम्बमानेति।—लम्बमानानां—दीर्घाणामित्यर्थः, लम्बमानाः,—

काष्ठानां, कुटस्य, (४०८) कठोरकेशरिसटाभारबभ्रुणस्य रोध्रस्य भूयसो भारकान् लोकेन आदाय व्रजता; (४०९) प्रविचितविविधवनफलपूरितपिटकमस्तकाभिश्च, अभ्यर्णग्रामगत्वरीभिः, त्वरमाणाभिः, विक्रयचिन्ताव्यग्राभिः, ग्रामेयिकाभिः व्याप्तदिगन्तरम्; इतस्ततश्च (४१०) युक्तशूरशकुरशाकराला, पुराणपांसूत्करकरीषकूटवाहिनीनां,

द्वीर्घां दृश्यां वा, लामणकानाम—उशीराणाम, ("उशीरमस्त्रियाम्। ०। लामज्जक लघुलयम्" इत्यमर) मूटस्य—समूहस्य, जटा,—मूलानि तासाम्। ("मूलि नपकन्द जटा" इत्यमर)। त्वपलका—लिलमुखाना, खदिरकाष्ठाना—खदिरदारुणाम्। कुटस्य—गोवधावर्हितस्य।

(४०८) कठोरेति।—कठोर—प्रचण्ड, परिपक्व इत्यर्थ, य केशरी—सिंह, तस्य सटाभार—स्कन्धमूह तद्वत् बभ्रु—कपिल, पिङ्गलमिति यावत् तस्य, ("विभुर्न नकुल विष्णौ दश्च पिङ्गले त्रिषु" इत्यमर) रोध्रस्य—रोध्रतरुवल्कलस्य इत्यर्थ, भूयस —बहुमूताम, भारकान्—भारा एव भारका तान् आदाय व्रजता—गच्छता, लोकेन—जनेन।

(४०९) प्रविचितेति।—प्रविचितानि—उच्चितानि, विविधानि—नानाप्रकाराणि वनफलानि—वनस्थितानामृद्धफलानि तै पूरित,—पूर्ण, पेटक,—भाजनविशेष, मञ्जूषा इत्यर्थ, ['पिटक पेटक पेडा मञ्जूषा' इत्यमर। '—पटक—' स्थाने "—पिटक—" इति पाठोऽपि न दृश्यते] मस्तकं—शिरसि यासां ताभि अभ्यर्णग्रामगत्वरीभि —सन्निकृष्ट ग्रामगामिनीभि, त्वरमाणाभि —त्वरितगतिभि, विक्रयेति।—विक्रयस्य—वपणस्य, (विक्रयो विक्रय" इत्यमर) चिन्तया—भावनया चिन्ताया वा, व्यग्राभि —व्यापृताभि कथं केन प्रकारेण वा पदार्थान् द्रव्याणि विक्रेष्यामीति चिन्तया युक्ताभिरित्यर्थ, ग्रामेयिकाभि,—ग्रामवासिनीभि, व्याप्तदिगन्तरम्—व्याप्तदिक्प्रान्तम्।

(४१०) युक्तेति।—युक्ता,—बद्धा इत्यर्थ, शूरा,—बलवत्, शकुरा,—नतया शाकरा—बलीवर्दा यासु ता, पुराणेति।—पुराणा —पुरातना, पांसव—रजांसि उत्किरन्ति—उत्क्षिपन्तीति तथोक्ता, करीषाणि शुष्कगोमयानि, ("करीषोऽस्त्री शुष्कगोमये" इत्यमर) तेषा कूटान—राशीन् वहन्ति—नयन्ति इति तथोक्तानाम्।

( ४११ ) धुर्यगतधूलिधूसरसैरिभसरोषखरसाध्यमानानां, सङ्कीडचटुलचक्रचीत्कारिणीनां शकटश्रेणीनां सम्पातैः ( ४१२ ) सम्पाद्यमानदुर्बलोर्वीविकृष्टकेदारसंस्कारम् ; ( ४१३ ) आरब्धद्विपदान्तवाहकदण्डोड्डीयमानहरिणहिनालङ्घिततुङ्गवेणवृतिभिः, ( ४१४ ) निखातगौरकरङ्कशङ्कशङ्कितशशकशकलिततुङ्गशृङ्गैः, प्रयत्नप्रसूतविसङ्कटविटपैः,

---

( ४११ ) धुर्येति।—धुर्येषु —धुर—भारं, गताः,—प्राप्ताः, भारवहने निपुणा इत्यर्थः, धूलिभि —मार्गरजोभिः, धूसराः,—धाराधूसराः, ये सैरिभाः,—महिषाः, ( "लुलापो महिषो वाहद्विषत्कासरसैरिभाः" इत्यमरः ) तेषां सरोषैः—सक्रोधैः, खरैः—गम्भीरतरकविशब्दैः साध्यमाना —सञ्चाल्यमाना तासां, सङ्कीडदिति।—सङ्कीडता—कूजता, चटुलानां—चपलानां घूर्णमानानामित्यर्थं, चक्राणां—रथाङ्गानां, चीत्कारः—शब्दविशेषः तद्वतीनाम्। सम्पातैः —सञ्चारैः।

(४१२) सम्पाद्यमानेति।—सम्पाद्यमानं —जन्यमानं, दुर्बलः,—क्षामाणं इति भावः उर्व्याः,—पृथिव्याः विकृष्टानां—विशेषेण कृष्टानां, कर्षणानामित्यर्थः पदव्याम् इति यावत् केदाराणां—क्षेत्राणां संस्कारः —समाधानं, कर्षणमिति भावः यत्र तथोक्तम्।

( ४१३ ) आरब्धेति।—आरब्धाः—रक्षार्थं, चयमल्पानामिति भावः, यता, —आरब्धे —रक्षकः द्विपाः,—प्रेरिताः दान्ता,—दमनमया, ये वाहकदण्डाः,—प्रकल्पगुडाः, ताडनयष्टयः इत्यर्थः तैः उड्डीयमानाः —उत्प्लुत्य उत्प्लुत्य पलायमाना इत्यर्थः, ये हरिणाः —मृगाः, तैः हिनया—अनायासेन लङ्घिता—अतिक्रम्य गताः, तुङ्गा —उन्नता, वैणवी—वेणुसम्बन्धिनी वंशनिर्मितेत्यर्थं, वृतय,—वाटय, प्राकारप्राचीरमित्यर्थं येषां ते, ( "प्राचीरं प्रान्ततो वृतिः" इत्यमरः )।

( ४१४ ) निखातेति।—निखातैः —निहितैः शस्यविघातकपक्षिविद्रावणार्थं भूमिनिखातदण्डोपरिस्थापितैरिति भावः गौरैः —शुभ्रैः करङ्कैः,—कङ्कालैः मस्तकास्थिभिरित्यर्थं ।शर स्वस्थपरैरिति यावत् ( "करङ्को मस्तकास्थिनारिकेलफलास्थिनि" इति मेदिनी ) शङ्कुभिः,—कीलैः करङ्कोपलक्षितैरिति भावः, शङ्किताः,— भीताः शशकाः,—"खरगोस" इति ख्याता प्रसिद्धा मृगभेदाः, तैः शकलिताः,— खण्डिताः, तुङ्गाः,—उन्नताः, शृङ्गाः —नवांकुराः, अविकासितपत्राणि वा यैषां ते, प्रयत्नेति।—प्रयत्नेन—प्रकृष्टादरयत्नेन, प्रसूताः —पोषिताः, विसङ्कटाः,—विशालाः,

भित्तिभिः, किंशुकरोचनारचितमण्डलमण्डपवल्लभजटाङ्गारराशिभिः, (४२३) शाल्मलिफलतूलसञ्चयबहुले, सन्निहितनलशालिशालूकखण्डकुमुदबीजवेणुतण्डुले, (४२४) सङ्गृहीतमालबीजे, भस्ममलनम्लानकाष्ठमथ्यकूटव्याहतकाटे,

["—पोट्टदल—" इत्यत्र "—पोटगल—" इत्येव पाठः साधीयान् कोषादौ पोट्टदलशब्दस्य अदर्शनात्, अस्मिन् पक्षे,—बैवत,—यथा पोटगला,—काशाख्यतृणभेदा इत्यर्थः "अथ पोटगलः पुंसि नले च काशमत्स्ययोः" इति मेदिनी] नलाः,—नडाख्यतृणभेदाः यस्याः,—गुन्द्राख्यतृणविशेषाश्च, तन्मयी—तदात्मिका, या इति —वेष्टनं, सैव ताभिर्वा विहिता—कृता, भित्तिः,—कुड्यं येषां ते, किंशुकेति।—किंशुकानि—पलाशपुष्पाणि, रोचना—गोरोचनाख्यमाङ्गल्यद्रव्यभेदः, ताभ्यां रचितं—कृतं मण्डलं —गोलाकाररेखा यस्य तादृशे, मण्डपे—गृहे, बल्वजे,—तृणभेदे बद्ध —रचित, अङ्गारराशि,—अङ्गारसञ्चय, सुर्वोपद्रवनिवारणार्थमिति भाव येषु तैः, यद्वा,—किंशुक —पलाशतरु, रोचन,—कूटशाल्मलीसञ्ज्ञक शाल्मलीभेद, ("रोचनः कूटशाल्मलिः" इत्यमरः) ताभ्याम् आरब्धं—कृतं, मण्डलं—वेष्टनं, इतिरित्यर्थः. यस्य तादृशे, मण्डपे बल्वजे बद्ध —कृत, अङ्गारराशि,—अनुद्धृताग्निराशिसमूह, शैत्यनिवारणार्थं व्याघ्रादिभीतिनिवारणार्थं वा इति भाव येषु तैः।

(४२३) शाल्मलीति।—शाल्मलिः —रक्तपुष्पा, ("शाल्मली रक्तपुष्पा च कुक्कुटी स्थिरजीविता" इति कोषः) तस्याः फलानां तूलसञ्चयैः,—तूलराशिभिः, बहुलानि—व्याप्तानि तैः। सन्निहितेति।—सन्निहितानि—स्थितानि, नलशालयः,—शालिविशेषाः, शालूकखण्डाः,—पद्ममूलानां खण्डाः, ("पद्ममूलन्तु शालूकम्" इति कोषः) कुमुदबीजानि—कैरवशस्यानि, बैवत,—यथा, तण्डुलाः —धान्यसाराः, निस्तुषधान्यानीत्यर्थः, यद्वा,—वेणुतण्डुलाः,—वंशबीजानि वंशजातयवाकारपदार्थभेदा इत्यर्थः येषु तैः।

(४२४) सङ्गृहीतेति।—सङ्गृहीतानि—सञ्चितानि, मालानां—क्षेत्रपदानां, बीजानि—शस्यानि येषु तैः, यद्वा—सङ्गृहीतानि मालानां—पुष्पाणां, "पिंड" इति बङ्गे प्रसिद्धानामित्यर्थः, बीजानि—अङ्कुरकारणानि, यद्वा,—सङ्गृहीतानि मालबीजानि—चेत्रस्थशस्यानि येषु तैः, ("माल्यं क्षेत्रे स्त्रियां पुष्पधर्मेऽपि योषिति पुमान्" इति मेदिनी)। भस्मेति।—भस्मना—पांशुना, मलनेन—मर्दनेन, म्लानं—मलिनतां गतं, यत् काष्ठमथ्यकूटं—काष्ठमन्थिकाराशिः, तेन व्याहता,—

(४२५) आम्रानराजादनमदनफलस्फीतैः, मधूकासवमद्यप्रायैः, (४२६) कुसुम्भकुम्भगण्डकुसूलैः, अविरहितराजमाषवपुषकर्कटिकाकुष्माण्डालाबूबीजैः, (४२७) घोष्यमाणवनविडाल-

---

निर्मिता, कटा,—"मादुर" इति वङ्गभाषया ख्यातानि शयनानि येषां ते, यद्वा, —भस्त्रा—भृतीनां, भस्त्रेन—कर्द्दमेन ("भस्त्र पटवासे ना कर्द्दमे तु नपुंसकम्" इति मेदिनी) जलार्द्रभस्त्रलेपनेनेत्यर्थः, (दृश्यते च गाम्भारीफलस्य भक्षणमिव लोके) श्यामा ये काश्मर्या,—गाम्भारीफला ("गाम्भारी सर्व्वतोभद्रा काश्मरी मधुपर्णिका। श्रीपर्णी भद्रपर्णी च काश्मर्य्यश्च" इत्यमरः) तेषां कूटे—राशौ, खण्डितलावसमूहोपरि इत्यर्थः, आहिता कटा, योषणायमिति भाव येषां ते।

(४२५) आम्रानेति।—आम्रातानि—देवचूतानि, राजादन,—क्षीरीटाख्य वृक्षभेद, ("क्षीरीदकस्तु राजन्य क्षीरवृक्ष कपीद्रुम। राजादनी दृढस्कन्ध कपीष्ट प्रियदर्शन॥" इति कोष), यद्वा,—राजादन—प्रियाल, "राजादन प्रियालश्च" इत्यमरः) मदन,—"मयना" इति वङ्गदेशेऽख्यात वृक्षश्च, ("मदन श्वसनो रोध" इति कोष) तेषां फलानि तै स्फीतानि—पूर्णानि ते। मधूकेति। —मधूकानां—"महुया" इति ख्यातानां गुडपुष्पाणां, ("मधूके तु गुडपुष्पमधुद्रुमौ" इत्यमरः) आसवा,—रसा एव, यद्वा,—मधूकेभ्य जाता आसवा,—सन्धानविशेष", मद्यविशेषा इत्यर्थ ता एव मद्यानि—सुरा प्रायेण—बाहुल्येन येषु ते।

(४२६) कुसुम्भेति।—कुसुम्भानां—महारजनाख्यपुष्पाणां, कुम्भा,—घटा", गण्डानां—खड्गाख्यपशुभेदानां, कुसूलानि—स्थानानि येषु ते, यद्वा,—कुसुम्भानां—महारजनानां, ("स्यात् कुसुम्भं वह्निशिखं महारजनमित्यपि" इत्यमरः) कुम्भानां—गुग्गुलूनाञ्च, ("कुम्भी राशन्तरे। घटे क्लीबन्तु गुग्गुलौ" इति मेदिनी) गण्डा, —पिटका, तत्पूर्वभाववशेषा इत्यर्थः, ("गण्ड स्यात् पुंसि खड्गिनि। ग्रहयोगप्रभेदे च वीरपदे पिटकेऽपि च॥" इति मेदिनी) गण्डा,—पिण्डा इत्यर्थो वा, तेषां कुसूला,—स्थापनार्थस्थानविशेषा, कोष्ठी वा येषु ते। अविरहितेति।—अविरहितानि—पूर्णानि राजमाषाणां—निष्पावाणां "बरवटी" इति वङ्गे प्रसिद्धानां व्रीहिभेदानां वा, वपुषाणां—"भन्ना" इति वङ्गभाषया प्रसिद्धानां लाडुकानां, कर्कटिकानां—"काँकुड" इति वङ्गे ख्यातानां, कुष्माण्डानां—कर्कारुकाणाम्, अलाबूनां—तुम्बीनाञ्च, बीजानि—अङ्कुरकारणानि येषु ते।

(४२७) घोष्यमाणेति।—घोष्यमाणा,—पाल्यमाना", वनविडाला,—

मालुधाननकुलशाल्लिजातजातकादिभिः अटवीकुटुम्बिनां गृहैः उपेतं वनग्रामकं ददर्श, तत्रैव च अवसदिति।

इति श्रीबाणभट्टकृते हर्षचरिते छत्रलम्भो नाम
सप्तम उच्छ्वासः ॥ ७ ॥

---

आरण्यमार्जारा मालुधानाः,—प्राणिविशेषाः, मातुलाहिनामसर्पभेदा वा, ("मालुधानो मातुलाहि" इत्यमरः) ते तु त्रिविधा ज्ञेयाः, नकुलाः—"बेजि" इति वङ्गे प्रसिद्धाः सर्पशत्रवः, शाल्लिजाताः—जीवभेदाः, जातकादयः—प्राणिविशेषाः येषु ते तथा,—शाल्लयः,—"खट्टास" इति वङ्गे प्रसिद्धाः गन्धमार्जाराः ("शालिस्तु कलमादौ च गन्धमार्जारके पुमान्" इति मेदिनी) तेषां जाताः—समूहाः, जातकादयः,—शावकादयः इत्यर्थः, यद्वा—तेभ्यः जाताः—उत्पन्नाः ये जातकाः—शावकाः, तदादयः,—तत्प्रभृतयः येषु ते, ["जातकादिभिः" इत्यत्र "जालकादिभिः" इति पाठः समीचीनतया प्रतिभाति पोतमार्गवनविडालादिजातानां—समूहानां, जालकानि—आनायाः, पिञ्जरा इति यावत् तदादयः यत्र ते]। अटवीकुटुम्बिनाः—वनगृहिणाम्। उपेतं—युक्तं वनग्रामकम्—अरण्यमध्यस्थं सुग्रामं तद्ग्रामकं वा।

इत्यशेषशास्त्रार्थसरणिपञ्चाननेन वास्तवभारतेन पण्डितकुलपतिना बि, ए,
उपाधिधारिणा श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण विरचितायां
तदात्मजाभ्यां प्राप्त श्रीमदाशुबोधविद्याभूषण पण्डितश्रीमन्नित्यबोध
विद्यारत्नाभ्यां परिवर्द्धितायां प्रतिसंस्कृतायां बालबोधिन्याख्यायां
श्रीहर्षचरितव्याख्यायां सप्तम उच्छ्वासः ॥ ७ ॥

---

# अष्टम उच्छ्वासः।

सहसा सम्पादयता मनोरथप्रार्थितानि वस्तूनि ।
दैवेनापि क्रियते भव्यानां पूर्वसेवेव ॥ १ ॥
विद्वज्जनसम्पर्को नष्टेष्टज्ञातिदर्शनाभ्युदयः ।
कस्य न सुखाय भवने भवति महारत्नलाभश्च ? ॥ २ ॥

(१) अथ अपरेद्युः उत्थाय पार्थिवस्तस्मात् ग्रामकात् निर्गत्य विवेश विन्ध्याटवीम्, आट च तस्याम् इतस्ततः सुबहून्

---

अथ पुरुषप्रयत्नं विनाऽपि सुदैवानुकूल्येन सत्पुरुषाणां मनोरथसिद्धिर्भवतीति सार्थां प्रस्तावनाञ्च सङ्घटित।—सहसा—हठात् मनोरथप्रार्थितानि—मनोऽभीष्टानि, अभिलषितानीत्यर्थः, वस्तूनि—द्रव्याणि, सम्पादयता—संयोजयता, प्रददता इत्यर्थः, दैवेनापि,—भाग्येनापि अनुकूलेनेति भावः किं पुनः पुरुषकारेण यत्नेन वा इत्यपिशब्दार्थः, भव्यानां—योग्यानां, शुभफलभागाक्षाणामित्यर्थः, सत्पात्राणामिति भावः, ("भव्यं शुभे च सत्ये च योग्ये भाविनि च त्रिषु" इति मेदिनी) पूर्वसेवा—प्रथमा परिचर्या, क्रियते इव—विधीयते इव, सुदैवं हि सहसैव सतां मनोरथं सम्पाद्य स्वदनुरागस्य प्रथमनिदर्शनं प्रदर्शयति अनन्तरमपि प्रभूताभ्युदयं जनयतीति भावः। श्लोकेनानेन भाग्यवतः सतो हर्षस्य दैवानुकूल्येन यात्रायाः साफल्यं सूचितम्। अत्र पूर्वसेवायाः अक्रियमाणाया अपि तत्त्वेन सम्भावनोत्प्रेक्षणात् क्रियोत्प्रेक्षाऽलङ्कारः। आर्या वृत्तम् ॥ १ ॥

विद्वदिति।—विदुषा जनेन—पण्डितमण्डलेन सम्पर्कः—सङ्गः, सख्यमिति भावः, तथा नष्टेति।—नष्टस्य—अदर्शनं गतस्य, इष्टस्य—प्रियस्य ज्ञातेः,—बन्धुजनस्य, दर्शनं—साक्षात्कारः तदेव अभ्युदयः—मङ्गलम्, इष्टलाभजनितानन्द इत्यर्थः, भवने—गृहे, महारत्नानां—महामूल्यमणीनाम् अचिन्त्यादपि दुर्लभानामिति भावः लाभश्च—प्राप्तिश्च, कस्य—जनस्य इति भावः, सुखाय—आनन्दाय न भवति?—न जायते? अपि तु सर्वस्य एव भवति इत्यर्थः एतेन हर्षस्य दिवाकरमित्राद्विदग्धमित्रलाभः भगिन्याः राज्यश्रियाः प्राप्तिः महामूल्यैकावलीलाभश्च सूचितः। अत्र प्रस्तुतानां सम्पर्काभ्युदयरत्नलाभानामेकेन सुखजननयोग्यत्वरूपधर्मेण सह सम्बन्धात् तुल्ययोगिताऽलङ्कारः। आर्या वृत्तम् ॥ २ ॥

(१) एतदेव प्रतिपादयति, अथ इत्यादि।—अपरेद्युः,—अपरस्मिन् दिवसे, कुलग्रामे आश्रमगृहस्य पराह्ने इत्यर्थः। आट—बभ्राम। "एकदा तु भूपतेः"

दिवसान्। एकदा तु भूपतेर्भ्रमत एव आटविकसामन्तशरभकेतोः सूनुर्व्याघ्रकेतु. नाम ज्ञातोऽपि (२) कज्जलश्यामलश्यामलतावलयेनाधिललाटम् उच्चैःकृतमौलिबन्धम्, (३) अन्धकारिणीम् अकारणभुवा भ्रुकुटिभङ्गेन विशाखेन त्रियामामिव साहससहचारिणीं ललाटस्थली सदा समुद्वहन्तम्, (४) अवतंसितैकशुकपत्त्रकप्रभाहरितायमानेन पिनद्धकाचरकाचमयि-कर्णिकेन श्रवणेन शोभमानं, (५) किञ्चिच्चुलस्य प्रविरल-पक्ष्मणः चक्षुषः सहजेन रागरोचिषा रसायनरसोपयुक्तं तार-

इत्यस्य "व्याघ्रकेतुः शबरयुवानमादाय आजगाम" इति उत्तरेण सम्बन्धः। भूपतेः,—उर्वीशस्य, [कर्मणि षष्ठी]। आटविकेति।—आटविकः,—आरण्यः सामन्तः,—अधिराजः, वनप्रदेशरक्षणाय दत्तोऽत्र प्राप्ताधिकार इत्यर्थः, स शरभकेतुः,—तदाख्यः कश्चित् तस्य, सूनुः,—पुत्रः, इति व्याघ्रकेतुरित्यस्य विशेषणम्।

(२) शबरयुवानं विशिनष्टि, कज्जलेति।—कज्जलवत्—कज्जलवत् श्यामला—नीला, या श्यामलता—गन्धप्रियङ्गुवल्ली, सा एव वलयम्—वेष्टनं तेन अधिललाटम्—ललाटोपरि, उच्चैरिति।—उच्चैः कृतः,—उन्नतस्य स्थापितः, मौलिबन्धः—केशविन्यासः येन तथोक्तम्।

(३) अकारणभुवा—विना कारणं जातेन स्वयं, स्वाभाविकेन इति भावः, विशाखेन—त्रिरेखेण, भ्रुकुटिभङ्गेन—भ्रूकौटिल्येन, अन्धकारिणीम्—अन्धकारवतीं भ्रूवीक्षणेन निबिडीकृतभागत्वादिति भावः, यद्वा—अन्धकारिणीं—ज्ञानावधानिर्व्यर्थं, अत एव त्रियामामिव—रात्रिमिव, तामसामिवेति यावत्, साहससहचारिणीं—साहससङ्गिनीम्, अपूर्वकार्यकरणसामर्थ्यबोधिकामिति भावः, ललाटस्थलीं—भालदेशं समुद्वहन्तं—दधानम्।

(४) अवतंसितेति।—अवतंसितस्य—भूषणीकृतस्य, एकस्य—एकमात्रस्य, शुकपत्त्रकस्य—कीराख्यपक्षिपतत्रस्य, प्रभया—कान्त्या, हरितायमानं—श्यामायमानं तेन पिनद्धेति।—पिनद्धा—बद्धा, काचरस्य—कपिलस्य, काचमयी,—काचाख्यरत्नमयी, कर्णिका—कर्णभूषणं, काचमणिनिर्मितं कर्णभूषणमित्यर्थः यत्र तथाभूतेन, श्रवणेन—कर्णेन, शोभमानं—राजमानम्।

(५) किञ्चिच्चुलस्य—ईषत् क्लिन्नस्य, ("स्तु क्लिन्नाक्ष चुल्लचिल्लपिल्ला क्लिन्नेऽक्ष्णि

त्वं क्षतजमिव क्षरन्तम्, अवनाटनासिकं, चिपिटाधरं, चिक्किनचिबुकम्, (६) अहीनहनूत्कटकपोलकूटास्थिपर्यन्तम्, ईषदुदग्रग्रीवावंशं, स्कन्धस्कन्धार्धभागम्, (७) अनवरतकोदण्डकुण्डलीकरणकर्कशव्यायामविस्तारितेन अंसलेन उरसा हसन्तमिव तटशिलाप्रथिमानं विन्ध्यगिरेः,

---

भाष्यनी" इत्यमरः) प्रविरलपक्ष्म,—स्वल्पलोम । सहजेन—स्वाभाविकेन रागरोचिषा—लोहितप्रभया रसायनरसोपयुक्तम्—रसायनरसेन—औषधविशेषरसेन सह उपयुक्तम्—पीतम् इत्यर्थः, तरक्षु,—मृगादन "नेकड़े बाघ" इति बङ्गे प्रसिद्ध व्याघ्रविशेष इत्यर्थः, ("तरक्षुस्तु मृगादनः" इत्यमरः) तस्य इदं तारक्षम्, तच्च कश्चित् रोगविशेषे (यक्ष्मणि) उपयुञ्जते इति वैद्यकाः, क्षतजमिव—रक्तमिव, क्षरन्तम्—स्रवन्तम् । अवनाटनासिकम्—निम्ननासापुटम्, ("अवटीटोऽवनाटश्चावभ्रटो नतनासिके" इत्यमरवचनात् अवनाटशब्देनैव निम्ननासिके लब्धेऽपि पुनर्नासिकाशब्दग्रहणं नासाया अतिनिम्नत्वद्योतनार्थमिति मन्तव्यम्) अन्तःप्रविष्टनासिकमित्यर्थः, "खाँदा नाक" इति बङ्गभाषया प्रसिद्धमिति भावः । चिपिटाधरम्—स्थूलस्वल्परदनच्छदम् । चिक्किनचिबुकम्—स्थूलपृथुलाधराधोभागम् ।

(६) अहीनेति ।—अहीनौ—सम्पूर्णौ महान्तौ इत्यर्थः हनुभ्याम्—कपोलोर्ध्वभागाभ्याम्, उत्कटौ—उन्नतौ विषमौ वा, कपोलयोः—गण्डयोः, ("ओष्ठाधरौ तु रदनच्छदौ दशनवाससी। अधस्ताच्चिबुकं गण्डौ कपोलौ तत्परा हनुः" इत्यमरः) कूटौ—शिखरभूतौ, अस्थिपर्यन्तौ—कङ्कालप्रान्तौ यस्य तम्, अत्युन्नतहन्वस्थिकपोलम् अत एव निम्नहनुदेशमित्यर्थः । ईषदुदग्रग्रीवावंशम्—ईषदुदग्र—किञ्चिदुन्नत, ["ईषदुदग्र—" इत्यत्र 'ईषदवनम्र—' इति पाठे—अवनम्र,—अवनत इत्यर्थः] ग्रीवावंश,—कन्धरास्थि यस्य तम् । स्कन्धेति ।—स्कन्ध—पृष्ठ, लम्बमान, उन्नतौ वा, स्कन्धार्धभाग—अंसार्धदेश यस्य तम् ।

(७) अनवरतेति ।—अनवरतेन—अविश्रान्तेन, कोदण्डस्य—धनुषः कुण्डलीकरणेन—आकर्षणेन, चक्रीकरणेन इत्यर्थः कर्कशेन—कठिनेन, व्यायामेन च—अङ्गचालनविशेषेण च, विस्तारितेन—प्रसारं गतं तेन अंसलेन—बलवता प्रशस्तेन दृढेन च इति यावत् ("बलवान् मांसलोऽसलः" इत्यमरः) उरसा—वक्षःस्थलेन, विन्ध्यगिरेः,—विन्ध्याचलस्य, तटशिलाप्रथिमानम्—तटशिलायाः—उन्नतप्रदेशस्थप्रस्तरस्य, प्रथिमानम्—विस्तारं, हसन्तम्—उपहसन्तम्, विपुलोरस्कमित्यर्थः ।

(८) अजगरगरीयसा च भुजयुगलेन लघयन्तं तुहिनशैलशाल-द्रुमाणां द्राघिमाणं, (९) वराहबालवलितबन्धनाभिर्नागदमन-जूटिकाभिः जटिलीकृतपृष्ठे प्रकोष्ठे प्रतिष्ठां गतं गोदन्तमणिचित्रं त्रापुषं वलयं बिभ्राणम्, अतुन्दिलमपि तुन्दिभम्, (१०) अहीर-मणीचर्मनिर्मितपट्टिकया उच्चित्रचित्रकत्वक्तारकितपरि-

---

(८) अजगरगरीयसा—अजगर इव—बृहदाकारसर्पविशेष इव गरीयः,—गुरुतर, दीर्घमित्यर्थः तेन। तुहिनेति।—तुहिनशैलस्य—हिमाद्रेः, शालद्रुमाणां—सर्जतरूणां, द्राघिमाणम्—अतिदीर्घतां, लघयन्तम्—लघूकुर्वन्तम्, आजानुलम्बितभुजमिति भावः।

(९) वराहेति।—वराहस्य—शूकरस्य, बालैः—लोमभिः, वलितं—कृतं बन्धनं—संयमनं यासां ताभिः, नागदमनजूटिकाभिः,—नागदमनः,—"नागदौना" इति वङ्गीयैराख्यातः विषहरः औषधिविशेषः, तस्य जूटिकाः—प्रतानाः, शुष्कमूलं वा ताभिः, सर्पभयनिवारणार्थमिति भावः, ["नागदमनजूटिकाभिः" इत्यत्र "नागदमनजूटिकाघाटिकाभिः" इति पाठे—नागदमनजूटिकानां घाटिकाः,—पुञ्जः, गुच्छाः इत्यर्थः ताभिः] जटिलीकृतं—युक्तं पृष्ठम्—उपरिभागः यस्य तथाभूते, प्रकोष्ठे—कूर्परमणिबन्धयोरन्तरालस्थे ("प्रकोष्ठो मणिबन्धस्य कूर्परस्यान्तरेऽपि च" इति मेदिनी) प्रतिष्ठां—स्थितिं गतं—प्राप्तं, गोदन्तमणिचित्रं—सर्पविशेषशिरोरत्नमण्डितं त्रपुणा—सीसकेन रङ्गेण वा निर्मितं त्रापुषम्—सीसकेन रङ्गेण वा निर्मितमिति यावत्, यद्वा—त्रपुणः,—सीसकस्य रङ्गस्य वा विकारः त्रापुषः—सीसकनिर्मितं रङ्गनिर्मितं वेत्यर्थः, ["त्रपुजतुनोः षुक्" (४।३।१३८ पा०) इत्यण् षुगागमश्च। "त्रपु सीसकरङ्गयोः" इति मेदिनी] वलयं—कटकं, बिभ्राणं—दधानम्। अतुन्दिलं—तुन्दिलः,—बृहत्कुक्षिः स्थूलोदरः पुमानित्यर्थः, ("तुन्दिलस्तुन्दिकस्तुन्दी बृहत्कुक्षिः पिचण्डिलः" इत्यमरः) [illegible] भवतीति स स्थौलोदर कृशमध्यमिति वा, तुन्दिभम्—उन्नतनाभिम्, ["तुन्दिवलिवटिभ्यो भः" (५।२।१३९ पा०) उन्नता नाभिस्तुन्दिरिति तुन्दिशब्दात् भः। "तुन्दिभम्" इत्यत्र "तुण्डिभम्" इति पाठेऽपि स एवार्थः]।

(१०) अहीरेति।—अहीरमणी—द्विमुखः चित्रकाख्यः जन्तुभेदः, यच्छायया गच्छतोऽपि अपरसर्पनाशकः भवतीति बोध्यम्, ["अहीरमणि—" इत्यत्र "अहीरणि—" इति पाठस्तु साधीयान्, अहीरमणी इति शब्दस्य कोषादावदर्शनादर्थासङ्गतेश्च, अहीन् ईरयति दूरीकरोति इति व्युत्पत्त्या "राजसर्प" इति प्रसिद्धः द्विमुखसर्पविशेषः

वारया (११) मद्गुआजिनजालकितया शृङ्गमयमसृणमुष्टिभाग-भास्वरया (१२) पारदरसलेशलिप्तममस्तमस्तकया कृपाण्या करालितविसङ्कटकटिप्रदेशं, (१३) प्रथमयौवनोल्लिख्यमान-मध्यभागभ्रश्यमानमांसभरितौ इव स्थवीयसावूरुदण्डौ दधतम्,

---

कक्षीरपि, तद्दर्शनादितरे सर्वा पत्राउले] तस्याङ्गस्था—त्वचा, निर्मिता—रचिता, पट्टिका—खड्गकोषधारणार्थं बन्धनि लिप्यविभक्तितचर्मनिर्मितप्रबन्धतनु-भेद यस्या तथाभूतया, उचितेति।—उचिता—स्वभावोद्धतचित्रा, विचित्रवर्णा इत्यर्थ, या चित्रकस्य—व्याघ्रविशेषस्य त्वक—चर्म तया तारकित,—नक्षत्रितः इव परिदृश्य-मान इत्यर्थ, परिवार,—खड्गकोष, परिवेष्टनमित्यर्थ, यस्या तथाभूतया। ("परि-वारः परिजने खड्गकोषे परिच्छदे" इति मेदिनी) ["कक्षीरमयो ‹परिवारया" इत्यत्र "कक्षीरमयीचर्मनिर्मितपट्टिकयोश्चित्रचित्रकत्वकतारकितपरिवारया" इति पाठे,—ताडयपट्टिकयो,—खड्गकोषस्य उभयपार्श्वस्थितयवराविद्धनिबद्धचर्मरज्ज्वोरित्यर्थ, प्रावृतया इति अध्याहार्यं चित्रा—विविधवर्णा, चित्रकत्वचा तारकित परिवार यस्या तथाभूतया]।

(११) मद्गुनेति।—मद्गुना—मद्गुचितेन, अजिनेन—हरिणचर्मणा, जालकिता—जालाचिता जालाकृतवत परिदृश्यमाना इत्यर्थं तया, मृतमद्गुचितमद्गु-चर्मनिर्मितकोषाच्छादनस्याभरणता इत्यर्थ, काष्ठी छाङ्गचर्मणा कृपाणीमावेष्ट्य तदा कोषमध्ये स्थापितवान इति भाव, शृङ्गेति।—शृङ्गमयेन—माहिषशृङ्गादिविकार-निर्मितेन मसृणेन—श्लक्ष्णेन मुष्टिभागेन—करदेशेन, मुष्टिधारणस्थानेनेत्यर्थ, भास्वरा—दीप्तिमती तया।

(१२) पारदेति।—पारदस्य—सूतस्य, रस,—द्रव, यद्वा—पारद एव रस,—विषं, तस्य लेशेन—बिन्दुना लिप्त—दिग्ध समस्त—सम्पूर्णं, मस्तक—शिरोभाग यस्या तया, कृपाण्या—छुरिकया कर्त्र्या वा, ("कृपाणी खड्ग छुरिकाकर्त्र्योरपि योषिति" इति मेदिनी) करालितेति।—करालित,—भीषणीकृत, विसङ्कट,—विशाल, स्थूल इत्यर्थ, कटिप्रदेश,—श्रोणिफलक यस्य तम्।

(१३) प्रथमेति।—प्रथमेन—अभिनवेनेत्यर्थ, यौवनेन—तारुण्येन, उल्लिख्य-मानात—उत्खन्यमानात, कृशतां नीयमानादिति यावत मध्यभागात्—उदर-देशादित्यर्थ भ्रष्टेन—स्खलितेन, मांसेन—पिशितेन, भरिताविव—आपूरिताविव, स्थवीयसौ—अतिस्थूलौ।

व्यपदत्तिशकराग्रं, जङ्गममिव गिरितटतमालपादपं, यन्त्रोल्लिखितम् अश्ममारस्तम्भमिव भ्रमन्तम्, (२४) अञ्जनशिलाच्छेदमिव चलन्तम्, अयःसारमिव गिरेर्विन्ध्यस्य गलन्तं, पङ्कस्थलीं करिकुलानां, कालपाशं कुरङ्गयूथानां, (२५) धूमकेतुं मृगराजचक्राणां, महानवमीमहं महिषमण्डलानां, हृदयमिव हिंसायाः, फलमिव पापस्य, कारणमिव कलिकालस्य, कामुकमिव कालरात्रेः शबरयुवानम् आदाय आजगाम;

धृत तत, विकर्षेण—तदाव्यात्मविशेषेण कर्णाग्रहितशरविशेपेणत्यर्थ, व्यपदत्तिप्र कराग्र—व्याप्तमद्द चलहस्ताग्रभाग, विहलितशराग्र दधानमित्यर्थः। जङ्गम—चरिष्णु, गतिमन्तमित्यर्थं, गिरौति।—गिरितटे—पर्वतप्रस्थे, ये तमालपादप,—काल-स्कन्धत्व तमिव, श्यामवर्णत्वादिति भाव। यन्त्रोल्लिखित—शाणयन्त्रघृष्टमित्यर्थं, शिल्पविशेषविनिर्मितमिति वा, अश्ममारस्तम्भमिव—दृढप्रस्तरस्थूणामिव, मसृणश्याम-वर्णदृढकायत्वादिति भाव।

(२४) अञ्जनशिलाच्छेदमिव—कज्जलप्रस्तरखण्डमिव। अय सारमिव—लौहस्य स्थिरांशमिव। करिकुलानां—गजयूथानां, पङ्कस्थलीमिव—सकर्दमभूमिमिव, मारक-त्वादिति भाव, यथा करिणो दुस्तरपङ्कभागात् निर्गन्तुं असमर्थाः, अवसीदन्ति च तथा अमु प्राप्य अपि न पलायितुं समर्थाः, विनश्यन्ति च इति तात्पर्यम्। [ 'पङ्कस्थलीं करिकुलानाम्' इत्यत्र "पाकलं करिकुलानाम्" इति पाठे,—करि कुलानां पाकलं—तदाख्यं ज्वलिना ज्वरमिव, ("पाकलं कुष्ठभेषज्ये पुंसि स्यात् कुञ्जर-ज्वरे" इति मेदिनी) तदाख्यज्वरस्य करिणां प्राणनाशकत्वात्, यदुक्तं वैद्यके,— "असाध्योऽयं ज्वरो व्याधिः गौमहिषाश्वकुञ्जरे। किञ्चित् कष्टतमो गृह्णात्यन्यथा जीव नाशकः॥" "पाकलं अ तु नागानामभितापस्तु वाजिनाम्" इत्यादि। पाकलो यथा करिहन्ता तथा अयमपीति भाव ]। कुरङ्गयूथानां—मृगसङ्घानां, कालपाशं —यमस्य बन्धनरज्जुमिव, दर्शनमात्रेणैव हननादिति भाव।

(२५) मृगराजचक्राणां—सिंहसमूहानां, [ राजसमूहानामित्यपि व्याख्यते ] धूमकेतुम—अग्निम, अग्निदर्शनस्य सिंहानां भयप्रदत्वादिति भाव, यद्वा—धूमकेतुमिव—उत्पातसूचकग्रहमिव, मारकत्वादिति भाव। धूमकेतु प्रादुर्भाव राजचक्राणामपि अशुभं सूचयतीति बोद्धव्यम्। महिषमण्डलानां—महिषसङ्घानां, महानवमीमहं—शारदीयदुर्गानवमीमहोत्सवं,

दूरे च स्थापयित्वा विज्ञापयाम्बभूव,—"देव। सर्व्वस्य अस्य विन्ध्यस्य स्वामी, सर्व्वपल्लीपतीनां प्राग्रहरः शवरसेनापतिः भूकम्पो नाम। तस्य अयं निर्घातनामा (२६) स्वस्रीयः सकलस्य अस्य विन्ध्यकान्तारारण्यस्य पर्णानामपि अभिज्ञः, किमुत प्रदेशानाम्। एनं पृच्छतु देव, योग्योऽयम् आज्ञां कर्तुम्" इति कथिते च निर्घातस्तु (२७) क्षितितलनिहित मौलिः प्रणामम् अकरोत्, उपनिन्ये च तित्तिरिणा सह शाकोपायनम्। अवनिपतिस्तु सम्मानयन् स्वयमेव तम् अप्राक्षीत्,—"भद्र। अभिज्ञा यूयम् अस्य सर्व्वस्य उद्देशस्य। (२८) विहारशीलाय दिवसेषु एतेषु भवन्तः। सेनापतेर्

---

नहिमाल्यकवासीति भावः ("लेढ उद्धव प्रसव" इत्यमरः) महानवनीदृशे इत्थं महिमा वनितेन विन्ध्यस्य उपास्कारति इश्यते। 'उदरमिव लिमाता" इत्यादि विशेषणावतो सम्बद्धा जीवविनाशनरागणस्वात् इति भावः माध्य कान्तारे,—सत्राघिनाशिकाया यमभगिन्या, सकलजनमरणानिमित्तता वन्यगावधा कामुकास्य—कान्ति यस्य सत् जीवहत्याकारणात् सदप्राणनाशिकया यमभगिन्या कान्तिमवलुम्पेता दीर्घ्या। शवरयुवान—स्वावस्थकालीन तरुणवयस्क पुमांसम्। आनयन—प्राप। दूरे—राज्ञः समीपात् दूरे भावः। विन्ध्यस्य—विन्ध्यारण्यस्य, स्वामी—अधिपतिः। सर्व पल्लीपतीनां—सर्वेषां—सकलानां पल्लीपतीनां—क्षुद्रग्रामाधिपतीनां, ("पल्ली स्याद्ग्राम कुट्यो स्त्री" इति मेदिनी) प्राग्रहरः,—श्रेष्ठः।

(२६) स्वस्रीयः—भागिनेयः। विन्ध्यकान्तारारण्यस्य—विन्ध्याचलदुर्गम कान्तारस्य, ("कान्तारो वर्त्म दुर्गमम्" इत्यमरः)।

(२७) क्षितितले।—क्षितितले—भूतले, निहिता—स्थापिता, मौलिः,—मस्तकं येन सः ("चूडा किरीटं केशाश्च संयता मौलयस्त्रयः" इत्यमरः)। तित्तिरिणा सह शाकोपायनम्—तित्तिरि पक्षिसहितं उपढौकनद्रव्यमित्यर्थः, उपनिन्ये—उपस्थापितवान् इत्यर्थः। भद्र इति सम्बोधन भो इत्यर्थः। अभिज्ञाः,—विशेषेण ज्ञाताः। उद्देशस्य—वनप्रदेशस्येत्यर्थः।

(२८) एतेषु दिवसेषु—कतिपय दिनानीति भावः, यद्वा,—एतेषु—वनप्रदेशेषु,

अन्यस्य वा तदनुजीविनः कस्यचित् (२९) उदाररूपा नारी आगता भवेद्दर्शनगोचरम् ?" इति।

निर्गतस्तु (३०) भूपालालापनप्रसादेन आत्मानं बहुमन्यमानः प्रणनाम, दर्शितादरश्च व्यज्ञापयत्—"देव! प्रायेण अत्र हरिण्योऽपि न अपरिचिताः सञ्चरन्ति सेनापतेः, कुत एव नार्यः? नापि एवंरूपा काचिदश्रुता। तथाऽपि देवादेशात् इदानीम् अन्वेषणं प्रति प्रतिदिनम् अनन्यकार्यैः क्रियते यत्नः। (३१) इतश्च अर्द्धगव्यूतिमात्र एव मुनिमहिते महति महीधरमालामूलरुहि महीरुहां षण्डे पिण्डपाती (३२) प्रभूतान्तेवासि-

---

दिवसेषु—प्रतिदिनमित्यर्थः, विहारशीला,—विचरणपरा। सेनापतेः,—भूकम्पस्य। तदनुजीविनः,—सेनापतेः परिजनस्य।

(२९) उदाररूपा—महासौन्दर्यशालिनी, अतिरूपवतीत्यर्थः, ("उदारो दातृमहतोः" इत्यमरः)।

(३०) भूपालेति।—भूपालस्य—राज्ञः हर्षस्य यत् आलापनम्—आभाषणम्, सम्बोधनपूर्वकवाक्प्रयोग इत्यर्थः तदेव प्रसादः,—अनुग्रहः महापराक्रमस्य सम्राजो हर्षस्य तादृशनरेन्द्रेण सह सम्भाषणादिति भावः तेन। बहुमन्यमानः,—श्लाघमानः। दर्शितादरः—सम्मानमित्यर्थः। अपरिचिताः—अज्ञाताः, ["अपरिचिता" अथवा "अपरिगता" इति पाठेऽपि स एवार्थः, "सर्वे गत्यर्था ज्ञानार्थाः" इति नियमात्]। कुत एव नार्यः,—मानुष्यस्तु कथमपि नैवापरिज्ञाताः सञ्चरितुं प्रभवन्तीति भावः। अश्रुता, अनागता इति शेषः। देवादेशात्—राज्ञः भवत आज्ञया। अनन्यकार्यैः—नास्ति अन्यत्—अन्वेषणादपरम्, कार्यं—कार्यं येषां तैः, अन्यकार्यं परिहृत्य इत्यर्थः, अस्माभिरिति शेषः।

(३१) इतः,—अस्मात् स्थानात्, अर्द्धगव्यूतिमात्रे—क्रोशैकपरिमिते, ("गव्यूतिः स्त्री क्रोशयुगम्" इत्यमरः) मुनिमहिते—तापसपूजिते महीधरमालामूलरुहि—पर्वतश्रेणिपादमूलजाते, महीरुहाम्—वृक्षाणाम्, षण्डे—समूहे, कानने इत्यर्थः, पिण्डपाती—पिण्डाय—ग्रासमात्रान्नाय, पतति—भिक्षां चरतीति तथोक्तः, ग्रासमात्रान्नोपयोगिभिक्षाकर इत्यर्थः, न तु सञ्चयीति भावः।

(३२) प्रभूतेति।—प्रभूतैः,—बहुभिः, अन्तेवासिभिः,—शिष्यैः, ("छात्रान्ते-

परिहृत' पराशरी दिवाकरमित्रनामा गिरिनदीम् आश्रित्य प्रतिवसति, स यदि विन्देत् वार्त्ताम्" इति। तत् श्रुत्वा नरपति' अचिन्तयत्,—"श्रूयते हि (३३) तत्रभवत' सुगृहीतनाम्न: स्वर्गतस्य ग्रहवर्म्मणो बालमित्रं मैत्रायणीय त्रयी विहाय ब्राह्मणायनो विद्वान् उत्पन्नसमाधि' सौगते मते युवा एव काषायाणि गृहीतवान् इति। प्रायशश्च जनस्य जनयति (३४) सुहृदपि दृष्टो सुहृदम् आश्वासम्। अभिगमनीयाश्च गुणा सर्व्वस्य। अस्य न (३५) प्रतीक्ष्यो मुनिभाव'? भगवती वैधेयेऽपि धर्म्मगृहिणी गरिमाणम् आपादयति प्रव्रज्या, किं पुन: सकलजनमनोमुषि विदुषि जने?

---

आश्रिती श्रिष्टे" इत्यमर:) परिहृत —त्यक्त। पराशरी—भिक्षु, ["पराशरी" इत्यत्र "पाराशरी" इति पाठेऽपि स एवार्थ, "भिक्षु परिव्राट कर्म्मन्दी पाराशर्य्यपि मस्करी" इत्यमर:]। वार्त्ता—वृत्तान्त, वार्त्ता इति भाव, विन्देत—जानीयादित्यर्थ।

(३३) तत्रभवत —मान्यस्य, सुगृहीतनाम्न,—प्रात:स्मरणीयस्य, विख्यातस्येत्यर्थ। बालमित्र—शैशवसुहृत्, मैत्रायणीय,—वेदशाखाविशेषाध्येता ब्राह्मणायन—ब्राह्मणकुलजात द्विजश्रेष्ठो वा, उत्पन्नसमाधि,—चित्तैकाग्र्ययुक्त', गृहीतनियमो वा ("सु समर्थननीवाकनियमाश्च समाधय" इत्यमर:) सौगते—सुगत, —बुद्ध, तस्य इदं तस्मिन् मते—शास्त्रे, बौद्धधर्ममाश्रित्य इत्यर्थ, त्रयी—त्रिवेदीम्, ऋक्सामयजु:सञ्ज्ञक वेदत्रयमित्यर्थ, ("स्त्रियामृक सामयजुषी इति वेदास्त्रयस्त्रयी" इत्यमर:) विहाय—त्यक्त्वा, वैदिकधर्म्मं परित्यज्येत्यर्थ, काषायाणि—काषायरक्तानि वसनानि।

(३४) सुहृत—मित्र, दृष्ट —साक्षात्कृतोऽपि, किमपि अकुर्व्वन्नपीति भाव, आश्वासम्—आशा, प्रीति वा, भगिनीपतेर्ग्रहवर्म्मणो मित्रत्वात् तत्सम्बन्धेन ममापि मित्रभूतस्य अस्य किमप्यकुर्वतोऽपि दर्शनं मे आनन्दप्रद भविष्यतीति भाव। अभिगमनीया —अनुसरणीया। सर्व्वस्य—यस्मिन् कस्मिन्नपि मते वर्त्तमानस्य इति भाव, "गुणा पूजास्थान गुणिषु न च लिङ्ग न च वय" इति तात्पर्य्यम्।

(३५) प्रतीक्ष्य,—पूज्य, ("पूज्य प्रतीक्ष्य" इत्यमर:)। मुनिभाव,—

यतो नः (३६) कुतूहलि हृदयम् अभूत् सततमस्य दर्शनं प्रति, प्रासङ्गिकमेव इदमापतितम् अतिकल्याणं, पश्यामः प्रयत्नप्रार्थितदर्शनं जनम्" इति। प्रकाशश्च अब्रवीत्,—"अङ्ग! समुपदिश तम् उद्देशं, यत्रास्ते स पिण्डपाती" इति। एवमुक्ता च तेनैव उपदिश्यमानवर्त्मा प्रावर्त्तत गन्तुम्।

अथ क्रमेण (३७) गच्छत एव तस्य अनवकेशिन, कुड्मलितकर्णिकाराः, प्रचुरचम्पका, (३८) स्फीतफलेग्रहय, फलभरनमितनमेरव, नीलदलनलदनारिकेलनिकरा, करि-

---

साधयेभाव। भगवती—सर्वशक्तिमती, धर्म्मरक्षिणी—धर्मपत्नी, प्रव्रज्या—सन्न्यासधर्म इत्यर्थ, वैधेयोऽपि—मूर्खोऽपि, गरिमाणं—गौरवम् आपादयति—प्रतिपादयति, मूर्खोऽपि सन्न्यासमाश्रयति चेत सर्वेषां पूज्यो भवति इति सरलार्थ। सकलजनमनोमुषि—सर्वलोकमनोहरि।

(३६) कुतूहलि—समुत्सुकम्। प्रासङ्गिकं—प्रसङ्गात्—भङ्ग्या अन्वेषणरूप कार्य्यान्तरादित्यर्थः आगतम्। इदं—मद्दर्शनावसररूपम्। प्रयत्नात्।—प्रयत्नेन—प्रकृष्टचेष्टया, बहुादरेणेत्यर्थः, प्रार्थित—याचित, दर्शनम्—अवलोकनं यस्य तादृशम्, दुर्लभदर्शनमित्यर्थः।

(३७) "अथ क्रमेण गच्छत एव तस्य" इत्यस्य "दर्शनपथमवतेरु तरव" इति परेण सम्बन्धः। तान् विशिनष्टि अनवकेशिन इत्यादि।—अनवकेशिन,—अवकेशिन,—वन्ध्या, अफला इति यावत ("वन्ध्योऽफलोऽवकेशी च" इत्यमरः) ते न भवन्तीति फलवन्त इत्यर्थ। कुड्मलितकर्णिकारा,—कुड्मलिता,—सञ्जातमुकुला, कर्णिकारा —द्रुमोत्पला, आरग्वधवृक्षा वा येषु ते, ("कर्णिकार पुमानारग्वधद्रौ च द्रुमोत्पले" इति मेदिनी)। प्रचुरचम्पका,—प्रचुरा,—बहुला, चम्पका,—महास्वपुष्पवृक्षा येषु ते।

(३८) स्फीतेति।—स्फीता,—प्रवृद्धा, फलेग्रहय,—अवन्ध्या, फलवन्त इत्यर्थः येषु तथोक्ता, ("स्यादवन्ध्यः फलेग्रहिः" इत्यमरः)। फलेति।—फलानां भरेण—भारेण, नमिता,—अवनता, नमेरव—सुरपुन्नागवृक्षा, रुद्राक्षवृक्षा वा येषु तथोक्ता। ["फलभरनमितनमेरव" इत्यत्र "फलभरभरितनमेरव" इति पाठे,—फलानां भरेण—अतिशय्येन, बाहुल्येनेत्यर्थ, ("भरोऽतिशयभारयोः,"

मुखमुद्वहन्तीम्; आकाशमपि (१४४) शून्यतया अतिशयानाम्; मृन्मयीमिव निश्चेतनतया; मरुन्मयीमिव निश्वाससम्पदा; पावकमयीमिव सन्तापसन्तानेन; (१४५) सलिलमयीमिव अश्रुप्रस्रवणेन; वियन्मयीमिव निरवलम्बनतया; (१४६) तडिन्मयीमिव पारिप्लवतया; शब्दमयीमिव परिदेवितवाचोबाहुल्येन; (१४७) मुक्तमुक्तांशुकरत्नकुसुमकनकपत्राभरणां

---

प्रभ, विवर्णामित्यर्थः । शतच्छायामपि विच्छायामित्यापातत विरोधात् विरोधाभासालङ्कारः ।

(१४४) शून्यतया—रिक्ततया, हृदयस्येति भावः । अतिशयानाम्—जयन्तीम्, आकाशमिव शून्यतया व्याप्ताम्, अथवा ह्याकाशमनु सतोऽप्यधिकं शून्याम्, स्वजनविरहादिति भावः । निश्चेतनतया—निस्पन्दतयेति यावत्, मृन्मयीमिव—मृत्तिकाविकारामिव पञ्चसु भूतेषु केवलं क्षितिमयीमिव न तु अबादिमयीमिति भावः, एवमुत्तरत्रापि बोद्धव्यम् । निश्वाससम्पदा—दीर्घनिश्वासबाहुल्येनेत्यर्थः, मरुन्मयीमिव—वायुमयीमिव, अविरतं दीर्घनिश्वासं मुञ्चन्तीमिति यावत् । सन्तापसन्तानेन—सन्तापप्रवाहेणेत्यर्थः पावकमयीमिव—अग्निमयीमिव, केवलं तेजोमयीमिवेत्यर्थः, प्रबलशोकानलतप्तामिति भावः ।

(१४५) अश्रुप्रस्रवणेन—बाष्पवर्षणेन, सलिलमयीमिव—जलमयीमिव, केवलम् अम्मयीमित्यर्थः, अनवरतमश्रु मुञ्चन्तीमिति भावः । निरवलम्बनतया—निराधारतया, निराश्रयतया इत्यर्थः, वियन्मयीमिव—आकाशमयीमिव, केवलं व्योममयीमिवेत्यर्थः, अतीव निराश्रयामिति भावः ।

(१४६) पारिप्लवतया—चञ्चलतया, (चञ्चलं तरलञ्चैव पारिप्लवपरिप्लवे" इत्यमरः) तडिन्मयीमिव—विद्युन्मयीमिव हृदयगतभया अतीव अस्थिरामिति भावः । परिदेवितवाचोबाहुल्येन—विलापवचननिवहेन, शब्दमयीमिव—शब्दस्वरूपिणीमिव, अनवरतं विलपन्तीमिति भावः । मृन्मयीमित्यारभ्य शब्दमयीमिवेत्यन्तं यावदुत्प्रेक्षालङ्कारः ।

(१४७) मुक्तेति ।—मुक्तानि—त्यक्तानि, निर्गमितानि च, मुक्ताः,—मौक्तिकानि अंशुकानि—उत्कृष्टवसनानि, यद्वा—मुक्तांशुक—मुक्ताच्छमशुकं, मालवदेशज मुक्ताखचित वस्त्रविशेष इति यावत् रत्नानि—मणयः कुसुमानि—पुष्पाणि, कनकपत्राः—सुवर्णखचितरचनाविशेषाः, सौवर्णपत्राणि च, आभरणानि

कल्पलतामिव महावने पतिताम्, (१४८) परमेश्वरोत्तमाङ्ग-पातदुर्ललिताङ्गां गङ्गामिव गाङ्गताम्, (१४९) वनकुसुम धूलिधूसरितपादपल्लवां प्रभातचन्द्रमूर्त्तिमिव लोकान्तरम् अभिलषन्तीम्, (१५०) निजजलमोचकदर्थितदर्शितधवलायत नेत्रशोभां मन्दाकिनीमृणालिनीमिव परिम्लायमानाम्,

---

—मन्दहारेव यस्याः—पत्राभरणानि—पत्ररचनाविशेषा विशेषणरूपा इत्यर्थः यस्याः ताम् कल्पलता—कल्पवृक्षवल्लीम्।

(१४८) परमेश्वरेति।—परमेश्वरस्य—हरस्य राज्ञः यद् उत्तमाङ्गात—शिरसः उत्तमाङ्गस्य—शिरसश्च पातेन—निपतनेन छेदनेन च दुर्ललितम्—अत्याहतं दुःखेन पातितञ्च अङ्गं यस्याः तयोक्ताम् गाङ्गता—पृथिवीं प्राप्तां गतां भावेन भूमिमवतीर्णाम्।

(१४९) वनेति।—वनस्य—अरण्यस्य कुसुमानां—पुष्पाणां धूलिभिः—परागैः धूसरितौ—पाण्डुरौ पादपल्लवौ—चरणकिसलयौ यस्याः ताम् अन्यत्र—वनस्य—जलस्य ("वने सलिलं कानने" इत्यमरः) कुसुमानां—पुष्पाणां कुमुदानामित्यर्थः धूलिभिः—परागैरिव धूसरिताः—धूसरवर्णाः पादाः—रश्मयः ("पादा रश्मि ङ्घ्रितुर्यांशाः" इत्यमरः) पल्लवाः—परिणतकिसलया इव पाण्डुरत्वसाधर्म्यात् इति भावः यस्यास्ताम् प्राभातिकचन्द्रस्य आपाण्डुरत्वादिति बोध्यम् प्रभातचन्द्रमूर्त्तिमिव—प्रभातकालीनचन्द्रबिम्बमिव लोकान्तरम्—परलोकं लोकान्तराकाङ्क्षस्य पश्चिमं तत्र च

(१५०) निजेति।—निजेन स्वीयेन जलमोक्षेण—बाष्पवर्षणेन इत्यर्थः, कदर्थिता—क्लिष्टा यथा तथा दर्शिता—अवलोकिता धवलाः—शुभ्राः आयताः—दीर्घाः नेत्रयोः—नयनयोः शोभा—सुषमा यया ताम् अन्यत्र—निजस्य—स्वाश्रयस्य जलस्य—सलिलस्य मोक्षात्—त्यागात् कदर्थितं यथा तथा दर्शिता धवलस्य आयतस्य च नेत्रस्य—मूलस्य शोभा यया ताम् (नेत्रं मथिगुणे वस्त्रभेदे मूले द्रुमस्य च नये चक्षुषि नयत्र इति मेदिनी) मन्दाकिनीमृणालिनीमिव—स्वर्गङ्गापद्मिनीमिव परिम्लायमाना—स्वयमेव शुष्यमाणाम् एकत्र—मृत्युतत्परादिति संजीवनभूतजलमोचनात् अन्यत्र—पतिविरहादिति भावः। [अत्रापि उपमालङ्कारः]।

धातुरसङ्के महाऽनर्थे च; दूरीकृता भर्त्रा सुखेन च; (१५५) विरचिता श्रमणेन आयुषा च; आकुला केशकलापेन मरणोपायेन च; विवर्णिताम् अश्रुधूलिभिः अङ्गदैनाभिश्च; दग्धा (१५६) चण्डातपेन वैधव्येन च; धृतमुद्रा पालिना मौनेन च, गृहीता प्रियसखीजनेन मन्युना च; तया च (१५७) भ्रष्टैः बन्धुभिः विलासैश्च, मुक्तेन श्रवणयुगलेन आत्मना च, परित्यक्तैः भूषणैः सर्वारम्भैश्च, भग्नैर्वलयैः मनोरथैश्च, चरणलग्नाभिः परिचारिकाभिः दर्भाङ्कुरसूचीभिश्च,

---

मित्यर्थः। स्थिता—कृतावस्थाना, कृतनिश्चया च। धातुरसङ्के—उपमातृक्रोडे, महाऽनर्थे—प्रबलविपत्तौ च, पतिता—निहितदेहा, मग्ना च। दूरीकृता—विरहिताम्।

(१५५) श्रमणेन—भटमेन, आयुषा—जीवितकालेन च, विरचिता—त्यक्ता, गतिशक्तिहीनाम् आसन्नमरणा चेत्यर्थः। केशकलापेन—सुदीर्घविलम्बकुन्तलसमूहेन, मरणोपायेन—मृत्युचेष्टया च, आकुला—व्याकुला, सुदीर्घकेशपाशस्य मनागमनतया, केनोपायेन मरिष्यामीति चिन्तया चेति भावः। अश्रुधूलिभिः,—मार्गरजोभिः, विवर्णिता—मलिना, निष्प्रभीकृता च, अश्रुगलक्षेपादिति भावः।

(१५६) चण्डातपेन—तीक्ष्णसूर्यसन्तापेन, वैधव्येन च—विगत धव,—पतिः यस्याः सा विधवा, तस्याः भावः वैधव्यं तेन विधवीकरणेन इत्यर्थः। पालिना—करेण, मौनेन च—तूष्णीभावेन, धृतमुखी—विधृतवदना, निरुत्तरा च, करकोपरि स्थापितगण्डा, मौनावलम्बिनी चेत्यर्थः। मन्युना—क्रोधेन, गृहीता—धृताम्, आक्रान्ता च।

(१५७) भ्रष्टैः,—च्युतैः, नष्टैरित्यर्थः, गतैश्च, बन्धुभिः,—भर्त्रादिभिः, विलासैः,—सुखचेष्टैश्च। ["बन्धुभिः" इत्यादौ "जीवितेन" इत्यन्तपदे इत्यद्भुतत्वचर्णे द्रष्टव्या] मुक्तेन—निरलङ्कारेण, शून्येन च। सर्वारम्भैः—कार्योपक्रमैः, सकलकार्यैरित्यर्थः। भग्नैः,—खण्डितैः, विनष्टैश्च। चरणलग्नाभिः,—पादपतिताभिः, मा अस्मान् विहाय प्राणान् जहीहि निवारयन्तीति भावः, चरणविद्धाभिश्च, दर्भाङ्कुरसूचीभिः,—अभिनवोद्भिन्नकुशाग्रैः।

( १५८ ) हृदयविनिहितेन चक्षुषा प्रियेण च, ( १५९ ) दीर्घैः शोकश्वसितैः केशैश्च, क्षीणेन वपुषा पुण्येन च, पादयोः पतन्तीभिः दृष्टिभिः अश्रुधाराभिश्च, सत्यावशेषेण परिजनेन जीवितेन च; ( १६० ) अलसाम् उन्मेषे; दक्षाम् अश्रुमोक्षे; सन्ततां चिन्तासु; विच्छिन्नाम् आयासु; लग्नां कार्ये; स्थूलां श्वसिते; ( १६१ ) पूरितां दुःखेन; रिक्तां सत्त्वेन; अध्यासिताम् आयासेन; शून्यां हृदयेन; निश्चलां निश्चयेन; चलितां धैर्यात्; अपि च वसतिं व्यसनानाम्; आधानम् आधीनाम्; अवस्थानम् अनवस्थानाम्; आधारम् अधृतीनाम्; आवासम्

( १५८ ) हृदयविनिहितेन—हृदयार्पितेन, मनसि निवेशितेनेत्यर्थः, चित्तस्थापितेन च, प्रियेण—भर्त्रा।

( १५९ ) दीर्घैः,—आयतैः, लम्बमानैश्च, शोकश्वसितैः,—शोकजनिश्वासैः। क्षीणेन—क्षामतां गतेन क्षयं गतेन च, वपुषा—शरीरेण। सत्यावशेषेण—विरलेन अल्पमात्रावशिष्टेनेत्यर्थः, निःशेषप्रायेणेत्यर्थश्च।

( १६० ) उन्मेषे—चक्षुरुन्मीलने, अलसां—मन्थरां, जडप्रायामित्यर्थः, निमीलितनयनामिति यावत्। दक्षा—पटुः सा, प्रवर्तमानाश्रु मुञ्चन्तीमित्यर्थः, या अलसा सा कथं दक्षा? इति आपाततः विरोधः, उन्मेषाश्रुमोक्षरूपविभिन्नाधिकरणिकतया च तयोः परस्परमविरोधात् विरोधाभासोऽलङ्कारः; एवमुत्तरत्र। सन्तताम्—अविच्छिन्नां निरन्तरामित्यर्थः, सततं चिन्तयन्तीमिति निष्कर्षः, विच्छिन्नां—रहितां, त्यक्ताशामित्यर्थः, सन्तता विच्छिन्नामिति विरोधः। श्वसिते स्थूलां—दीर्घं श्वसन्तीमिति यावत् कृशां स्थूलामिति आपाततः विरोधः, वास्तवस्तूभयोः सामानाधिकरण्याभावात् विरोधाभासः, एवमन्यत्रापि।

( १६१ ) सत्त्वेन—विद्यमानतया, अस्तित्वेन इत्यर्थः, बलेन उत्साहेन वा, रिक्तां—रहितां,मृतप्रायां दुर्बलां निरुत्साहां वा इति भावः, पूरितां रिक्तामिति विरोधः। आयासेन—क्लेशेन, अध्यासिताम्—अधिष्ठिताम्, अनुभूतक्लेशामित्यर्थः, अध्यासितां शून्यामिति विरोधः। निश्चयेन—निर्णयेन, निश्चलां—स्थिरां, स्थिरसङ्कल्पामित्यर्थः। चलितां—च्युताम्; निश्चलां चलितामिति विरोधः। व्यसनानां—विपदां, वसतिम्—आश्रयम्। आधीनां—मानसीनां व्यथानां,

प्रमादानाम्; आस्पदम् आपदाम्; (१६२) अभियोगम् अभाग्यानाम्; उद्वेगम् उद्वेगानाम्; कारणं करुणायाः; पारं परायत्ततायाः योषितम्। चिन्तितवानस्मि च चित्रम्॥ ईदृशीमपि आकृतिम् उपतापाः स्पृशन्ति॥ इति।

सा तु ममोपगते मयि तदवस्थाऽपि (१६३) सबहुमानम् आनतमौलिः प्रणतवती। अहन्तु (१६४) प्रबलकरुणा-प्रेर्य्यमाणः ताम् आलपितुकामः पुनः कृतवान् मनसि—"कथमिव (१६५) महानुभावाम् एनाम् आमन्त्रये? 'वत्से!' इति अतिप्रणय, 'मातः!' इति चाटु, 'भगिनि!' इति (१६६) आत्मसम्भावना, 'देवि!' इति परिजनालाप,

("पद्माधिर्मानसी व्यथा" इत्यमरः) आधानम्—आधारम्। प्रमदानाम्—दुःस्थानामित्यर्थं अवस्थान—वासस्थानम्। प्रहतीनाम्—पर्व्वतीयानाम्। प्रमादानाम्—विपत्तीनाम् अवसन्नतानां वा। आस्पद—स्थानम्।

(१६२) अभियोगम्—आक्रान्तिम्, आक्रमणस्थानमित्यर्थं, दुर्भाग्याक्रान्तामिति यावत्। उद्वेगाना—व्याकुलतानामित्यर्थं, भयानां वा, उद्वेगम—उद्गमन स्थानामित्यर्थ, आश्रयस्थानमिति भाव। करुणायाः कारण—हेतु, कृपाविभावस्य हेतुभूतामित्यर्थ, तद्दर्शने स्वत एव करुणा जायते इति भाव। परायत्ततायाः—पराधीनतायाः पारम—अन्तम, अवसानमित्यर्थ, इतोऽप्यधिकपरायत्तताया अदर्श नात् एकान्तपरायत्ताश्विनीमिति भाव। चित्रम्—आश्चर्यम्। उपतापा,—सन्तापा, मनस्तापा इति यावत्।

(१६३) सबहुमान—सादरम, आनतमौलि —अवनतमस्तका।

(१६४) प्रबलेति।—प्रबलया—महत्या, करुणया—कृपया, प्रेर्य्यमाण,—नीयमान, अतीव कृपार्द्रहृदय इत्यर्थं। आलपितुकाम,—सम्भाषितुकाम।

(१६५) महानुभावा—मननीयाम्। आमन्त्रये—सम्भाषे। अतिप्रणय,—अतिमात्रस्नेह, अतिविश्वस्तता वा, एतादृकसम्भाषणम् स्नेहमात्राभिप्रायाभिव्यञ्जकतया अपरिचितायां तव युक्तमिति भाव। चाटु—अनुनयाभ वाणि केवल सन्तोषणमित्यर्थं, प्रियोक्ति वा एतदपि पूर्व्ववदयुक्तमिति भाव।

(१६६) आत्मसम्भावना—आत्मन समादर, भिन्नो मम तादृशी भगिनी न

'राजपुत्रि !' इति (१६७) अस्फुटम्, 'उपासिके !' इति मनोरथः, 'स्वामिनि !' इति (१६८) भृत्यभावाभ्युपगमः, 'भद्रे !' इति इतरस्त्रीसमुचितम्, 'आयुष्मति !' इति अवस्थायाम् अप्रियं, 'कल्याणिनि !' इति (१६९) दशाया विरुद्धं, 'चन्द्रमुखि !' इति अमुनिमतं, 'बाले !' इति (१७०) अगौरवोपेतम्, 'आर्य्ये !' इति जरारोपणं, 'पुण्यवति !' इति फलविपरीतं, (१७१) 'भवति !' इति सर्व्वसाधारणम्; अपि

---

सम्भवति इति भ्रान्त्यौरव स्यादिति भावः। परिजनालापः,—परिजनस्य—भवनपरिवारस्य, निजमहस्यजनमनूकूलत्वेऽपि, आलापः,—सम्भाषणं, नाहं सहेति भावः।

(१६७) अस्फुटम्—अव्यक्तं, तवाद्भ्याचास्त्वादिति भावः। उपासिके !—शिष्ये ! बौद्धधर्मावलम्बिनि ! इत्यर्थो वा। मनोरथः,—अभिलाषः, स्वमनोऽनुकूलं वचनमित्यर्थः, तथा हि—भवत्या उपासकतया सर्वमेव उपासकं मन्यामहे, यदि हि इयं तथा न स्यात् तदा तथोक्तिविफलैवेत्यभिप्रायः।

(१६८) भृत्यभावाभ्युपगमः—दासभावस्वीकारः न चायुक्तः स्वेशो दासत्वाभिव्यञ्जकत्वादिति भावः। इतरस्त्रीसमुचितं—सामान्यनारीमनूद्य, इयन्तु न तथा दृश्यते, तत् कथं तथा सम्बोधनार्हमिति भावः। अवस्थायां—मरणदशायाम् अप्रियं—न प्रीतिकरं तादृशीदशायां न कोऽपि जीवितं प्रियं मन्यते, अत एव अप्रीतिकरस्य वचनस्य कमपि प्रति प्रयोक्तुमनौचित्यात् इति भावः, तदुक्तं मनुना,—"सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात् सत्यमप्रियम्। प्रियञ्च नानृतं ब्रूयादेष धर्मः सनातनः॥" इति।

(१६९) दशायाम्—अमङ्गलावस्थायां, विरुद्धं—विपरीतं, तादृशीकालीनकल्याणासम्भवात् मिथ्याभूतस्य च वचनस्य प्रयोक्तुमनौचित्यादिति भावः। अमुनिमतं—मुनिजनानामभिमतं, तपस्विजनविरुद्धमित्यर्थः, विलासिकामुकयोर्य्यत्सम्बोधनमिदम् इति भावः।

(१७०) अगौरवोपेतं—गौरवे अयुक्तमित्यर्थः, लघुत्वव्यञ्जकमिति यावत्। जरारोपणं—वार्द्धक्याध्यासनं, जरतीनामेव तथा सम्बोधनीयत्वादिति भावः। फलविपरीतं—फलेन—तादृशेन दुर्विपाकरूपेण, विपरीतं—विपर्य्यस्तं, पुण्यवत्त्वे न तादृशी दुरवस्था जायते इति भावः।

(१७१) भवति !—मान्ये ! इत्यर्थः। सर्व्वसाधारणं—सर्वेषां साधारणं—

च 'कासि ?' इति अनभिजातं, 'किमर्थं रोदिषि ?' इति दुःखकारणस्मरणकारि, 'मा रोदीः' इति शोकहेतुम् अनपनीय न शोभते, 'समाश्वसिहि' इति किम् आश्रित्य ? 'स्वागतम् ?' इति यातयामं, 'सुखम् आस्यते ?' इति मिथ्या।

इत्येवं चिन्तयति एव मयि, तस्मात् (१७२) स्त्रैणात् उत्थाय अन्यतरा योषित् आर्य्यरूपा इव शोकविक्लवा समुपसृत्य, कतिपयपलितसारं शिरो नीत्वा महीतलम्, अतुलहृदयसन्तापसूचकैः अश्रुबिन्दुभिः चरणयुगलं दहन्ती मम अतिकृपणैः अक्षरैश्च हृदयम् अभिहितवती,—'भगवन् !

---

सामान्यं, तेनाल्पमधुरम्, असामान्यमूर्त्तित्वात् तस्या इति भावः। अनभिजातम्—अकुलोचितं, "कीदृशं कुलमलङ्कृतासि" ? एवं प्रश्नस्य सत्यासम्भूतायाम् अनादराभिव्यञ्जकत्वादिति भावः। दुःखेति।—दुःखस्य—मनःपीडायाः कारणं यत् कारणं—हेतुः तस्य स्मरणं—पूर्वानुभूतस्य मनसि आविर्भवणं, तत् कारयतीति तथोक्तं, रोदनकारणे आख्यायमाने पूर्वकृतस्य पुनःस्मरणादिति भावः, पूर्वदुःखप्रबोधकतया व्यथाकरमिति तात्पर्य्यम्। अनपनीय—अनपनीय दूरमकृत्वेति यावत्। समाश्वसिहि—आश्वस्ता भव, धैर्य्यमवलम्बस्व इत्यर्थः। किम् आश्रित्य ?—समाश्वासनाहेतु कमाश्रित्य ब्रवीमीति भावः। यातयामम्—असामयिकं, जीर्णप्रायम् इति यावत् पुरातनसम्बोधनं वा इति भावः, यद्वा,—यातः,—व्यतीतः, यामः,—प्रहररूपः कालः यस्य तथाविधम्, तथा हि—"स्वागतम्" इति प्रश्नस्य प्रथमदर्शनसमयरूपकालमात्रकृततया इदानीं प्रहरादप्यधिके व्यतीतकाले तदभिधानस्य नितरामनावश्यकत्वादित्यभिप्रायः। आस्यते—उपविश्यते, स्थीयते इत्यर्थः। मिथ्या—अलीकं, प्रत्यक्षमेव असुखव्यञ्जककार्य्यस्य दर्शनात् इति भावः।

(१७२) स्त्रैणात्—स्त्रीसमूहात्। आर्य्यरूपा इव—कुलीनस्वभावा इव दृश्यमाना इत्यर्थः, शोकविक्लवा—मन्युविधुरा। कतिपयेति।—कतिपयानि—अल्पसङ्ख्यकानि पलितानि—जरसा शुक्लकेशवृन्दानि, ("पलितं जरसा शौक्ल्यं केशादौ" इत्यमरः) तैः सारं—चित्रं, शबलमित्यर्थः। अतुलहृदयसन्तापसूचकैः,—निरुपमचित्ततापव्यञ्जकैः। अतिकृपणैः,—अतिदीनैरित्यर्थः, अतिकरुणैरिति यावत्, अक्षरैः हृदयं दहन्ती।

(१७३) सर्व्वसत्त्वानुकम्पिनी प्रायः प्रव्रज्या। प्रतिपन्नदुःखक्षपणदीक्षादक्षाश्च भवन्ति सौगताः। (१७४) करुणाकुलगृहञ्च भगवतः शाक्यमुनेः शासनम्। (१७५) सकलजनोपकारसज्जा सज्जनता जैनी। परलोकसाधनञ्च धर्म्मो मुनीनाम्। प्राणरक्षणाच्च न परं (१७६) पुण्यजातं जगति गीयते जनेन। (१७७) अनुकम्पाभूमयः प्रकृत्या एव युवतयः, किं पुनर्विपदभिभूताः? साधुजनश्च सिद्धचैत्यम् आर्त्तवचसाम्। यत इयं नः (१७८) स्वामिनी मरणेन पितुः, अभावेन भर्त्तुः, प्रवासेन च भ्रातुः, भ्रंशेन च शेषस्य बान्धववर्गस्य, (१७९) अतिमृदुहृदयतया अनपत्यतया च निरवलम्बना परिभवेन च नीचा-

---

(१७३) सर्वसत्त्वानुकम्पिनी—सर्वप्राणिकृपाकारिणी, प्रव्रज्या—सन्न्यासधर्म्म। सौगता,—बौद्धाः, प्रतिपन्नेति।—प्रतिपन्नानाम्—आपन्नानाम्, आश्रितानामित्यर्थः, दुःखस्य—क्लेशस्य, क्षपण—निवारणमेव, दीक्षा—व्रत, तत्र दक्षा,—पटव।

(१७४) शाक्यमुने,—बुद्धदेवस्य, शासनम्—आदेश, शास्त्रं वा, करुणेति।—करुणाया —कृपाया, कुलगृह—जन्ममन्दिर, कारुण्यस्य आद्युत्पत्तिस्थानमित्यर्थः। तेन हि भगवता सुदयहृदयेन सर्वजीवेषु कारुण्यस्यैव प्राधान्येन दर्शितत्वादित्यभिप्राय। यद्वा,—करुणाकुलस्य—प्रभूतकृपाया, गृहम्—आवास।

(१७५) जैनी—जिनसम्बन्धीया, बौद्धाचारसम्बन्धा इत्यर्थः, सज्जनता—साधुता, सकलेति।—सकलाना—सर्वेषां, जनाना—लोकानाम्,उपकारे—हितविधाने, सज्जा—प्रवृत्ता, उद्युक्ता इति यावत्। धर्म्म,—विष्णुमोहित आचार, परलोकसाधनम्—उत्कृष्टलोकप्रापक।

(१७६) पुण्यजातं—पुण्यनिचय।

(१७७) प्रकृत्या—स्वभावत, अनुकम्पाभूमय,—कृपापात्राणि। विपदभिभूता,—विपन्ना किंत। आर्त्तवचसाम्—आर्त्ताना—विपन्नानां, वचसा—वाक्यानां, सिद्धचैत्य—सिद्धस्थान, निश्चितफललाभस्थानमित्यर्थः, प्रसिद्धाश्रय इति यावत।

(१७८) स्वामिनी—अधीश्वरी। प्रवासेन—विदेशावस्थानेन। शेषस्य—अवशिष्टस्य, बान्धववर्गस्य—स्वजनसमूहस्य, भ्रंशेन—विनाशेन, सर्वथा पलायनेन वा इत्यर्थः।

(१७९) अतिमृदुहृदयतया—अतिकोमलत्वात् करणतदा, अनपत्यतया—

रातिक्रतेन, प्रकृतिमनस्विनी, अमुना च (१८०) महाऽटवीपर्य्यटनक्लेशेन कदर्थितसौकुमार्य्या, दग्धदैवदत्तैः एवंविधैः बहुभिः उपर्य्युपरि व्यसनैः विक्लवीकृतहृदया, दारुणं दुःखमपारयन्ती सोढुं, निवारयन्तम् (१८१) अनतिक्रान्तपूर्व्वं स्वप्नेऽपि अवगणय्य गुरुजनम्, (१८२) अनुनयन्तीः अखण्डितप्रणया नर्म्मसु अपि समवधीर्य्य प्रियसखीः, (१८३) विज्ञापयन्तम अशरणम् अश्रुव्याकुलनयनम् अपरिभूतपूर्व्वं मनसाऽपि परिभूय भृत्यवर्गम् अग्निं प्रविशति, परित्रायताम्। आर्य्योऽपि तावत् (१८४) असह्यशोकापनयनोपायोपदेशनिपुणां

---

अपन्नतया, नीचारातिक्रतेन—पामरशत्रुप्रयुक्तेन, हीनात्मकरणवैरिविहितेनेति यावत्, परिभवेन—तिरस्कारेण, उत्पीडनेनेत्यर्थः, निरवलम्बना—निराश्रया। प्रकृतिमनस्विनी—स्वभावत एव प्रशस्तान्तःकरणा, स्वामिनी इत्यनेनान्वयः।

(१८०) महाऽटवीपर्य्यटनक्लेशेन—दीर्घारण्यभ्रमणायासेन, कदर्थितसौकुमार्य्या—क्लेशितमार्दवा। दग्धदैवदत्तैः,—हतविधिविहितैः, व्यसनैः—विपत्पातैः, विक्लवीकृतहृदया—व्याकुलीकृतान्तःकरणा। दारुणं—घोरम। अपारयन्ती—अक्षमकुर्वती।

(१८१) अनतिक्रान्तपूर्वम्—अनुल्लङ्घितपूर्वम्। अवगणय्य—अगणयित्वा, गुरुजनानां वाक्यमुल्लङ्घ्येत्यर्थः।

(१८२) अनुनयन्तीः,—प्रबोधयन्तीः, मरणाध्यवसायात् निवर्त्तयितुमनुनयं कुर्वतीरित्यर्थः, नर्म्मसु अपि—परिहासेषु अपि, अखण्डितप्रणया,—अविच्छिन्नसद्भावा, अविचलितस्नेहा इति यावत्। समवधीर्य्य—अवज्ञाय, सखीनामपि सानुनयवचनमनाकर्ण्येत्यर्थः।

(१८३) विज्ञापयन्त—मा प्रविशाग्निं मा प्रविशाग्निम् इत्येवं बहुश निवेदयन्तम्, अशरणम्,—अनाथं, मनसाऽपि अपरिभूतपूर्वं—चेतसाऽपि अनादृतपूर्वम्। परिभूय—अनादृत्य।

(१८४) असह्येति।—असह्यस्य—सोढुमशक्यस्य, शोकस्य—मन्योः, अपनयन—निरसनं, तस्य उपायः,—साधनं, तस्य उपदेशे—शिक्षायां, निपुणा—दक्षा

व्यापारयतु वाणीम् अस्याम्" इति च अतिकृपणं व्याहरन्तीम् अहम् उत्थाप्य उद्विग्नतरं पुनः अभिहितवान् —'आर्य्ये! यथा कथयसि, तथा। अस्मद्गिराम् (१८५) अगोचरोऽयम् अस्याः पुण्याशयायाः मोहः। प्रतीक्षते चेत् मुहूर्त्तमात्रमपि (१८६) कातरम्, उपरिष्टात् न वृथा इयम् अभ्यर्थना भविष्यति। मम हि गुरुः अपर इव भगवान् (१८७) सुगतः समीपगत एव। कथिते मया अस्मिन् उदन्ते नियतम् आगमिष्यति परमदयालुः। दुःखान्धकारपटलभिद्भिश्च सौगतैः सुभाषितैः (१८८) स्वकैश्च दर्शितनिदर्शनैः नानागमगुरुभिः गिरा कौशलैः कुशलशीलाम् एनां प्रबोधपदवीम् आरोपयिष्यति' इति। तच्च श्रुत्वा त्वरताम् आर्य्यः' इत्यभिदधाना सा

---

याम्। व्यापारयतु—प्रयुङ्क्ताम्। अस्याम्—अस्याः स्वामिन्याम्। अतिकृपणम्—अतिदीनम् अतिकरुणमित्यर्थः व्याहरन्तीम्—भाषमाणाम्। उद्विग्नतरः—अतिव्याकुलः सन्। यथा कथयसि—मज्जनस्त्वामनुकाम्यतो इत्यादि यद् वदसि तथा—तत् तथैव, सत्यमित्यर्थः।

(१८५) अगोचरः,—असाध्यीकरणीयः, अविषय इत्यर्थः, अनपनेय इति भावः। पुण्याशयायाः,—पवित्रस्वभावायाः।

(१८६) कातरम्—आत्मप्रवेशव्यवसायात् प्रतिवारयितुमित्यर्थः। उपरिष्टात्—परतः मुहूर्त्तानन्तरमित्यर्थः। अभ्यर्थना—याच्ञा यदि मुहूर्त्तकालं प्रबोधवाक्यैर्धं रक्षितुं शक्यते तदा भवद्गुरुम् आनीय तस्य अभ्युपदेशतोऽस्याः मोहं प्रशमय्य युष्मत् प्रार्थनां सफलयिष्यामीति निष्कर्षः।

(१८७) सुगतः,—बुद्धदेवः। उदन्ते—वृत्तान्ते ("वार्त्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्" इत्यमरः)। नियतम्—निश्चितम्। दुःखान्।—दुःखानि—मनःपीडा एव, अन्धकाराः—तिमिराणि तेषां पटलम्—समूहः, तस्य भिद्भिः—नाशकानि तैः, सौगतैः—सुगतसम्बन्धिभिः, सुभाषितैः,—सदुक्तैः सुबद्धवचनैरिति यावत्।

(१८८) स्वकैः—निजैः, दर्शितनिदर्शनैः,—उदाहृतदृष्टान्तैः, नानेति। —नाना—विविधैः, आगमैः—शास्त्रैः हेतुभिः, शास्त्रयुक्तिमाश्रित्य कथनादिति भावः, गुरुभिः—महद्भिः, गौरवयुक्तानीत्यर्थः तैः, गिरा—वाचा, कौशलैः,—नैपुण्यैः,

पुनरपि पादयोः पतितवती। सोऽहमुपगम्य त्वरमाणः (१८९) व्यतिकरम् इमम् अधृतिकरम् अशरणकृपणबहुयुवतिमरणम् अतिकरुणम् अत्रभवते गुरवे निवेदितवान्" इति।

अथ (१९०) भूभृत् भैक्षव समवधार्य तद्भाषितम् अश्रुमिश्रितम्, अश्रुतेऽपि स्वसुः शान्ति निमीलितमना मन्युना, सर्वाकारसंवादिन्या दशया एव दूरीकृतसन्देहः, दग्ध इव सोदर्या व्यसनश्रवणेन श्रवणयोः, (१९१) श्रमणाचार्यम् उवाच,—"आर्य! (१९२) नियतं सैवेयम् अनार्यस्य अस्य जनस्य अतिकठिनहृदयस्य अतिनृशंसस्य मन्दभाग्यस्य भगिनी भागधेयैः एताम् अवस्थां नीता निष्कारणवैरिभिः वराकी,

---

शान्तिमानुपोरित्यर्थं कृपणमौना—सुवर्तिलोमित्यर्थं प्रबोधपदवीं—प्रकाशमार्गं, शोकाग्निकरमुपागमित्यर्थः।

(१८९) अधृतिकरम्—असन्तोषजनकम्, अशरणेति।—अशरणानाम्—निराश्रयाणां कृपणानाम्—दरिद्राणां करुणास्पदानामित्यर्थः बहूनाम्—अनेकासां युवतीनाम्—तरुणीनां, मरणम्—मृत्युः यस्मिन् तम् अतिकरुणम्—अतिशोकावहं, व्यतिकरम्—व्यसनं विपदमित्यर्थः, ("अथ व्यतिकरः पुंसि व्यसनव्यतिषङ्गयोः" इति मेदिनी)। अत्रभवते—पूज्याय।

(१९०) भूभृत्—भूपालः। भैक्षव—भिक्षुकः। समवधार्य—सावहितं श्रुत्वेत्यर्थः। स्वसुः,—भगिन्याः। मन्युना—शोकेन ("मन्युः शोके तु क्रुधि स्त्रियाम्" इत्यमरः) निमीलितमना—मनसीकृतात्मा सङ्कीर्णचेता इत्यर्थं आच्छादितहृदय इति यावत्। सर्वाकारसंवादिन्या—सर्वाकारेण—सर्वप्रकारेण, संवादिन्या—संवदति—इयमस्य भगिनीति व्यनक्तीति तयोक्तया, यद्वा,—सर्वाकारः—सर्वमेवाकारं, संवदति—अनुकरोति या तया निखिलशारीरिकलक्षणकथनाभिज्ञापयन्त्येत्यर्थः दशया—अवस्थया। सोदर्याः।—सोदर्यायाः,—भगिन्याः, व्यसनश्रवणेन—दुर्दशाऽऽकर्णनेन, श्रवणयोः,—कर्णयोः।

(१९१) श्रमणाचार्यम्—भिक्षुश्रेष्ठं, बौद्धाचार्यं दिवाकरमित्रमित्यर्थः।

(१९२) नियतम्—निश्चितम्, अनार्यस्य—असाधोः। अतिनृशंसस्य—अतिनिर्दयस्य। भागधेयैः,—दुर्दैवैरित्यर्थः। निष्कारणवैरिभिः,—अहेतुकशत्रुभिः,

निवेदयिष्यामि ते हृदयम् एव निवेदयति" इत्युक्त्वा तमपि (१८३) श्रमणम् अभ्यधात्,—"आर्य! उत्तिष्ठ; दर्शय क्व सा? यत्र (१८४) सुप्रभूतप्राणपरित्राणपुण्योपार्जनाय यामः, यदि कथञ्चित् जीवन्तीं सम्भावयामः" इति भाषमाण एव उत्तस्थौ।

अथ समग्रशिष्यवर्गानुगतेन आचार्येण तुरगेभ्यश्च अवतीर्य समस्तेन सामन्तलोकेन (१८५) पश्चादाक्षिप्यमाणाश्वीयेन अनुगम्यमानः, (१८६) पुरस्ताच्च तेन शाक्यपुत्रीयेण प्रदिश्यमानवर्त्मा, पद्भ्यामेव तं प्रदेशं प्रविरलैः पदैः पिबन्निव

---

गमुतायां द्वितीयस्कन्धोऽपि प्रबुद्धाधर्द्धिविषय । कराली—दर्पशिखी, निरन्तरावा इत्यर्थ ।

(१८३) श्रमण—भिक्षुम्।

(१८४) सुप्रभूतेति।—सुप्रभूतानाम्—अतिबहुलानां, प्राणानां—जीवनानां, परित्राण—परिरक्षणं तदेव पुण्य—सुकृतं, तस्य उपार्जनाय—लाभाय, एकस्या एव तस्या मरणे बहूनां हि तत्परिजनानां प्राणविसर्जनप्रतिज्ञायाः निवर्तनसम्भवात् सुप्रभूतप्राणपरिरक्षणपुण्यलाभाय । सम्भावयाम —सम्भावयाम, प्राप्नुयामेति यावत्। प्रत्यक्षादिदर्शनेन सदसंयाम इत्यर्थ ।

(१८५) पश्चादिति।—पश्चात—पृष्ठत,आक्षिप्यमाणम—आकृष्यमाणम आनीयमानं निग्रह अश्वीयम—अश्वसमूह येन तथोक्तेन ("हन्दे त्वश्वीयमाश्ववत्" इत्यमर )।

(१८६) पुरस्तात्—अग्रत, शाक्यपुत्रीयेण—भिक्षुणा प्रदिश्यमानवर्त्मा—प्रदर्श्यमानमार्ग । प्रविरलै,—मन्दैः, अतितुमुलदर्शनौत्सुक्यात् अपूर्वमिति यावत्, अवनीतलम अनुसृत्येति भाव, पदै —पदविन्यासैः, ["प्रविरलै" इत्यत्र "अविरलै" इति पाठे,—अविरलै, —घनै तत्रभिप्रायं, घनै घनैरिति यावत्, पादोऽपि न समाश्रम, तथा तत्र गमनस्य क्षणमनुरोधाभिधानात्। केचित्तु "अविरलै दोषै" इत्यत्र व्याख्यायन्ति तदतिगमनार्थमिव द्रष्टव्य] पिबन्निव—पानं कुर्वन्निव इत्यर्थं, आलस्यगमनेन वनीपरिसरप्रदेशस्य सर्वस्यैव पश्चात्करणात् अदृश्यमानत्वाच्च पिबन्निवेत्युत्प्रेक्षा

प्रावर्त्तत। क्रमेण च समुपगत शुश्राव लतावनान्तरितस्य मुमूर्षा-मंहत' स्त्रैणस्य तत्कालोचितान् अनेकप्रकारान् आलापान्,—"भगवन्! धर्म्म! (१९७) धाव शीघ्रम्। क्वासि? कुलदेवते! देवि! धरणि! धीरयसि न दुःखिता दुहितरम्?। क्व नु खलु (१९८) प्रोषिता पुष्पभूतिकुटुम्बिनी लक्ष्मी?। (१९९) नाथ! सुखरवग्र! अनाथा विविधाऽऽधिविधुरा वधू विधवा विबोधयसि किमिति न इमाम्?। भगवन्! सुगत! भक्तजने (२००) सञ्ज्वरिणि सुप्तोऽसि?। राजधर्म! (२०१) पुष्पभूति भवनपक्षपातिन्! उदासीनोभूतोऽसि कथम्?। त्वयि अपि

---

बीडया। प्रावर्त्तत—प्रातिष्ठत। मुमूर्षा —मर्त्तुमिच्छा स्त्रैणस्य—स्त्रीसमूहस्य, तत्कालोचितान—मृत्युसमये प्रयुक्तान् भेदमूचकानित्यथ।

(१९७) धाव—द्रुतम आगच्छ त्वामाश्रिता इयमकाले म्रियते अत शीघ्र मागत्य एनां रक्ष इति भाव। धरणि!—सर्व्वधारणकारिणि! पृथ्वि! न धीरयसि?—न धीरां करोषि? न सान्त्वयसि? इत्यथ खिराया ते कन्या धीरा एव भवितुमर्हति अत एनां धीरां कुरु इति भाव।

(१९८) पुष्पभूतिकुटुम्बिनी—पुष्पभूते —तदाख्यस्य वंशपूर्वजस्य कुटुम्बिनी—गृहिणी लक्ष्मी राजभोग्यत्वादिति भाव, लक्ष्मी,—पुष्पभूते राज्ञ श्रीरित्यथ, प्रोषिता—गता।

(१९९) नाथ!—प्रभो! सुखरवग्र!—सुखरकुलप्रसूत? पद्मवन्! इति यावत पद्मवर्म्मेण पूर्व्वजराजन्यवर्ग वा, [सुख प्राधान्यमस्यास्तीत्यर्थे "वप्रकरणे—" इत्यादि शार्ङ्गकात वत्यर्थे रप्रत्यय] अनाथाम—अशरणा विधवात।—विविधाभि —नानाप्रकाराभि आधिभि,—मनस्तापै विधुरा—व्याकुला ता विधवा—पतिहीना, वधू—भार्य्या स्नुषा वा ("वधू स्त्री सारिवौषधौ। स्नुषाम्टीननवोढासु भार्य्यास्वकाङ्गनासु च॥" इति मेदिनी) विबोधयसि?—प्रबोधयसि? सान्त्वयसीत्यथ।

(२००) सञ्ज्वरिणि—सन्तापवति ("सन्ताप सञ्ज्वर समौ" इत्यमर)। सुप्तोऽसि?—निद्रितोऽसि किम्? भक्तजनमनस्ताप न पश्यसि किमस्यत्र।

(२०१) पुष्पभूतिभवनपक्षपातिन्—पुष्पभूतिवंशानुरागिन्!, पुष्पभूति॰

विपद्बान्धव । विन्ध्य । वन्ध्योऽयम् अञ्जलिबन्धः ?। मातः । महाऽटवि । रटन्ती न शृणोषि इमाम् आपत्पतिताम् ?। (२०२) पतङ्ग । प्रसीद, पाहि पतिव्रताम् अशरणाम्। प्रयत्नरक्षित । कृतघ्न । चारित्रचण्डाल । न रक्षसि राजपुत्रीम् ?। (२०३) किम् अवधृत लक्षणे ?। हा देवि । दुहितृस्नेहमयि । यशोवति । सुप्ताऽसि दग्धदैवदस्युना । देव । दुहितरि दह्यमानायां न (२०४) आपतसि ? प्रतापशील । शिथिलीभूतम् अपत्यप्रेम ?। महाराज । राज्यवर्धन । न धावसि ? (२०५) मन्दीभूता भगिनीप्रीतिः ? अहो । निष्ठुरः प्रेतभाव !!। व्यपेहि पाप । पावक ! स्त्रीघातनिर्घृण । ज्वलन्

---

) पद्मानाम प्रकाशकतया राजधर्मप्रतिपालनात् राजप्रभस्य तस्यैव बोध्यम् । उदासीनीभूत,—निरपेक्ष आत्मशासकस्य स्वकर्मसम्बन्धाकरणादिति भाव । वन्ध्य,—विफल, यत अञ्जलि बद्धा प्रार्थ्यमानोऽपि विपन्नामबलाम् त्वं न रक्षसीति भाव । महाऽटवि ।—अरण्यानि । रटन्तीं—विलपन्ती विलाप श्रुत्वाऽपि न प्रतिकरोषि ? इति भाव ।

(२०२) पतङ्ग ।—सूर्य । पक्षिन् वा, ("पतङ्गौ पक्षिसूर्यौ च" इत्यमरः)। प्रयत्नरक्षित ।—प्रयत्नेन—प्रकृष्टेन यत्नेन रक्षित—पालित ।, कृतघ्न ।—कृतोपकारापकारिन् । प्रयत्नरक्षितस्त्वेऽपि इदानीं विपन्नाया रक्षिकाया राजपुत्र्याः रक्षाऽकरणात् कृतघ्नत्वं चारित्रस्येति भाव चारित्रचण्डाल ।—चारित्रेषु—सुचरितेषु चण्डाल—हीन । इदानीं, चण्डालवत् शरणागतरक्षाऽकरणादिति भाव ।

(२०३) अवधृते,—शुभचिह्ने किम् अवधृतम् ?—किं गृहीतम् ? किमर्थं धृतमित्यर्थ, निरर्थकं स्थितमिति भाव । दग्धदैवदस्युना—हतविधिरूपतस्करेण, सुप्ताऽसि—प्रवसनस्थाऽसि ।

(२०४) आपतसि—आगच्छसि । शिथिलीभूत—ह्रासं गतम् ।

(२०५) मन्दीभूता—अल्पीभूता । प्रेतभाव —मरण, विगतचेतनत्वरूपस्य प्रेतत्वस्य मातुलसम्बन्धेषु निरपेक्षतया ममत्वबोधराहित्यात् भगिनीप्रीति अपगता, प्रेत हि प्राग्भूतसम्बन्धविस्मरणेन तस्य निष्ठुरत्वमभिहितमिति भाव । व्यपेहि—अपगच्छ, दूरमपसर इत्यर्थः । स्त्रीघातनिर्घृण ।—नारीहननात् निष्करुण ।

न लज्जसे ?। भ्रातर्वात। दासी तवास्मि, (२०६) सवादय द्रुतं देवीदाहं देवाय दुःखितजनार्त्तिहराय हर्षाय। (२०७) नितान्तनि शूक। शोकश्वपाक। सकामोऽसि ?। दुःख-दायिन्। वियोगराक्षस। तुष्टोऽसि ?। विजने वने कमा-क्रन्दामि ? कस्मै कथयामि ? कमुपयामि शरणम् ? कां दिशं (२०८) प्रतिपद्ये ? करोमि किम् अभागधेया ?। (२०९) गान्धारि। गृहीतोऽद्य मतापाश ?। पिशाचि। मोच-निके। मुञ्च (२१०) शाखाग्रहणकामहम्। कलहसि। हसि किमत परम् उत्तमाङ्गम् ?। मङ्गलिके। (२११) मुक्तागर्लं किमद्यापि ध्रियते ?। सुन्दरि। दूरीभवति सखीसार्थः।

(२०६) दुःखितेति।—दुःखितजनानां—क्लिष्टलोकानाम् आर्त्तिहराय—जनपीडाप्रशमनाय हर्षाय—देवाय हर्षवर्द्धनाय ["क्रियया यमभिप्रैति—" इत्यादि वार्त्तिकात् चतुर्थी] देवीदाहं—देव्याः,—राज्यश्रियाः, दाहं,—अग्निप्रवेशं तं, सवादय—ज्ञापय।

(२०७) नितान्तनिःशूक।—नितान्तम्—एकान्तं, निः,—नास्ति शूकः—दया यस्य तत्सम्बुद्धौ, ("शूकोऽस्त्री श्लक्ष्णतीक्ष्णाग्रे शूकः करुणयोरपि" इति मेदिनी) अतनिर्दय। इत्यर्थः, शोकश्वपाक।—मनुष्याच्छाल। सकामोऽसि—पूर्णमनोरथोऽसि अत्र लब्धसन्तोषोऽसीति भावः। तुष्टोऽसि ?—प्रीतोऽसि ? स्वजनेभ्यः विमुच्य इति भावः। आक्रन्दामि—आह्वयामि, ("आक्रन्द क्रन्दने त्राणे मित्रदारुणयुद्धयोः" इति मेदिनी)।

(२०८) प्रतिपद्ये—गच्छामि। अभागधेया—अभाग्या, दुर्भगा इत्यर्थः।

(२०९) गान्धारि। मोचनिके। इत्यादीनि समभिव्याहृतदासीनां सम्बोधनानि। मतापाश,—प्रसतिरज्जुः, गृहीत,—धृतः, उद्बन्धनार्थमिति भावः त्वयेति शेषः।

(२१०) शाखाग्रहणेति।—शाखायाः,—विटपस्य, ग्रहणं—धारणम्, उद्बन्ध-नार्थमिति भावः, तत्र कलहः,—विवादः तम्, अहमग्रे एतस्याः शाखायामात्मान-मुद्बध्नामीत्येवं रूपम् इति भावः। उत्तमाङ्गं—शिरः, हसि—ताडयसि अतः स्वयमेव मरिष्यन्ति, तत्र हि शिरोहननेनालमिति भावः।

(२११) मुक्तागलं—मुक्तकण्ठम्। सखीसार्थ,—वयस्यावर्गः, दूरीभवति—दूरं गच्छतीत्यर्थः, ध्रियते इति भावः।

विजये। (२१९) वीजय व्यजनम्। सानुमति। (२२०) नमति इन्दीवरिका दिवं गन्तुकामा। कामदासि। देहि दहन-प्रदक्षिणावकाशम्। विरचिके। विरचय वह्निम्। (२२१) विकिर किरातिके। कुसुमप्रकारम्। कुररिके। कुरु (२२२) कुरुवक-कोरकाञ्चितां चिताम्। चामरं चामरग्राहिणि। गृहाण पुनरपि कण्ठे। (२२३) मर्षयितव्यानि नर्मदे। नर्म-निर्मितानि निर्मर्यादहसितानि। भद्रे। सुभद्रे। भद्रमस्तु ते परलोकगमनम्। (२२४) अग्रामीणगुणानुरागिणि! ग्रामेयिके। गच्छ सुगतिम्। (२२५) वर्मलिके। अन्तरं प्रयच्छ, आपृच्छते छत्रधारी। देवि। देहि दृष्टिम्,

---

(२१९) व्यजनम्—चामरं वीजय—व्यजनवायुना उपवीजय इत्यर्थः।

(२२०) नमति—प्रणमति। दिवं—स्वर्गम्। कामदासि।—कामकिङ्करि। दहनप्रदक्षिणावकाशम्—अग्निप्रदक्षिणीकरणावसरम्, यतो मात्मविसर्जनात् प्राक् अग्निप्रदक्षिणीकरणे मा विघ्नमुत्पादय इति भावः। [ 'विरचिके' इत्यत्र 'विचारके' इति पाठान्तरम् ]। विरचय—प्रज्वालयेति भावः।

(२२१) कुसुमप्रकरं—पुष्पनिचयं विकिर—विक्षिप।

(२२२) चिता—मृतदाहाधारकाष्ठपुञ्ज, कुररिके।—कुरुवकाणां—नीलझिण्टीनां, कोरकैः—कलिकाभिः, आचिताम्—व्याप्ताम्।

(२२३) नर्मनिर्मितानि—परिहासकृतानि, निर्मर्यादहसितानि—अमर्यादा-सूचकानि हास्यानि मर्षयितव्यानि—सोढव्यानि क्षन्तव्यानीत्यर्थः, यथा यत् परिहासार्थं त्वामुद्दिश्य प्राक् उच्चैः हसितं, भवत्या मर्यादातिक्रमेण तत् सोढव्यमिति भावः। भद्र—मङ्गल, मङ्गलकरमित्यर्थः।

(२२४) अग्रामीणेति।—अग्रामीणा,—नागरिका, महार्हा इति यावत्, [ ग्रामे भवा इत्यर्थे ग्रामाद्यखञौ" (४।२।९४ पा०) इति खञ्, पश्चात् नञ्समासः ] तेषां ये गुणाः,—सौम्यदुराराध्यादयः, तेषु अनुरागः,—आसक्तिः विद्यते यस्याः तत्सम्बुद्धौ, ग्रामेयिके।—ग्रामवासिनि। सुगतिं—शोभना गतिं वाञ्छनीयस्वर्गलोकमित्यर्थः।

(२२५) अन्तरम्—अवकाशं, प्रयच्छ—देहि। आपृच्छते—सम्भाषते, [ "आङि नुप्रच्छ्योः" इति वार्त्तिकात् आङ्पूर्वकात् प्रच्छतेरात्मनेपदम् ]।

( २२६ ) दृष्टा तव जहाति जीवितं विजयसेना। सेयं मुक्तिका मुक्ताकण्ठम् आरटति निकटे नाटकसूत्रधारी। पादयोः पतति ते ताम्बूलवाहिनी बहुमता राजपुत्रि। पत्रलता। कलिङ्गसेने! अयं ( २२७ ) पश्चिमः परिष्वङ्गः, पीडय निर्भरम् उरसा माम्। ( २२८ ) असवः प्रवसन्ति वसन्तसेने।। मञ्जुलिके! (२२९) मार्जयसि कतिकृत्वः सुदुःसहदुःखसहस्रासारदिग्धं चक्षुः इदम्? रोदिषि कियत् आश्लिष्य च माम्?। ( २३० ) निर्व्याजम् ईदृशं प्रायशो यशोधने।। ( २३१ ) धीरयसि अद्यापि किं मा माधविके!? का इयम् अवस्था समाश्वासनानाम्?। गतः कालः कालिन्दि! सखीजनानुनयाञ्जलीनाम्। उन्मत्तिके!

---

( २२६ ) दृष्टा—प्रिया। जहाति—त्यजति। नाटकसूत्रधारी—नाटकस्य—अभिनेयकाव्यस्य सूत्रधारी—नटी इत्यर्थः, [ सू॰ नाटकोपसाधनं धारयति या सा इत्यर्थं धारयते कर्तरि अणि रूपम् ] मुक्ताकण्ठम्—उच्चैरित्यर्थः, आरटति—प्रलपति, आक्रन्दतीत्यर्थः। बहुमता—आदृता।

( २२७ ) पश्चिमः,—चरमः, [ पश्चाद्भव इत्यर्थे "अग्रादिपश्चाड्डिमच्" इति वार्त्तिकात् डिमच् ] परिष्वङ्गः,—आलिङ्गनम्। निर्भरं—निर्दयं, गाढमित्यर्थः।

( २२८ ) असवः,—प्राणाः, [ "पुंसि भूम्न्यसवः प्राणाः" इत्यमरवचनात् असूनां नित्य बहुत्वं ज्ञेयम् ] प्रवसन्ति—गच्छन्ति दूरमित्यर्थः।

( २२९ ) सुदुःसहेति।—सुदुःसहैः,—अतिदुःखेनापि सोढुमशक्यैः, दुःखानां सहस्रैः—मनःपीडासमूहैः, यत् अस्रं—विगलितं नेत्राम्बु, तेन दिग्धं—लिप्तं, वाष्पाकुलितमित्यर्थः, कतिकृत्वः—कतिवारान्, [ "सङ्ख्यायाः—" ( ५।४।१७ पा॰ ) इति कृत्वसुच् ] मार्जयसि—शोधयसि, निर्जलीकरोषीत्यर्थः, [ मार्ष्टेः णिचि लटि रूपम् ]। आश्लिष्य—आलिङ्ग्य, कियत्—कियत्कालम्।

( २३० ) निर्व्याज—दृष्टिपरम्परा, ईदृशम्—दुःखबहुलमिति भावः।

( २३१ ) धीरयसि—स्थिरयसि। समाश्वासनानाम्—प्रबोधानां, किमयं कालः प्रबोधदानस्य? इति भावः। गतः,—अतीतः। सखीति।—सखीजनेषु—वयस्यालीकेषु, ये अनुनयाः,—प्रार्थनाः, 'मा कुप्य' 'प्रसीद' इत्यादिरूपा इति भावः, यद्वा—सखीजनानां ये अनुनयाः,—सान्त्वनं, सान्त्वनासूचकवाक्यानीव इत्यर्थः, तत्र अञ्ज

मत्तपालिके! (२३२) कृताः पृष्ठतः प्रणयिनीप्रणिपातानुरोधाः। (२३३) शिथिलय चकोरवति! चरणग्रहणं ग्रहिणि!। कमलिनि! किमनेन पुनः पुनः (२३४) दैवोपालम्भेन? न प्राप्तं चिरं सखीजनसङ्गमसुखम्। आर्ये! मदनरिके! तरङ्गसेने! नमस्कारः। सखि! सौदामनि! दृष्टाऽसि ११ समुपनय (२३५) हव्यवाहनार्चनकुसुमानि कुमुदिके!। देहि चितारोहणाय रोहिणि! हस्तावलम्बनम्। (२३६) अम्ब! धात्रि! धीरा भव, भवन्ति एवंविधा एव कर्मणां विपाकाः

---

लय,—वाद्ययन्त्रीणां तेषाम्, इदानीं मरणाध्यवसाये दृढीभूते नास्ति सखीजनप्रसादनस्य सखीजनानुरोधरक्षणस्य वा समय इति भाव।

(२३२) प्रणयिनीति।—प्रणयिनीनां—स्निग्धवयस्यानां, प्रणिपाते,—विनयैः करणै, ये अनुरोधा,—अनुवर्त्तनानि, 'मा म्रियस्व' 'अस्मान् पालय' इत्याद्युक्त्या विनयप्रदर्शनपूर्वकानुसरणानि याचना वा,पृष्ठतः कृता,—पश्चात् कृता उपेक्षिता इत्यर्थ इदानीं सख्यादीनां सर्वासामेव ममतादिकं परित्यज्य मरणायैव इढमहमुद्यताऽस्मि इति भाव।

(२३३) शिथिलय—मन्दीभूतं कुरु, मा कुरु इति यावत्। ग्रहिणि।—आग्रहवति।।

(२३४) दैवोपालम्भेन—नियतितिरस्कारेण। नेति।—सखीजनसङ्गमसुखं—सहचरीसहवासानन्द, चिरं—यावज्जीवमित्यर्थ, न प्राप्त, केनापि कारणेनापि वा इति शेष, अत दैवोपालम्भेनालमिति भाव। मदनरिके।—मदनाख्ये!। सौदामनि!—भो सौदामनीनामधेये! सखीविशेषसम्बोधनमेतत, [सुदामा पर्वतभेद तेनैकादिगित्यर्थे "तेनैकदिक" (४।३।११२ पा०) इति अण, स्फटिकमयस्य सुदाम्न पर्वतविशेषस्य एकस्मिन् भागे जातत्वात् विद्युत इयं सदृशीति ज्ञेयम्। "सौदामिनि!" इति पाठस्तु प्रामादिक एव, "सुदाम्ना अद्रिणा एकदिक् सौदामनी" इति दीक्षितवचनात्, काशिकाकारा अप्येवमाहु] दृष्टा?—अवलोकिता? मयेति शेष, त्वा कि ... सौजन्यमिति भाव।

(२३५) हव्यवाहनार्चनकुसुमानि—अग्निपूजार्थपुष्पाणि। हस्तावलम्बनं—कराश्रयं, तव प्रसारितं हस्तं धृत्वाऽहं चिताम् अधिरोहामि इति भाव।

(२३६) अम्ब!—मात!। धात्रि!—उपमात!। विपाका,—परिणामा।

पापकारिणीनाम्। (२३७) आर्य्यचरणानाम् अयमञ्जलिः। परः परलोकप्रयाणप्रणामोऽयं मातः!। मरणसमये कस्मात् लवङ्गिके! (२३८) कलकलको बलीयान् आनन्दमयो हृदयस्य मे?। (२३९) हृष्यन्ति उच्चरोमाञ्चमुञ्चि किम् अङ्गीकृत्य अङ्गानि?। वामनिके। वामेन मे (२४०) स्फुरितम् अक्ष्णा। वृथा विरससि वयस्य! वायस! हवे क्षीरिणि स्वणे स्वणे क्षीणपुण्यायाः पुरः। चरिणि। हेषितमिव हयानाम् उत्तरतः?। कस्य इदम् (२४१) आतपत्रम् उच्चम् अत्र पादपान्तरेण प्रभावति? विभाव्यते?। कुरङ्गिके। केन सुगृहीतनाम्नो नाम गृहीतम् अमृतमयम् आर्य्यस्य?। देवि। दिष्ट्या वर्द्धसे देवस्य हर्षस्य आगमनमहोत्सवेन।

---

(२३७) आर्य्यचरणानाम्—आर्य्यस्य—ज्येष्ठस्य भ्रातुः हर्षस्य, चरणानां—पादानाम् अयमञ्जलिः,—अयं प्रणाम इति यावत्। परः,—पश्चिमः, चरमः।—परलोके—लोकान्तरे, प्रयाणाय—प्रस्थानाय, प्रणामः—नतिः।

(२३८) कलकलकः,—उत्कण्ठा।

(२३९) उच्चरोमाञ्चमुञ्चि—उच्चाः,—प्रबलाः, रोमाञ्चाः,—रोमोद्गमाः, तान्) मुञ्चन्ति—प्रकटयन्तीति तथोक्तानि [मुञ्चते कर्त्तरि क्विपि रूपम्]। किम् अङ्गीकृत्य—अवलम्ब्य, किमानन्दकारणमधिकृत्येति यावत्, हृष्यन्ति—पुलकितानि भवन्ति।

(२४०) अक्ष्णा—नेत्रेण, स्फुरितं—स्पन्दितं, मङ्गलसूचकमेतदिति भावः। विरससि—रौषि। ["वाशसि" इत्यत्र 'विरससि' इति पाठे—विशब्दस्यौचित्यं]। वयस्य!—सखे! वायस!—काक! उपे क्षीरिणि—वटाश्वत्थादिक्षीरप्रधाने वनस्पती, यदुक्तं,—"न्यग्रोधोडुम्बराश्वत्थपारीषप्लक्षपादपाः। पञ्चैते क्षीरिणो वृक्षास्तेषां त्वक् पञ्चवल्कलम्॥" इति। पुरः,—अग्रतः। उत्तरतः,—उत्तरस्यां दिशि, हयानाम्—अश्वानां, हर्षविन्यर्थं [कर्त्तरि षष्ठी वैकल्पिकी] हेषितमिव—ह्रेषितमिव, ["ह्रेष् हेष् क्रेष् अव्यक्तशब्दे" इति हेषते भावे निष्ठा]।

(२४१) आतपत्रं—छत्रं, पादपान्तरेण—वृक्षान्तरालेन, विभाव्यते—लक्ष्यते। सुगृहीतनाम्नः,—प्रातःस्मरणीयनाम्नः। अमृतमयम्—पीयूषात्मकं, श्रवणमङ्गलप्रदमिति भावः। दिष्ट्या—भाग्येन।

इत्येतच्च श्रुत्वा सत्वरम् (२४२) उपससर्प, ददर्श च मुह्यन्तीम् अग्निप्रवेशाय उद्यता राजा राज्यश्रियम्, (२४३) आललम्बे च मूर्च्छामीलितलोचनाया ललाटं हस्तेन तस्याः ससम्भ्रमम्।

अथ (२४४) तेन भ्रातुः प्रेयसः प्रकोष्ठबद्धानाम् ओषधीनां रसविसरमिव प्रत्युज्जीवनक्षमं क्षरता, वमता इव पारिहार्य्यमणीनाम् अचिन्त्यं प्रभावम्, अमृतमिव नखचन्द्ररश्मिभिः उद्गिरता, (२४५) बध्नतेव चन्द्रोदयच्युतशिशिरशीकरं चन्द्रकान्तचूडामणिं मूर्द्धनि, मृणालमयाङ्गुलिना इव अतिशीतलेन निर्वापयता

---

(२४२) उपससर्प—समीपमाजगाम। मुह्यन्ती—मोहमुपागता, भ्रातृ-रागमनश्रवणोद्वेलितदुःखभारेण इति भावः।

(२४३) आललम्बे—जग्राह। मूर्च्छेति।—मूर्च्छया—मोहेन, भ्रातृदर्शन-जनितद्विगुणोच्छलितशोकाऽऽवेगेन इति भावः, उक्तञ्च—"स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते" इति कुमारसम्भवे कालिदासेन, मीलिते—मुद्रिते, लोचने—नयने यस्याः तथाभूतायाः। ससम्भ्रमं—सत्वरम्।

(२४४) तेन—पूर्वोक्तेन, हस्तस्पर्शेनेत्यर्थेन सम्बन्धः। प्रेयसः,—अतिप्रियस्य, [प्रियशब्दादीयसुनि "प्रियस्थिर—" (६।४।१५७ पा०) इत्यादिना प्रादेशः] भ्रातुः—हर्षस्य प्रकोष्ठबद्धानां—कूर्परमणिबन्धान्तरनिवेशितानाम् ओषधीनां—लताविशेषाणां, प्रत्युज्जीवनक्षमं—प्राणप्रदानसमर्थमित्यर्थः रसविसरमिव—द्रवौघमिव, क्षरता—स्रवता। पारिहार्य्यमणीनां—कटकरत्नानाम् ("आवापकः पारिहार्यः कटको वलयोऽस्त्रियाम्" इत्यमरः) अचिन्त्यम्—अतर्क्यं, प्रभावं—माहात्म्यं, वमता—उद्गिरता।

(२४५) चन्द्रोदयच्युतशिशिरशीकरं—चन्द्रस्य—इन्दोः, उदयात्—प्रकाशात्, च्युतः,—गलितः, शिशिरः—तुषाराम्भः, शीकरः—कणः यस्मात् तं, चन्द्रकान्त-चूडामणिं—चन्द्रकान्तमणिनिर्मितमुकुटरत्नं, मूर्द्धनि, बध्नतेव—विदधतेव, सङ्घटयतेव इत्यर्थः। मृणालेति।—मृणालमयाङ्गुलिना—बिसघटितकरशाखया, मृणालवदतीव शैत्यप्रदया अङ्गुल्या इत्यर्थः, यद्यपि अङ्गुलिशब्दस्य स्त्रीत्वं कोषेषु दृश्यते, तथाऽप्यत्र पुंसि प्रयुक्तम्, अत एवाह वाचस्पत्य—पुंस्त्वमपि, "सङ्गताधरोष्ठमङ्गुलिना—" इति शाकुन्तले" इति। निर्वापयता—प्रशमयता

दह्यमानं हृदयं, (२४६) प्रत्यानयता इव कुतोऽपि जीवितम्, आह्लादकेन हस्तसंस्पर्शेन सहसैव समुन्मिमील राज्यश्रीः। तथा च (२४७) असम्भावितागमनस्य अचिन्तितदर्शनस्य सहसा प्राप्तस्य भ्रातुः स्वप्नदृष्टदर्शनस्य इव कण्ठे समाश्लिष्य तत्कालाविर्भावनिर्भरेण अभिभूतसर्वात्मना दुःखसम्भारेण निर्दयं नदीमुखप्रणालीभ्यामिव मुक्ताभ्यां स्थूलप्रवाहम् उत्सृजन्ती वाष्पवारि विलोचनाभ्यां,—"हा तात! हा अम्ब! हा सख्यः!" इति व्याहरन्ती मुहुर्मुहुः,

(२४६) प्रत्यानयतेव—प्रत्यावर्तयतेव। कुतोऽपि—कस्मादपि, अविज्ञातदेशादिति यावत्। समुन्मिमील—नेत्रोन्मीलनं चकारेत्यर्थः।

(२४७) असम्भावितागमनस्य—असम्भावितम्—अप्रत्याशितम्, अतर्कितमित्यर्थः, आगमनम्—उपस्थितिः यस्य तथाभूतस्य, अचिन्तितदर्शनस्य—अचिन्तितं—प्राक् मनसाऽपि अनालोचितं दर्शनम्—अवलोकनं यस्य तादृशस्य। स्वप्नेति।—स्वप्ने—निद्राऽवस्थायां, दृष्टम्—अनुभूतमित्यर्थः, दर्शनं—साक्षात्कारः यस्य तथाभूतस्य। समाश्लिष्य—समालिङ्ग्य, आसज्येत्यर्थः। तत्कालेति।—स एव कालः,—समयः तस्मिन्, आत्मसाक्षात्कारसमये इत्यर्थः, आविर्भावेन—उदयेन, निर्भरः,—अतिशयितः प्रगाढ इत्यर्थः तेन, निर्दयं—दृढं यथा तथा, अभिभूतसर्वात्मना—सर्वाङ्गाभिभाविनेत्यर्थः, दुःखसम्भारेण—शोकातिरेकेण, यद्वा,—निर्दयं—प्रगाढम्, अविश्रमितमित्यर्थः, तद्यथा तथा उत्सृजन्ती इत्यनेन सम्बन्धः, मुक्ताभ्याम्—उद्घाटिताभ्याम्, नदीति।—नद्याः,—सरितः, मुखस्य—प्रभवस्थानस्य इत्यर्थः, ये प्रणाल्यौ—पयःपदव्यौ ताभ्याम्, ("द्वयोः प्रणाली पयसः पदव्याम्" इत्यमरः) स्थूलप्रवाहं—स्थूलः,—पृथुः, महानित्यर्थः, प्रवाहः,—प्रवृत्तिः, निर्गमनमित्यर्थः यस्य तथाभूतं, वाष्पवारि—अश्रु, "बाष्प ऊष्मणि नाऽस्रे" इति मेदिनीकरोक्तेः बाष्पशब्देनैव नेत्रसलिलार्थबोधात् वारिशब्दस्याधिक्यात् तथा कथितपदताऽऽख्यदोषग्रस्तमिदमिति विभाव्यते, तथाऽपि श्रवणकुण्डलादिशब्देषु श्रवणादीनामिव सन्निधेः प्रतिपत्त्यर्थमेव तदुपन्यास इति ज्ञेयं, तथा हि वामनः,—"कर्णावतंसश्रवणकुण्डलशिरःशिखरेषु कर्णादिनिर्देशः सन्निधेः" इति (२ अधि० १ अध्या० १४ सू०) व्याहरन्ती—कथयन्ती, विलपन्तीत्यर्थः।

(२४८) उच्चैस्तराञ्च समुद्भूतभगिनीस्नेहसद्भावभारभावितमन्युना मुक्तकण्ठम् अतिचिरं विक्रुश्य,—"वत्से ! स्थिरा भव त्वम्" इति भ्राता (२४९) करस्थितमुखी समाश्वास्यमानाऽपि,(२५०) "कल्याणिनि ! कुरु वचनम् अग्रजस्य गुरोः" इति आचार्येण याच्यमानाऽपि, "देवि ! न पश्यसि देवस्य अवस्थाम् ? अलमतिरुदितेन" इति राजलोकेन अभ्यर्थ्यमानाऽपि, "स्वामिनि ! भ्रातरम् अवेक्षस्व" इति परिजनेन विज्ञाप्यमानाऽपि, (२५१) "दुहितः ! विश्रम्य पुनः आरटितव्यम्" इति निवार्यमाणाऽपि बान्धववृद्धाभिः, "प्रियसखि ! (२५२) कियद्रोदिषि ? तूष्णीमास्स्व, इदं दूयते

---

(२४८) उच्चैस्तराम्—अतिशयेन इत्यर्थः, ["किमेत्तिङव्यय—" (५।४।११ पा०) इति तरप आमु] समुद्भूतेति।—समुद्भूतेन—समुत्पन्नेन, आविर्भूतेनेत्यर्थः, भगिन्याः—सहोदरायाः च स्नेहसद्भावः—प्रीतिभावः, तस्य भारेण—भरेण, आधिक्येनेत्यर्थः, भावितः,—जनितः मन्युः—शोको यस्य तथाभूतेन, भ्राता इत्यनेनान्वयः, समुद्भूत मन्युना हेतुना इत्यर्थो वा, मुक्तकण्ठम्—उच्चैरित्यर्थः । विक्रुश्य—विलप्य ।

(२४९) करेति।—करे—हस्ते, भ्रातुरिति शेषः, स्थित—रक्षितम्, मुखम्—वदनं यस्याः तथाभूता ["करस्थितमुखी" इत्यत्र "करस्थगितमुखी" इति पाठे—करात्—पाणिभ्याम् स्थगितम्—आच्छादितम्, भ्राता इति शेषः, क्रन्दननिवारणार्थमिति भावः, मुखम्—वदनं यस्याः तथाभूता] समाश्वास्यमानाऽपि—प्रबोध्यमानाऽपि सान्त्व्यमानाऽपीत्यर्थः ।

(२५०) कल्याणिनि।—मङ्गलाङ्गि ! भावदर्शनात् प्राप्तशुभफले ! इत्यर्थः, कुरु वचनम्—वाक्यं प्रतिपालयेत्यर्थः । आचार्येण—दिवाकरमित्रेण। अलम्—निषेधार्थकमव्ययम्, अतिरोदनं मा कुरु इत्यर्थः । राजलोकेन—सामन्तनृपसमूहेनेत्यर्थः, अभ्यर्थ्यमाना—प्रार्थ्यमाना । अवेक्षस्व—पश्य । परिजनेन—अनुजीविजनेन।

(२५१) दुहितः !—वत्से ! आरटितव्यम्—रोदितव्यमिति भावः । बान्धववृद्धाभिः,—बान्धवेषु—स्वजनेषु, या वृद्धाः,—वर्षीयस्यः ताभिः ।

(२५२) कियत्—कियत्कालमित्यर्थः । तूष्णीम्—मौनम्, आस्स्व—उपविश, मौनावलम्बनं कुरु इत्यर्थः, मा रुदिहि इति यावत्। इदम्—वपुः, दूयते—सन्तापमनुभवति।

देवः" इति सखीभिः अनुनीयमानाऽपि, (२५३) चिरसम्भावितानेकदुःसहदुःखनिवहनिर्वहणबाष्पोत्पीडपीड्यमानकण्ठभागा, (२५४) प्रभूतमन्युभारभरितान्तःकरणा, करुणकाहलेन स्वरेण कतिचित्कालम् अतिदीर्घं रुरोद। विगते च मन्युवेगे वक्त्रं समीपात् आक्षिप्य भ्राता नीता निकटवर्त्तिनि तरुतले निषसाद।

(२५५) शनैः आचार्य्यस्तु तथा हर्षं इति विज्ञाय विवर्द्धितादरः सुतरां मुहूर्त्तमिव अतिवाह्य (२५६) निभृतसंज्ञाज्ञापितेन शिष्येण उपनीतं नलिनीदलैः स्वयम् आदाय मन्त्री

---

(२५३) चिरेति।—चिर—दीर्घकालं व्याप्येति भावः, सम्भावितानि,—अनुभूतानि इत्यर्थः यानि अनेकानि—बहूनि दुःसहानि—दुर्वहानि, दुःखानि—क्लेशाः, तेषां निवहः,—समूहः तस्य निर्वहणं—निर्वाहः परिसमाप्तिरित्यर्थः, सुचिरोपभुक्तानां दुःसहानां शोकसमुदयानां परिणाम इति यावत्, तेन यो बाष्पोत्पीडः,—बाष्पाणां—नेत्रोदकानाम् उत्पीडः—प्रवाहः तेन पीड्यमानः,—रुध्यमानः, कण्ठभागः,—गलप्रदेशः यस्याः सा तथाभूता।

(२५४) प्रभूतेति।—प्रभूतेन—प्रचुरेण, मन्युभारेण—शोकभरेण, भरितम्—आपूरितम्, अन्तःकरणं—चेतः यस्याः तथोक्ता, करुणकाहलेन—करुणेन—सकरुणेन काहलः,—भृशः, अतिमात्र इत्यर्थः, पूर्ण इति यावत् तेन सकरुणरसपूर्णेन, सकरुणरसोद्दीपकेनेत्यर्थो वा, ("काहलश्चरवाद्युषे। अव्यक्तवाचेऽपि खलिद्रूतिमत् शुष्के भृशे स्मृतम्॥" इति मेदिनी) अतिदीर्घम्—सुदीर्घकालं, ["अतिदीर्घम्" इत्यत्र "अतिचिरम्" इति पाठान्तरम्]। मन्युवेगे—शोकप्रसरे। आक्षिप्य—आकृष्य। निषसाद—उपविवेश, ["सदिरप्रतेः" (८।३।६६ पा०) इति षत्वम्]।

(२५५) शनैः—मन्दम्, अत्वरतया इत्यर्थः, [उपविवेश इति क्रियाया विशेषणमिदम्]। आचार्य्यः,—दिवाकरमित्रः, तथा—तादृशः, सत्यासीदिति भावः, यदा—तथा—तेन व्यापारेणेत्यर्थः भ्रातृमृत्युघटनयेति यावत्। विवर्द्धितादरः,—वि—विशेषेण, वर्द्धितः,—वृद्धिं गतः आदरः—बहुमानं यस्य तथाभूतः। अतिवाह्य—यापयित्वा।

(२५६) निभृतेति।—निभृतया—निःशब्दया, संज्ञया—इङ्गितेन, ज्ञापितः,—आदिष्ट इत्यर्थः तेन। नलिनीदलैः,—पद्मिनीपत्रैः।

सुखप्रक्षालनाय उदकम् (२५७) उपनिन्ये। नरेन्द्रोऽपि सादरं गृहीत्वा प्रथमम् (२५८) अनवरतरोदनाताम्रं चिरप्रवृत्ताश्रुजलजालं रक्तपङ्कजमिव सशुचक्षुः अक्षालयत्, पश्चात् आननं। (२५९) प्रक्षालितमुखशशिनि च महीपाले सर्वतो निःशब्दं स्तब्धभूतं सकलो लिखित इव लोकः। ततो नरेन्द्रो मन्दमन्दम् अब्रवीत् ससारं,—"वत्से। वत्स्य स्मर भवतः भद्रन्तम्। एष ते भर्तुर्हृदयं द्वितीयम्, अस्याकथ्यं गुरु" इति। राजवचनात् (२६०) राजदुहितरि प्रतिपरिचयश्रवणोद्गतेन पुनः आनीतनेत्राम्भसि नमस्याम् आचार्य्यः

(२५७) उपनिन्ये—उपनतवान् ढौकितवान् इत्यर्थः।

(२५८) अनवरतेति।—अनवरतेन—अश्रान्तेन रोदनेन—क्रन्दनेन आताम्रम्—आरक्तं चिरमिति।—चिरं—दीर्घकालं व्याप्य प्रवृत्तं—प्रसृतम्, अश्रुजलजालं—वाष्पसमूहः यस्मात् तथाभूतम्, अत्र चक्षुःशब्देनैव नेत्रसन्निधिरूपार्थस्य बोधात् जलशब्दस्य पुनरुक्ततया कथितपदताऽऽख्यदोषः, वामनस्तु एकार्थपदघटितवाक्यस्य एकार्थत्वदोषं भणितवान्, एवञ्च तन्मते यथा कर्णावतंसादिशब्दानां श्रीकुञ्जरकुम्भादिशब्दानाञ्च बोधाददोषत्वं तथा अत्रापि सद्यःपतिताश्रुमयजलप्रवाहरूपविशेषार्थस्य पर्यवसानाददोषः, तथा च वामनः,—"कर्णावतंसादिपदे कर्णादिध्वनिनिर्मितिः सन्निधानादिबोधार्थम्" इति (२ अधि० १ अध्या० १० सू०) सशु—अश्रुयुक्ता चक्षुः—नयनम् अक्षालयत—अधावयत्। आननं—मुखं, चक्षुः इति सम्बन्धः।

(२५९) प्रक्षालितेति।—प्रक्षालितः—धौतः मुखशशी—आननेन्दुः येन तथोक्ते। सर्वतः,—समन्तात्। लिखित इव—चित्रार्पित इव। ससारं—भावपूर्णम्। मन्दम्—अभिनिवेशेन, शनैः, प्रथमं स्थैर्यं वा। अप्रभवता—पूज्यतमेन। भर्त्तुः,—पत्युः, द्वितीयं हृदयम्—अपरं शरीरम्, अत्यन्तप्रियमित्यर्थः।

(२६०) प्रतीति।—पत्युः,—प्रियस्य परिचयः,—संस्तवः, तदीयवार्त्तेत्यर्थः तस्य श्रवणोद्गतः—आकर्णनसञ्जातः तेन पुनः,—भूयः आनीतेति।—आनीतम्—उपाहृतं, नेत्रयोः—चक्षुषोः अम्भः—सलिलं यस्याः तथाभूतायाः भर्त्तुर्हृदयेन सम्बन्धत्वाऽऽकथनेन पुनराप्यायमानेनायामित्यर्थः, राजदुहितरि—राजकन्यायाम्, कादम्बर्यामिति यावत्। नमस्याम्—प्रणतिं कुर्वत्याम्।

(२६१) प्रयत्नरचितागतवाष्पाम्बुसम्भारभज्यमानधैर्य्यार्द्रलोचनः (२६२) किञ्चित्पराहृत्तनयनो दीर्घं निशश्वास। स्थित्वा च क्षणमेकं प्रदर्शितप्रश्रयो मृदुवादी मधुरया वाचा व्याजहार,—"कल्याणराशे! अलं रुदित्वा अतिचिरं, राजलोको न अद्यापि रोदनात् निवर्त्तते। क्रियताम् अवश्यकरणीयः स्नानविधिः, स्नात्वा च गम्यतां (२६३) तामेव भूयो भुवम्"।

अथ भूपतिः (२६४) अनुवर्त्तमानो लौकिकमाचारम् आचार्य्यवचनञ्च, उत्थाय स्नात्वा (२६५) गिरिसरिति, सह स्वसा तामेव भूमिम् अयासीत्। (२६६) तस्याञ्च सपरिजनां प्रथमम् आहृतावधानः पार्श्ववर्त्ती परवर्त्ती भूत्वा (२६७) पलितपिण्डप्रदर्शितप्रश्रयप्रतिपन्नाभ्यवहारकरणां भगिनीम् अभोज-

(२६१) प्रयत्नेति।—प्रयत्नेन—प्रकृष्टचेष्टया, रचितानि अपि—निरोधितान्यपि, आगतानि—उपस्थितानि यानि वाष्पाम्बूनि—नयनजलानि, तेषां सम्भारेण—निवहेन, भज्यमानं—क्षोभ्यमाणं, व्यपगतप्रायमित्यर्थः, यत् धैर्य्यं—धीरत्वं तेन आर्द्रे—सिक्ते लोचने—नेत्रे यस्य तथाभूतः। अत्रापि वाष्पाम्बु पदं पूर्व्ववत् कथितपदताऽप्यदुष्टमिति बोध्यम्।

(२६२) किञ्चित्पराहृत्तनयनः,—सावीहृतचक्षुः। प्रदर्शितप्रश्रयः,—प्रकटितविनयः। मृदुवादी—मधुरभाषी, कोमलस्वराभिधायी इत्यर्थः। कल्याणराशे।—मङ्गलमयीभाजनम। अतिचिरं—सुदीर्घकालम्, अलं रुदित्वा—रोदनेनालं, क्रन्दनं मा कुरु इत्यर्थः।

(२६३) तामेव—पूर्व्वाधिष्ठानभूतां, यत्र आगतोऽसि तामित्यर्थः, भुवं—स्थानं, भूयः,—पुनरपि।

(२६४) अनुवर्त्तमानः,—अनुसरन्, पालयन्श्च।

(२६५) गिरिसरिति—पर्व्वतीयनद्याम्।

(२६६) तस्याञ्च—भूमौ इत्यर्थं, आहृतावधानः,—कृताभिनिवेशः, सर्व्वं पर्य्यवेक्षकः इत्यर्थः, सपरिजनां—सपरिवारां, सानुजीविनीकामित्यर्थः, भूत्वा परवर्त्ती—प्रीतिकपरवशामित्यर्थं।

(२६७) पलितः।—पक्वः,—पक्ववर्णः, पिण्डः,—कवलो इव, गोलाकारः

यत्; अनन्तरञ्च स्वयम् आहारस्थितिम् अकरोत्। भुक्तवाञ्च बन्धनात्प्रभृति विस्तरतः स्वसुः कान्यकुब्जात् (२६८) गौड-सम्भ्रम, (२६९) गुप्तितो गुप्तनाम्ना कुलपुत्रेण निष्कासनं, निर्गतायाश्च राज्यवर्द्धनमरणश्रवणं, श्रुत्वा च आहारनिराकरणम्, अनाहारपराहतायाश्च विन्ध्याटवीपर्य्यटनखेदं, (२७०) जातनिर्वेदाया, पावकप्रवेशोपक्रमणं यावत् सर्व्व-मशृणोत् (२७१) व्यतिकरं परिजनतः। ततः सुखासीनम् एकत्र तरुतले विविक्तभुवि भगिनीद्वितीयं दूरस्थितानुजीविजन

---

अनसहात इत्यर्थः तस्मिन् प्रदर्शितेन—बोधितेन, यत् पितृ दातव्य जीवितया पत्या तत्र जीवनम् आहारं विना न रक्षितुं शक्यते, तत्पिण्डमदत्त्वा आत्मघाति महान् धर्म्मे आपन्नस्य नरकवासस्य इत्येवरूपस्य पथ्यावलोकितमिति यावत प्रयत्नेन—प्रज्ञानु-रोधेन हेतुनेत्यथ, प्रतिपन्न—स्वीकृतम्, अभ्यवहारकरण—भोजनव्यापार यथा तथा विधा, भर्त्तरि बहुमानात् तत्पिण्डदानार्थमेव अभ्यवहारक्रिया कृता न तु सा तदा स्वजीवने स्पृहावती आसीत इति तात्पर्य्यम्। आहारस्थितिम—आहाराय - भोज-नाय, स्थितिम्—च स्थाम्, उपवेशनमित्यर्थः ("स्थादास्या स्थासना स्थिति" इत्यमर) यद्वा,—आहारेण स्थितिम्—अवस्थानम आत्मजीवनरक्षणमित्यर्थः, ("स्थिति स्त्रियामवस्थाने मर्य्यादायाञ्च सीमनि" इत्यमर)।

(२६८) गौडसम्भ्रम—गौडाधिपात् भयम्।

(२६९) गुप्तित,—कारागारात कारायाः बन्धनात इत्यर्थः ("गुप्ति व्यवकरस्थाने कारागारे च रक्षणे" इति मेदिनी)। कुलपुत्रेण—सत्कुलप्रसूतेन, निष्कासन—बहिष्करणम्, उद्धरणमित्यर्थ। आहारनिराकरण—भोजनपरित्यागम। अनाहारपराहतायाः,—उपवासपीडिताया।

(२७०) जातनिर्वेदाया,—उत्पन्नवैराग्यायाः, पावकप्रवेशोपक्रमणम्—वह्नि-प्रवेशप्रक्रमम्।

(२७१) व्यतिकर—वृत्तान्त, व्यसन वा, ("अथ व्यतिकरः पुंसि व्यसनव्यति-षङ्गयो" इति मेदिनी)। परिजनत —परिजनसकाशात। विविक्तभुवि—विजनप्रदेशे। भगिनीद्वितीय—भगिनी—सहोदरा एव, द्वितीया—द्वितीयसहचरी यस्य त, केवल भगिन्या सहावस्थितमित्यर्थ। दूरेति।—दूरे—विप्रकृष्टस्थाने,

राजानम् आचार्यः समुपसृत्य शनैः आससाद; स्थित्वा च कञ्चित् कालार्धं (२७२) स्तिमितो वक्तुमुपचक्रमे,—

"धीमन्! आकर्ण्यताम्, (२७३) आख्येयमस्ति नः किञ्चित्—अयं हि यौवनोन्मादात् परिभूय भूयसीमार्य्यां यौवनावस्थान्तरलतरः (२७४) ताराराजो रजनीकर्णपूरः पुरुहूतपुरोधसो विबुधस्य (२७५) पुरन्ध्रीं धर्मपत्नीं पत्नीयन् अतितरलः तारां नाम अपजहार; नाकलय्य पलायाञ्चक्रे। (२७६) चकितचकोरलोचनया तया सह अतिकामया सर्वाकाराभिरामया रममाणो रमणीयेषु देशेषु चचार।

---

स्थित्वा,—अवस्थाय, अनुजीविजना,—परिजना इत्यर्थ यस्य तम्। आचार्य,—दिवाकरमित्र। आससाद—उपविवेश।

(२७२) स्तिमित,—निश्चल। उपचक्रमे—आरेभे। ["प्रोपाभ्यां समर्थाभ्याम्" (१।३।४२ पा०) इति आत्मनेपदम्]।

(२७३) आख्येय—वक्तव्यम्। यौवनोन्मादात्—तारुण्यजनितबुद्धिवैपरीत्याद्धेतोः, यौवनेति।—यौवनस्य—तारुण्यस्य, अवस्थान्तरे—दशायाम्, तरलतरः,—अतिशयेन स्फुरन्तो, उद्दामयौवनाविर्भावावस्था इत्यर्थः, भूयसी,—महती, सहधर्मिणीम् च मुख्यादिदमद्वितीयामिव भार्य्यां परिभूय—अवधीर्य्य अनादृत्येत्यर्थः।

(२७४) रजनीकर्णपूर,—निशाकर्णभूषणभूत, ताराराज,—चन्द्र, पुरुहूतपुरोधस,—इन्द्रपुरोहितस्य, विबुधस्य—बृहस्पते, ("बृहस्पति सुराचार्यो गीष्पतिर्धिषणो गुरु" इत्यमर)।

(२७५) पुरन्ध्री—गृहिणीम्। पत्नीयन्—पत्नीमिव आचरन्, ["उपमानादाचारे" (३।१।१० पा०) इति क्यच्]। अतितरल,—अतिचञ्चल, कटकामुक इतीति। अपजहार—मुमोष, तत्र व्यभिचारमकरोदित्यर्थ। आकलय्य,—गृहीत्वा।

(२७६) चकितेति।—चकित,—भीत यच्चकोर—पक्षिविशेष, तद्वत् लोचने—नयने यस्या तथाभूतया, चकितचकोरलोचनया, चकोरलोचनीलोचनया इत्यर्थ, अतिकामया—अतिकामुकया। सर्वेति।—सर्वेण—सकलेन, आकारेण—आकृत्या, वपुषेत्यर्थ ("आकारस्त्विङ्गिताकृती" इत्यमर) अभिरामया—मनोरमया तथा, रमणीयेषु देशेषु इत्यर्थ, तया—तारया, रममाण,—विहरन्।

(२७७) चिराच्च कथञ्चित् सर्व्वगीर्व्वाणवाणीगौरवात् गिरां पत्यु पुनरपि प्रत्यर्पयामास ताम् । हृदये तु (२७८) घनिष्ठ-नम् अदह्यत विरहात् वरारोहाया तस्या सततम् ।

एकदा तु (२७९) शैलात् उदयात् उदयमानो विमले धारिणि वरुणालयस्य (२८०) सङ्क्रान्तमात्मन प्रतिविम्ब विलोकितवान् । दृष्ट्वा च तदा सस्मार (२८१) सस्मर-स्मेरगण्डस्थलस्य ताराया मुखस्य, (२८२) मुमोह च मन्मथो-न्माथमथ्यमानमानस (२८३) स्वस्थोऽपि अस्वस्थ स्वीयस

(२७७) चिरात्—दीर्घकालात् परमित्यर्थ सवति ।—सर्वेषां—सकलानां गीर्वाणाना—देवानाम ("अमरा निर्जरा देवा । गीर्वाणा दानवारय ।" इत्यमर) वाणी —वचनस्य गौरवात्—सम्मानात् देववाक्याना सम्मानरक्षार्थमित्यर्थ कथञ्चित —अतिकष्टेन आगच्छन्तीमपि भाव । गिरां पत्यु —बृहस्पते ["षष्ठी शेषे" (२।३।५० पा०) इति षष्ठी ] ता—ताराम् ।

(२७८) घनिष्ठनम—दृढम—गाढ यथा स्यात् तथा दाहविनिमज्जनादित्यर्थ अदह्यत—सन्तप्यत स इति शेष, यद्वा —अदह्यत—अज्वल्यत विरहानल इति शेष । वरारोहाया —वर —श्रेष्ठ सुन्दर इत्यर्थ आरोह —श्रोणिभाग यस्या तस्या उत्तमाङ्गनाया इत्यर्थ ("श्रोणिमण्डलारोहो वरारोहा" इति "वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी" इत्युभयत्राप्यमर ) तस्या —तारायाः ।

(२७९) उदयात् शैलात्—उदयाचलात् उदयमान —उद्गच्छन् [ कम्पूर्व इति मीमांसादर्शने "अयन" इत्यस्य चाता रूपमेतत् ] । वरुणालयस्य—समुद्रस्य ।

(२८०) सङ्क्रान्त—प्रतिफलितम । प्रतिबिम्ब प्रतिकृतिम ।

(२८१) सस्मर —सकाम कामार्त्त इत्यर्थ । स्मेरगण्डस्थलस्य—विकसित कपोलतलस्य ईषद्धास्यफुल्लकपोलद्वयस्य वा । [ मुखस्य इत्यत्र "अधीगर्थ—" (२।३।५२ पा० ) इति कर्मणि षष्ठी ] ।

(२८२) मुमोह —विवश इत्यर्थ । मन्मथेति ।—मन्मथस्य—कामस्य उन्माथेन —उत्पीडनेन [ "मन्मथोन्माथ—" इत्यत्र "मन्मथोन्माद—" इति पाठे —मन्मथेन कृत [illegible] उन्माद —उन्मत्तता, चित्तचाञ्चल्यमिति यावत तेन ] मथ्यमान—विलोड्यमान मानस —हृदय यस्य तथाभूत ।

(२८३) स्वस्थ —प्रकृतिस्थोऽपि, अस्वस्थ —अप्रकृतिस्थ इति विरोध,

पीतसकलकुमुदवनप्रभाप्रवाहधवलताराभ्यामिव लोचनाभ्यां वाष्पवारिबिन्दून्। अथ पततः (२८४) तान् उदन्वति समस्तान् एव आचेमुः मुक्ताशुक्तयः। (२८५) ताभिश्च कुक्षिकोषेषु मुक्ताफलीभूतान् अवाप तान् कथमपि रसातलनिवासी वासुकिर्नाम (२८६) विषमुचाम् ईशः। स च तैः मुक्ताफलैः पातालतलेऽपि तारागणमिव दर्शयद्भिः (२८७) एकावलीम् अकल्पयत्; चकार च मन्दाकिनीति नाम तस्याः। (२८८) सा च भगवतः सोमस्य सर्वासाम् ओषधीनाम् अधिपतेः प्रभावात् अत्यन्तविषघ्नी, हिमामृतसम्भवत्वाच्च

---

स्वस्थ,—स्वर्गस्थ इति तत्परिहारात् विरोधाभासोऽलङ्कारः। [स्व,—परलोके स्वर्गे इति च स्वः, तिष्ठति इत्यर्थे स्वरित्यव्ययपदपूर्वकात् ष्ठाधातोः कप्रत्यये "खर्परे शरि वा विसर्गलोपो वक्तव्य" (वा०) इति विसर्गलोपः] अनवस्थताकारणभूतेन दुःखसन्तापादिना विरहिते स्वर्गे स्थितोऽपीत्यभिप्रायः। स्थवीयस,—अतिस्थूलान्, ["स्थूलदूर—" (६।४।१५६ पा०) इति ईयसुनि स्थूलस्य स्थवादेशः]। पीतेति।—पीत—दृष्टमित्यर्थः, यत् सकल—समग्र, कुमुदवन—कैरवारण्य सितोत्पलसमूह इत्यर्थः, तस्य प्रभाप्रवाह,—कान्तिसमूहः, तेन धवला—शुभ्रा, विरहपाण्डुरा इति भाव तारा—कनीनिका ययोस्ताभ्याम्। वाष्पवारिबिन्दून्—अश्रुकणान्, अत्रापि पूर्ववत् वाष्पपदेनैव गतार्थतया वारिशब्दस्य पुनरुक्तिः कथितपदताऽऽख्यदोषः।

(२८४) उदन्वति—समुद्रे, मुक्ताशुक्तय,—मुक्ताजनक मुक्तास्फोटा, तान्—वाष्पवारिबिन्दून्, आचेमु,—पपु।

(२८५) ताभि—मुक्ताशुक्तीभि, कुक्षिकोषेषु—उदराभ्यन्तरेषु, मुक्ताफलीभूतान्—मौक्तिकरूपेण परिणतानित्यर्थः, तान्—वाष्पबिन्दूनित्यर्थः, कथमपि—केनापि प्रकारेण अवाप—प्राप।

(२८६) विषमुचा—नागानाम्, ईश,—प्रभु, नागराज इत्यर्थः।

(२८७) एकावलीम्—एकसरां, हारविशेषमिति यावत्, अकल्पयत्—अरचयत्। तस्या,—एकावल्या।

(२८८) सा—एकावली, ओषधीनां—फलपाकान्तानां व्रीहियवादीनाम्, ("ओषध्यः फलपाकान्ताः" इत्यमरः) अधिपते,—ईशस्य, ("ओषधीशो निशापतिः"

भवति भवादृशां दाक्षिम उपचारः तथाऽपि (२८२) बोधिबुद्धा बुद्धिमता सर्व्वसत्त्वराशिरक्षाप्रवृत्तेन रक्षणीयशरीरेण आयुष्मता विपरक्षापेक्षया गृह्यताम्" इत्यभिधाय भिक्षोः (२८३) अभ्यासवर्त्तिनः चीवरपटान्तसंयतां मुमोच ताम् एकावलीं मन्दाकिनीम्।

(२८४) उन्मुच्यमानाया एव यस्याः प्रभालेपिनि लब्धावकाशे विशदमहसि महीयसि विसर्पति रश्मिमण्डले, युगपद्धवलायमानेषु दिङ्मुखेषु, (२८५) मुकुलितलताप्रभूतिविटपैः आ मूलाद्विकासितमिव तरुभिः, (२८६) अभिनवस्नुगालतुल्यैः

---

दिति भावः। दाक्षिम—दानेन निर्वृत्त, ["ड्वित क्त्रि" (३।३।८८ पा०) इति ददाते क्त्रि, "क्त्रेर्मम्नित्यम्" (४।४।२० पा०) इति मप् च] उपचारः,—सत्कारः।

(२८१) बोधिबुद्धा—बोधिधिया बोधिः इति विविधः इत्यर्थः, विज्ञानात्मकत्वात् सन्तानात्मकत्वादिति भावः। सर्वेति।—सर्वेषां—समस्तानां, सत्त्वराशीनां—प्राणिसङ्घानां, रक्षायां—पालने, रक्षार्थे वा, प्रवृत्त,—उद्यत तेन, अत एव रक्षणीय—पालनीय, शरीर—देहः येन यस्य वा तथाभूतेन, अन्यमनेन रक्षणार्थं सर्वदेव इत्यर्थः। विपरक्षापेक्षया—विविध आत्मरक्षानुरोधेन।

(२८२) अभ्यासवर्त्तिनः,—सन्निकस्थितस्य, निकटस्थितस्य इत्यर्थः, ("समीपे निकटासन्न। सदेशाभ्याससविधे" इत्यमरः)। चीवरपटान्तसंयता—कौपीनाञ्चलबद्धाम्।

(२८४) उन्मुच्यमानाया,—निष्काश्यमानायाः, यस्याः,—मन्दाकिन्याः, प्रभालेपिनि—कान्तिव्यापिनि, लब्धावकाशे—प्राप्तावसरे, बहुदूरव्यापिनीत्यर्थः, विशदमहसि—उज्ज्वलतेजसि, महीयसि—अतिमहति, रश्मिमण्डले—किरणनिचये, विसर्पति—प्रसरति। युगपत्—सहसा, एकदैव वा।

(२८५) मुकुलितेति।—मुकुलिता,—विकासोन्मुखा इति भावः लता,—वीरुध एव, ध्वज—श्रिय, गणिका इति यावत् मालु लताकुसुमैः,—मञ्जरीकाकुलितः इति भावः तरुभि—वृक्षैः, मायकारति भाव, आ मूलात्—शिफाम् आरभ्य शिखरपल्लवमभिव्याप्य, विकासितम इव—उद्भासितमिव, लताविकासशोभितेन भावः।

(२८६) अभिनवेति।—अभिनवं—प्रत्यग्रम्, सद्य उद्गततादात्विवधमिति भावः,

धावितमिव धुतपक्षपुटपटलधवलितगगनं वनसरसीहंसयूथैः, (२९७) स्फुटितमिव भरवशविशीर्य्यमाणधूलिधवलैः गर्भभेदसूचितसूचीसञ्चयशुचिभिः केतकीवाटैः, (२९८) उद्गलितदलदन्तुराभिः प्रबुद्धमिव कुमुदिनीभिः, (२९९) विधुतसितसटाभारभरितदिक्चक्रैः चलितमिव केसरिकुलैः, प्रहसितमिव (३००) दशनांशुमालाऽऽलोकलिप्यमानवनं वनदेवताभिः, विकसितमिव (३०१) शिथिलितकुसुमकोशकेसराट्टहासनिर-

यत् नयास—विस, तत्र लुब्धे—लोलुपे, धुतेति।—धुते,—कम्पिते, विस्तारितैरिति भाव, यद्वा,—धुतानां—कम्पितानां, पक्षपुटानां—पतत्रपुटानां, पटले,—समूहै, धवलित—श्वेतीकृत, गगन—नभ यस्मिन् तद्यथा तथा, वनसरसीहंसयूथैः,—आरण्यसरोवरहंसवृन्दे, धावितमिव—विद्रुतमिव। अत्र प्रकृतानां मन्दाकिनीप्रभाणाम् अप्रकृतहंसयूथधाविपक्षरूपेण सम्भावनादुत्प्रेक्षाऽलङ्कारः। एवमुत्तरत्रापि बोध्यम्।

(२९७) भरेति।—भरवशेन—पुष्टिवशेन, परिपक्वत्वेनेत्यर्थ, विशीर्य्यमाणाभि,—विशीर्य्यमाणाभि, धूलिभि,—रजोभि, परागैरिति यावत्, धवला,—शुभ्रा तै, गर्भेति।—गर्भभेदेन—मध्यभागस्फोटनेन, सूचितै,—प्रकटितै, स्फुटितैरित्यर्थ, सूचितानामिति वा सूचीनां—सूचीवत् तीक्ष्णानां शिखानां, सञ्चये,—समूहे शुचय,—विशदा तै, केतकीवाटै—केतकीवनैरित्यर्थं, स्फुटितमिव—विकसितमिव उत्प्रेक्षा।

(२९८) उद्गलितेति।—उद्गलितै,—निर्गतै, प्रस्फुटितैरिति यावत, दलै,—छदै, दन्तुराभि,—सञ्जातदन्ताभिरिव लक्ष्यमाणाभि। प्रबुद्धमिव—विकसितमिव उत्प्रेक्षा।

(२९९) विधुतेति।—विधुतेन—कम्पनवशात विस्तारितेन, विधुतानामिति वा, सितसटानां—श्वेतजटानां, भारेण—भरेण, आतिशय्येनेत्यर्थ, भरित,—आपूरित, दिक्चक्र,—दिक्समूह, दिङ्मण्डलमित्यर्थ यै तथाभूतै, केसरिकुलै,—सिंहवृन्दे, चलितमिव—कम्पितमिव उत्प्रेक्षा।

(३००) दशनेति।—दशनांशूनां—दन्तकिरणानां माला—समूह, तस्या आलोकेन—प्रभया, लिप्यमान—दिह्यमान वनम्—अरण्य यस्मिन् तद्यथा तथा।

(३०१) शिथिलितेति।—शिथिलितानां—अधोमुखानां, स्फोटनातिशय्यादिति भाव, कुसुमानां—पुष्पाणां, कोशकेसरा,—कर्णिकारकिञ्जल्का, अभ्य-

दूष्मं काशकानने, (२०२) भ्रान्तमिव सम्भ्रमभ्रमितबाल-पल्लवपरिवेशश्वेतायमानैश्चमरीकदम्बकैः, (२०३) प्रस्तुतमिव स्फायमानफेनिलतरलतरतरङ्गोद्गारिणा गिरिनदीपूरेण, (२०४) अपरतारागणलाभमुदितेन उदितमिव विकचमरीचि-चक्राक्रान्तककुभा पूर्णचन्द्रेण, (२०५) प्रक्षालित इव दावा-नलधूलिधूसरितदिगन्तो दिवसः, पुनरिव धौतानि अश्रुजल-क्लिष्टानि नारीणां मुखानि।

---

नापस्थकेसरा हस्वर्षा वा, अट्टहासा इव—उद्धर्षहसितानि इव, निरङ्कुशं,—निर्बाधः यस्मिन् तत् यथा तथा, काशकानने,—इक्षुगन्धाख्यतृणविशेषारण्ये इत्यर्थः।

(२०२) सम्भ्रमेति।—सम्भ्रमेण—त्वराविशेषेण, भ्रमिते,—चालिते, बाल-पल्लवपरिवेशे—पुच्छलोमकिसलयमण्डले, श्वेतायमाना,—श्वेता [illegible] आचरन्ते तैः, ["कर्तुः क्यङ्—" (३।१।११ पा०) इति आचारार्थे क्यङ्] चमरीकदम्बकैः,—चमरीसञ्ज्ञकमृगविशेषवृन्दैः, भ्रान्तमिव—चलितमिव इत्युत्प्रेक्षा।

(२०३) स्फायमानेति।—स्फायमाना,—वर्द्धमाना, फेनिला,—डिण्डीर-युक्तिमन्, तरलतरा,—अतिचपला, ये तरङ्गा,—ऊर्मय, तान् उद्गिरति—उद्वमतीति तथाभूतेन, गिरिनदीपूरेण—पर्वतीयसरित्जलप्रवाहेणेत्यर्थः, ["गिरिनद्या-दीना वा" (वा०) इति णात्विकल्पम्] प्रस्तुतमिव—विलुप्तमिव इत्युत्प्रेक्षा।

(२०४) अपरेति।—अपरे—अन्ये, आकाशसञ्चारिताम्भाव्य नवीनाः, तारापतित्वात् चन्द्रस्य इति भाव, तारागणा,—नक्षत्रवृन्दानि, तेषां लाभ,—प्राप्ति, तेन मुदित,—प्रहृष्ट तेन, विकचेति।—विकचे,—विकसिते मरीचीना—मयूखाना, चक्रे,—समूहे, आक्रान्ता,—आपूरिता, ज्योतिरेकाकृति भाव, ककुभ,—दिश येन तथोक्तेन।

(२०५) प्रक्षालित —धौत। दावानलेति।—दावानलस्य—वनवह्नेः, धूलिभि, —भस्मभिरित्यर्थ, धूसरित,—पाण्डुर, दिगन्त,—आशाप्रान्त यस्मिन् तथाभूत। पुन —प्रथम जलेन प्रक्षालितान्यपि भूयोऽपि इत्यर्थ, धौतानि—क्षालितानि अश्रुजल क्लिष्टानि—बाष्पवर्षेण मलिनानि, मुखानीव—आननानीव। अत्र धावल्यसाम्यात् प्रकृतस्य मन्दाकिनीोद्गारस्य अश्रुजलनारीमुखत्वेन सम्भावनात् उत्प्रेक्षाऽलङ्कार, मुखस्य बहुवाचकत्वात्।

राजा तु (२०६) मांसलैः तस्याः सम्मुखैः मयूखैः आकुलीक्रियमाणं मुहुर्मुहुः उन्मीलयन् निमीलयंश्च चक्षुः कथमपि प्रयत्नेन ददर्श (२०७) सर्वाशापूरणीं पङ्क्तीकृतामिव दिङ्नागकरशीकरसंहतिं, (२०८) घनमुक्तां शारदीम् इव लेखीकृतां ज्योत्स्नां, (२०९) प्रकटपदकचिह्नां नक्षत्रवीथीमिव बालेन्दोः, (२१०) निष्कलीभूतां सप्तर्षिमालामिव हस्तमुक्ताम्, अभिभूतसकलभुवनभूषणभूतिप्रभावाम् ऐशानीमिव शशि-

(२०६) मांसलैः,—प्रभूतैः। तस्याः—एकावल्याः। सम्मुखैः,—आभिमुख्यपतद्भिः। आकुलीक्रियमाणं—व्याकुलीक्रियमाणं, प्रतिहन्यमानमित्यर्थः दर्शनशक्त्यवरोधादिति भावः। उन्मीलयन्—उन्मेषयन्। निमीलयन्—मुद्रितं कुर्वन्। प्रयत्नेन—प्रकृष्टचेष्टया, एकावलीप्रभाभिः दृष्टिसंरोधादिति भावः।

(२०७) सर्वाशापूरणीं—सर्वासामाशानां सर्वदिग्व्यापिनीं वा, सर्वमनोरथसम्पादिनीं च पङ्क्तीकृता—श्रेणीकृतेव स्थापिता दिङ्नागेति।—दिङ्नागस्य—ऐरावतस्य, करः,—शुण्डः, तस्य शीकरसंहतिमिव निर्गलज्जलबिन्दुधारामिव। अयमत्र उपमा भूलोकदुर्लभस्य महाप्रभावस्य आतपस्य ऐरावतस्य करनिःसृतत्वात् दुष्प्रापत्वदुर्लभत्वातिशयख्यापनीयतया इति बोद्धव्यम्।

(२०८) घनमुक्तां—मेघावरणरहितां निरन्तरसन्निविष्टमुक्ताफलखचितां च, शारदीं—शरत्कालिकीम्, अतिविशदत्वादिति भावः, लेखीकृतां—श्रेणीकृतां, ज्योत्स्नामिव—चन्द्रिकामिव।

(२०९) प्रकटेति।—प्रकटम्—उज्ज्वलं, पदकं—मध्यमणिः, पदमिव—चरणमेव इति पदकं तस्य, चिह्नं—लक्ष्म यस्याः सा, बालेन्दोः,—नवोदितस्य चन्द्रस्य, स्वल्पदर्शनत्वात् बालेन्दोरिति पदं प्रयुक्तं, नक्षत्रवीथीमिव—नक्षत्रपङ्क्तिमिव, चित्ताकर्षकतया अतिसुभगतया च तद्गतानि मुक्ताफलानि द्वितीयाचन्द्रस्य पदविन्यासस्थानीभूतानि नक्षत्राणीति भावः।

(२१०) हस्तमुक्तां—हस्तात्—करात्, भिन्नोरिति भावः, हस्तो नाम नक्षत्रं, तस्माच्च मुक्ता—निःसृताम्, अत एव पुनरत्रोगोऽपि दृश्यते, तथा हि ज्योतिषे,—"हस्तो मूलं श्रवणः पुनर्वसुः मृगशिरस्तथा पुष्यः। पुंसंज्ञितं च कार्यं पतनमाय गर्भ गमने च॥" इति। हस्ते समुदयस्य शरत्कालिकतया सप्तर्षिमण्डलस्य अनुन्नयाभासमन्तर्हस्तसन्दीपादानमिति चेदम्। निष्कलीभूतां—स्थिरीभूतां, सप्तर्षिमालामिव—

कला, धवलतागुणगृहीता कान्तिमिव निर्गतां क्षीरराशेः, (२११) अनेकमहामहीभृत्परम्पराऽऽगतां गङ्गामिव दुर्गतिहराम्, (२१२) अनवरतस्फुरिततरलांशुका (२१३) पुरःसरपताकामिव महेश्वरभावागमस्य, घनसारशुभ्रा दन्तपङ्क्तिम् इव अभिमुखस्य ईश्वरस्य, (२१४) वरमनोरथपूरणसमर्था

---

मरीच्यादिसप्तर्षिसमूहमिव। अभिभूतेति।—अभिभूत,—तिरस्कृत, सकलानां—सर्वेषां, भुवनानां—लोकानां, भूषणभूते—अलङ्कारस्वरूपे, प्रभावः—उत्कर्षः यया ताम्, अथवा—अभिभूत,—तिरस्कृत, सकलभुवनस्य—चतुर्दशलोकस्य, भूषणम्—अलङ्कारस्वरूपं इन्दुः मस्तकादौ इति यावत्, तस्य भूते—भवन, चन्द्रोदितस्य इति भावः, प्रभावः यया ताम्। ऐशानीम्—ईशानस्य—शिवस्य इयम् इति ताम्, शैवीमित्यर्थः, चन्द्रशेखरस्य शिरःशोभाकरीभूतामिति यावत्। धवलतेति।—धवलतागुणेन—शैत्यधर्मेण श्वेतवर्णतया च गृहीता—आश्रिता, गुम्फिता च ताम्। क्षीरराशेः—दुग्धसमुद्रात् क्षीरोदधेरिति वा।

(२११) अनेकेति।—अनेके—बहवः महान्तः,—उन्नताः, श्रेष्ठाश्च महीभृतः,—पर्वताः राजानश्च तेषां परम्परा—धारा तस्याः आगता—उपस्थिता ताम्, दुर्गतिहराम्—दारिद्र्यहारिणीम्, नरकनिवारिणीमिव। ("दुर्गतिर्नरके नैःस्वे" इति मेदिनी)।

(२१२) अनवरतेति।—अनवरतम्—सततम्, स्फुरिता,—स्फूर्तिं गता, तरलस्य—मध्यमणेः, अंशुकाः,—किरणाः, यद्वा,—तरलाः,—चञ्चलाः, अंशुकाः,—किरणाः, तरलानि—चञ्चलानि सूक्ष्माणि वा अंशुकानि—पटाश्च यस्याः तथोक्ताम्।

(२१३) महेश्वरभावागमस्य—महेश्वरस्य भावः—महेश्वरत्वमित्यर्थः, तस्य आगमः—प्राप्तिः तस्य साम्राज्यलाभस्य इत्यर्थः पुरःसरीति।—पुरः,—अग्रतः सरति—गच्छतीति पुरःसरी ("पुरोऽग्रतोऽग्रेषु सर्तेः" (पा०) इति टः), सा चासौ पताका—वैजयन्ती चेति तामिव। अभिमुखस्य—अनुकूलस्य इति यावत् ईश्वरस्य—प्रभोः, दैवस्य वा, घनसारशुभ्रा—कर्पूरवत् धवलाम्, ("अथ कर्पूरमस्त्रियाम्। घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमवालुका॥" इत्यमरः) अथवा,—घना—निरन्तरा, सारा—सारवती, दृढा च, सा चासौ शुभ्रा—शुक्ला चेति ताम्, दन्तपङ्क्तिमिव—दशनश्रेणीमिव।

(२१४) वरमनोरथपूरणसमर्था—वरः,—श्रेष्ठः, मनोरथः,—कामः, उत्तम कामना इति यावत्, वरस्य—श्रेष्ठस्य मनोरथस्य, तस्य पूरणे—साधने, समर्था—दक्षा

स्वयंवरस्रजमिव भुवनश्रियः, (३१५) निजकरपल्लवावरणदुर्लक्ष्यां (३१६) चक्षूरागविहसितिकामिव वसुधायाः, (३१७) मन्त्रकोपसाधनप्रवृत्तस्य अक्षमालामिव राजधर्मस्य, (३१८) समुद्रालङ्कारभूतां महालेख्यपट्टिकामिव कुबेरकोशस्य, पश्यन् च एतां विस्मयम् आजगाम मनसा सुचिरम्।

---

स्रा, भुवनश्रियः,—जगल्लक्ष्म्याः, राजलक्ष्म्याः इति यावत् स्वयंवरस्रक्—स्वदत्—आत्मना, वरयतीति यावत्, वरः—वरस्य वापतेरिति भावः, तस्य तस्यै वा स्रक्—प्रसवकुसुममाल्यं, भाविपतेर्गलदेशे अर्पणीयमिति भावः।

(३१५) निजेति।—निजाः,—स्वीयाः, कराः—रश्मय एव, पल्लवाः,—किसलयाः, प्रभातारल्यात् दृष्टिरोधकत्वसाधर्म्याच्च इति भावः, निजः—स्वीयः करपल्लवः,—हस्तकिसलयश्च तैः तेन च आवरणेन—आच्छादनेन, दुर्लक्ष्याः—दुर्दर्शाम्।

(३१६) चक्षुरागेति।—चक्षुषः,—नेत्रस्य, रागः—प्रीतिः तेन विहसितिका—मन्दहास्य लाभ इव, स्वनाथे राजनि प्रणयातिशयात् वसुधा करपल्लवेन निजमुखमाच्छाद्य चारप्रभाव्याजेन विहसतीवेति भावः।

(३१७) मन्त्रेति।—मन्त्रः,—मन्त्रणा, मन्त्रिभिः सह स्वराष्ट्रपरराष्ट्रावधारणविषयं, कोषः,—धनं, साधनम्—उपायादिकम्, तत्र तन्मध्ये इत्यर्थः, यद्वा,—तेन, मन्त्रादिद्वारेण इत्यर्थः, प्रवृत्तः,—उद्यतः अभीष्टसम्पादने निरत इति वा तस्य। अथवा—मन्त्रः,—देवादीनां साधनीभूतः तन्मात्रक शब्दविशेषः, ("मन्त्रो देवादिके वेदे स्यात् देवादीनाञ्च साधने। गुप्तवादेऽपि च पुमान्" इति मेदिनी) स एव कोषः,—अर्थसङ्गात् ("कोषोऽस्त्री कुड्मले पात्रे …। जातिकोषेऽर्थसङ्घाते च" इति मेदिनी) तस्य साधनाय—सिद्धिलाभाय प्रवृत्तस्य—निरतस्य। अक्षमालामिव—जपमालिकामिव यस्य राज्ञः समीपे एषा रत्नमाला तिष्ठति तस्य मन्त्रादिकमप्रतिहतं सदा भवतीति तात्पर्यम्।

(३१८) समुद्रेति।—समुद्रः—सागरः, तस्य अलङ्कारः—भूषणं तद्भूतां—तद्रूपेण विराजमानामित्यर्थः, निखिलसागरसारस्वरूपामिति यावत्, अन्यत्र,—समुद्रः,—मुद्रया—रत्नग्रीवादकचिह्नविशेषेण "मोहर" इति बङ्गभाषया प्रसिद्धेनेत्यर्थः, सह वर्तमानः अङ्गुलिस्थमुद्राङ्कनोपयुक्ताङ्गुरीयकचिह्नेन वा सहितश्च योऽलङ्कारः, तद्भूता—तत्स्वरूपां, कुबेरकोशस्य—धनेश्वरभाण्डागारस्य महालेख्यपट्टिकामिव—महती—एतावन्ति रत्नानि अस्मिन् कुबेरकोषे सन्तीति गणना, तस्याः लेख्यपट्टिका—"पाटा" इति बङ्गभाषया

आचार्यस्तु ताम् (३१८) उद्धृत्य बबन्ध बन्धुरे स्कन्धभागे भूपतेः। अथ नरपतिरपि प्रीतिम् उपदर्शयन् प्रत्यवादीत्,—"आर्य! रत्नानाम् ईदृशानाम् अनर्हाः प्रायेण पुरुषाः। तपःसिद्धिः इयमार्यस्य देवताप्रसादो वा। के च वयम् इदानीम् भाजनीकृताः? किमुत ग्रहणस्य प्रत्याख्यानस्य वा? (३२०) दर्शनात् प्रभृति प्रभूतगुरुगुणगणाकृष्टेन हृदयेन परवन्तो वयम्। (३२१) सङ्कल्पितम् इदम् आ मरणात् आर्योपयोगाय शरीरम्। अत्र कामचारो नः कर्त्तव्यानाम्" इति।

---

प्रसिद्धा त्रिपिटकिका तामिव। एताम्—एकावलीम्। यथैकस्या एव एकावल्या यथैकसंस्थानसौवर्णकाणां प्रैषघटितानां सुधामुक्तानां सन्निवेशात् त्रैलोक्यदीप्ति रूपोपमालङ्कारः।

(३१८) उद्धृत्य—उत्तोल्य। बन्धुरे—नतानते, उच्चावचोपमे इत्यर्थः, रम्ये वा। ("बन्धुर सुकुटे पुंसि । त्रिषु च्छादिम्बनम्रयोः ।" इति मेदिनी)। अनर्हाः,—अयोग्याः। तपःसिद्धिः,—तपश्चर्याया साफल्यरूपा इत्यर्थः। इयम्—एकावली। देवताप्रसादः,—देवानुग्रहः, तपस्याप्रभावेण देवानुग्रहेण वा इयमार्येण लब्धा इति निष्कर्षः। के च वयम् भाजन,—स्थल, सर्वेहस्य इत्यर्थ, एतस्य इति शेष, न केऽपि वयमित्यर्थ, प्रत्याख्यानस्य—निराकरणस्य, अग्रहणस्येत्यर्थः।

(३२०) दर्शनात्—भवदवलोकनात्, भवत इति शेष, [अत्र प्रभृतिशब्दयोगे पञ्चमी, "कार्त्तिक्याः प्रभृतीति भाष्यप्रयोगात्" इति दीक्षितोक्तेः]। प्रभूतेति।—प्रभूतानाम्—बहूनाम्, गुरुगुणानाम्—श्लाघ्यगुणानाम्, यद्वा,—गुरवः—महान्तः, गुणाः—दयादीनाः, गणेन—समूहेन, कृतम्—आकृष्ट तेन। परवन्त,—परा-धीनाः, मन्त्राधीना इति यावत्।

(३२१) सङ्कल्पित—मनसा निर्द्धारितम्। आ मरणात्—मृत्युकालपर्य्यन्तम्, यावज्जीवमित्यर्थः, ["पञ्चम्यपाङ्परिभिः" (२।३।१० पा०) इति पञ्चमी] आर्योप-योगाय—आर्यस्य—भवतः, उपयोगः—व्यवहारः, इष्टकार्य्यसाधनमित्यर्थः तस्मै आर्योपयोगाय इति भाव, ["तुमर्थाच्च भाववचनात्" (२।३।१५ पा०) इति चतुर्थी] सङ्कल्पितमिदम्। अत्र—शरीरे इत्यर्थः, नः,—अस्माकं, कर्त्तव्यानाम्—

(३२२) समतिक्रान्ते च कियत्यपि काले, गते च एकापत्नीवर्णनाऽऽलापे लोकस्य, अनन्तरं (३२३) सत्यपि विश्रम्भे राज्यश्रीः ताम्बूलवाहिनीं पत्रलताम् आहूय उपांशु किमपि कर्णमूले शनैः आदिदेश। दर्शितविनया च पत्रलता पार्थिवं व्यज्ञापयत्,—"देव! देवी विज्ञापयति,—'न स्मरामि आर्यस्य पुरः कदाचिदुच्चैः वचनमपि, कुतो विज्ञापनम्। इयं हि (३२४) शुचाम् असह्यता व्यापारयन्ती हतदैवदत्तादेशा (३२५) शिथिलयति विनयम्। अबलानां हि पतिरपत्यं वा (३२६) अवलम्बनम्। (३२७) उभयविकलानान्तु दुःखा-

---

कार्यार्थां, कामचार,—यथेच्छगमित्वम्, अह मदीयेन शरीरेण भवत यावदिष्ट मनोरथं सम्पादयिष्यामीति भाव अद्दैव मदैव सम्पूर्णाधिकार इति फलितम्।

(३२२) समतिक्रान्ते—गते। लोकस्य—तत्रस्थस्य जनस्य, एकापत्नीवर्णनाऽऽलापे—एकापत्न्या,—मन्दाकिन्या, वर्णनमेव—विवरणमेव आलाप,—प्रसङ्ग तस्मिन्, [ "यस्य च भावेन" (२।३।३७ पा०) इति सप्तमी ] गते—निवृत्ते इत्यर्थः।

(३२३) सत्यपि विश्रम्भे—प्राप्तविश्वासा अनात्मदशाभावात् विगतसाध्वसा इति भाव। उपांशु—गुप्तम्। पार्थिवं—राजानं हर्षमिति यावत्। देवी—राज्यश्री। न स्मरामीति।—ज्येष्ठस्य ते समक्षात् अन्येन केनचित् अक्षमपि उच्चैः भाषणमहं आकलयामीति इदानीं अपि न शक्नोमि तव पुरः साक्षात् आवेदयितुं दूरे एव तिष्ठतु इति निष्कर्षः। आर्यस्य—माननीयस्य, भवत इत्यर्थः, [ "षष्ठ्यतसर्थप्रत्ययेन" (२।३।३० पा०) इति षष्ठी ]।

(३२४) शुचां—शोकानाम्, असह्यता—दुःसहता। व्यापारयन्ती—विज्ञापयितुं नियोजयन्तीत्यर्थः। हतदै—हतेन—दग्धेन इति यावत्, दैवेन—भाग्येन, दत्त,—अर्पित इत्यर्थः, आदेश,—अनुमतिर्यस्यै तथाभूता, दुर्भाग्यायत्ता इत्यर्थः।

(३२५) शिथिलयति—शिथिलं करोति, ह्रासयति इत्यर्थः, यत भवतोऽग्रतः आवेदयितुं प्रवर्त्तते इति भाव।

(३२६) अवलम्बनम्—आश्रय।

(३२७) उभयविकलानाम्—उभाभ्यां—पत्या पुत्रेण चेत्यर्थः, विकला,—

ऽनलेन्धनायमानं प्राणितम् अश्लीलत्वमेव केवलम्। (३२८) आर्य्यागमनेन च कालोऽपि प्रतिहतो मरणप्रयत्नः। अत (३२९) काषायग्रहणाभ्यनुज्ञया अनुगृह्यतामयम् अपुण्यभाजन जनः' इति"। जनाधिपस्तु तदाकर्ण्य तूष्णीमेव अतिष्ठत्।

अथ आचार्य्यः (३३०) सुधीरम् अभ्यधात्,—"आयुष्मति। शोको हि नाम पर्य्यायः पिशाचस्य, रूपान्तरम् आक्षेपस्य, (३३१) तारुण्यं तमसः, विशेषणं विषस्य।

---

विरहिता तासाम्, अधीराणाम् इत्यर्थः, पतिपुत्रविहीनानाम् इति भावः, ["उभादुदात्तो नित्यम्" (५।२।४४ पा०) इति अयच्। "उभशब्दात् संख्यावाचिनो नित्यमयच् स्यात् स्वार्थे, तेन उभयम्, उभयत्र "उभयपक्षविनीतनिद्रः" इत्यादि सिद्धम्" इत्याह तत्त्वबोधिनीटीकाकृत् ] दुःखेति।—दुःखमेव—मनःपीडा एव, अनलः,—अग्निः तस्य इन्धनम्—काष्ठं, तदिवाचरत् दुःखानलेन्धनायमानम्, शोकाग्निदाह्यभूतमित्यर्थः; [ "कर्त्तुः क्यङ् सलोपश्च" (३।१।११ पा०) इति क्यङि शानचि च रूपम् ] प्राणितम्—जीवितं प्राणधारणमित्यर्थः अश्लीलत्वमेव—धार्ष्ट्यमेव, निर्लज्जत्वमेव इत्यर्थः, विधवाया जीवनं केवलं दुःखायैव, लोकापवादाय च इति भावः।

(३२८) आर्य्यागमनेन—आर्य्यस्य—भवतः, आगमनेन—उपस्थित्या, मरणप्रयत्नः,—मरणचेष्टा इति यावत्, प्रतिहतः—व्याहतः।

(३२९) काषायेति।—कषायेण रक्तं काषायं—रक्तवसनमित्यर्थः, भिक्षुधार्य्यमिति भावः, ["तेन रक्तं रागात्" (४।२।१ पा०) इत्यण् ], तस्य ग्रहणम्—धारणम्, प्रव्रज्याऽवलम्बनमित्यर्थः, तस्य अभ्यनुज्ञा—अनुमतिः तया, अपुण्यभाजन—पापीत्यर्थः। जनाधिप,—नृपः। तूष्णीं—मौनी, निर्वागित्यर्थः।

(३३०) सुधीरम्—अत्यन्तधैर्य्यं यथा स्यात् तथा, धैर्य्यावलम्बनपूर्वकमित्यर्थः अतिस्थिरं वा, मन्दमन्दमित्यर्थः, ("धीरो धैर्य्यान्विते स्वैरे बुधे क्लीवन्तु कुङ्कुमे" इति मेदिनी) पिशाचस्य—नीचयोनेः देवयोनिविशेषस्य, चित्तविक्षेपकत्वादिति भावः, पर्य्यायः,—नामान्तरम्, आक्षेपस्य—वातव्याधिविशेषस्य, अचेतनतया मुखविलुण्ठनलक्षणस्य इति भावः, रूपान्तरम्—अन्यविधं रूपम्।

(३३१) तारुण्यं—यौवनं, तमसः,—अन्धकारस्य, सर्वाच्छादकत्वादिति भावः। विशेषणं—विशेषः, भेदमात्रमित्यर्थः, मोहोत्पादकत्वादिति भावः।

**(३३२) अनन्तकः प्रेतनगरनायकः अयम्, अनिर्वृतिधर्मा दहनः अयम्, अक्षयो राजयक्ष्मा अयम्, (३३३) अलक्ष्मी-निवासो जनार्दनः अयम्, अपुण्यप्रवृत्तः चापलकः अयम्,**

(३३२) अथ—शोकः, अनन्तकः,—अन्तम्—विनाशं करोति इति अन्तकः, [तत्करोतीत्यर्थे अन्तशब्दात् णिच् खल] स न भवतीति अनन्तकः,—अविहन्ता इत्यर्थः, प्रेतनगरनायकः—यमः, अन्तकः इति यावत्, अत्र अनन्तकत्वराहित्ये प्रेतपुरनायके नितान्तमसम्भवदपि शोकस्य अन्तकादपि भीषणताद्योतनाय अनन्तकत्वरूपमधिकं वैशिष्ट्यमुपात्तम्, तथा च अन्तकः केवलमन्तं जनयति, शोकस्तु तदनन्तमपि ददाति, इति शोके अन्तकतादात्म्याध्यासात् रूपकं, तत्साधिकारूढवैशिष्ट्यकमनामलङ्कारः — "अधिकारूढवैशिष्ट्यं रूपकं यत्तदेव तत्" लक्षणात् विशेषणमेवात्र श्लिष्टमित्यवगन्तव्यम्। शोकपक्षे तु—अनन्तकः,—अनन्तम्—अशेषं, पारराहित्यमित्यर्थं कायति—प्रख्यापयति, ज्ञापयतीत्यर्थः इति अनन्तकः,—असीम इत्यर्थः। अनिर्वृतिधर्मा—अनिर्वृतिः,—अविश्रान्तिः, धर्मः,—स्वरूपं यस्य सः, सदैव प्रज्वलन्नित्यर्थः, ["धर्मादनिच् केवलात्" (५।४।१२४ पा०) इत्यनिच्] दहनः—अग्निः, अत्र शोके दहनतादात्म्याध्यासात् रूपकं, निर्वृतिराहित्यस्य दहने असम्भवेऽपि इति अत्र तदारोपात् अधिकं वैशिष्ट्यमुपात्तं, तथा च दहनः प्रज्वलन्नेव केवलं दहति निर्वाणभूतस्तु दहनात् विरमति, शोकस्तु सदैव सन्तप्य देहं व्यथयति न तु कदाचिदुपशाम्यतीति शोकस्य दहनादपि भीषणत्वद्योतनात् पूर्ववदलङ्कारः। शोकपक्षे तु—अनिर्वृतिः,—असुखम्, अतृप्तिरिति यावत् ("निर्वृतिः स्वस्थितावस्तगमने च सुखे स्त्रियाम्" इति मेदिनी) धर्मः यस्य तथाभूतः, शोकस्य सदैव सन्तापकत्वादिति भावः। अथ—शोकः अक्षयः—नास्ति क्षयः—नाशः यस्मात् तथोक्तः, क्षयरहितः इत्यर्थः, राजयक्ष्मा—क्षयरोगविशेषः, तत्पक्षे तु—नास्ति क्षयो यस्य तथोक्तः, यावज्जीवस्थायी इत्यर्थः। यद्यपि क्षयराहित्यं राजयक्ष्मणि असम्भवदपि शोकस्य राजयक्ष्मणोऽपि भीषणत्वद्योतनाय अक्षयत्वरूपम् अधिकं वैशिष्ट्यमुपात्तम्, तथा च राजयक्ष्मा केवलं स्वाश्रयमेव क्षिणोति, शोकस्तु सर्वानेव सपरिजनान् युगपत् विनिहन्ति इति शोके राजयक्ष्मतादात्म्याध्यासात् पूर्ववदलङ्कारः।

(३३३) अलक्ष्मीनिवासः,—अलक्ष्म्याः,—निर्ऋतेः, "अलक्ष्मी" इति ख्यातायाः लक्ष्मीविरुद्धायाः इत्यर्थः, निवासः—आश्रयः, जनार्दनः,—विष्णुः, ["नन्दिग्रहि—" (३।१।१३४ पा०) इति ल्युः]। अत्र लक्ष्मीनिवासत्वाभावस्य जनार्दने असम्भ-

ध्ययम्, (३३६) अबुधसेवितो ग्रहवर्ग अयम्, अयोगसमुत्थो ज्योतिष्प्रकारः अयम्; (३३७) स्नेहात् वायुप्रकोपः, मानसात् अग्निसम्भवः, (३३८) आर्द्रभावात् रजःक्षोभः, रमात्

---

द्विति बौद्धे, विनायकः,—विघ्नः ("विनायकस्तु हेरम्बे तार्क्ष्ये विघ्ने जिने गुरौ" इति मेदिनी), यद्वा,—विशेषेण नयति—नाशयति यः स नायकः इत्यर्थः ।

(३३६) अबुधसेवितः,—बुधः,—सौम्यग्रहः, तेन सेवितः,—युक्तः न भवति इति तथोक्तः, बुधवर्जित इत्यर्थः, ग्रहवर्गः,—ग्रहाः—सूर्यादयः, ("ग्रहोऽनुग्रह-निर्बन्धग्रहणेषु रणोद्यमे। सूर्यादौ पूतनादौ च सैंहिकेयोपरागयोः ॥" इति मेदिनी) तेषां वर्गः,—समूहः । अत्रापि ग्रहवर्गे बुधविहीनत्वस्यासम्भवात् पूर्ववदलङ्कारः । शोकपक्षे तु—अबुधैः,—मूर्खैः, सेवितः—शीलित इत्यर्थः, ग्रहाणां—व्यसनानां, वर्गः अज्ञानिनामेव शोकोदयात् इति भावः । अयोगेति ।—अयोगः,—चित्तवृत्तिनिरोधाभावः, तेन समुत्थः,—उत्पन्नः, ज्योतिष्प्रकारः,—परं ज्ञानम्, अयोगे ज्योतिषः समुदयस्या-सम्भवात् पूर्ववदलङ्कारः, अनेकार्थाभिधायित्वेन च सर्वत्र श्लेषानुप्राणितमेतद्विरोधवचनम् । शोकपक्षे तु—अयोगेन—जनविच्छेदेन, समुत्थः—समुद्भूतः, यद्वा,—योगे—प्रियसमागमे सति, न समुत्तिष्ठति इति अयोगसमुत्थः, ज्योतिष्प्रकारः,—अग्निस्वरूपः, दाहकतया इति भावः ।

(३३७) स्नेहात्—घृतादितैलभूतस्नेहात्, वायुप्रकोपः,—औद्धत्यं, वातप्रशमकात् घृतादिस्नेहात् वायुप्रकोप इति विरोधः । स्नेहात्—प्रणयात्, वायुप्रकोपः,—उन्मादरोगस्वरूप इत्यर्थः, इति तत्परिहारः । शोकपक्षे—स्नेहात्—प्रणयजन्यत्वात्, वायुप्रकोपपक्षे च स्नेहात् प्राणहतुघृतादिजन्यत्वाच्च श्लेषानुप्राणितोऽयमित्यवधेयम् । एवं मुत्तरत्रापि । मानसात्—तदाख्यात् दिव्यसरसः, अग्निसम्भवः—समुद्भूताग्निस्वरूपः अग्नि-निर्वापहेतुभूतात् जलात् अग्निसम्भवः इति विरोधः, मानसात्—चेतसः, अग्निसम्भवः,—अनलोत्पत्तिः, शोकस्य सन्तापकत्वात् मनःसमुद्भवत्वाच्च इति परिहारः । शोक-पक्षे—मानसात्—चेतसः, अग्निसम्भवपक्षे च मानसात्—दिव्यसरोविशेषजायमानत्वाच्च श्लेषानुप्राणितोऽयमित्यवधेयम् ।

(३३८) आर्द्रभावात्—सरसत्वात्, आर्द्रीभूतस्थलादपीत्यर्थः, रजःक्षोभः—रजसां—धूलीनां, क्षोभः,—प्रसरः, धूलीप्रसरनिवारकात् जलाद्यार्द्रवस्तुनः रजः-क्षोभः इति विरोधः, आर्द्रभावात्—वात्सल्यात्, रजःक्षोभः,—रजसः,—गुण-विशेषस्य, क्षोभः, विजृम्भितं, शोकस्य रजोगुणकार्यत्वादयं रजोगुणविकारस्वरूपः,

अभिशोष, रागात् कालपरिणाम। (२३९) तत् अस्य अजस्रास्रस्राविणो हृदयमहाव्रणस्य, (२४०) बहुलदोषान्ध-

---

इति परिहार, शोको हि चेतस आर्द्रभावादेव जायते, न तु काठिन्यात् इति भाव। अत्र शोच्यस्य रजनीभस्य साधनस्य आर्द्रभावस्य उभयस्यापि श्लिष्टत्वम्। रसात् —रसायनात् पुष्टिकारकादित्य भाव, जलादिद्रव्याद् वा, अभिशोष,—शरीरादि शोषणम् इति विरोध, रसात्—अनुरागात् अभिशोष,—शोषणम् आत्मशोषण कारक इत्यम इति परिहार, रसात्—रसायनात् अभिशाप,—शरीरशोषण तथा रसात्—अनुरागात् आमशोष —प्रणयिन एकस्य जायत इति रसभूतस्य हेतो अभिशोषरूपसाध्यस्य च द्वयोरपि श्लिष्टत्वात् श्लेषानुप्राणितोऽयमिति ज्ञेयम्। रागात् —लौहित्यात्, कालपरिणाम —काल —कृष्ण, कृष्णवर्ण इत्यर्थ, परिणाम — परिणति इत्यम अस्य तथाभूत लौहित्यात् कृष्णवर्णता इति विरोध, रागात्— अत्यासक्तात् कालपरिणाम,—काल,—यम, परिणाम,—परिणति, विषफलमिति यावत् यस्य तथोक्त जीवनाशरूप चरमं फलमस्तीति भाव, इति परिहार। अत्रापि रागस्य अत्यासक्त-लौहित्यरूपानेकार्थाभिधायित्वात् हेतो साध्यीभूतकालपरिणामस्यापि जीवन नाश कृष्णवर्णताप्राप्तिरूपार्थाभिधायित्वात् श्लिष्टत्वेन पूर्ववत् श्लेषमूलकोऽयमिति ज्ञेयम्।

(२३९) "तत् अस्य" इत्यस्य "आपातम्" इत्यनेन सम्बन्ध। अस्य—शोकस्य। अजस्रास्रस्राविण —अजस्रम्—अनवरतम् अस्रम्—अस्रु शोणितञ्च ("अस्र कोणे अश्रे पुंसि क्लीबमसृजि स्मृतिते" इति मेदिनी) स्रावयति—स्रावयति, स्रवति च— क्षरति च इति तथोक्तस्य [ स्रवते "नन्दिग्रहि—" (३।१।१३४ पा०) इति णिनि। "अजस्रास्रस्राविण" इत्यत्र "अजस्रस्राविण" इति पाठान्तर दृश्यते, तत्र शोकपक्षे— अजस्र स्रावयति, अश्रुणि इति शेष य तथोक्तस्य, व्रणपक्षे च—अजस्र स्रवति, रुधिरादिकमिति शेष य तथोक्तस्य, इति विजयर्थघटिताघटितरूपेण व्याख्येयम्, शोकस्य अश्रुस्रावकर्तृत्वाभावादिति दिक् ] हृदयेति।—हृदयस्य—चेतस, महत्— बृहत् व्रण,—क्षत तस्य, तत्स्वरूपस्येत्यर्थ, "क्षणोति यस्मात् रूढेऽपि व्रणवास्तु न नश्यति। आ देहधारणात् तस्माद्व्रण इत्युच्यते बुधै॥" इति व्रणनिरुक्त्या हृदयस्य च्छेदकस्य तस्य यावज्जीवमनपनेयत्वात् व्रणत्वमिति भाव।

(२४०) बहुलेति।—बहुलदोषा —प्रभूतदूषणानि बहव अपगुणा इत्यर्थ, पापतश्च इति यावत् कृष्णपक्षस्य रात्रयश्च ("बहुला नीलिकायां०। पुंस्यग्नौ कृष्ण

कारलभ्यप्रवेशप्रसरस्य प्राणतस्करस्य, (३४१) शून्यताहेतोः महाभूतग्रामघातकस्य, (३४२) सकलविग्रहचणदक्षस्य दोषचक्रवर्त्तिनः, (३४३) कार्श्यश्वासप्रलापोपद्रवबहलस्य दीर्घरोगस्य, (३४४) असद्वृत्तस्य सकललोकक्षयधूमकेतो, जीवि-

---

पक्षे च वाच्यवत् प्राज्यकृपयो ॥" "दोष स्याद्दूषणे पापे दोषा रात्रौ भुजेऽपि च" इत्युभयत्रापि मेदिनी) ते एव अन्धकारा, मोहा, अज्ञानानि इति यावत, तासु रात्रिषु ये अन्धकारा,—तमांसि इति च ते उभे,—प्राप्त प्रवेशप्रसर,—अभ्यन्तर-गमनावकाश येन तथाभूतस्य, प्राणतस्करस्य—जीवनापहारिण इत्यर्थ, प्राणविघातक-चौरस्वरूपस्य इति यावत।

(३४१) शून्यताहेतो,—कि कर्त्तव्यताविमूढताकारणस्य, यद्वा—शून्यता—जनाभावता, निर्जनता इत्यर्थ हेतु,—उद्बोधकारणं यस्य तथाभूतस्य, एकाकितायां शोकहत्त्वादिति भाव, महेति।—महाभूतग्रामाणां महता—प्रभूताना, सर्वासामिति यावत, भूतग्रामाणां—प्राणिसमूहाना, मानवपश्वादीनामित्यर्थ, घातक,—नाशक तस्य, तस्करस्वरूपस्येत्यर्थ, यद्वा,—महाभूतग्रामाणां—क्षित्यादिपञ्चमहाभूताना, घातकस्य प्रबलशोकावशेन कार्य्यभूतस्य देहस्य नाशात् कारणभूतस्य पञ्चमहाभूतस्य क्षित्यादिषु बाह्यपञ्चभूतेषु लयादिति भाव।

(३४२) सकलेति।—सकलाना—सर्वेषा, सकला वा विग्रह —शरीराणि, विरोधाश्च, युद्धानि इति यावत, ("विग्रह कायविस्तारविभागे ना रणेऽस्त्रियाम्" इति मेदिनी) तेषां चणश्च—चणकरणे तत्र दक्ष —निपुण तस्य दोषचक्रवर्त्तिन,—दोषाणां—कामक्रोधादिरिपूणां, चक्रे—मण्डले, वर्त्तन—मुख्यतया तिष्ठतीति तथोक्तस्य, निखिलदोषाधिराजस्वरूपस्य इति भाव।

(३४३) कार्श्येति।—कार्श्ये—कृशता, शोकेन रोगेण च इति भाव श्वास,—दीर्घनिश्वास, व्याधिविशेषश्च, प्रलाप,—अनर्थक वचन ("प्रलापोऽनर्थक वच" इत्यमर) शोकेन बुद्धिविपर्य्ययात्, व्याध्यारम्भकदोषकोपाच्च इति भाव ते एव उपद्रवा,—उत्पाता, व्याधिकत्तरकालजा अन्ये व्याधयश्च ते बहल,—पूर्ण तस्य, उपद्रवलक्षणमुक्तं वैद्यके,—"व्याधेरुपरि यो व्याधिर्भवत्युत्तरकालज। उपक्रमविरोधित्वात् स ह्युपद्रव उच्यते॥" इति, दीर्घरोगस्य—दीर्घकालभोग्यरोगविशेषस्वरूपस्य, यक्ष्मादितुल्यस्येति यावत् आ देहधारणादस्यानपायित्वादिति भाव।

(३४४) असद्वृत्तस्य—असति—असाधुविषये, निन्दनीये आचरणादौ इति,

तापहारदक्षस्य अवग्रहरुचेः अनभ्रवज्रपातस्य, (३४५) स्फुरद्घनवद्यविद्याविद्युदुद्योतमानानि, गहनग्रन्थग्रन्थिगूढगर्भग्रहणगम्भीराणि, (३४६) भूरिकाव्यकथाकठोराणि, बहुशास्त्रोद्वहनवहन्ति, विदुषामपि हृदयानि न अलं सोढुम् आपातम्;

---

भावः, यद्वा,—आवेशः यस्मात् तथाभूतस्य, उत्पातसूचकदुष्टग्रहस्य च, इत्यर्थ इति।— —सकलानां—सर्वेषां, लोकानां—प्राणिनां, धर्मे—मार्गे धूमकेतुः,—उत्पातविशेष, यथैव तस्य तद्रूपत्व इत्यर्थः, "उपप्लवाय लोकानां धूमकेतुरिवोत्थितः" इति कुमारसम्भवे कालिदासः। लोकतापहारदक्षस्य—लोकत्रयतापहरणपटो, उभयत्रापि तुल्यम्, अवग्रहरुचे,—नास्ति क्षणमपि—मुहूर्तमपि रुचि,—अनुरागः, करणीयविषयेषु इति भावः, रुचि,—आहाराभिलाषो वा यस्मिन् तथोक्तस्य, अवग्रहरुचि,—अग्रप्रभा, विद्युदित्यर्थः, सा न भवति इति तस्य, अविद्युतः, विद्युद्विरहितस्येत्यर्थः, अनभ्रवज्रपातस्य—मेघाभ्यन्तरादनिपतद्वज्रपातस्य इति यावत्, अस्य—श्रीकण्ठस्य इति पूर्वेण सम्बन्धः। अत्र श्लिष्टविशेषणोपस्थितानां हृदयग्रहणादीनाम् अनभ्रवज्रपातादीनां मोहे तादात्म्याध्यासात् श्लिष्टमालारूपकमलङ्कारः।

(३४५) स्फुरदिति।—स्फुरन्ती—राजमाना, अनवद्या—अनिन्द्या, विद्या—ज्ञानम् एव, विद्युत्—सौदामनी, श्रीकाशकारात्मकत्वादर्थे तस्या विद्युदत् अधिकस्फुरणादिति भावः, तया उद्योतमानानि—उद्भासमानानि। गहनेति।—गहनानां—निर्विडानां, कठिनानामित्यर्थः, दुष्प्रवेशानामिति यावत्, ग्रन्थानां—शास्त्राणां, ये ग्रन्थयः—कूटाः, दुर्बोधस्थलप्रदेशा इत्यर्थः, तेषां गूढा,—रहस्या, गुप्ता इति यावत्, ये गर्भाः,—अन्तर्गता भावाः, पदार्थाः इत्यर्थः, तेषां ग्रहणेन—अवबोधेन, गम्भीराणि—गाम्भीर्यवत्तया अगाधानि भावगम्भीराणीत्यर्थः।

(३४६) भूरीति।—भूरिभिः,—बह्वीभिः, काव्यकथाभिः,—कविरचितसुभाषितावलिभिः कठोराणि—कठिनानि, सततकाव्यनिर्माणतत्परतया बहुशो चर्वणीयव्यापारस्य पठनाभ्यासमिति भावः, यद्वा,—विविधकाव्यकथाभिः समुद्भासिततया सुदृढीकृततया च महसा केनापि भेत्तुं द्रवीकर्तुं वा अशक्यानीत्यर्थः। बह्विति। बहूनां—प्रभूतानां, शास्त्राणां—दर्शनादीनाम्, उद्वहनेन—धारणेन, आत्मीकरणेनेत्यर्थः, वहन्ति—प्रसरन्तीत्यर्थः। आपातम्—आपतनम्, आक्रमणमित्यर्थः, अस्येति पूर्वेणान्वयः, सोढुं—सहितुं, सह्य कर्तुमिति यावत्, न अलं—न समर्थानीत्यर्थः।

(३४७) किमुत नवनवमालिकाकुसुमकोमलानां सरसबिसतन्तुदुर्बलकम् अबलानां हृदयम्।

एवं सति (३४८) सत्यव्रते! वद, किमत्र क्रियते? कतम उपालभ्यते? कस्य पुरः उच्चैः आक्रन्द्यते? हृदयदाहि दुःखं वा व्याख्यते? सर्वम् (३४९) अक्षिणी निमील्य सोढव्यम् अमूढेन मर्त्यधर्मणा। पुण्यवति! पुरातन्यः स्थितय एताः केन शक्यन्तेऽन्यथा कर्तुम्? (३५०) संसरन्त्यो नक्तन्दिवं द्राघीयस्यः

---

(३४७) किमुत—किं पुनः, नवेति।—नवा—अभिनवमुद्गता, या नवमालिका—सप्तला, पुष्पलताविशेष इत्यर्थः तस्याः कुसुमानि—पुष्पाणि इव, कोमलाः,—सुकुमाराः तासाम्। सरसेति।—सरसः—आर्द्रः, यः बिसतन्तुः,—मृणालसूत्रम्, तद्वत् दुर्बलकम्—अनुकम्प्यदौर्बल्यम्, अतीव दुर्बलमित्यर्थः ["अनुकम्पायाम्" (५।३।७६ पा०) इति कन्] किञ्चिदपि पीडनासहिष्णु इति यावत्।

(३४८) सत्यव्रते।—सत्यम्—अवञ्चितमिति भावः, व्रतम्—चारित्रमिति भावः, यस्याः तत्सम्बुद्धौ, यद्वा,—सत्यम्—सत्याचरणमेव, व्रतम्—नियमः दीक्षा वा यस्याः तत्सम्बुद्धौ। कतमः,—को जन इत्यर्थः, ["वा बहूनां जातिपरिप्रश्ने डतमच्" (५।३।९३ पा०) इति डतमच्] उपालभ्यते?—तिरस्क्रियते? आक्रन्द्यते?—रुद्यते? हृदयदाहि—मनःसन्तापकरम्। व्याख्यते—कथ्यते, ख्याप्यते इति यावत्।

(३४९) मर्त्यधर्मणा—मरणधर्मवता मानवेन इत्यर्थः ["धर्मादनिच् केवलात्" (५।४।१२४ पा०) इत्यनिच्] अमूढेन शोकातिरहितेन सता इत्यर्थः शोकेन हाम्यभिभूयेति यावत्, ["अमूढेन" इत्यत्र "मूढेन" इति पाठे,—मूढेन—जडेन, शोकविह्वलेनेत्यर्थः] अक्षिणी—नेत्रे, निमील्य—मुद्रयित्वा, सोढव्यम्—सहनीयम्। एताः,—वक्ष्यमाणा अव्यवस्थाया इत्यर्थः, पुरातन्यः—चिरन्तन्यः, अनादिकालादागच्छन्त्य इत्यर्थः, स्थितयः,—मर्यादाः अन्यथा कर्तुं—विफलीकर्तुं खण्डयितुमित्यर्थः।

(३५०) नक्तन्दिवम्—अहोरात्रं, नक्तञ्च दिवा च इति विग्रहः ["अचतुर—" (५।४।७७ पा०) इति द्वन्द्वो निपात्यते] संसरन्त्यः—प्रवहन्त्यः द्राघीयस्यः,—अतिदीर्घाः, अनन्ता इत्यर्थः, कदाऽपि न विच्छिन्ना भवन्तीति यावत्, प्रवाहरूपेण सदैव प्रवर्तन्ते इति तात्पर्यम्।

(३५१) जन्मजरामरणघटनघटीयन्त्रराजिरज्जवः पञ्चजनानाम्। (३५२) पञ्चमहाभूतपञ्चकुलाधिष्ठितान्तःकरण-व्यवहारदर्शननिपुणाः सर्वज्ञा विषमा धर्मराजस्थितयः। (३५३) क्षणमपि क्षममाणा गलन्ति आयुष्काला-

---

(३५१) पञ्चजनानाम्—मानवानाम्, ("मनुष्या मानुषा मर्त्या मनुजा मानवा नराः। स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः॥" इत्यमरः) जन्मेति।—जन्म च—उत्पत्तिश्च, जरा च—वार्धक्यमित्यर्थः, मरणञ्च—मृत्युः, तानि तद्रूपाणीत्यर्थः, घटनानि—व्यापारा एव घटीयन्त्राणाम्—उद्घाटनानाम्, कूपात् जलोद्धरणयन्त्राणामित्यर्थः, ("उद्घाटनं घटीयन्त्रं सलिलोद्वाहनं प्रहेः" इत्यमरः) राजयः—श्रेणयः, तासां रज्जवः,—गुणाः, नियतमुद्घाटनपरिमाणमवतलमोक्षणा जलोद्धरणरज्जुः प्रमाणा यथा अतिदीर्घा भवन्ति तथा उत्पत्तिवार्धक्यमृत्युपरिमिता मानवानामपि संसारा अनादिप्रवाहेण अतिदीर्घा भवन्तीति समुदितार्थः, अतिदीर्घा जलोद्धरणयन्त्ररज्जवो हि यथा घटस्थित जलानामुद्धरणकर्माणि व्याप्रियन्ते, तथैव जनानां जन्मादीनि रात्रिन्दिवं सततमेव सञ्चरन्ति इति निष्कर्षः, अत्र श्लोके विशेषोक्तिरिति तु फलितम्।

(३५२) पञ्चेति।—पञ्चानाम्—पञ्चसङ्ख्याकानाम्, महाभूतानाम्—क्षित्यादीनाम्, तद्विकाराणामित्यर्थः मानवानामिति भावः, पञ्चकुलानि—चक्षुरादीनि पञ्च ज्ञानेन्द्रियाणि इति यावत्, तानि अधिष्ठितम्—अध्यक्षतया स्थितम्, ["पञ्चकुलम्,—अध्यक्ष" इति केचित्, तदर्थे पञ्च महाभूतानि—महाभूतविकाराः चक्षुरादयः इत्यर्थः, तान्येव पञ्चकुलम्—अध्यक्षः, तत् अधिष्ठितम् आक्रम्य स्थितमित्यर्थः] अन्तःकरणम्—मनः तस्य व्यवहारः,—चेष्टितं तस्य दर्शने—अवलोकने, निपुणाः,—तत्पराः, सर्वं जानन्तीति सर्वंकषाः,—सर्वसाक्षिण इत्यर्थः, कर्मानुसारेण सर्वेषामेव अपराधात् दण्डपुरस्कारादिविधायिन इति भावः ["सर्वकूलाभ्रकरीषेषु कषः" (३।२।४२ पा०) इति सूत्रम्] धर्मराजस्थितयः,—यमकव्यापाराः विषमाः—दारुणाः, मानवाः पञ्चेन्द्रियैः यद्यदाचरन्ति, सर्वान्तर्दर्शी धर्मराजः तत् सर्वमतिनिपुणभावेन सूक्ष्मं विचारयति इति निष्कर्षः।

(३५३) क्षणमिति—क्षणम्—अत्यल्पापरिमितकालमपि अल्पसमयमपीति यावत्, क्षममाणाः—सहमानाः, अपेक्षमाणा इत्यर्थः, अगणयन्त्य इति यावत् मानवानाम् आयुषाम् इयन्तो निमेषा इयन्त्यः काष्ठाः अतिक्रान्ताः, इत्येवम् अतिसूक्ष्मकालमपि

कालनकुशला निलये निलये कालनाडिकाः। जगति (२५४) सर्व्वजन्तुजीवितोपहारघातिनी सञ्चरति झटिति चण्डिका यमाज्ञा। (२५५) रटन्ति अनवरतम् अखिलप्राणिप्रयाणप्रकटनपटवः प्रेतपतिपटहाः। प्रतिदिशं (२५६) पर्य्यटन्ति पेटकैः प्रतिपुरं प्रसभलोहलोहिताक्षाः (२५७) कालकूटकान्तिकालकायाः कालपाशपाणयः कालपुरुषाः। प्रति-

---

विचारयन्त्य इति भाव, आयुरिति।—आयुष्काळस्य—जीवितकालस्य, आकलन—सङ्ग्रहान, गणनाकरणसामर्थ्यं, [ "आयुष्कालाकलन—" इत्यत्र "आयुष्कलनाकलन—" इति पाठे,—आयुषः कलायाः,—अंशस्य, अतिसूक्ष्मभागस्येति भाव, यद्वा,—काष्ठापरिमाणस्य, ("कला स्यात्—मूलवृद्धौ। कलनाकालमानयोः॥" इति मेदिनी) कलन—सङ्ग्रानम् ] तत्र कुशलाः,—पटवः, कालनाडिकाः,—कालस्य—समयस्य, नाडिकाः,—डौराः, षट्पञ्चाशत्पल व्याप्य इत्यर्थ, घटिका इति यावत्, [ "नाडी नालेऽपि षट्क्षणे" इत्यमरः। "नाडिका" इत्यत्र "नालिका" इति पाठेऽपि स एवार्थः ] निलये निलये—गृहे गृहे, [ "नित्यवीप्सयोः" (८।१।४ पा०) इति वीप्सायां द्विर्भावः ] गणन्ति—प्रतिगच्छन्ति।

(२५४) सर्व्वेति।—सर्व्वेषां—सकलानां, जन्तूनां—प्राणिनां, जीवितमेव—जीवनमेव, उपहारः,—उपढौकनं, तत्र घातिनि—ग्रहणार्थं धावतीति तथाभूता, सर्व्वभूतजीवनापहरणनिरता इत्यर्थ, चण्डिका—भीषणा, रुद्राणी देवी च, यमाज्ञा—यमकर्त्तृकनिर्देशः।

(२५५) अखिलेति।—अखिलानां—समस्तानां, प्राणिनां—जीवानां, प्रयाणं—यमभुवनमपि गमनं, तस्य प्रकटनम्—आघोषणं, तत्र पटवः—कुशलाः, प्रेतपतिपटहाः,—प्रेतपतेः,—यमस्य, पटहाः,—वाद्यभेदाः, रटन्ति—नदन्ति, सर्व्वैव प्राणिनो यमपुरं गच्छन्तीति निष्कर्षः।

(२५६) पर्य्यटन्ति—भ्रमन्ति। पेटकैः,—समूहैः, अन्योऽन्यमेकत्रीभूय इत्यर्थः। प्रसभेति।—प्रसभम्—अत्युत्कटम्, यत् लोहम्—रक्तम्, तद्वत् लोहिते—रक्ते, अक्षिणी—नेत्रे येषां ते।

(२५७) कालेति।—कालकूटस्य—विषस्य, कान्तिरिव कान्तिः,—द्युति येषां तथाविधाः, अत एव कालाः,—कृष्णवर्णाः, कायाः,—देहाः येषां तथोक्ताः, काल-

भवन भ्रमन्ति (२५८) भीषणकिङ्करकरघट्टितयमघण्टापुटपटुटाङ्कारभयङ्कराः (२५९) सर्व्वसत्त्वसङ्घसंहरणाय घोराघातघोषणाः। दिशि दिशि (२६०) वहन्ति बहुचिताधूमधूसरितप्रेतपतिपताकापतितगृध्रदृष्टयः (२६१) शोककृतकोलाहलाकुल कुटुम्बिनीविकीर्ण केशकलाप शबल शव-शिविकासहस्रसङ्कुलाः (२६२) किलकिलायमानश्मशानशिबिरशिवा-

पाशपाणय,—कालपाश,—यमरज्जु, पाणौ—हस्ते येषां तथाविधा, कालपुरुषा,—यमदूता इत्यर्थ, प्रतिपुर पटवे पर्यटन्ति इत्यन्वय।

(२५८) भीषणेति।—भीषणाना भयङ्कराणा, किङ्कराणा—भृत्याना, यमदूतानामिति यावत्, करे,—हस्ते, घट्टिता,—धृता, ताडिता वा, या यमघण्टा,—अन्तकस्य वाद्यविशेषा, तासा पुटाना—सम्पुटाना, घण्टाया स्वर्णतुलाकारवस्तुविशेषाणामिति यावत्, पटुभि,—उत्कटै, टाङ्कारै,—"टां टां" इत्यनुकरणध्वनिविशेषे भयङ्करा —भीषणा [भय कुर्व्वन्ति या ता इत्यर्थे करोते खच मुम् च]।

(२५९) सर्वेति।—सर्वषा—समस्ताना सत्त्वाना—प्राणिना सङ्घस्य—समूहस्य, संहरण—संहार विनाश इत्यर्थ तस्मै, घोरेति।—घोरा,—दारुणा, आघाता,—ताडनानि, यासु तथाविधा घोषणा,—राजाज्ञाप्रचारा, प्रजाभिरेताभिरचिरमेव अस्तमनमागन्तव्यमित्येव यमनृपतेराज्ञाप्रचारा इति यावत् प्रतिभवन भ्रमन्ति इत्यनेनान्वय।

(२६०) वहन्ति—विराजन्ते इत्यर्थ। बह्विति।—बहुभि,—प्रभूतै, चिताधूमै,—शवदहनकाष्ठपुञ्जोत्थधूमै, धूसरिता,—ईषत्कृष्णवर्णता प्राप्ता, मलिनिता इत्यर्थ, या प्रेतपते,—अन्तकस्य, पताका,—वैजयन्त्य, तासु पतिता,—निबद्धा इत्यर्थ, शवभक्षणलालसया इति भाव, ["—पताकापतित—" इत्यत्र "—पताकापट्टपतित—" इति पाठे,—पताकासु पटु—अत्यर्थं यथा तथा, पतिता] गृध्राणा—शकुनिविशेषाणा, दृष्टय,—नयनानि यासु तथोक्ता।

(२६१) शोकेति।—शोकेन—शुचा, कृत,—विहित, य कोलाहल,—कलकलरव तेन आकुलाना—व्याकुलाना, कुटुम्बिनीना—कुलाङ्गनाना, पुरन्ध्रीणा वा, ("स्यात् तु कुटुम्बिनी पुरन्ध्री" इत्यमर) विकीर्णै,—विक्षिप्तै, केशकलापै,—कुन्तलसमूहै, शबला —विविधवर्णा, या शवाना—मृताना, शिबिका,—यानविशेषा तासा सहस्रै,—समूहैरित्यर्थ, सङ्कुला,—आकीर्णा।

(२६२) किलेति।—किलकिलायमाना,—घनसान्द्रविष्टतया भ्रमन्त, किल-

श्रावकाः (३६३) परलोकावसथपथिकसार्थप्रस्थानविशिखा-वीथयः। (३६४) सकललोककवलावलेहलम्पटा बहला वहंलिहा (३६५) लेढि लोहिताचिता चिताङ्गारकाली कालरात्रिजिह्वा जीवितानि जीविनाम्। (३६६) तृप्ति-मप्रिचिता च भगवतः सर्व्वभूतभुजो बुभुक्षा मृत्योः।

---

किलिकिलीति शब्दं शब्दं कुर्वाणा वा इत्यर्थं [ किलकिला इव आचरन्त इत्यर्थे "कर्तुः क्यङ् सलोपश्च" (३।१।११ पा० इति क्यङि शानचि च रूपम् ] श्मशानप्रियस्य —पितृवनमण्डपस्य प्रेतावासस्य इत्यर्थं ("श्मशानं स्यात् पितृवनम्" इत्यमरः) यद्वा,—श्मशानमेव प्रियं येषां तादृशा, प्रियश्मशाना,—प्रेतादिप्रियस्य यास्तु तथाविधा, भूतगणभक्षणाश्रया इति भाव।

(३६३) परलोकेति।—परलोक एव—लोकान्तरमेव [ आवसति अत्र इत्यर्थे वसते श्चयच ] आवसथ,—वसतिस्थानम् आलय इत्यर्थ, तस्य ये पथिकसार्था,—पान्थनिवहा, तेषां प्रस्थानस्य—प्रयाणस्य विशिखावीथय,—रथ्याश्रेणय, पुराभ्यन्तरस्थाः प्रशस्तमार्गसमूहा इत्यर्थ, ("रथ्या प्रतोली विशिखा" "वीथ्यालिरावलिः पङ्क्तिः श्रेणी" इत्युभयत्राप्यमरः) दिशि दिशि वहन्ति इत्यनेनान्वय।

(३६४) सकलेति।—सकलानां—सर्वेषां, लोकानामेव—प्राणिनामेव, कवलानां—ग्रासानाम्, अवलेहे —आस्वादे तत्र लम्पटा—लुब्धा। बहला—दीर्घा। वहंलिहा—छिद्रान्वेषिणी, यद्वा,—वह—स्कन्ध "वह स्यात् वृषभस्कन्धे वाहे गन्धवहेऽपि च" इति मेदिनीवचनात् वृषभस्कन्धवाचकस्य वहशब्दस्यात्र सामान्यतः स्कन्धार्थे एव प्रयोगो बोद्धव्य, लेढि—आस्वादयति, स्कन्धशोणितं पिबतीति भाव या सा, स्कन्धं भोटयित्वा रक्तपायिनीत्यर्थ, यद्वा,—वह—गन्धवह, प्राणवायुमिति भाव, लेढि या सा, प्राणनाशिनीत्यर्थ, [ "वहाभ्रे लिहः" (३।२।३२ पा०) इति खश् ]।

(३६५) लेढि—आस्वादयति। लोहिताचिता—रक्तव्याप्ता, जीवानां रक्त-पानादिति भाव, चिताङ्गारकाली—चिताङ्गारवत्—शवदाहचुल्लिस्थाग्निरहिता-ङ्गारवत्, काली—कृष्णवर्णा कालरात्रिजिह्वा—कालरात्रे,—यमभगिन्या, सर्वभूत-प्राणापहारिण्या मृत्युदेव्या वा, कल्पान्तरात्रेर्वा, जिह्वा—रसना।

(३६६) सर्वभूतभुज,—सर्वप्राणिभक्षकस्य, मृत्यो,—यमस्य ("मृत्युर्ना मरणे यमे" इति मेदिनी) बुभुक्षा—क्षुधा, तृप्ति—सन्तोषम्, अप्रिचिता—न प्रिचिता,

(३६७) अतिद्रुतवाहिनी च अनित्यतानदी। (३६८) क्षणिकाश्च महाभूतग्रामगोष्ठ्यः। (३६९) रात्रिषु भङ्गुराणि गात्रयन्त्रपञ्जरदारूणि देहिनाम्। (३७०) अशुभशुभावेशविवशा विशरारवः शरीरनिर्माणपरमाणवः। (३७१) छिद्रा जीवबन्धनपाशतन्त्रीतन्तवः। सर्व्वमात्मनोऽनीश्वरं विश्वं नश्वरम्।

---

शिक्षानप्राप्ता, अनिद्राणाभावात् इत्यर्थः, [ शिक्षते अयस्य औणादिकस्य कर्त्तरि निष्ठायां रूपम् ]। बहुभोजनेनापि यस्याः निद्रा न जायते इति भावः।

(३६७) अनित्यतानदी—अनित्यता—क्षयशीलता एव, नदी—सरित्, अतिद्रुतेति।—अतिद्रुतम्—अतिशीघ्रम्, वहति—गच्छतीति तथोक्ता, अनित्यमिदं जीवनं द्रुतमेव क्षयतीत्यर्थः।

(३६८) महेति।—महाभूतानां—क्षित्यादीनां पञ्चानां ग्रामस्य—समूहस्य, गोष्ठ्यः,—समाजाः, सभा इत्यर्थः, पञ्चमहाभूतात्मका जीवसभा इति यावत्, क्षणिकाः,—क्षणस्थायिन्यः।

(३६९) गात्रेति।—गात्र—शरीरमेव ["गात्र—" इत्यत्र "पात्र—" इति पाठे,—पात्रम्—आधारः, जीवस्येति शेषः, शरीरमित्यर्थः, तदेव] यन्त्र—नियमकारित वस्तुविशेषः, तस्य पञ्जराः,—अस्थीनि एव, दारूणि—काष्ठानि, रात्रिषु—रजनीषु प्रतिरात्रि इत्यर्थः, भङ्गुराणि—भङ्गप्रवणानि, प्रतिनिशान्ते आयुष्कालस्य एकैकदिनक्षयादिति भावः।

(३७०) अशुभेति।—अशुभानां—दुष्कृतानां शुभानाञ्च—सुकृतानाञ्च, आवेशेन—अधिष्ठानेन विवशाः,—परायत्ताः, सुकृतदुष्कृतकर्म्मानुसारेण शुभाशुभफलभोगिनः न तु स्वेच्छया शुभमशुभं वा जीवाः समर्था इति भावः, स्वेच्छाऽभावेऽपि पश्वादियोनिषु गमनादिति तात्पर्य्यम्, शरीरनिर्माणपरमाणवः,—देहघटकद्व्यणुकारम्भकपदार्थविशेषाः, विशरारवः —वि—विशेषेण शरारवः,—परस्परमुपघातकाः, परस्परोपघातेन विश्लेषात् चिरस्थायिन इत्यर्थः, ("शरारुर्घातुको हिंस्रः" इत्यमरः) सत्यन्ते देहे नष्टेऽपि परमाणूनामविनाशित्वादिति भावः, ["शॄवन्द्योरारुः" (३।१।१७२ पा०) इति विपूर्व्वकात् शृणातेः आरुः]।

(३७१) जीवेति।—जीवानां—प्राणिनां, बन्धनस्य—संसारबन्धनस्य, पाशानां—रज्जूनां, तन्त्रीतन्तवः,—तन्त्रीरूपाणि सूत्राणि, यद्वा,—जीवानां बन्धनाय

एवम् (२७२) अवष्टभ्य नात्यर्थम् एवं अर्हसि मेधाविनि ! मृदुनि मनसि तमसः प्रसरं दातुम्। एको हि (२७३) प्रतिसङ्ख्यानक्षणे आधारीभवति धृतेः। अपि च दूरगतेऽपि हि शोके ननु इदानीम् अपेक्षणीय एव अयं ज्येष्ठः पितृकल्पो भ्राता

—संसारकारायां समर्गलाय, पाशः,—मृगपक्ष्यादिबन्धनाय वागुरा इत्यर्थः, ("पाशः केशादिपूर्वः स्यात् तस्मादे कर्णपूर्वकः। सुकर्षं च स्वसामर्थ्यान्मृगपक्ष्यादिबन्धने॥" इति मेदिनी) तेषां सम्बीतस्य, छिदुरा,—विच्छेदप्रवणा, ["विदिभिदिच्छिदेः कुरच्" (३।२।१६२ पा०) इति कुरच्]। आयतनं,—स्थानं, अनीश्वरम्—अनायतनम्, नास्ति ईश्वरो यस्मिन् तत्, ईश्वरभिन्नमित्यर्थः, केवलमीश्वरस्यैव नित्यत्वेन तदायत्तस्य सर्वस्यैव स्थिरत्वादिकमपि व्यज्यते, सर्वं—समस्तं, विश्वं—जगत्, विश्वस्मिन् वस्तुजातमिति यावत्, नश्वरं—नाशप्रवणं, क्षणिकं सत्त्वमिव भासमानं, तेषां स्थायित्वसम्पादने तस्य कस्यापि सामर्थ्यं नास्तीत्याशयः।

(२७२) अवष्टभ्य—निरुध्य।—अर्हसि—योग्या भवसि। मेधाविनि! इति राज्यश्रिया आमन्त्रणपदं, धारणावद्बुद्धिशालिनि इत्यर्थः, ["अस्मायामेधास्रजो विनिः" (५।२।१२१ पा०) इति मेधाया मत्वर्थे विनिः, ततः ङीप्]। मृदुनि—कोमले, दुःखसहनासहे इति यावत्। ["मनसि" इत्यत्र आधारस्यैव वाच्यत्वात् न चतुर्थी]। तमसः,—मोहस्य, प्रसरं—विसर्पणं विस्तारमित्यर्थः, अवसरमिति यावत्।

(२७३) प्रतिसङ्ख्यानक्षण इति।—प्रतिसङ्ख्यानं—विवेककुशला मतिः तस्य क्षणः,—समयः, तदाविर्भावकाले इत्यर्थः, धृतेः,—धैर्यस्य, आधारीभवति—आश्रयतामापद्यते [अनाधारः आधारः सम्पद्यमानो भवतीत्यभूततद्भावार्थे "कृभ्वस्तियोगे—" (५।४।५० पा०) इति च्विः] विवेकिनी बुद्धिरेव धैर्ये विधत्ते इति भावः, सर्वमेवेदमनित्यमिति विवेकिन्या बुद्ध्या आकलय्य स्वयमेव धैर्यमवलम्बस्व, मा अधीरा भव इति वक्त्राशयः। दूरगते—दूरम्—अतिशयेन गते—प्राप्ते, आरूढ इत्यर्थः तस्मिन् अतिवर्द्धितेऽपीति यावत्। नन्विति सम्बोधने भोः इत्यर्थः। इदानीम्—ईदृश्यां दशायामित्यर्थः, वैधव्यदशायामिति यावत् पित्रादेर्नाम-भावे, भ्रातुः परिरक्षणाय लोकाभावाच्च इति वा भावः। अपेक्षणीयः—अनुसरणीय इत्यर्थः, नारीणां स्वातन्त्र्याभावादिति भावः, यद्वा,—अपेक्षणीयः—द्रष्टव्यः, एतादृशस्य भ्रातुर्मुखं प्रति दृष्टिपातः कर्तव्य इति भावः। पितृकल्पः,—पितृसदृशः; ["ईषदसमाप्तौ—" (५।३।६७ पा०) इति ईषदूनार्थे कल्पप्]।

भवत्या गुरुः। (२७४) इतरथा को न बहु मन्येत कल्याणरूपम् ईदृशं सद्व्रतम् अत्रभवत्याः काषायग्रहणक्रतम्? (२७५) अखिलमनोज्वरप्रशमनकारणं हि भगवती प्रव्रज्या। ज्यायः खलु इदं पदम् आत्मवताम्। (२७६) महाभागस्तु भिनत्ति मनोरथम् अधुना। यत् अयम् आदिशति, तदेव अनुष्ठेयम्। (२७७) यदि भ्राता इति, यदि ज्येष्ठ इति, यदि वत्सल इति, यदि गुणवान् इति, यदि राजा इति, सर्वथा स्थातव्यम् अस्य नियोगे" इति उक्त्वा (२७८) व्यरंसीत्।

(२७९) उपरतवचसि च तस्मिन् निजगाद नरपतिः,—

---

(२७४) इतरथा—अन्यथा, नो चेदित्यर्थः, अत्रभवत्याः—मान्यायाः, ईदृशं—काषायग्रहणरूपमित्यर्थः, कल्याणरूपं—मङ्गलरूपं, श्रेयोभूयिष्ठमित्यर्थः, सद्व्रतम्—अभिलाषं को न बहु मन्येत?—आद्रियेत?।

(२७५) भगवती—सर्वशक्तिमती, प्रव्रज्या—संन्यासधर्मः, अखिलेति।—अखिलस्य—समग्रस्य मनोज्वरस्य—मनःपीडायाः, प्रशमनम्—अपनयनं, तस्य कारणं—हेतुः। आत्मवताम्—मनस्विनाम्, इदं पदं—काषायग्रहणमित्यर्थः ज्यायः,—श्रेष्ठमित्यर्थः, ["ज्य च" (५।३।६१ पा०) इति ईयसुनि प्रशस्यस्य ज्यादेशः, "ज्यादादीयसः" (६।४।१६० पा०) इति ज्यादुत्तरस्य ईयसुन आकारादेशश्च]।

(२७६) महाभागः—श्रीमान् हर्षः मनोरथं—सङ्कल्पं, भिनत्ति—खण्डयति, विफलीकरोतीत्यर्थः आतुरे भ्रातरि विलोक्य सङ्कल्पोऽयमिदानीं परित्याज्य इति भावः। अनुष्ठेयं—कर्त्तव्यम्।

(२७७) यदि भ्रातेत्यादि।—यदि भ्राता, अत एव अयं मान्य इति चेत्, इति, मन्यसे इति शेषः, एवं ज्येष्ठादिष्वपि योजनीयम्। वत्सलः,—स्निग्धः, त्वयि स्नेहपरायण इत्यर्थः, ["वत्सांसाभ्यां कामबले" (५।२।९८ पा०) इति लच्]। तदा सर्वथा—सर्वैः प्रकारैः, अस्य नियोगे—आज्ञायां, स्थातव्यं—वर्त्तितव्यम्।

(२७८) व्यरंसीत्—विरराम, ["व्याङ्परिभ्यो रमः" (१।३।८३ पा०) इति परस्मैपदम्]।

(२७९) तस्मिन्—दिवाकरमित्रे, ["यस्य च भावेन—" (२।३।३७ पा०) इति सप्तमी] उपरतवचसि—निवृत्तवाक्ये, नरपतिः,—हर्षः, निजगाद—उवाच।

"आर्यम् अपहाय कोऽन्य एवम् अभिदध्यात्? अनभ्यर्थितदैव-निर्मिता हि विषमविपदवलम्बनस्तम्भा भवन्तो लोकस्य। (३८०) स्नेहार्द्रमूर्त्तयो मोहान्धकारध्वंसिनश्च धर्मप्रदीपाः; किन्तु (३८१) प्रणयप्रदानदुर्ललिता दुर्लभमपि मनोरथम् अतिप्रीतिः अभिलषति। (३८२) धीरस्यापि धार्ष्ट्यम् आरोपयति (३८३) हृदयलघिमलङ्घितम् अतिवल्लभत्वम्।

---

अपहाय—त्यक्त्वा, आर्ये विनेत्यर्थः। अभिदध्यात्—कथयेत्। अनभ्यर्थितेति।—अनभ्यर्थिता,—न अभ्यर्थिता,—न याचिता, अथ च दैवेन—विधिना, अनुकूलेनेति भावः, यद्वा,—अनभ्यर्थितम्—अप्रार्थितं, यत् दैवं—सौभाग्यमित्यर्थः, अयाचितमयैवोपनतम् इति भावः तेन निर्मिताः—सृष्टाः, प्रयोजिता इत्यर्थः, विषमेति।—विषमा—दारुणा, विपत्—विपत्तिः, तत्र अवलम्बनस्तम्भाः,—आश्रयस्थानानीत्यर्थः, अयाच्यमाना अपि भवन्तः करुणावशात् विपन्नानामप्रार्थितसौभाग्यबलेनैव अकस्मादागत्य विपदस्त्रायन्ते इति सरलार्थः।

(३८०) स्नेहेति।—स्नेहेन—प्रीत्या, तैलादिना च, आर्द्रा—सरसा, सिक्ता च, मूर्त्तिः,—आकारः येषां तथोक्ताः, मोहेति।—मोहः,—अज्ञानता एव, अन्धकारः—तिमिरम्, आवरकस्वभावादिति भावः, तस्य ध्वंसिनः,—नाशिनः, उपदेशप्रदानेन आलोकदानेन च इति भावः, धर्मप्रदीपाः,—धर्ममयाः दीपाः, धर्ममाश्रिताः सर्व्वभूतेष्वेव दयापराः सदुपदेशदायकाश्चेत्यर्थः।

(३८१) प्रणयेति।—प्रणयस्य—स्नेहस्य, प्रदानेन—अर्पणेन प्रदानेनेति यावत्, दुर्ललिता—जनितस्पर्द्धेत्यर्थः अतिप्रीतिः,—अतिप्रणयः, दुर्लभमपि—दुष्प्रापमपि, मनोरथम्—अभिप्रेतम्, अभिलषति—आकाङ्क्षति।

(३८२) धीरस्य—प्रज्ञावतः, गम्भीरस्य इत्यर्थो वा, धार्ष्ट्यम्—उद्धतत्वं, प्रागल्भ्यमित्यर्थो वा, आरोपयति—जनयति, [ आङ्पूर्व्वकात् रोहते णिचि लटि रूपं "रुह पोऽन्यतरस्याम्" (७।३।४३ पा०) इति हकारस्य पः ]।

(३८३) हृदयेति।—हृदयस्य—चेतसः, लघिम्ना—लघुत्वेन, चापल्येनेत्यर्थः, लङ्घितम्—अतिक्रान्तम्, अतिभूमिं गतमित्यर्थः, दुर्व्वलचेतस्तया अहमेवास्य अतिप्रियतमा इति निश्चयादतिप्रवृद्धमिति भावः, यद्वा—हृदयस्य लघिमा—लघुत्वं, सङ्कोच इत्यर्थः, लङ्घितः,—अतिक्रमितः, दूरीकृतः इत्यर्थः, वात्सल्यवत् समीपे कोऽपि सङ्कोचः न कर्त्तव्यः इति धियेति भावः येन तत्, अतिवल्लभत्वम्—अतिप्रियत्वम्, अतिप्रियत्वज्ञानमित्यर्थः।

(३८४) युक्तायुक्तविचारशून्यत्वाच्च शालीनम् अपि खिलयन्ति स्वार्थतृष्णाः प्रागल्भ्याम्। (३८५) अभ्यर्थनाया रक्षन्ति च जलनिधय इव मर्य्यादाम् आर्य्याः। इत्थमेव च (३८६) शरीरमिदम् अनभ्यर्थितेन प्रथममेव आतिथ्याय माननीयेन भवता मह्यम्। अतः किञ्चित् अर्थये भदन्तम्,—इयं नः स्वसा बाला च (३८७) बहुदुःखखेदिता च सर्व्वकार्य्यावधीरणोपरोधेनापि यावत् लालनीया नित्यम्। अस्माभिश्च (३८८) भ्रातृवधापकारिरिपुकुलप्रलयकरणोद्यतस्य बाहोर्विधेयैः भूत्वा सकललोकप्रत्यक्षं

---

(३८४) स्वार्थतृष्णा —स्वकार्य्यसिद्ध्यभिलाषा, युक्तेति।—युक्तायुक्तयोः,—कार्य्याकार्य्ययोः, विचारे—वितर्के, शून्य,—अक्षम, तस्य भाव तत्त्वात्, शालीनम् —अधृष्ट धीरमित्यर्थं, विनीतमिति यावत्, जनमिति शेष, ("स्यादधृष्टे तु शालीन" इत्यमर) प्रागल्भ्यम—धौद्धत्य धृष्टतामित्यर्थं।

(३८५) अभ्यर्थनाया —प्रार्थनाया मर्य्यादामित्यनेन सम्बन्ध। ["अभ्यर्थनायाः" इति हेतौ पञ्चमी वा]। रक्षन्ति—पालयन्ति, नोल्लङ्घयन्ति इत्यर्थ, जलनिधय —सागराः। मर्य्यादा—सीमा, वेलाच।

(३८६) इद—दृश्यमान, भवदीयमित्यर्थं। अनभ्यर्थितेन—अयाचितेन। आतिथ्याय—अतिथिसत्काराय, अतिथये वा, ("स्यादातिथ्यमतिथ्यर्थे त्रिलिङ्गमतिथौ पुमान" इति मेदिनी) अत —स्वशरीरस्यार्पणात्, भदन्त—बौद्धाचार्य्यं त्वामित्यर्थं, अर्थये—याचे।

(३८७) बहुदुःखखेदिता—अत्यन्ताऽधिक्लिष्टा। सर्वकार्य्येति।—सर्वेषा—सकलाना, कार्य्याणा—कर्म्मणाम्, अवधीरणम—अवहेलनमेव उपरोध,—प्रतिबन्ध, यद्वा,—सर्वकार्य्यावधीरणी—निखिलकर्म्मपरित्यागी, य उपरोध,—अनुरोध सर्वकार्य्यच्युति सहित्वाऽपीत्यर्थं, यावत् लालनीया—यत्नेन पालनीया एव, ("यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे" इत्यमर)।

(३८८) भ्रातृवधेति।—भ्रातु,—राज्यवर्द्धनस्य वधेन—हननेन, अपकारिण, —द्रोहिण, ये रिपव,—शत्रव, तेषा कुलस्य—वंशस्य प्रलयकरण—विध्वंसन, तत्र उद्यत —प्रवृत्त तस्य, बाहो —भुजस्य, विधेयैः,—वशवर्त्ते अधीनैरित्यर्थं, भुजबलगर्व एव भ्रातृघातिना समूलमुन्मूलनाय मामादिशदित्यर्थं।

प्रतिज्ञा कृता। (३८९) पूर्व्वावमाननाऽभिभवम् असहमानैः अर्पित आत्मा कोपस्य। अत (३९०) नियुङ्क्तां कियन्तमपि कालम् आत्मानम् आर्य्योऽपि कार्य्ये मदीये। दीयताम् (३९१) अतिथये शरीरम् इदम्। अद्य प्रभृति यावदयं जनः (३९२) लघयति प्रतिज्ञाभारम्, आश्वासयति च तातविनाश-दुःखविक्लवाः प्रजाः, तावत् इमाम् अत्रभवतः कथाभिश्च धर्म्याभिः, (३९३) कुशलप्रतिबोधविधायिभिः उपदेशैश्च अरजोभिः, (३९४) शोकोपशमदायिनीभिश्च देशनाभिः,

(३८९) पूर्व्वेति।—पूर्व्वया—प्रथमया, अप्राप्तपूर्व्वयेति भावः मुख्यया वा, अवमाननया—अवज्ञया, मातृवधरूपया इति भावः, यः अभिभवः,—तिरस्कारः तम्, असहमानैः,—अक्षममाणैः, सोढुमशक्नुवानैरित्यर्थः, कोपस्य—क्रोधस्य, आत्मा—मनः, धैर्य्यं वा, ("आत्मा यत्ने धृतौ बुद्धौ स्वभावे ब्रह्मवर्ष्मणोरपि। धृतावपि मनीषायां शरीरब्रह्मणोरपि॥" इति मेदिनी) अर्पितः,—दत्तः, कोपाकुलोऽस्मीति भावः।

(३९०) आत्मानम्—शरीरम्, मदीये कार्य्ये—मम हितसम्पादने इत्यर्थः, नियुङ्क्तां—नियुक्तं करोतु ["स्वराद्यन्तोपसर्गादिति वक्तव्यम्" इति वार्त्तिकात् युजेरात्मनेपदम्] यथा मम सुमङ्गलं स्यात्, तथा भवता आचरितव्यमिति भावः।

(३९१) अतिथये—गृहागताय, मह्यमिति शेषः।

(३९२) लघयति—लघूकरोति, अवतारयतीति यावत्, प्रतिज्ञां निस्तरतीति भावः। तातेति।—तातस्य—"पुत्रे पितरि पूज्ये च तातशब्दः प्रयुज्यते" इति वचनात् ज्येष्ठस्येत्यर्थः, विनाशेन—अपायदर्शनेनेत्यर्थः, यत् दुःखं—मनःपीडा, तेन विक्लवाः,—विह्वलाः, आर्त्ता इत्यर्थः, प्रजाः,—प्रकृतीः, आश्वासयति—सान्त्वयति। इमाम्—मत्स्वसारम् अत्रभवतः,—पूज्यस्य ते, धर्म्याभिः,—धर्म्मादनपेताभिः, धर्म्मोपदेश-समन्विताभिरित्यर्थः ["धर्म्मपथ्यर्थ—" (४।४।९२ पा०) इति यत्]।

(३९३) कुशलेति।—कुशलानां—मङ्गलानां, प्रतिबोधः,—विज्ञानं, तं विदधति—जनयन्तीति तथोक्तैः, शोकविनाशदैश्चेरित्यर्थः, अरजोभिः,—रजोगुणवर्ज्जितैः, सत्त्वोद्रेककरैः इति भावः।

(३९४) शोकोपशमदायिनीभिः,—शोकस्य—दुःखावेगस्य, सर्व्वदा शोकदुःख-मग्नस्येति भावः, उपशमदायिनीभिः,—प्रशमकारिणीभिः, मनसः शान्तिजननीभि-रित्यर्थः, देशनाभिः,—कथाभिः, शिक्षाभिरित्यर्थः।

(२९५) क्लेशप्रहाणहेतुभूतैः तथागतैः दर्शनैः, (२९६) अस्मत्पार्श्वोपयायिनीमिव प्रतिबोध्यमानाम् इच्छामि। इयन्तु ग्रहीष्यति मयैव (२९७) समं समाप्तकृत्येन काषायाणि। अर्थिजने च किमिव न अतिसृजन्ति महान्तः? (२९८) सुरनाथम् आत्मास्थिभिः अपि यावत् कृतार्थम् अकरोत् धैर्योदधिः दधीचः। (२९९) मुनिनाथोऽपि अनपेक्षितात्मस्थितिः

---

(२९५) क्लेशेति।—क्लेशस्य—संसारसन्तापस्य, प्रहाण—क्षय, तस्य हेतुभूतानि—कारणरूपाणि तैः, भ्रान्तिमर्दकैरित्यर्थ, तथागतैः,—ताहशैः, दर्शनैः—ज्ञानैः, दृष्टान्तैः वा, यद्वा,—तथागत —बुद्ध, ("सर्वज्ञ सुगतो बुद्ध धर्मराजस्तथा गत" इत्यमर) तस्य इव तथागतैः, बुद्धसम्बन्धिभिरित्यर्थः, दर्शनैः,—शास्त्रैः, बौद्धशास्त्रप्रबोधप्रदैः उपदेशवचनैरित्यर्थः, (दर्शनं नयनस्वप्नबुद्धिधर्मोपलब्धिषु। शास्त्रदर्पणयोश्च" इति मेदिनी)।

(२९६) अस्मदिति।—अस्माकं पार्श्वं—समीपम्, उपयाति—उपगच्छति, तिष्ठतीत्यर्थः तथोक्ताम्, अस्मत्पार्श्ववर्त्तिनीं प्रतिबोध्यमानाम्—उपदिश्यमानाम् अस्मत्पार्श्वस्थितामिवात्मानं यथा बुध्यते तथा क्रियमाणाम् इत्यर्थः यावदहं रिपुकुलोन्मूलनाय प्रजानन्दाय च व्यापृतस्तिष्ठामि तावन्मदीयभगिनीमिमां स्वपार्श्वमवस्थाप्य तथा प्रतिबोध्यतां, यथेयं मद्दर्शनात् न धीरीभवति, परन्तु अस्मत्समीपवर्त्तिनीमिव आत्मानं मन्यते इति भाव।

(२९७) समं—सह। समाप्तकृत्येन—कार्यं समाप्तवता, शत्रुविनाशरूपं प्रजानन्दनरूपञ्च कार्यं समाप्येत्यर्थः। अर्थिजने—याचकजने। अतिसृजन्ति—ददति।

(२९८) धैर्योदधि,—धैर्यसागर, दधीच,—तदाख्यमुनि, आत्मास्थिभि,—आत्मन,—स्वस्य, अस्थिभि,—कङ्कालैः, सुरनाथम्—इन्द्र, यावत—अवधारणे, साकल्ये वा, कृतार्थं—सिद्धमनोरथ, सम्पूर्णरूपेण कृतकृत्यमित्यर्थ। असौ हि दधीच्यपरनामा मुनिः वृत्रासुरवधोद्यताय इन्द्राय वज्रनिर्माणार्थं स्वदेहस्यास्थीनि सम्प्रादात्, वज्ररूपैः तैश्चासौ ■ निजघानेति पौराणिकी वार्त्ताऽत्रानुसन्धेया।

(२९९) मुनिनाथ,—मुनीन्द्र, सुगत इति यावत, ("सर्वज्ञ सुगतो, बुद्ध ०। मुनीन्द्र श्रीघन शास्ता" इत्यमर) अनपेक्षितेति।—न अपेक्षिता—न विरचिता, आत्मन,—स्वशरीरस्य, स्थिति,—रक्षा येन तथाभूत, स्वशरीररक्षा-

अनुकम्पा इति ज्ञात्वा कृपावान् आत्मानं (४००) बठरसत्त्वेभ्यः कतिकृत्वो न दत्तवान्? अतः परं भवन्त एव बहुतरं जानन्ति" इत्युक्त्वा तूष्णीम्बभूव भूपतिः।

भूयस्तु बभाषे भदन्तः,—(४०१) "भव्या न द्विः उच्चारयन्ति वाचम्। चेतसा प्रथममेव प्रतिग्राहिता गुणाः कायबलिम् इमाम् अमुना जनेन। (४०२) उपयोगस्तु निरुपयोगस्य अस्य लघुनि गुरुणि वा कृत्ये गुणवदायत्तः" इति।

---

अनपेक्षमाण इत्यर्थः, अनुकम्पा—दया, इति ज्ञात्वा—इति मत्वा, अनुकम्पार्हं इति विविच्येत्यर्थः।

(४००) बठरसत्त्वेभ्यः,—जडप्राणिभ्यः, सिंहादिभ्य इति भावः, कतिकृत्वः,—कतिवारान्, ["संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्" (५।४।१७ पा०) इति कृत्वसुच्] श्रूयते हि पुरा कामपि सिंहीं सद्यः प्रसूतां बुभुक्षया स्वशावकान् भक्षयितुं प्रवृत्तां दृष्ट्वा बुद्धदेवः करुणापरतन्त्रतया तस्यै स्वमांसप्रदानेन तान् शावकान् अरक्षदिति। बहुतरं—प्रचुरं, मदुक्ताभ्यामाभ्यामन्यविधम् अपि एभ्यः स्वदेहदानरूपमुदाहरणमित्यर्थः।

(४०१) भव्याः,—साधवः। द्विः,—द्विवारं, द्विप्रकारं वा, ["द्वित्रिचतुर्भ्यः सुच्" (५।४।१८ पा०) इति सुच्]। अमुना जनेन—अनेन लोकेन, मयेति भावः, प्रथममेव—दर्शनक्षण एवेत्यर्थः, गुणाः,—धैर्यौदार्यादय इत्यर्थः, भवदीया इति भावः, इमां—परिदृश्यमानां मदीयामित्यर्थः, कायबलिं—शरीररूपमुपहारं, ["बलिः पूजोपहारयोः" इत्यमरः। "करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियाम्" इत्यमरोक्तेः अत्र उपहारार्थकबलिशब्दस्य स्त्रीलिङ्गत्वं चिन्तनीयं, तेन "इमाम्" इत्यत्र "इमम्" इति पाठः समीचीनः] प्रतिग्राहिता,—कृतप्रतिग्रहा कृता, प्रतिग्रहं कारिता इत्यर्थः, स्वीकरणमापादिता इति यावत्। ("प्रतिग्रहः स्वीकरणे सैन्यपृष्ठे पतद्ग्रहे" इति मेदिनी) अहं भवद्भ्यः शरीरमिदमुपहारीकृतवान् इति निष्कर्षः।

(४०२) निरुपयोगस्य—निष्प्रयोजनस्य, परस्मादुपयोगमनपेक्षमाणस्येति भावः, अस्य, भवतः इति शेषः, उपयोगः,—उपकारः, गुणवत्—सम्यक् इत्यर्थः, आयत्तः,—अधीनः, अहं यावज्जीवमनेन कायेन भवतः उपकारं विधास्यामीति तात्पर्यम्, यद्वा,—निरुपयोगस्य—केनापि सत्कृत्ये अनुपयोगितया व्यर्थीभूतस्य इति भावः,

अथ (४०३) तथा तस्मिन् अभिनन्दितप्रणये प्रीयमाणः पार्थिवः तत्र ताम् उषित्वा विभावरीम् (४०४) उषसि वसनालङ्कारादिप्रदानपरितोषितं विसर्ज्य निर्घातम् (४०५) आचार्येण सह स्वसारम् आदाय प्रयाणकैः कतिपयैः एव कटकम् अनुजाह्नवि निविष्टं प्रत्याजगाम ।

तत्र च (४०६) राज्यश्रीप्राप्तिव्यतिकरकथां कथयन् एव

---

अद्य—अत्र, मदीयकार्यस्य इत्यर्थः, लघुनि—स्वल्पायाससाध्ये इत्यर्थः, गुरुणि—प्रचुरायाससाध्ये इत्यर्थः, कृत्ये—कार्ये, उपयोगः—व्यवहारः, नियोग इत्यर्थः, गुणवदायत्तः,—गुणवत्,—गुणिनि भवत, आयत्तः,—अधीनः, मया पूर्वमेव शरीरमिदं भवद्गुणेभ्य उपहारीकृतम्, अत शरीरेऽस्मिन् गुणिनो भवत एव पूर्णाधिकारः, अधुना लघुनि गुरुणि वा यादृशि एव कार्ये इह नियोजयसि, तदेवाहमविचारितं करिष्यामीति निष्कर्षः ।

(४०३) तस्मिन्—दिवाकरमित्रे, तथा—तादृशप्रकारेणेत्यर्थः, अभिनन्दितप्रणये—अभिनन्दितः,—सादरं समर्थित इत्यर्थः, प्रणयः—याच्ञा येन तस्मिन् ("प्रणयः प्रश्रये प्रेम्णि याच्ञाविश्रम्भयोरपि" इति मेदिनी) आदरेण गृहीताभ्यर्थने इति इत्यर्थः, प्रीयमाणः,—तुष्यन्, ["प्रीयते" इत्यस्य धातोः दैवादिकस्य शानचि रूपम्]। विभावरीं—रजनीम् ["अकर्मकधातुभिर्योगे देशः कालः—" इति वार्त्तिकात् कालभावस्य कर्मत्वम्] उषित्वा—वासित्वा, अवस्थाय इत्यर्थः ।

(४०४) उषसि—प्रभाते, वसनेति ।—वसनानि—वस्त्राणि, अलङ्काराश्च—आभरणानि च, आदयो येषां तानि, वसनालङ्कारादीनि, तेषां प्रदानेन—अर्पणेन, परितोषितः,—प्रीणितः तं, निर्घातं—प्रागुक्तं शबरयुवानं, विसर्ज्य—परित्यज्य, स्वस्थानं सम्प्रेष्येत्यर्थः ।

(४०५) आचार्येण—श्रमणगुरुणा दिवाकरमित्रेण । कतिपयैः,—स्वल्पैः, प्रयाणकैः,—यात्राभिः, स्वल्पैरेव दिनैः स्वल्पैरेव प्रयाणैर्वा इत्यर्थः, अनुजाह्नवि—जाह्नवी—गङ्गा, तस्याः अनु—तटसमीपे इत्यर्थः, ["अनुर्यत्समया" (२।१।१५ पा०) इत्यव्ययीभावः, "अव्ययीभावश्च" (२।४।१८ पा०) इति नपुंसकत्वञ्च] निविष्टं—स्थितं, कटकं—शिविरम् ।

(४०६) राज्येति ।—राज्यश्रिया,—तन्नाम्न्या हर्षभगिन्या, प्राप्तिः—लाभः, व्यतिकरः,—सम्बन्धः, अर्थात् सम्मेलनमित्यर्थं, यद्वा,—व्यतिकरः,—व्यसनं,

प्रणयिभ्यो रविरपि ततार गगनतलम्। (४०७) बहलमधुपङ्कपिङ्गलः पङ्कजाकर इव सञ्चुकोच चक्रवाकवल्लभो वासरः। (४०८) प्रकीर्णानि नवरुधिररसारुणवर्णानि लोकालोकजुंषि (४०९) यजूंषि इव कुपितयाज्ञवल्क्यवक्त्रवान्तानि निजवपुषि

राज्यश्रीसङ्गात् विरचितरित्यर्थः, ("अथ व्यतिकरः पुंसि व्यसनव्यतिषङ्गयोः" इति मेदिनी) तयोः कथा—वार्त्ता, प्रणयिभ्यः,—सुहृद्भ्यः, ["क्रियया यमभिप्रैति—" (पा०) इति चतुर्थी] कथयन्—वदन्, ["लक्षणहेत्वोः क्रियायाः" (३।२।१२६ पा०) इति हेतौ शतृ। "कथयन्" इत्यत्र "कथयत" इति पाठे—कथयतां इत्यनादरेऽन्वयः, "षष्ठी चानादरे" (२।३।३८ पा०) इति षष्ठी] ततार—उल्लङ्घयत्, अस्ताचलमगमदित्यर्थः।

(४०७) बहलेति।—बहलेन—प्रभूतेन, मधुना—मकरन्देन, पङ्केन—द्रवेण इत्यर्थः, पिङ्गलः,—कपिलः, वासरोऽपि परिणतिकाले पिङ्गलवर्णो भवति, पङ्कजाकर इव—पद्माकर इव, चक्रवाकवल्लभः,—चक्रवाकानां—रथाङ्गनाम्नां, वल्लभः,—प्रियः, मिलनसम्पादकत्वादिति भावः, वासरः,—दिवसः, सञ्चुकोच—सङ्कुचितवान्, क्षीणतामयासीत् इत्यर्थः। पङ्कजाकरोऽपि सायाह्नसमये चक्रवाकवल्लभः, इति तेन सह वासरस्यार्थसाम्योक्तेरुपमालङ्कारः।

(४०८) प्रकीर्णानि—विस्तारितानि, दिक्षु विदिक्षु च व्याप्तानीत्यर्थः। नवेति।—नव,—प्रत्यग्र, सद्योनिर्गत इत्यर्थः, रुधिररस,—रक्तद्रव तद्वत्, तेन च अरुण,—लोहित, वर्णः,—रूपं येषां तानि लोकालोकजुंषि—लोकालोकः,—सप्तानामपि सूर्यकिरणसम्पर्कसीमापर्वत इति यावत्, तस्य पार्श्वोपरितनस्य तद्भागस्य च सम्बन्धात् स्थास्नूनिति ज्ञातव्यं च जुषन्ते—सेवन्ते, आश्रयन्तीत्यर्थः तथोक्तानि, लोकालोकपर्वताश्रयीणि इत्यर्थः, लोकदृष्टिप्रीतिकराणि इति भावः, ["जुषते" इत्यस्य भौवादिकस्य कर्त्तरि क्विप्] अन्यत्र,—लोकानां—जनानाम्, आलोक—दर्शनम् ("आलोको दर्शनोद्द्योतौ" इत्यमरः) जुषन्ते—सेवन्ते इति तथोक्तानि, लोकदृष्टिगोचराणीत्यर्थः, उद्गीर्य बहिष्करणादिति भावः।

(४०९) कुपितेति।—कुपितेन—क्रुद्धेन, गुरु वैशम्पायन प्रतीति भावः, याज्ञवल्क्येन—तदाख्यमुनिना, वक्त्रात्—मुखात्, वान्तानि—उद्गीर्णानि, यजूंषीव—यजुर्वेदा इव, वैशम्पायनशिष्या इति शेषः। निजवपुषि—स्वदेहे। पुरा वैशम्पायनशिष्य याज्ञवल्क्य गुरो वैशम्पायनस्य सकाशात् वेदानधीत्य सर्वेषु शिष्येषु प्रमादिष्ट

( ४१० ) पूषा पापमुषि पुनरपि सञ्जहार जालकानि रोचिषाम् ।

स्वगुरौ ब्रह्महत्यापापक्षयकारकं व्रतमेकाकी एवाचरितुमिच्छन् गुरुणा विप्रावमानना-ऽसहिष्णुना यदा त्वत्परिगृहीतान् परित्यजेति उपालभ्य स्वाध्यायितान् वेदं मारोद्गिरेति, तदा स तानुद्गीर्य वैजीत तान् गुरुं मुनयः तित्तिरयो भूत्वा ललोलुपतया तित्तिरीभूय आददु, तत एते वेदभागाः कृष्णयजुर्वेदा इति उच्यन्ते । तथा हि विष्णुपुराणे—"शिष्यानाह च भो शिष्या । ब्रह्महत्यापहं व्रतम् । चरध्वं मत्कृते सर्वे न विचार्यमिदं तथा ॥ अथाऽऽह याज्ञवल्क्यस्तं किमेभिर्बहुभिर्द्विज । क्लेशितैरल्पतेजोभिश्चरिष्येऽहमिदं व्रतम् ॥ ततः क्रुद्धो गुरुः प्राह याज्ञवल्क्यं महामुनिम् । मुच्यतां यत् त्वयाऽधीतं मत्तो विप्रावमानक ॥

इत्युक्त्वा रुधिराक्तानि सरूपाणि यजूंष्यथ । छर्दयित्वा ददौ तस्मै ययौ च स्वेच्छया मुनिः ॥ यजूंष्यथ विसृष्टानि याज्ञवल्क्येन वै द्विज । जगृहुस्तित्तिरीभूत्वा तित्तिरीयास्तु ते ततः ॥ एवमुक्तो ददौ तस्मै यजूंषि भगवान् रविः । अयातयामसंज्ञानि यानि वेत्ति न तद्गुरुः ॥ यजूंषि यैरधीतानि तानि विप्रैर्द्विजोत्तम । वाजिनस्ते समाख्याताः सूर्योऽश्वोऽभवद्यतः ॥" इत्यादि । एवमेवाह वाजसनेयिसंहिता-भाष्ये तत्रभवान् महीधरः, तथा हि—"तत्रादौ ब्रह्मपरम्परया प्राप्तं वेदं वेदव्यासो मन्दमतीन् मनुष्यान् विचिन्त्य तत्कृपया चतुर्धा व्यस्य ऋग्यजुःसामाथर्वाख्यांश्चतुरो वेदान् पैलवैशम्पायनजैमिनिसुमन्तुभ्यः क्रमादुपदिदेश, ते च स्वशिष्येभ्यः । एवं परम्परया सहस्रशाखो वेदो जातः । तत्र व्यासशिष्यो वैशम्पायनः याज्ञवल्क्यादिभ्यः स्वशिष्येभ्यो यजुर्वेदमध्यापयत् । तत्र दैवात् केनापि हेतुना क्रुद्धो वैशम्पायनः याज्ञवल्क्यं प्रत्युवाच, मदधीतं त्यजेति । स योगसामर्थ्यात् मूर्तां विद्यां विधाय उद्ववाम । वान्तानि यजूंषि गृहाणेति गुरुणा अन्ये वैशम्पायनशिष्याः तित्तिरयो भूत्वा यजूंषि अभक्षयन् । तानि यजूंषि बुद्धिमालिन्यात् कृष्णानि जातानि । ततो दुःखितो याज्ञवल्क्यः सूर्यमाराध्य अन्यानि शुक्लानि यजूंषि प्राप्तवान् । तानि च जाबालबौधेयकाण्वमाध्यन्दिनादिभ्यः पञ्चदशशिष्येभ्यः पाठितवान्" इति ।

( ४१० ) पूषा—सूर्यः । पापमुषि—पापक्षयकारिणि, [ पापीयप्रदाने मोषले मुष्णाते वा इत्यति क्विप् ] । रोचिषां—तेजसां किरणानामित्यर्थः, जालकानि—निचयान् सञ्जहार—संहृतवान्, तिरोधापयामासेत्यर्थः । यथा हि वैशम्पायनशिष्याः तित्तिरयो भूत्वा याज्ञवल्क्यमुखनिर्गतानि रुधिराक्तानि कृष्णानि यजूंषि स्ववपुषि सञ्जहारयामासुः एवमेव पूषापि स्वरोचिषां जालकानि निजवपुषि सञ्जहारेति यजुर्भिः सह रोचिषां जालकानामवैधर्म्यसाम्योक्तिरुपमालङ्कारः ।

(४१४) रुद्रभिक्षादानशौण्डपुरमथनमुक्तमुण्डशिरानाडीरुधिरपूरणकपिलकपालकर्पर इव च पैतामहः, (४१५) पितृवधरुषितरामरागरचितः पृथुविकटकार्त्तवीर्यांसकूटकुट्टाककुठार-

---

(४१४) रुद्रेति।—रुद्रः,—भीषणः, भिक्षाया,—प्रार्थितवस्तुन इत्यर्थः, आदाने—ग्रहणे यश,—दाने—समर्पणे, भक्तानां वाञ्छितपरिपूरणे इत्यर्थः, शौण्डः,—तत्परः यः पुरमथनः,—त्रिपुरारिः, हर इति यावत् तेन मुक्तं—परित्यक्तं, छेदनेन पातितमित्यर्थः, यत् मुण्डं—शिरः, ब्राह्ममिति भावः, तस्य शिराणां—सूक्ष्मनाडीनामित्यर्थः, नाडीनां—स्थूलशिराणां, रक्तवाहिनीनां धमनीनामित्यर्थः, रुधिरेण,—रक्तेन, पूरणेन—परिपूर्णतया, कपिलः—पिङ्गलः, आरक्त इत्यर्थः, पैतामहः,—ब्राह्मः, कपालकर्पर इव—कपालः,—शिरःकङ्काल एव, कर्परः,—शरावाऽऽकारपात्रभेदः, कटाहविशेष इति वा स इव, ("कर्परः स्यात् कपाले च शस्त्रभेदकटाहयोः" इति मेदिनी) ब्रह्मणः शिरःकपाल एवेत्यर्थः। पुरा मेरुशृङ्गे महर्षयः पितामहं परं तत्त्वं पप्रच्छुः, असौ तु महेशमायामोहितः आत्मानं सर्वोत्तमं ब्रह्ममूलमवादीत्, अथ नारायणोऽपि क्रतुः कृत्वा आत्मानमेव सर्वकर्तारमब्रवीत्, एवं तौ विवदमानौ प्रमाणभूतान् चतुरः आम्नायान् पप्रच्छतुः। ते तु रुद्रमेव यथाभूतमब्रुवन्। तौ तु तच्छ्रुत्वा तं विनिन्दितुमारेभाते, तत्तावन्तरा एकं परमाद्भुतं ज्योतिः प्रादुरभूत् तत् दृष्ट्वा ब्रह्मणः पञ्चमं शिरः आवामन्तरा कः स्थाणुं बिभर्त्तीत्युक्त्वा प्रजज्वाल। हिरण्यगर्भस्तु तं रुद्रं प्राक् स्वभालस्थलादुद्भूतमवादीत्, तच्छ्रुत्वा कोपात् शङ्करः कालभैरवं ससर्ज, असौ तु वामाङ्गुलिनखाग्रेण विधेः पञ्चमं शिरः चकर्त। तच्च ब्रह्मशिरःकपालं हस्तस्य करं नामुञ्चत्। ततः कपालमोचने तीर्थे काश्यां ब्रह्मकपालं तद्धस्तमुक्तमभवदिति काशीखण्डे पञ्चत्रिंशाध्याये द्रष्टव्यम्। तथा हि,—"कपालं ब्रह्मणो रुद्रः सर्वेषामेव पश्यताम्। कृत्वा पतितभावोक्तं भवेत्सं परया मुदा॥ विधिः कपालं नामुञ्चत् करमन्यत्र लक्ष्यजम्। इत्थं भ्रमन् क्वापि ततः काश्यां चपलोऽपतत्॥" इत्यादि। अत्र पैतामहरुधिराक्तशिरःकपालेन साकम् उष्णीषरत्नस्य सादृश्यादुपमाऽलङ्कारः।

(४१५) पित्रिति।—पितुः,—जनकस्य, जमदग्नेः इत्यर्थः, वधेन—हननेन कार्त्तवीर्यकृतेन इति भावः रुषितः,—कुपितः च रामः,—परशुरामः, तस्य रागेण—वीररसोत्साहेन पितृवधजनितेन मात्सर्येण वा, असहिष्णुतया इत्यर्थः, ("रागस्तु मात्सर्ये लोहितादिषु" इति मेदिनी) रचितः,—सृष्टः, पृथ्विति।—

शोणितक्वाथकषायितकुक्षिः अतिविशङ्कटः कटाह इव च बार्हस्पत्यः, (४२०) सद्योगलितगजदानवदेहलोहितोपलेपभीषणो मुखमण्डलाऽऽभोग इव महाभैरवस्य मुहूर्त्तम् अदृश्यत । (४२१) जलनिधिजलप्रतिबिम्बितरविबिम्बराजिभास्वराभ्रावलम्बिनी गृहीतार्द्रमांसभारा इव चाबभासे वासरावसानवेला

---

पाकः तस्य पिशुनः—सूचकः राजाभिचारादिकरणप्रसिद्धेः, शोणितेति ।—शोणितस्य—रक्तस्य, क्वाथेन—निष्पाकेन, तापेन घनीकरणेन इत्यर्थः ('क्वाथः स्यादतिदुःखेऽपि निष्पाके च द्रवस्य च" इति मेदिनी) कषायितः,—रक्तीकृतः, कुक्षिः,—अभ्यन्तरं यस्य तथाभूतः अतिविशङ्कटः,—अतिभीषणः, रक्तोपलिप्तत्वादिति भावः, ["वे शालच्छङ्कटचौ" (५।२।२८ पा०) इति शङ्कटच्प्रत्ययः] बार्हस्पत्यः,—बृहस्पतेरयं बार्हस्पत्यः कटाहः इव—स्थालीविशेष इव । पुरा देवासुरयुद्धावसरे दैवगुरुः बृहस्पतिरसुरवधसाधनाय आथर्वणिकाभिचारक्रियामकरोदिति पौराणिकी कथाऽत्रानुसन्धेया । अत्रासुररक्तोपलिप्तरक्तकटाहेन साकमुभयोर्वैधर्म्यसाम्यात्तदुपमाऽलङ्कारः ।

(४२०) सद्य इति ।—सद्यः—तत्क्षणं निपातचय एव इत्यर्थः गलितः—निःसृतः गजदानवस्य—गजासुरस्य, देहात्—शरीरात् यत् लोहितं—रक्तं तस्य उपलेपेन—अनुलेपनेन भीषणः,—उग्रः, महाभैरवस्य—महारुद्रस्य मुखेति ।—मुखमण्डलस्य—वदनबिम्बस्य, आभोग इव—आयतनमिव अदृश्यत—अवलोकितः, पूर्वोक्तविध उपरक्तिमेति पूर्वेण सम्बन्धः । महादेवकृतगजासुरनिधनवार्त्ता काशीखण्डे अष्टषष्टितमेऽध्याये उपवर्णिता, तथा हि—"महिषासुरपुत्रोऽसौ समायाति गजासुरः । प्रमथ्नन् प्रमथान् सर्वान् निजवीर्यमदोद्धतः ॥ ततस्त्रिशूलहस्तितमायान्तं दैत्यपुङ्गवम् । विज्ञायावध्यमन्येन शूलेनाभिजघान तम् ॥ प्रोतस्तेन त्रिशूलेन स च दैत्यो गजासुरः । छत्रीकृतमिवात्मानं मन्यमानो जगौ हरम् ॥" इति । अत्र गजदानवरक्तोपलिप्तमहाभैरव-मुखमण्डलेन साकमुभयोर्वैधर्म्यसाम्यात्तदुपमाऽलङ्कारः, एकस्यैवोपमेयस्य भूयसामुपमानानां दर्शनादियं मालारूपा मन्तव्या,—"मालोपमा यदेकस्योपमानं बहु दृश्यते" इति दर्पणोक्तेः ।

(४२१) जलनिधीति ।—जलनिधेः,—समुद्रस्य जलेषु,—सलिलेषु, प्रतिबिम्बिता—प्रतिफलिता, या रविबिम्बराजिः,—सूर्यमण्डलच्छायाश्रेणिः, तया भास्वरम्—दीप्तिमान्, यत् अभ्रम्—आकाशं मेघो वा तदवलम्बिनी—तदाश्रयिणी, अत एव

वेतालनिभा। (४२२) ज्वलत्सन्ध्यारागरज्यमानजल-प्रवाहः पुनरिव (४२३) पुराणपुरुषपीवरोरुसम्पुटपिष्टमधु-कैटभरुधिरपटलपाटलवपुः अभवत् अधिपतिः अर्णसाम्।

---

गृहीत,—धृत, आर्द्र,—सरस, तरक्षचर्मेति यावत्, मांसभार,—पिशितराशि यया तथाभूतेव वासरावसानवेला—सन्ध्याकाल कृष्णवर्णा इति भाव। वेतालनिभा—वेतालसदृशी, आबभासे—शुशुभे, वेतालोऽपि आर्द्रमांसभारं वहतीति भाव। अत्र समुद्रनीरे प्रतिफलितया लौहित्यात् आर्द्रत्वेन प्रतीयमानया, सान्ध्यकालिक सूर्यस्य अरुणप्रभया क्वचित् क्वचित् श्यामरुचे मेघपुञ्जस्य आरक्तीकृततया, ईषदन्धकारीभूताया वासरावसानवेलाया गृहीतार्द्रमांसभारवेतालसादृश्यप्रतीते उपमाऽलङ्कार सुव्यक्त एव।

(४२२) ज्वलदिति।—ज्वलता—राजमानेन, सन्ध्यारागेण—सायङ्कालिकारुणवर्णेन, रज्यमान,—कुर्व्यमाण, प्रतिफल्यमानतया रक्तीक्रियमाण इत्यर्थ, जलप्रवाह —सलिलराशि यस्य तथाभूत।

(४२३) अर्णसा—जलाना ("सलिलं कमलं जलम्। अम्भोऽर्णस्तोय—" इत्यमर) अधिपति,—प्रभु, समुद्र इत्यर्थ, पुन,—प्राग्वत, पुराणेति।—पुराण,—सनातन, पुरुष,—पुमान् नारायण इत्यर्थ, तस्य पीवरे—स्थूले, ऊरुसम्पुटे—सक्थिरूपाधारे, सक्थियुगले वा, पिष्टयो,—निष्पिष्टयोरित्यर्थ, मर्दनेन इति भाव, मधुकैटभयो,—तन्नाम्नोरसुरयुगलयो, रुधिरपटलेन—रक्तसमूहेन पाटलम्—आरक्त, वपु —शरीर यस्य तथाभूत, अभवदिव—अजायतेवेत्यर्थ अर्णसामधिपति पुराणपुरुषपाटलवपुर्युक्त बभूवेति भाव। अत्र उपमेयीभूते अर्णसामधिपतौ पुराणपुरुषपीवरोरुसम्पुटपिष्टमधुकैटभरुधिरपाटलवपुष उपमानभूतस्य तादात्म्याध्यासात् उत्कटैककोटिकसंशयो दर्शनादुत्प्रेक्षाऽलङ्कार। सृष्टिप्रारम्भे जलनिधौ प्रसुप्तस्य भगवतो नारायणस्य नाभिकमलात् ब्रह्मा समुद्भवत्। तदानीञ्च तस्यैव भगवत कर्णमलात् द्वावसुरौ मधु कैटभश्च समुत्थाय बुभुक्षया नाभिकमलस्थित ब्रह्माणम् अत्तुम् उद्यतौ तदवलोक्य भीतेन ब्रह्मणा स्तुता योगनिद्रा विष्णो शरीरं तत्याज, ततश्च समुत्थाय भगवान् तौ तथाविधौ दृष्ट्वा पञ्चवर्षसहस्रं ताभ्यां बाहुयुद्धं कृत्वा तयोरेव सन्तुष्टयोर्वरं लब्ध्वा ऊरुदेशे निधाय चक्रेण निहतवानिति मार्कण्डेयपुराणे—"तदा द्वावसुरौ घोरौ विख्यातौ मधुकैटभौ।
कर्णमलोद्भूतौ हन्तुं ब्रह्माणमुद्यतौ॥" इत्यादि देवीमाहात्म्यम् अत्र अनुसन्धेयम्।

(४२४) अवसिते सन्ध्यासमये समनन्तरम् (४२५) ... मितयशःपानतर्षिताय मुक्ताशैलशिलाचषक इव निजकुल-कीर्त्या, (४२६) कृतयुगकरणोद्यताय आदिराजराजतशासन-मुद्रानिवेश इव राज्यश्रिया, सकलद्वीपजिगीषाचलिताय श्वेत-द्वीपदूत इव च आयत्या, (४२७) श्वेतभानुः उपानीयत निशया नरेन्द्राय इति ।

इति श्रीबाणभट्टकृते हर्षचरिते राज्यश्रीप्राप्तिर्नाम

अष्टम उच्छ्वासः ॥ ८ ॥

---

(४२४) अवसिते—समाप्तिं गते, अतिक्रान्ते इत्यर्थः ।

(४२५) निजकुलकीर्त्या—पुष्पभूतिवंशस्य यशसा, अपरिमितेति ।—अपरिमितानि,—प्रभूतानि यशांसि—कीर्तयः, तेषां पानाय—पेयविषयीकरणाय, अधिगमायेत्यर्थः, तर्षितः,—तृष्णार्त्तः, लुब्ध इत्यर्थः तस्मै, नरेन्द्राय इत्यर्थेनान्वयः, सर्वदिग्विजयिन इति भावः, मुक्ताशैलशिलाचषकः इव—मुक्तागिरिप्रस्तरखण्डरूपपानपात्र-मिव, ("चषकोऽस्त्री पानपात्रम्" इत्यमरः)।

(४२६) राज्यश्रिया—राजलक्ष्म्या कृतेति ।—कृतं—सत्यं युगं, तस्य करणे—विधाने, पुनः प्रवर्त्तने इत्यर्थः, पापाचारिणः उन्मूल्य चतुष्पाद्धर्मसंस्थापनशील इति भावः, उद्यतः,—प्रवृत्तः तस्मै, आदिराजेति ।—आदिराजस्य—प्रथमनृपतेः, मनोः वैवस्वतस्य वैण्यस्य पृथोर्वा इत्यर्थः, राजती—रजतनिर्म्मिता, शासनमुद्रा—राज्याधिकार-मुद्रा, राजनामाङ्कितप्रत्ययोत्पादकमुद्राविशेष इत्यर्थः तस्याः निवेश इव—मुद्रितावयव इव । आयत्या—उत्तरकालेन, आगामिन्या शुभया नियत्या इत्यर्थः, ("उत्तरः कालः आयतिः"-इत्यमरः) सकलेति ।—सकलानां—सर्वेषां, सप्तानामष्टादशानां वा इत्यर्थः, द्वीपानां—जम्बुशाकादीनां समन्ताज्जलवेष्टितभूभागानां, जिगीषया—जयाकाङ्क्षया, चलितः,—प्रस्थितः तस्मै, श्वेतद्वीपदूतः,—श्वेतद्वीपस्य—अष्टादशद्वीपान्तर्गतद्वीपभेदस्य, दूतः—वार्त्तावहः, तद्द्वीपवासिनां सन्देशमादाय आगत इति भावः, चन्द्रस्य अतिशुभ्रकान्तित्वात् श्वेतद्वीपदूतत्वौपम्यं सुसङ्गतमेवेति । दैवमिवानुकूलं श्वेतद्वीपपदद्वयार्थं तद्द्वीपदूतं हर्षाय प्रतिवदतीति निष्कर्षः ।

(४२७) निशया—रजन्या, श्वेतभानुः,—शुभ्रांशुः, चन्द्र इति यावत्, नरेन्द्राय—हर्षाय, उपानीयत—प्राप्यत, उपायनीकृत इति यावत्, [नयतेर्द्वि-कर्म्मकत्वेऽपि उपपूर्वकस्य तस्य उपहारकरणार्थकत्वेन सम्प्रदानरूपत्वात् "नरेन्द्राय"

इत्यत्र चतुर्थी, न तु द्वितीयेति वेदितव्यम्]। निशा श्वेतभानुं निष्कुलकीर्त्तिसमर्पितमुक्ताशैलशिलाचषकमिव, राजलक्ष्मीसमर्पिताऽऽदिराजराज्यशासनमुद्रा-निवहमिव, आयतिप्रदत्तश्वेतद्वीपदूतमिव च नरेन्द्रमानयदिति निष्कृष्य चन्द्रोदयोऽभूदिति भावः। अत्रैकस्मिन्नेव श्वेतभानौ भूयसां तथाविधचषकादीनामवैधर्म्यसाम्योक्तेर्मालोपमाऽलङ्कारः।

इत्यशेषशास्त्राटवीसञ्चरणपञ्चाननेन वात्स्यवंशावतंसेन पण्डितकुलपतिना बि. ए,
उपाधिधारिणा श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण विरचितायां,
तदात्मजाभ्यां पण्डितश्रीमदाशुबोधविद्याभूषण पण्डितश्रीमन्नित्यबोध
विद्यारत्नाभ्यां परिवर्द्धितायां प्रतिसंस्कृतायाञ्चामलाख्यायां
श्रीहर्षचरितव्याख्यायाम् अष्टम उच्छ्वासः ॥ ८॥

